अच्युतग्रन्थ-मालायाः (क) विभागे [illegible] कुसुमम्



# शतपथब्राह्मणम्



प्रकाशनस्थानम्—

अच्युतग्रन्थमाला-कार्यालयः,

काशी

अच्युतग्रन्थमालायाः (क) विभागे ११शं कुसुमम्

माध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

[ षट्काण्डात्मकः ]

( प्रथमो भागः )

तच्च

काशिकहिन्दूविश्वविद्यालयधर्मविज्ञानविभागाध्यक्षाणां श्री जो० म० गोयनका-
संस्कृतमहाविद्यालयवेदप्रधानाध्यापकानां वेदाचार्यवर्याणां गौडोपाह्व-
पं०श्रीविद्याधरशर्मणां तत्त्वावधाने तदन्तेवासिना वेदाचार्येण
चौधर्युपाह्व पं० श्रीचन्द्रधरशर्मणा
सम्पादितम्

प्रकाशनस्थानम्—
अच्युतग्रन्थमालाकार्यालयः, काशी ।

प्रथमावृत्तिः १००० ] संवत् १९९४ [ मूल्यम्-सार्द्धं रूप्यकत्रयम् ३॥)

# भूमिका

परमात्मनो निःश्वसितरूपेऽनन्ते वैदिके वाङ्मये संक्षेपतो भागद्वयम्—संहिताभागो ब्राह्मणभागश्चेति। संहिताश्च एकत्रिंशदधिकैकादशशत-(११३१) परिमिता आसन् दैनिकनिश्वाससमानाः। यासु खलु विहितकर्मानुष्ठानस्मारका मन्त्रा भिन्नाः सन्तोऽपि ग्रहणधारणाभ्यसन-सौकर्याय सन्धिकार्यप्रयोजिकयाऽऽसत्तिलक्षणया संहितया पठ्यन्ते। यथा—'इषे त्वा' इति मन्त्रस्य 'ऊर्जे त्वा' इति मन्त्रेण सह स्वाभाविकार्ध-मात्रातिरिक्तकालावयवाव्यवधानेन पाठे गुणरूपे सन्धिकार्ये पाठः सम्पद्यते 'इषे त्वोर्ज्जे त्वा' इति।

एवं प्राकरणिकानां मन्त्राणां संहितया पाठे ऋक् कण्डिका वा सम्पद्यते, तासां समुदायोऽध्यायः, अध्यायसमुदायः संहितेति। ताश्च ऋग्यजुः-सामाथर्वभेदेन चतस्रः, यासां शाखा एवमासन् ऋग्वेदस्य २१, यजु-र्वेदस्य १०१, सामवेदस्य १०००, अथर्ववेदस्य ९ इति। तत्र ऋग्वेदो नियतपादाक्षरावसानलक्षणानामृचां (पद्यानां) समुदायात्मकः, यजु-र्वेदोऽनियताक्षरपादावसानानां यजुषां (गद्यानां) पाठबहुलः संयुक्त-श्चर्ग्भिः, साम तु ऋक्षु गीयमानो गानविशेषः, छन्दोबद्धाः सङ्कीर्णा एव ऋग्विशेषा एवाऽथर्ववेदः।

तेषां "वेदचतुष्टयमन्त्राणां कर्मसु विनियोजकः कर्मविधायको नानाविधानादीतिहासाख्यानबहुलो ज्ञान-विज्ञानपूर्णो भागो ब्राह्मणभागः"। तयोः 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' पञ्चसहस्रवर्षेभ्यः पूर्वम् 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति महाभारतादिनिर्माणसमये स्थूलमानेन सहस्रशाखापरिमितसंहितापाठात्मकस्य तत्संख्यकब्राह्मणभागोपेतस्य वेदस्य सत्त्वेऽपि परिबृंहणमपेक्षितमासीत् । प्रत्येकशाखाध्यायिनो विप्रवंशाश्चाऽस्मिन् भूमण्डलेऽभूवन् ।

हन्तेदानीं क्व लुप्ताः शाखाः, क्व लुप्तास्तत्तच्छाखीयाश्च विप्राः। ऋक्षु केवलं शाखाद्वयमेवोपलभ्यते— शाकला, वाष्कल चेति । यजुषि शुक्ले— काण्वा, माध्यन्दिनीया च । कृष्णे— तैत्तिरीया, कठी, मैत्रायणी चेति । सामवेदे— कौथुमी, राणायणीया, जैमिनीया चेति । अथर्ववेदे— पैप्पलादसंहिता, शौनकसंहिता चेति ।

ब्राह्मणानि च न लभ्यन्ते सर्वाणि, कोऽप्ययं वैदिकवाङ्मये कालिकः परिपाकविशेषः । तत्र ऋग्वेदस्य— ऐतरेयम्, शाङ्खायनश्चेति ब्राह्मणद्वयमुपलभ्यते । एवम् एतरेयारण्यकम्, शाङ्खायनारण्यकश्चोपलभ्यते । शुक्लयजुषः-- काण्वशतपथब्राह्मणम्, माध्यन्दिनशतपथब्राह्मणञ्च । कृष्णयजुषः— तैत्तिरीयब्राह्मणमेकमेव । एवम्— तैत्तिरीयारण्यकमपि । सामवेदस्य— ताण्ड्य-षड्विंश-मन्त्र-दैवत-आर्षेय सामविधान-संहितोपनिषद्-वंश-जैमिनीयनामभिः प्रसिद्धान्यष्टौ ब्राह्मणानि समुपलभ्यन्ते । अथर्ववेदस्य गोपथाभिधेयमेकमेव ब्राह्मणं समुपलभ्यते ।

साम्प्रतमुत्तरभारते प्रायः शुक्लयजुर्वेदस्य माध्यन्दिनसंहितायाः प्रचुरः प्रचारः । अस्यां खलु संहितायां 'इषे त्वा' इत्यारभ्य सकलभुवनजीवनभूतां वृष्टिमुद्दिश्य 'इषे पिन्वस्व' ( ३९–१४ ) इत्युपसंहृत्य ऊनचत्वारिंशताऽध्यायैः क्रमशो दर्शपूर्णमासौ, पिण्डपितृयज्ञः, आधानम्, अग्निहोत्रम्, चातुर्मास्यानि, अग्निष्टोमः, वाजपेयः, राजसूयः, राजसूयशेषश्चरकसौत्रामणी, चयनम्, सौत्रामणी, अश्वमेधः, पुरुषमेधः, सर्वमेधः, पितृमेधश्चेति यागा धर्मशब्दवाच्याः प्रतिपादिताः । तत्र इष्टिचयरूपे यागे इष्टयोऽपेक्षिता इति इष्टिप्रकृतिभूता दर्शपूर्णमासेष्टिरेव प्रथमं प्रतिपादिता । अग्न्याधानेऽपि इष्टयः सन्तीति नाऽग्न्याधानादिक्रमः संहितायाम् । संहिताक्रममनति-

क्रम्यैव ब्राह्मणस्य शताध्यायात्मकतयाऽन्वर्थस्य शतपथस्याऽपि क्रमः समुचितः। एतद्ग्रन्थसम्बन्धिन उपयोगिनोऽन्यान् सर्वान् विचारान् समालोचनादिकं च विस्तरेण ग्रन्थसमाप्तिसमनन्तरपातिन्यां बृहत्यां भूमिकायां पुनः प्रतिपादयिष्यामि।

साम्प्रतं मुद्यमाणेषु-हविर्यज्ञ-एकपादिकाऽध्वर-ग्रह-सवोखासम्भरणाख्येषु षट्सु काण्डेषु प्रतिपाद्या विषयाः—

तत्र प्रथमे—दर्शपूर्णमासेष्टिः।

द्वितीये—अग्न्याधानम्, पुनराधेयम्, अग्निहोत्रम्, पिण्डपितृयज्ञः, आग्रयणेष्टिः, दाक्षायणयज्ञः, चातुर्मास्यानि।

तृतीये—सोमयागो दीक्षाभिषवान्तः।

चतुर्थे— सवनत्रयगतं कर्म, षोडश्यादिसंस्थाः, द्वादशाहः, त्रिरात्राहीनदक्षिणा, सत्रधर्माः।

पञ्चमे— वाजपेय-राजसूयौ।

षष्ठे— उखासम्भरणम्, विष्णुक्रम-वात्सप्रोपस्थाने, वनीवाहनश्चेति।

तदिदमखिलब्रह्माण्डतृप्तिकरवृष्ट्यादिफलकैहिकनिरतिशयसुखदायकपारलौकिकधर्मविधायकज्ञानविज्ञानपरिपूर्णं शतपथब्राह्मणं दक्षिणे चोत्तरे च भारते पठ्यते पाठ्यते च गुरुपरम्परया। अतो मूलपुस्तकानि सन्त्येव हस्तलिखितानि निखिलवैदिकविप्रकुलेषु, मुद्रितानि च यन्त्रालयेषु। परन्तु गुरुपरम्पराधीतवैदिकविप्रद्वारासंशोधितपाठमयपुस्तकसौलभ्याय वैदिकधर्मप्रवणमानसैः श्रेष्ठिप्रवर-श्रीगौरीशङ्करगोयनकामहोदयैः वैदिकग्रन्थपठनपाठनसङ्ग्रहावलोकनप्रचारादिप्रसक्तभूदेवानामपचित्यै निचितानेकपुस्तक साहाय्येन मुद्राप्यते। सायणभाष्यसहितमपि शतपथमलभ्यमपि सम्पूर्णमन्विष्य मुद्रयितुं यत्नः क्रियते एभिः श्रेष्ठिमहोदयैः, पूरयतु पूर्णस्तं मनोरथमिति प्रार्थयेऽहं भगवन्तं परमेश्वरमुमासहायम्।

संशोधकं चाऽस्य श्रीचन्द्रधरशर्माणं वेदाचार्यं गुरुपरम्पराधीतसाङ्गसार्थसंहिताशतपथब्राह्मणं चतुर्धापुरुषार्थैः संयोजयतु पुरुषार्थसिद्धिनिधानश्चन्द्रशेखरः, यतोऽस्मिन् संस्करणे न दृश्यन्ते ते दोषाः प्रायो ये खलु नेत्र-यन्त्रपरिचारकदोषात्पुस्तकेषु बहुशः सम्भवन्ति।

आशासे च अनेन श्रेष्ठिप्रवर-गौरीशङ्करगोयनकासमुद्यमेन वैदिकानामन्येषां च गुणज्ञानां महानुपकारः स्यादिति शम् ।

काशी,
गङ्गादशहरा १९९४.

विद्याधरशर्म्मा गौड़ः

# सम्पादकोक्तिः—

इह खलु सृष्टेः प्राक् कीदृगासीदिदं जगदिति मीमांसायां **'नासदासीन्नो सदासीत्' 'तम आसीत्तमसा गूढमग्रे' 'अम्भः किमासीत्'** इत्यादिश्रुतिवचनैः सृष्टेः प्राक् तत्स्वरूपं तर्कागोचरमेवासीदिति प्रतीयते। 'को अद्धा वेद' इत्यादिविचारोत्तरं **'यो अस्याध्यक्षः परमे व्योमन्'** इत्येवं रीत्या निर्णयश्च निगममूलक एवेति सुविदितमेव वेदविदाम्। एवञ्च स देवासीदिति सिद्धम्। निर्दिष्टरूपजगदभावदशायां **'स ऐक्षत बहुस्यां प्रजायेय'** इति श्रुतेः सृष्ट्यादौ सिसृक्षुः भगवान् परमेश्वरः स्थावरं जङ्गमं जगत् धर्माधर्मौ च सृष्ट्वा तत्प्रतिपादकान् ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् ब्रह्मादिभ्य उपदिदेश। ते च स्वशिष्येभ्यः। एवं ब्रह्मपरम्परया सहस्रशाखो वेदो जातः। तत्र कोऽसौ वेदपदार्थ इति जिज्ञासायाम्—**"इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः"** इति वेदितव्यम्। तत्र तावदस्मत्प्राचीनतमा महर्षयः कल्पादिकाराश्च मन्त्रब्राह्मणयोरुभयोरपि निःसङ्कोचं वेदत्वमभिदधति—**"मन्त्रब्राह्मणमित्याहुः"** (बौ० गृ० २।६२), **"आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि"** (कौ० सू० १।३), **"मन्त्रब्राह्मणयोर्वेदनामधेयम्"** (का० प्र० परि० १।१) इति।

साम्प्रतं शुक्लयजुर्वेदान्तर्गत-माध्यन्दिनशाखीयस्य शतपथब्राह्मणस्यादितः षट्काण्डात्मकः महता परिश्रमेण उखासम्भरणान्तो भागः सम्मुद्र्य प्रकाश्यते।

एतच्छोधने सङ्गृहीतान्यतिप्राचीनहस्तलिखितमुद्रितपुस्तकानि चेत्थम्—

(१) पं० श्रीमदमरनाथशास्त्रि-दीक्षितदत्तपुस्तकं हस्तलिखितं 'क' संज्ञितम्।

(२) 'कलकत्ता एशियाटिक् सोसाइटी' मुद्रितं सभाष्यं 'ख' संज्ञितम्।

(३) 'लिपजिग् (जर्मन) नगरमुद्रितं सायणभाष्यसारोपेतं 'ग' संज्ञितम्।

(४) हस्तलिखितं गुरुप्रवर-पं० श्रीविद्याधरगौडवेदाचार्यप्रदत्त-पुस्तकं 'घ' संज्ञितम्।

(५) मोहमय्यां खेमराजश्रीकृष्णदासयन्त्रालये मुद्रितं सभाष्यं प्रथमकाण्डात्मकं 'ङ' संज्ञितम्।

(६) 'अजमेर' नगरे मुद्रितं समग्रं मूलमात्रं 'ज' संज्ञितम्।

सङ्कलनयैतेषां यथामनीषं पाठान्तरादिसंयोजनेन च पुस्तकमिदं संस्कृतम्।

पारिभाषिकशब्ददुरूहत्वमार्जनाय कातीयश्रौतसूत्रव्याख्याधारेण टिप्पणमप्ययोजि। तथा च सर्वेषां शीघ्रोपस्थित्यै काण्डषट्कस्य विषयसूचिकाऽप्यादौ योजिता।

एतत्सम्पादनप्रौढतोपलब्धिनिदानं समुपश्लिष्यदनेकशिष्योपशिष्यसेवितं कोविदचक्रचूडामणिगुरुवर-श्री १०८ विद्याधरशर्मगौडमहोदयानां पादारविन्दद्वन्द्वं विजयतान्तराम्। यदीयानुकम्पाकटाक्ष एव मत्प्रतीहारेण प्रकृतग्रन्थं समेषामक्षिलक्ष्यतां विधत्ते।

अपि च सम्पादनकार्येऽमुष्मिन् येषामुपकृतिरजायत तेभ्यः साहित्याचार्येभ्योऽच्युतग्रन्थमालाध्यक्षेभ्यः पं० श्रीश्रीकृष्णपन्तमहोदयेभ्यो मुकुलित-कर-कमलेन कृतज्ञतापरार्धमुपायनीक्रियतेतमाम्।

यद्यप्ययं शतपथब्राह्मणाख्यो ग्रन्थो बहुभिर्बहुवारं यन्त्रालये प्रकाशित एवाऽऽसीत्तथाऽपि तेषु अनवधानालस्यादिमूलकास्तत्र तत्राऽनवसरप्राप्तविरामाऽनुस्वार-( ६ ॢ ) स्वर-( उदात्तादि )-द्वित्व-( पदादिस्थवकारादेर्द्वित्वम्, न तु पदादिस्थयकारस्य )-असम्बद्धाक्षरादिजन्मानोऽनर्थावबोधेन तिरस्कारावहा बहवः प्रमादाः सन्त्येव। अतस्तान् दूरीकर्तुं मया सूक्ष्मेक्षिकया यथामति सम्यक् परिशोध्य परिष्कृतः संग्रहणीयोऽयं शतपथब्राह्मणाख्यो महानिबन्धो भूयादखिललोकोपकारक इति प्रार्थये भगवन्तमिन्दुशेखरम्।

अथाऽपि मनुजनुःस्वभावसुलभः प्रमादश्चेत्क्वचित्स्खलनमुपगमयेत्तदवश्यं मौलिलालितयशोभरैर्विचक्षणैः क्षमापथपान्थो विधापयितव्य इति सविनयमावेद्य विरमति—

काशी,
गङ्गादशहरा, १९९४ }

श्रीचन्द्रधरशर्मा



# शतपथब्राह्मणविषयसूची

## प्रथमं काण्डम्

[ अ० १ ब्रा० १ ]

### व्रतोपायनविधिः--

तत्र अपामुपस्पर्शनम्, अनृतवदनेनामेध्यत्वविचारः, अपां पवित्रत्वम्, अग्नेर्व्रतपतित्वादिकम्, ततो व्रतविसर्जनमन्त्रविधानम्, अनृतवदननिन्दा, सत्यवदनप्रशंसा, व्रतग्रहणेन देवत्वावाप्तिः, व्रतविसर्जनेन पुनर्मानुषत्वम्, ततः अशनानशनयोर्विचारः, उपवसथनिर्वचनम्, व्रतिनो शयनस्थाननिर्णयश्च। ततः प्रणीताप्रणयनम्, तत्र प्रणयनस्थाननिर्णयः, तन्मन्त्रस्य व्याहृतिचतुष्टयात्मकत्वम्, प्रजापतिवर्णनम्, प्रणीतास्तुतिः, अप्शब्दनिर्वचनम्, अपां वज्रत्वविधानञ्च ततः प्रणीताप्रणयनप्रकारः, प्रणीताग्न्योर्मध्ये सञ्चरनिवृत्तिकथनम्, अपामतिहरणेऽनाप्तौ दोषश्च। ततः परिस्तरणम्, पात्रासादनञ्चेति ( ख० १-२२ )।

[ अ० १ ब्रा० २ ]

### हविर्निर्वापविधिः--

तत्र शूर्पाग्निहोत्रहवण्योर्ग्रहणम्, तयोः प्रतपनम्, व्रीहियववाक्ययोः चत्वारोऽष्टौ वा दोषा इति विचारः, ततः शकटसमीपे गमनम्, ततो हविर्ग्रहणम्, वेदिहविर्धानयोः समत्वकथनम्, धुरभिमर्शनादिकम्, ततः शकटारोहणविधानम्, तत्र व्रीह्यवेक्षणम्, तेभ्यस्तृणनिरसनम्, तदभिमर्शनम्, तद्ग्रहणञ्च। ततः देवतादेशनस्य कर्तव्यत्वप्रतिपादनम्, एतस्य अग्नीषोमीयादिहविःष्वतिदेशः, ततो निरुप्तशेषाऽभिमर्शनम्, शकटादवरोहणम्, हविषा सहैवाग्निसमीपे गमनम्, ततो हविःसादनञ्चेति ( ख० १-२३ )।

[ अ० १ ब्रा० ३ ]

### पवित्रच्छेदनम्--

तत उत्पवनम्, तत्रेतिहासकथनञ्च। ततो वृत्रपदनिर्वचनम्, दर्भोत्पत्तिकथनम्, अच्छिद्रशब्दार्थवर्णनञ्च। तत उदिङ्गनम्, अपां संस्कारः, तैर्हविषः प्रोक्षणम्, ततो यज्ञपात्राणां प्रोक्षणम्, प्रोक्षणीस्थापनस्थानविध्युपदेशश्चेति ( ख० १-१२ )।

[ अ० १ ब्रा० ४ ]

कृष्णाजिनादानविधिः--

तत्र तदवधूननम्, उदकोपस्पर्शनम्, कृष्णाजिनास्तरणम्, तत्रोलूखलस्थापनम्, हविरावपनम्, वाग्विसर्गः, हविःकण्डनम्, हविष्कृदाह्वानम्, मनोर्ऋषभोपाख्यानम्, दृषदुपलयोराहननम्, हविर्निधानम्, निष्पवनम्, अपामुपस्पर्शनम्, हविर्विवेचनम्, तुषनिरसनादिकम्, फलीकरणञ्चेति ( ख० १–१४ )।

[ अ० २ ब्रा० १ ]

पेषणोपधाने--

तत्र दृषदुपलयोरुपधानम्, पुरोडाशस्य मस्तिष्करूपत्वकथनम्, उपवेषनिरुक्तिः, आमात्क्रव्याच्छब्दयोर्विवक्षितार्थः, अयज्ञियाग्निनिरसनप्रतिपादनम्, ततो मध्यमकपालोपधानम्, तन्मन्त्रगतब्रह्मक्षत्रशब्दयोरभिप्रेतार्थनिर्वचनम्, अभिचारे तद्विशेषविचारः, दक्षहस्ताङ्गुल्यभिनिधानम्, अग्निब्राह्मणयोः समत्वोपाख्यानम्, कपालोपरि अङ्गाराध्यूहनम्, ततः सर्वकपालानामुपधानम्, तेष्वप्यङ्गाराध्यूहनञ्च। ततः कृष्णाजिनास्तरणम्, दृषदुपस्थापनम्, तदुपर्युपलास्थापनम्, तत्पश्चाच्छम्योपधानम्, उपलोपधानमन्त्रतात्पर्यकथनम्, दृषदि तण्डुलप्रक्षेपः, तत्पेषणम्, तत्राऽऽज्यप्रक्षेपश्चेति ( ख० १–२२ )।

[ अ० २ ब्रा० २ ]

पात्र्यां पिष्टसंवापः--

तत्रोपसर्जनीरासेचनम्, पिष्टसंयवनम्, तद्द्वेधाकरणम्, तयोराहरणम्, पुरोडाशकपालस्याज्याधिश्रयणस्य च समानकालतां विधातुं कर्तृभेदकथनादिकञ्च। ततः पुरोडाशश्रपणाय अग्न्युपरि स्थापनम्, तत्प्रथनम्, अद्भिरभिमर्शनम्, पर्यग्निकरणम्, पुरोडाशपरिमाणनिर्णयः, श्रपणाभिमन्त्रणमन्त्रयोस्तात्पर्यकथनम्, पुरोडाशस्याभिवासनम्, तन्मन्त्रव्याख्यानम्, ततः पात्रीनिर्णेजनञ्चेति (ख० १–१८)।

[ अ० २ ब्रा० ३ ]

निर्णेजनप्रसङ्गेनाऽऽप्त्योत्पत्त्युपाख्यानम्--

तत्राऽऽप्त्यानां पात्रीनिर्णेजनजलभाक्त्वकथनम्, त्वष्टृपुत्रविश्वरूपहननाख्यानम्, तस्यैनसो निष्कृत्यर्थं यागानुष्ठानवर्णनम्, दक्षिणाप्रशंसा, दर्शपूर्णमासयोर्दक्षिणाविचारः, निनीतस्योदकस्य प्रतपनम्, संस्कृतस्य पुरोडाशस्य पशुत्वेन स्तुतिः, प्रसङ्गात्किम्पुरुषादिमांसानामभक्ष्यत्वविधानञ्चेति ( ख० १–९ )।

[ अ० २ ब्रा० ४ ]

**वेदिकरणम्—**

तत्र स्फ्य-यूप-रथ-शराणामुत्पत्तिकथनम्, ततः स्फ्यस्य वज्ररूपत्वेन स्तुतिः, स्फ्ययूपयोर्ब्राह्मणव्यवहार्यत्ववर्णनम्, रथशरयोः राजन्यव्यवहार्यत्ववर्णनञ्च। ततः स्फ्यादानम्, तत्तीक्ष्णीकरणम्, तत्संस्पर्शनिषेधश्च। ततः स्तम्बयजुर्हरणाख्यायिका, तद्विधिः, स्फ्यप्रहरणम्, ततः तत्प्रहरणनिष्पन्नस्य पांशोरादानम्, वेदिप्रेक्षण-मन्त्रतात्पर्यकथनं च। तत उत्करे निधानमन्त्रस्याभिप्रायाविष्करणम्, अभि-चारप्रयोगे विशेषविधानम्, मन्त्रेण वारत्रयं तूष्णीञ्चैकवारं स्तम्बयजुर्हरण-ञ्चेति (ख० १–२१)।

[ अ० २ ब्रा० ५ ]

**वेदिपरिग्रहः—**

तत्रेतिहासाख्यानम्, तस्य पूर्वोत्तरपरिग्रहः, वेदेरायामविस्तारयोर्वर्णनम्, वेद्यंसयोराहवनीयस्पर्शविध्यादिकञ्च। ततः प्रोक्षण्यासादनम्, स्फ्योद्यमनम्, हस्तप्रक्षालनम्, यागात्प्राक् श्रृतानां हविषां स्पर्शनिषेधविधानायेतिहासकथन-ञ्चेति (ख० १–२६)।

[ अ० ३ ब्रा० १ ]

**स्रुक्सम्मार्जनम्—**

तस्याऽऽदानप्रतपने, ततो जुह्वादीनां सम्मार्जनविधिः, ततः प्राशित्रहरणादिकम्, पत्नीसन्नहनम्, पत्न्या आज्यावेक्षणम्, तदधिश्रयणादिकञ्च। तत आज्यस्योत्पवनम्, प्रोक्षण्युत्पवनम्, अध्वर्योराज्यावेक्षणादिविधिश्चेति (ख० १–२८)।

[ अ० ३ ब्रा० २ ]

**जुहूपभृद्ध्रुवासु पुरुषावयवकल्पनविधिः—**

तत्साध्यस्य यज्ञस्य पुरुषतादात्म्यकथनम्, जुह्वादिषु प्राणरूपेण सञ्चरणो-पपादनादिकम्, ततो जुहूपभृद्ध्रुवासु यथासंख्यमाज्यग्रहणविधानम्, तत्र गाय-त्र्यादिछन्दसस्त्रिपदात्वादिकथनम्, अनुष्टुभो वाग्रूपत्वनिर्णयश्चेति (ख० १–१८)।

[ अ० ३ ब्रा० ३ ]

**अध्वर्योरिध्मादि-प्रोक्षणाय प्रोक्षण्यादानविधानम्—**

ततः प्रोक्षणम्, प्रस्तरप्रहरणादिकं च। ततो बर्हिषः स्तरणम्, तस्य त्रिवृत्त्वादिविधिकथनम्, तत आहवनीयाग्नेः सन्धुक्षणम्, इतिहासमुखेन परिधीना-

मुत्पत्तिवर्णनम्, परिधिस्कन्नद्रव्यभाग्देवानामुत्पत्तिकथनादिकम्, ततः परिधीनामिध्मावयवत्वादिविचारश्चेति ( ख० १--२० )।

[ अ० ३ ब्रा० ४ ]

**परिधीनां परिधानविधिः--**

तत्र तेषामार्द्रताविधानम्, तन्मन्त्रगताग्निशब्दार्थनिर्णयश्च । ततः पूर्वाधारसमिदभ्याधानादिविधिः, प्रस्तरस्तरणम्, तृणनिरसनादिकम्, ततो जुह्वाः सादनम्, उपभृतः सादनम्, ध्रुवायाः सादनादिकम्, तत आसन्नानां हविषां अभिमर्शनञ्चेति ( ख० १–१६ )।

[ अ० ३ ब्रा० ५ ]

**सामिधेनीप्रकरणम्—**

तत्र सामिधेनीनामनिर्वचनम्, तद्वाचयितुमध्वर्योः सम्प्रैषः, ततोऽनुवचनम्, तेषां विविधसंख्याविधानादिकम्, यजमानस्यैकविंशतिसामिधेनीविधानादिकञ्चेति ( ख० १–१६ )।

[ अ० ४ ब्रा० १ ]

**सामिधेन्यनुवचनारम्भे हिङ्कारविधानम्—**

तत्र प्रसङ्गादसामयज्ञनिषेधः, सामिधेनीमन्त्राणां लिङ्गद्वयपरिचयः, ततो विदेघमाथवकथाश्रुतिः, ततो मन्त्रपाठपरिवर्त्तनविधिः, समिद्धमानसमिद्धत्योर्मध्ये धाय्ययोः प्रक्षेपविधिविचारश्चेति ( ख० १–४० )।

[ अ० ४ ब्रा० २ ]

**'अग्ने महाँ २।। ऽअसि' इत्यस्यानुवचनविधिः—**

ततः प्रवरविधिः, देवेद्ध इत्यादिनिवित्पदानामनुवचनम्, ततः सामिधेन्यनुवचनादयस्तिष्ठतैव कर्तव्या इति विधिः, याज्यायाः पाठस्त्वासीन एवेति विधानं चेति । ( ख० १–१९ )।

[ अ० ४ ब्रा० ३ ]

**लौकिकाग्न्यपेक्षया सामिधेनीसमिद्धस्याग्नेः श्रेष्ठत्वकथनम्—**

ततः प्राणापानादिकरणग्रामविशिष्टात्मसंस्कारहेतुतया सामिधेनीनां प्रशंसम्, सामिधेनीरन्नुवतो होतुरग्निसमानत्वकथनादिकञ्चेति ( ख० १–२२ )।

[ अ० ४ ब्रा० ४ ]

आघारहोमविधानम्—

तत्र पूर्वाघारस्यामन्त्रकत्त्वप्रतिपादनम्, उत्तराघारस्य च समन्त्रकत्त्वम्, तयोः क्रमेणोपवेशनावस्थानलक्षणौ गुणौ च। ततोऽग्निसम्मार्गविध्यादि-कञ्चेति ( ख० १–१५ )।

[ अ० ४ ब्रा० ५ ]

उत्तराघारप्रयोगविधिः—

तत्रादौ जुहूपभृतोरादानम्, ध्रुवासमञ्जनादिकम्, पूर्वाघारस्योपांशुत्वप्रति-पादनाय मनोवाक्संवादः, प्रसङ्गात्सर्वस्त्रीणामात्रेयीत्वनिर्णयश्चेति (ख० १–१३)।

[ अ० ५ ब्रा० १ ]

अध्वर्योर्होतृवरणम्—

तत आश्रावणम्, इध्मबन्धनदर्भाणां ग्रहणविधिः, ततो दैवहोतृवरणम्, आर्षेयहोतृवरणम्, मानुषहोतृवरणम्, ततो होतुर्जपविधिः, वृतस्य होतुः सम्मर्शनम्, ततो जपादिविधानम्, ततः प्रदेशात् होतृषदनम्प्रत्यागमनादि-कञ्चेति ( ख० १–२६ )।

[ अ० ५ ब्रा० २ ]

स्रुगादापननिगदस्य भागशो व्यख्यानम्—

तत आश्रावणप्रत्याश्रावणविषयिणी आख्यायिका, तयोर्विधिकथनम्, ततोऽध्वर्य्वादीनां मौनविधिः, पञ्चानामाश्रावणादीनां स्वरूपनिर्वचनादि-कञ्चेति ( ख० १–२२ )।

[ अ० ५ ब्रा० ३ ]

आख्यायिकामुखेन प्रयाजसंख्याविधानम्—

तत्र प्रयाजस्याज्यद्रव्यत्वेन स्तुतिः, तद्धोमस्थाननिर्वचनम्, तेषां क्रमशो विधानम्, ततो जुहूपभृतोराज्यसमानयनाद्युपदेशाः, अज्यपादि-देवानां परिचयादि-कञ्चेति ( ख० १–२५ )।

[ अ० ५ ब्रा० ४ ]

पूर्वोक्तानां प्रयाजानां प्रकारान्तरेण स्तुतिः—

तत्र समिधः प्राणत्वसमर्थनाय नैमित्तिकमभिमर्शनविधानम्, ततस्तदनुमन्त्रण-मन्त्राणामाख्यायिका चेति ( ख० १–१६ )।

[ अ० ६ ब्रा० १ ]

**प्रयाजदेवेष्वग्निसम्बन्धप्रतिपादिकाऽऽख्यायिका—**

ततः प्रयाजदेवानां प्राथम्ये ब्रह्मवादिनां सम्वादः, आज्यभागादिस्विष्टकृदन्तानां यागानामग्निदेवताकत्वाभिधानम्, तत आज्यस्तुतिः, प्रजापतिशब्दार्थनिर्णयश्चेति ( ख० १–२१ )।

[ अ० ६ ब्रा० २ ]

**आग्नेयाष्टाकपालपुरोडाशविधेराख्यायिका—**

तत्र तन्नामनिर्वचनद्वारेण पुरोडाशप्रशंसा, प्रसङ्गादग्निप्रशंसा चेति ( ख० १–१२ )।

[ अ० ६ ब्रा० ३ ]

**अग्नीषोमीयैकादशकपालपुरोडाशविधेराख्यायिका—**

तत्र वृत्रशब्दनिर्वचनम्, 'इन्द्रशत्रुर्वर्धस्व' मन्त्रेऽस्मिन् स्वरदोषकथाश्रुतिश्च । तत आज्यभागयोर्विधानम्, उपांशुयागविधानम्, तत उपवासयोग्यपर्वविधानम्, आज्यभागस्थाननियमः, आग्नेयादिहविषां यज्ञचक्षुष्ट्वादिकथनञ्चेति ( ख० १–४१ )

[ अ० ६ ब्रा० ४ ]

**अमावास्यहविषां विधेराख्यायिका—**

तत्र अमावस्याशब्दनिर्वचनादिकम्, द्वादशकपालस्यैन्द्राग्नस्य हविषो विधानम्, ततः सान्नाय्यस्य, तस्य च सोमात्मकत्वम्, अमावास्योपवासे पुराकल्पाख्यानादिकञ्चेति ( ख० १–२१ )।

[ अ० ७ ब्रा० १ ]

**सान्नाय्यसिध्यर्थं प्रथमं तावत् वत्सापाकरणाय शाखाच्छेदनम्—**

ततो वत्सानां मातृसंयोजनादिकम्, शाखागूहनस्थाननिर्णयश्च । तत्र पवित्रबन्धनम्, अग्निहोत्रस्य द्रव्यान्तरत्वकथनम्, तत अध्वर्योः स्थाल्यादानादिविधानम्, मौनकालादिविधानञ्च । ततो दोहनपात्रप्रक्षालनोदकस्य पयसि समर्पणम्, दध्यर्थं पयस्यातञ्चनद्रव्यप्रक्षेपादिविधिः, तत उदकवतोचानेन पात्रेण तत्पिधानविधिश्चेति ( ख० १–२१ )।

[ अ० ७ ब्रा० २ ]

**अवदानस्वरूपद्योतिकाऽऽख्यायिका—**

तत्र तस्येयत्ताविधानम्, तत उभयत आज्यकरणस्य पुरोडाशस्य प्रशंसादिकम्, याज्याऽनुवाक्ययोः समनन्तरं पूर्वं वा वषट्कुर्यादिति विचारः, तयोर्गायत्र्यादिछन्दस्कत्वविधानम्, उच्चारणधर्मोपदेशविध्यादिकं च। ततो याज्यानन्तरभाविनो वषट्कारविधानम्, प्रसङ्गाद्दर्शपूर्णमासयागप्रशंसनम्, शुक्लकृष्णपक्षयोर्नामव्यत्यासकथनादिकञ्चेति ( ख० १–२६ )।

[ अ० ७ ब्रा० ३ ]

**स्विष्टकृद्यागविधानार्थाऽऽख्यायिका—**

तत्र स्विष्टकृन्निगदव्याख्यानम्, तस्य याज्यापुरोऽनुवाक्ययोर्विधानम्, स्विष्टकृदवदानहोमप्रदेशकथनञ्च। ततो हविःश्रपणम्, अग्नेः परिस्तरणम्, ब्राह्मणतर्पणविधानञ्चेति ( ख० १–२८ )।

[ अ० ७ ब्रा० ४ ]

**प्राशित्रावदानविध्यर्थाख्यायिका—**

तत्र प्रजापतेर्दुहितृगमनविषयिणीश्रुतिः, ततोऽवदानम्, अध्वर्युसञ्चरविधानम्, ऋत्विजां स्वस्वभागप्राशनविधानञ्च। ततो वाचंयमत्वविधानादिकम्, मानुषवाग्व्यवहारे प्रायश्चित्तविधिश्चेति ( ख० १–२२ )।

[ अ० ८ ब्रा० १ ]

**इडावदानविध्यर्थाख्यायिका—**

तत इडायाः पञ्चावत्तादिविधिः, होतुरवान्तरेडावदानम्, हौत्रमिडोपह्वानम्, तत इडायाः प्राशनम्, मार्जनविधानञ्चेति ( ख० १–४४ )।

[ अ० ८ ब्रा० २ ]

**उल्मुकोद्वहनम्—**

ततः समिधामभ्याधानम्, सम्मार्जनम्, ततोऽनुयाजार्थवादः, बर्हिषः नाराशंसस्याग्नेश्च प्राथम्यादिकथनञ्चेति ( ख० १–१७ )।

[ अ० ८ ब्रा० ३ ]

**स्रुग्व्यूहनम्—**

ततः परिधीनां समञ्जनम्, सूक्तवाकप्रैषार्थमाश्रावणम्, प्रस्तरादानम्, जुह्वादीनां अग्र-मध्य-मूलसमञ्जनम्, प्रस्तरावयवानुप्रहणम्, तत्राग्नीदध्वर्य्वोः सम्वादः, शंयुवाकप्रैषार्थमाश्रावणम्, परिधीनामनुप्रहरणादिकञ्चेति ( ख० १–२७ )।

[ अ० ९ ब्रा० १ ]

**सूक्तवाकहौत्राख्यानम्—**

तत्र तच्छब्दनिर्वचनम्, शंयुवाकहौत्राख्यानम्, तच्छब्दनिर्वचनञ्चेति ( ख० १–२९ )।

[ अ० ९ ब्रा० २ ]

**पत्नीसंयाजः—**

तत्र जुहू-स्रुव-वेदाज्यविलापनीनां ग्रहणम्, पत्नीसंयाजार्थवादः, ततः आज्य-हविषोपांशुयागविधिः, पत्नीसंयाजस्येडान्तत्वम्, वेदस्योत्पत्तिविध्यादि, ततः समिष्टयजुर्होमः, प्रणीतानिनयम्, कणानामुत्करे क्षेपणादिकञ्चेति ( ख० १–३५ )।

[ अ० ९ ब्रा० ३ ]

**पूर्णपात्रनिनयनविधिः—**

तत्र दक्षिणामाहात्म्यकथनम्, देवयानपितृयानवर्णनादिकम्, मुखोपस्पर्शनम्, ततो विष्णुक्रमविधानम्, तत्र प्राङ् प्रेक्षणम्, स्वः प्रेक्षणम्, सूर्यावेक्षणम्, रश्म्युदीक्षणम्, सूर्यावर्तनम्, गार्हपत्योपस्थानादिकम्, ततो व्रतविसर्जनविधिः, तेन पुनर्यथावन्मानुषत्वलाभसिद्धिश्चेति ( ख० १–२३ )।

प्रथमं काण्डं समाप्तम्।



# द्वितीयं काण्डम्

[ अ० १ ब्रा० १ ]

## अग्न्याधानविधिः—

तत्रोदकहिरण्योषाखुकरीषशर्करारूपपञ्चसम्भाराणां विधानम्, तेषां निवपनोल्लेखनाभ्युक्षणसंस्काराणां विधानञ्चेति ( ख० १–१४ )।

[ अ० १ ब्रा० २ ]

## अग्न्याधानकालनिर्णयाय प्रथमं तावत् नक्षत्रविधानम्—

तत्र कृत्तिकादिनक्षत्रेषु आधानप्रतिपादनम्, पुनर्वस्वोः पुनराधानविषयत्वकथनम्, लाभकामस्य हस्तेऽग्न्याधानविधानम्, क्षत्रियस्य चित्रायामग्न्याधानम्, ततो नक्षत्रपदार्थनिर्वचनञ्चेति ( ख० १–१९ )।

[ अ० १ ब्रा० ३ ]

## वसन्ताद्यृतूनां देवपित्रात्मना द्विविधत्वकथनम्—

तत्रायनविधानम्, तयोः स्वरूपकथनादिकञ्च। ततो ब्राह्मणादिवर्णक्रमेणर्तुव्यवस्थादि, ततः श्वर्जीवनस्य निश्चयाभावात्कालप्रतीक्षणमकर्तव्यमित्युपदेशश्चेति ( ख० १–९ )।

[ अ० १ ब्रा० ४ ]

## अग्न्याधानप्रयोगः—

तत्र प्रथममुपवसथदिवसकर्तव्यताविचारः, ब्रह्मौदनपाकविध्यादि, व्याहृतीनामृग्यजुःसामातिरिक्तत्वेन वर्णनम्, वर्णत्रयोत्पत्यादिहेतुत्वेनाऽऽधानस्य स्तुतिः, अग्नेराहरणप्रकारः, तस्याग्नेराधानम्, तस्य सार्पराज्ञीभिर्ऋग्भिरुपस्थानञ्चेति ( ख० १–३० )।

[ अ० २ ब्रा० १ ]

## पूर्णाहुतिविधिः—

तत्राग्न्याधेयाङ्गपवमानेष्टिनामाग्नेयेष्टिविधानम्, ततः पवमानपावकशुच्याख्याग्निदेवतात्रयाख्यानम्, ततः चरुपुरोडाशयाज्यापुरोऽनुवाक्यादीनां विधानादिकञ्चेति ( ख० १–२२ )।

२

[ अ० २ ब्रा० २ ]

**अग्न्याधानदक्षिणाविधानम्—**

तत्र षड्द्वादशादि—विकल्पाख्यानम्, दक्षिणाशब्दार्थकथनम्, अदक्षिणस्य यज्ञस्य व्यर्थताख्यानादिकम्, आहिताग्नेः सत्यवादितादिव्रतोपदेशश्चेति (ख० १–२०)।

[ अ० २ ब्रा० ३ ]

**पुनराधेयविधानार्थाख्यानम्—**

तत्र तस्यैव विधिप्रशंसे, ततः त्रैवर्णिकसाधारण्येनर्तुविशेषविधानम्, आदित्यस्य सर्वर्तुरूपताभिधानादिकम्, पुनराधित्सितस्याग्नेर्दर्भैरेवोद्धरणविधिः, व्रीहियवमययोरपूपयोरर्कपत्रद्वयसंगृहीतयोर्गार्हपत्याहवनीयायतनयोर्निधानादिकम्, ततः पुनराधेयस्य दक्षिणा निर्देशविधिश्चेति (ख० १–२८)।

[ अ० २ ब्रा० ४ ]

**अग्निहोत्रविधानार्थाऽऽख्यायिका—**

तत्र सृष्टिवर्णनम्, अग्निहोत्रहवण्याः स्रुचोर्वैकङ्कतत्वकथनम्, अग्निहोत्र-होमद्रव्यस्य पयस उत्पत्यादिकथनम्, अग्निवायुसूर्याणां पौर्वापर्यनिरूपणञ्चेति (ख० १–१८)।

[ अ० ३ ब्रा० १ ]

**अग्निहोत्रहोमकालविधिः—**

तत्राग्निहोत्रस्य ज्योतिष्टोमादित औत्कर्षविचारादि, ततोऽग्निहोत्रस्य याज्ञवल्क्याभिमतपाकयज्ञत्वोपन्यासः, तदाहुतिद्वयविधानार्थाख्यायिका, ततो होमप्रकारोपदेशः, हुतशिष्टस्य स्थालीमध्यस्य पयसो ब्राह्मणपेयत्त्वादिविधानञ्चेति (ख० १–३९)।

[ अ० ३ ब्रा० २ ]

**अग्न्युपस्थानम्—**

तत्र यजमान इन्द्रादिपञ्चदेवतानां स्थितिस्वीकारपूर्वकं तद्विशेषवर्णनम्, पञ्चानाममग्नीनां देवत्वप्रतिपादनञ्च। तत आहवनीयाग्न्युपस्थानम्, गार्हपत्यस्योपस्थानम्, अन्वाहार्यपचनोपस्थानम्, सभ्याग्न्युपस्थानम्, आवसथ्याग्न्युपस्थानादिकञ्चेति (ख० १–१८)।

[ अ० ३ ब्रा० ३ ]

**गार्हपत्याहवनीययोरग्न्योरुपस्थानम्—**

तत्रादावग्निस्वभावादिकथनम्, अग्न्यग्निहोत्रिणोः पितापुत्रसम्बन्धकथनादिकम्, अग्निहोत्रयाजिनोरमृतत्वावाप्तिफलकथनम्, मृत्योरतिमोक्षलाभप्रकारः, अग्निहोत्रद्वारेतरेष्वपि यज्ञेष्वतिमुक्तिप्रदर्शनम्, ततो होमार्थमन्त्रागमनविधिः, अग्निहोत्रस्य नीरूपतया चित्याग्निसम्पत्त्या महदुक्थसम्पत्त्या च स्तुतिश्चेति (ख० १–२०)।

[ अ० ३ ब्रा० ४ ]

**सायङ्कालीनाग्न्युपस्थानविधानार्थाख्यानम्—**

तत्राऽऽहवनीयोपस्थानविध्यादि, ततोऽग्निहोत्रहोमद्रव्यस्य पयसः संपादनप्रकारादिकम्, ततो गार्हपत्योपस्थानविधिः, तत्र समन्त्रकं गोस्पर्शनम्, दर्शपूर्णमासयोरिवाग्निहोत्रेऽपि पुत्रनामग्रहणविधिश्चेति (ख० १–४१)।

[ अ० ४ ब्रा० १ ]

**क्षुल्लकोपस्थानम्—**

प्रवासं करिष्यतो यजमानस्योपस्थानम्, गच्छतोऽग्निहोत्रिणः पथि वाचंयमविध्यादिकञ्च। ततोऽमन्त्रकोपस्थानपक्षप्रतिपादनम्, प्रवासादागतस्याग्निहोत्रिणोऽग्निविषयककर्तव्योपदेशादिकम्, ततो गृहाणामुपचारश्चेति (ख० १–१४)।

[ अ० ४ ब्रा० २ ]

**मासिमास्यमावास्यायां पिण्डपितृयज्ञविधानार्थाख्यानम्—**

तत्र पितॄणामर्चनप्रकारोपदेशादि, ततो गवादिपशूनामसुराणाञ्च प्रजापत्युपसदनादिकथनम्, देवानां प्रजापत्याज्ञानुलङ्घनकारित्वाख्यानादिकम्, मनुष्याणां सायं प्रातराशित्वाद्युपदेशश्च। ततः पितृयज्ञकालादिनिर्णयः, तत्र पिण्डदानार्थाग्निनिधानावनेजनादीनां विधानम्, पिण्डदानानन्तरं परागावर्तनादीनां विधानम्, ततः पितृप्रार्थनस्य पिण्डशेषावघ्राणस्य च विधानादिकञ्चेति (ख० १–२४)।

[ अ० ४ ब्रा० ३ ]

**आग्रयणेष्टिविधानम्—**

तत्रैन्द्राग्नादीनां हविषां विधानम्, अनाश्रितदोषविचारः, दक्षिणाविधानम्, ईजानानीजानभेदेनाऽऽग्रयणव्यवस्था, ततो ब्राह्मणभोजनविधिः, तद्दक्षिणाविधिश्चेति (ख० १–१४)।

[ अ० ४ ब्रा० ४ ]

**दाक्षायणेष्टिः—**

तत्राख्यायिका, तन्नामनिर्वचनम्, फलान्तरहेतुताप्रतिपादनायाख्यायिकामुखेन परकृतित्रयोपन्यासकथनञ्च। ततो दाक्षायणयज्ञप्रयोगः, ततः पूर्वपौर्णमास्यामनुष्ठेययागविधिः, परेद्युरनुष्ठेययागद्वयविध्यादिकञ्च। ततः पौर्णमास्यां सान्नाय्ययागविध्यादि, अमावास्यायां पयस्यायागविध्यादिकञ्च। ततो वाजिनहोमविधानादि, यजमानपञ्चमानामृत्विजां भक्षणविधिश्चेति ( ख० १–२५ )।

[ अ० ५ ब्रा० १ ]

**चातुर्मास्ययागविधिः—**

एतद्यागीयं वैश्वदेवाख्यं प्रथमं पर्व, तस्य प्रजासृष्टिहेतुत्वाख्यानम्, ततो वैश्वदेवयागप्रयोगविधिः, तत्राग्नेयादीनां पञ्चानां हविषां विधानम्, पयस्यायागविधानादिकम्, वैश्वदेवयागस्य प्रजाश्रीफलसाधनत्वाख्यानञ्चेति ( ख० १–२२ )।

[ अ० ५ ब्रा० २ ]

**चातुर्मास्ययागीयं वरुणप्रघासाख्यं द्वितीयं पर्व—**

तत्र वरुणपाशमोचनसाधनत्वादिकथनम्, तत्प्रयोगविधिश्च। तत उत्तरवेदिनिवपनादिकम्, करीराणामावपनम्, शमीपर्णानामावपनादिकञ्च। ततः करम्भपात्राणां निर्माणम्, तत्पात्रनिर्माणावशिष्टाद्यवपिष्टान्मेषमेषीमिथुनस्य निर्माणम्, तयोः प्रयोगादिकञ्च। ततोऽग्निमन्थनविधिः, पत्नीव्यभिचारप्रश्नादिकम्, करम्भपात्रसंख्याविधानादि, अध्वर्युप्रतिप्रस्थात्रोराश्रावणादिकम्, ततः पस्यायाः प्रचारादि, अध्वर्योः प्राशित्रावदानम्, इडोपह्वानादिकञ्च। तत आसेचनम्, अतिक्रमणम्, स्रुग्व्यूहनम्, पत्नीसंयाजः, समिष्टयजूंषि, ततोऽवभृथगमनादिकम्, केशश्मश्रुवपनादिकञ्चेति ( ख० १–४८ )।

[ अ० ५ ब्रा० ३ ]

**चातुर्मास्ययागीयं साकमेधाख्यं तृतीयं पर्व—**

तस्य पापोपशमनहेतुत्वाख्यानादिकम्, तत अनीकवतीष्टिः, गृहमेधीयेष्टिः, सान्तपनीयेष्टिः, ततः पूर्णदर्व्याख्यस्य कर्मणो विधानादि, ऋषभध्वनौ होमविधानादि, अन्त्येष्टिविधानादिकञ्चेति ( ख० १–२० )।

[ अ० ५ ब्रा० ४ ]

**महाहविषः प्रयोगविधिः—**

तत्राऽऽग्नेयादीनामष्टानां हविषां विधानम्, तत्फलकथनञ्चेति (ख० १–११)।

[ अ० ६ ब्रा० १ ]

**पित्र्येष्टिः—**

तत्र तावत्प्रथमं पितॄणामुत्पत्तिकथनम्, तेषां वसन्ताद्यृतुरूपत्वाख्यानञ्च। ततः पिण्डपितृयज्ञविधिः, तत्र सोमपादीनां हविर्विधानम्, ततः पित्र्यावेदेर्निर्माणप्रकारादि, तदीयसामिधेनीप्रयोगोपदेशादि, स्विष्टकृत्स्थानीयकव्यवाहनयागविध्यादि, ततः पिण्डदानविध्यादि, हुतोच्छिष्टस्याग्न्यादौ प्रक्षेपादिविधिविकल्पश्चेति ( ख० १–४८ )।

[ अ० ६ ब्रा० २ ]

**त्र्यम्बकेष्टिविधानाख्यानम्—**

तत्र त्र्यम्बकनामनिर्वचनम्, त्र्यम्बकहविषामभिधारणादिविधानम्, ततश्चतुष्पथप्रत्यागतकालीनप्रयोगः, परिगमनविध्यादि, ततो मूतकासजनविधिः, केशश्मश्रुवपनविध्यादिकञ्चेति ( ख० १–१९ )।

[ अ० ६ ब्रा० ३ ]

**चातुर्मास्ययागीयं शुनासीरीयाख्यं चतुर्थं पर्व—**

तत्र चतुर्णामेव यागानामक्षय्यादिफलहेतुत्ववर्णनादि, ततः शुनासीर्य्यप्रयोगः, तत्राष्टानां हविषां विधानादिकम्, दक्षिणाविधानञ्च। ततः शुनासीर्य्ययागस्य कालविचारः, परिवर्तनविधिश्चेति ( ख० १–१७ )।

[ अ० ६ ब्रा० ४ ]

**वैश्वदेवादिषु सर्वेष्वपि पर्वसु सेतिकर्तव्यताकपरिवर्तनविधिः—**

तत्र चातुर्मास्ययागस्य शत्रुविजयसाधनत्वाख्यानम्, वैश्वदेवस्याग्निमुखत्वाख्यानम्, वरुणप्रघासस्य वरुणमुखत्वाख्यानम्, साकमेधस्येन्द्रमुखत्वाख्यानञ्च। ततः केशश्मश्रुच्छेदनादिविधिः, चातुर्मास्ययाजिनां परमगतिफलावाप्तिकथनञ्चेति ( ख० १–९ )।

द्वितीयं काण्डं समाप्तम्।



# तृतीयं काण्डम्

[ अ० १ ब्रा० १ ]

**शालानिर्माणाय देवयजनपरिग्रहः—**

तत्र प्राचीनवंशशालानिर्माणम्, उदीचीनवंशशालानिर्माणञ्च। ततो दीक्षितशयने नियमविशेषविध्यादि, तत्र शूद्रादीनामभिप्राप्तिनिषेधादि, दीक्षितस्य शालाप्रवेशविधिश्चेति ( ख० १–१२ )।

[ अ० १ ब्रा० २ ]

**दीक्षाविधिः—**

तत्र दीक्षाकालनिरूपणम्, परिश्रयणम्, नखनिकृन्तनम्, केशश्मश्रुवपनम्, स्नानम्, वासः परिधानम्, शालाप्रवेशविधिश्चेति ( ख० १–२१ )।

[ अ० १ ब्रा० ३ ]

**दीक्षाङ्गभूताग्नावैष्णवेष्टिप्रयोगः—**

तत्रापः प्रणयनम्, आदित्यचरुविधानम्, प्रयोगेऽस्मिन्सामिधेनीपाञ्चदश्ये प्राप्ते तत्साप्तदश्यविध्यादि। ततो दीक्षितस्याभ्यङ्गविधिः— तत्राक्ष्णोरञ्जनप्रकारादिकम्, दर्भैः पावनम्, अङ्गुलीनां न्यञ्चकरणम्, मुष्टिकरणम्, वाग्यमनञ्च। ततो दीक्षाहुत्यर्थं शालाप्रवेशादिविधिश्चेति ( ख० १–२८ )।

[ अ० १ ब्रा० ४ ]

**दीक्षाहुतिविधिः—**

तत्रौद्ग्रभणहोमादि, तत एकाहुतिपक्षोपन्यासः, पूर्णाहुतिविधानञ्चेति ( ख० १–२३ )।

[ अ० २ ब्रा० १ ]

**कृष्णाजिनदीक्षाविधिः—**

तत्र कृष्णाजिनद्वयास्तरणादिकम्, उपवेशनप्रकारः, कृष्णाजिनारोहणम्, तत्पश्चाद्भाग एव प्रथमोपवेशनविधानञ्च। ततो मेखलादीक्षाविधिः— तदुपादानद्रव्यकथनम्, मुञ्जमिश्रितत्वाख्यानादिकञ्च। ततो वाससाच्छादनविधिः—वस्त्रान्ते कृष्णविषाणबन्धनम्, ततः तदुत्पत्त्याख्यानम्, गर्भवर्णनम्, वाग्वर्णनञ्च। ततस्तद्बन्धने

ऊर्ध्वमुखत्वविधानम्, तद्बन्धनप्रकारोपदेशः, तेनैव कण्डूयनविधानञ्च । ततो दण्डदीक्षाविधिः— तत्र दण्डकाष्ठनिरूपणम्, दण्डप्रमाणम्, दण्डोच्छ्रयणम्, दर्भैः पावनञ्च । ततो मुष्टीकरणवाग्यमनविधिः, अध्वर्युकर्तृकदीक्षितावेदनविधिश्चेति ( ख० १–४० )।

[ अ० २ ब्रा० २ ]

**वाग्विसर्जनकालविधानम्—**

तत्र वाग्विमोककालविषये पक्षान्तरोपन्यासः, वाग्विमोकस्याग्न्यभिमुखकर्त्तव्यत्वम्, प्रसङ्गतो वनस्पतेर्यज्ञार्हत्वोपपादनञ्च । ततो व्रतश्रपणविध्यादि, प्रथमव्रतविषयकपक्षद्वयोपन्यासः, दैवमानुषकालयोर्विभागश्च । ततो यजमानकर्तृकमुदकोपस्पर्शनम्, नाभ्युपस्पर्शनम्, दीक्षितस्य मूत्रोत्सर्गे विशेषोपदेशादि, तस्य स्वापकालेऽग्निपरिदानविध्यादि, अव्रत्यस्य क्रोधादेस्त्यागविधिः, तत्प्रायश्चित्तमन्त्रविधिश्च । अस्तमयोदयकालयोः व्रतिदिवसमध्वर्युकर्तृकं संप्रेषणम्, दीक्षितस्यानियमितसञ्चारस्वापनिषेधः, दीक्षितशब्दार्थनिर्वचनञ्चेति ( ख० १–३० )।

[ अ० २ ब्रा० ३ ]

**प्रायणेष्टिविधानम्—**

तत्र पथ्यास्वस्तिदेवतादीनां यागानां विधानम्, ततस्तत्पञ्चसंख्यानामृतुपरिज्ञानहेतुत्वेन प्रशंसादि, ततः प्रथमादिदेवतया उदीच्यादिदिशः प्रज्ञानोपपादनम्, आतिथ्याया इष्टेः सोमाध्वरशिरोरूपत्वेन वर्णनम्, प्रायणीयोदयनीययोस्तु बाहुद्वयरूपेण । ततः प्रायणीयेष्टेः संय्यवन्तत्वम् न तु पत्नीसंय्याजान्तत्वमिति निर्णयश्चेति ( ख० १–२३ )।

[ अ० २ ब्रा० ४ ]

**सोमक्रयविधानार्थाख्यानम्—**

ततः सोमक्रयप्राक्कालिकहोमविधानम्, हिरण्यस्यापोद्धारविधानम्, तत्प्रशंसनञ्च । ततोऽन्वारम्भविधिः, ततः सोमक्रयण्यवस्थापनम्, तदभिमन्त्रणम्, तस्या एवोदकप्रयाणविधानञ्चेति ( ख० १–२२ )।

[ अ० ३ ब्रा० १ ]

**सोमक्रयण्या अनुनिष्क्रमणविधिः—**

ततो होमार्थं हिरण्यनिधानस्तुतिः, आज्यस्तुतिश्च । ततः समन्त्रकहोमविधानम्, सोमक्रयणीपदस्य परिलेखनम्, तत्सप्तमपदपांसोः स्थाल्यां समन्त्रक-

स्थापनादि, ततः पत्न्यै तत्प्रदानम्, सोमक्रयणीप्रदर्शनञ्च। ततः सोमक्रयण्यास्त्रिविधस्वरूपत्वकथनम्, श्वेताक्ष्याः सोमक्रयणीत्वनिषेधः, ततोऽङ्गविकृत्यादिदोषदुष्टायाः सोमक्रयण्या गोर्वर्जनीयत्वविधानादिकञ्चेति ( ख० १–१६ )।

[ अ० ३ ब्रा० २ ]

## अध्वर्युपात्रे तत्पदपांसुप्रक्षेपविधिः—

ततो हस्तप्रक्षालनम्, अध्वर्योः स्वाङ्गुल्यां हिरण्यबन्धनम्, सोमोपनहनार्थं संप्रैषविधानादि, अध्वर्युयजमानयोरन्तरस्य सोमोपनहनादानकर्त्तव्यताख्यानम्, प्राचीनवंशस्य पुरोदेशे उपरवप्रदेशेऽनुपादेयांशस्यापनयनम्, सोमविक्रयिणः स्थाननिर्देशश्च। ततः क्रयदेशं प्रत्यागमनसमयेऽध्वर्योर्यजमानवाचनादि, ततः सोमाभिमर्षणम्, सोमविचिन्वनञ्च। तत आस्तृते वाससि सोमोन्मानविधानम्, तत्प्रकारप्रदर्शनम्, तद्गतदशसंख्याप्रशंसनम्, सोमाधःप्रसारितस्य वस्त्रस्य पर्यन्तदेशानेकत्र संगृह्योष्णीषेण ग्रन्थ्यादिकरणञ्चेति। ( ख० १–१९ )।

[ अ० ३ ब्रा० ३ ]

## सोमक्रयविधिः—

तत्र तत्पणनव्यवहारः, प्रथमं गोः कलया सोमक्रयप्रस्तावः, प्रसङ्गादत्र दशविधगोर्वीर्यकथनञ्च। ततो गोः शफेन सोमक्रयप्रस्तावः, ततो गोः पदा, ततो गोर्धेन, ततो गवा, ततो गोवयः प्रश्नश्च। तत एकहायन्या सोमक्रयण्या सह देयेषु हिरण्यादिषु दशद्रव्येषु मध्ये हिरण्ये दीयमाने यजमानपठनीयमन्त्रविध्यादि, ततः सोमग्रहणम्, तत्स्थापनम्, आच्छादनञ्च। ततो धिष्ण्यानां वर्णनम्, अध्वर्योर्यजमानवाचनम्, ततः सोममादायोत्थानम्, शकटसमीपे गमनादिकञ्चेति ( ख० १–१८ )।

[ अ० ३ ब्रा० ४ ]

## शकटमध्ये सोमस्थापनाय कृष्णाजिनास्तरणम्—

ततः शकटेन सह सोमस्य वाससा बन्धनम्, कृष्णाजिनद्वयपक्षे तु तयोरेकस्य प्रतिनाहभाजनविधानादिकम्, ततः चिबुकप्रमाणोद्धतफलकयोरन्तरेण सुब्रह्मण्यकर्तृकमनडुद्द्वयप्रेषणम्, सुब्रह्मण्यस्य तस्याधःस्थितिविधानम्, पलाशशाखया तत्प्राजनम्, तयोः शकटे योजनादिकम्, सुब्रह्मण्याह्वानञ्च। ततः प्रतिप्रस्थाताऽग्नीषोमीयं पशुं सोमस्याभिमुखं स्थापयेदिति विधिः, अध्वर्योस्तच्छकटोपस्तम्भनविधिः, ततोऽध्वर्व्या-

दीनां चतुर्णामृत्विजां राजासन्द्यानयनम्, तदासन्द्या नाभिप्रमाणमौदुम्बरीत्वविधानम्, तदुपरि कृष्णाजिनास्तरणम्, तत्र सोमासादनम्, शालाप्रवेशनम्, उदपात्रस्थापनञ्चेति ( ख० १–३१ ) ।

[ अ० ४ ब्रा० १ ]

**आतिथ्येष्टिविधिः—**

तत्र प्रथममतिथिस्वरूपव्याख्यानादिकम्, ततो हविरासादनविधानम्, आवपनम्, नवकपालपुरोडाशविधिः, कार्ष्मर्यमयाः परिधयः, आश्वबालः प्रस्तरः, ऐक्षव्यौ विधृती च । ततोऽग्निमन्थनविधिः— तत्राधिमन्थनशकलनिरूपणम्, अधरारणिस्वरूपकथनम्, मन्थनम्, ततोऽनुप्रहरणविध्यादि, अस्या इष्टेरिडान्तत्वविधानञ्चेति ( ख० १–२६ ) ।

[ अ० ४ ब्रा० २ ]

**तानूनप्त्रविधिः—**

तत्र तदर्थमाज्यग्रहणादिविधानम्, तानूनप्त्रमाज्यं सर्वैः स्पृष्टमपि तद्यजमानायैव दातव्यमिति निर्णयश्चेति ( ख० १–१६ ) ।

[ अ० ४ ब्रा० ३ ]

**अवान्तरदीक्षाप्रायश्चित्तविशेषविधिः—**

ततोऽवान्तरदीक्षाकल्पनप्रकारः, तत्र समिदाधानम्, तदाख्यानम्, समिद्भ्याधानम्, दीक्षाहुतिवदत्राऽप्यङ्गुल्यादिन्यञ्चनम्, मदन्त्युपस्पर्शनपूर्वकसोमाप्यायनविधिश्च । ततो निन्हवविधिः, तत्कालनिर्णयः, अध्वर्युकर्तृकप्रैषादिविधानञ्चेति ( ख० १–२२ ) ।

[ अ० ४ ब्रा० ४ ]

**उपसदिष्टिः—**

तत्र तत्कालविधानम्, ततः प्रधानयागत्रयार्थमाज्यग्रहणप्रकारोपदेशादिकम्, उपसदां त्रित्वविधानम्, तत्प्रसंशनम्, द्वादशोपसत्पक्षे कर्तव्यविधानादिकञ्चेति ( ख० १–२७ ) ।

[ अ० ५ ब्रा० १ ]

**महावेदिनिर्माणविधिः—**

तत्र स्थाननिरूपणम्, वेद्याः श्रोणिद्वयप्रमाणनिरूपणम्, आयामस्य पश्चाद्भागावधिकथनम्, प्राचीनावधिप्रदर्शनम्, अंशद्वयनिरूपणादिकञ्च । तत उत्तरवेदिनिर्माण-

विधिः—तन्मानादिकथनम्, साधनद्रव्यविधानम्, चात्वालनिर्माणप्रकारोपदेशादि, ततो वेद्या अद्भिरभ्युक्षणम्, सिकताप्रकिरणम्, उत्तरवेदेर्यज्ञियवृक्षशाखया प्रच्छादनविधिश्चेति ( ख० १–३६ )।

[ अ० ५ ब्रा० २ ]

**उत्तरवेद्यामग्निप्रणयनप्रयोगविधिः—**

तत्रेध्माभ्याधानादिकम्, प्रोक्षण्यादानम्, निनयनम्, परिधीनां परिधानञ्चेति ( ख० १–१८ )।

[ अ० ५ ब्रा० ३ ]

**सदोहविर्धानादीनां निर्माणविधिः—**

तत्र हविर्धानप्रवर्तनाऽभ्यनुज्ञापनाय सवित्रहोमविधिः, पत्न्या अक्षधुरां समञ्जम्, तत उत्तरहविर्धानस्य दक्षिणवर्तन्यां हिरण्याधानपूर्वकमाज्यहोमविधानादि, हविर्धानयोः स्थापनप्रदेशनिर्णयः, तयोरभिमन्त्रणे उपस्तम्भनमेथ्युपहननच्छदिर्निधानादि, रराट्युपस्पर्शनादिकञ्चेति ( ख० १–२५ )।

[ अ० ५ ब्रा० ४ ]

**सोमाभिषवायोपरवाणां निर्माणविधानम्—**

तत्र तत्खननस्य प्रयोजनद्वयाख्यानम्, ततोऽभ्र्यादानादिकम्, खननम्, तदवमर्शनञ्च। ततोऽध्वर्युयजमानयोर्मिथोऽस्त्रसम्मर्शनम्, अवटप्रोक्षणम्, तेषामुपरिबर्हिराच्छादनम्, ततोऽधिषवणफलकयोरुपधानम्, पर्यूहनम्, परिदृंहनम्, अधिषवणचर्मस्थापनम्, ग्राव्णां निधानञ्चेति ( ख० १–२४ )।

[ अ० ६ ब्रा० १ ]

**औदुम्बरीनिखननविधिः—**

तत्र प्रथममौदुम्बर्याः सदोमध्ये स्थाननिरूपणम्, अभ्र्यादानम्, अवटपरिलेखनम्, तत्खननम्, तत्प्राग्देशे औदुम्बर्याः स्थापनादि, प्रोक्षणीशेषस्योदकस्यावटेऽवनयनम्, तदुपरि बर्हिरास्तरणञ्च। तत औदुम्बर्या उच्छ्रयणपर्यूहणादिविधानम्, ततश्छदिर्निधानम्, तेषां नवसंख्यात्वेन प्रसंशनम्, ततस्सदोनिर्माणादिविधानम्, तत्प्रकारोपदेशादि, तद्द्वारशाखादीनां सीवनादिविधानम्, आग्नीध्रस्थाननिर्णयश्चेति ( ख० १–२९ )।

[ अ० ६ ब्रा० २ ]

**धिष्ण्यविधिः—**

तत्र सौपर्णीकाद्रवोपाख्यानम्, पुरुषस्य ऋणत्रययुक्तत्वाभिधानम, धिष्ण्यानां सोमरक्षकत्वाभिधानादिकं चेति ( ख० १–२६ )।

[ अ० ६ ब्रा० ३ ]

**वैसर्जनहोमविधिः—**

तत्राऽग्नीषोमीयप्रयोगविध्यादि, तत आहवनीये वैसर्जनहोमादिविधानम्, ग्रावादीनामाग्नीध्रे समुपस्थापनम्, अध्वर्योरिध्मप्रोक्षणादिकञ्च। ततो हविर्धानप्रवेश-विधिः— तत्र दक्षिणहविर्धानपरिवृतमध्यप्रदेशे कृष्णाजिनस्योपरि तदुपस्थानम्, निष्क्रमणम्, आहवनीये समिदभ्याधानम्, दीक्षितान्नभोजननामग्रहणयोर्वैसर्जनहोमं यावन्निषेधश्चेति ( ख० १–२१ )।

[ अ० ६ ब्रा० ४ ]

**यूपनिर्माणविधिः—**

ततो यूपं छेत्स्यन्नाहवनीये होमः, तच्छेदनादिविधिः, ततो यूपानुमन्त्रणम्, यूपस्याऽष्टाश्रित्वविधानञ्चेति ( ख० १–२७ )।

[ अ० ७ ब्रा० १ ]

**यूपस्थापनविधिः—**

तत्राऽवटनिर्माणार्थमभ्रिग्रहणम्, यूपावटे तत्स्थापनादि, ततो यूपाञ्जनम्, चषालप्रतिमुञ्चनम्, अग्निष्ठाञ्जनम्, यूपोच्छ्रयणम्, तन्माननिरूपणम्, पर्यूहणम्, चषालोदीक्षणम्, रशनापरिव्ययणम्, यूपशकलावगूहनम्, स्वरुनामनिर्वचनम्, यूपपूर्वार्द्धमानादिकथनञ्चेति ( ख० १–३२ )।

[ अ० ७ ब्रा० २ ]

**यूपैकादशिनीविधिः—**

तत्रोपशययूपनिधानम्, अग्निष्ठप्रमुखानां सर्वेषामेव यूपानामेकस्य वोच्छ्रयण-मिति निर्णयः, एकादशिनीपक्षे यूपोच्छ्रयणक्रमविधानम्, पात्नीवतपशुप्रयोगविधा-नञ्चेति ( ख० १–८ )।

[ अ० ७ ब्रा० ३ ]

**पशूपाकरणविधिः—**

तत्र पशुनियोजनार्थं यूपस्य कर्तव्यताख्यापनार्थाख्यानम्, ततोऽग्नीषोमीय-पशुयूपे नियोगादिविधानम्, सार्थवादोपाकरणविधानञ्चेति ( ख० १–१२ )।

[ अ० ७ ब्रा० ४ ]

**पशुपाशविधिः—**

तत्र प्रथमं पशोर्बन्धनार्थं पाशकरणम्, पशोः प्रोक्षणम्, ललाटाञ्जनञ्च। ततो जुहूपभृतोः सादनादि, यजमानप्रवरनिगदार्थान्वाख्यानञ्चेति ( ख० १–११ )।

[ अ० ८ ब्रा० १ ]

**पशुसंज्ञपनप्रयोगविधिः—**

तत्र होतृषदने होतुरुपवेशनविधानादि, तत आज्याचाभ्यां यूपशकलाभ्यां पशोर्ललाटस्पर्शादिविधानम्, तत्पर्यग्निकरणञ्च। ततो यजमानादीनां शामित्रप्रदेशगमनविधानादि, विशशनप्रदेशेऽध्वर्युकर्तृकास्तरणादि, ततत्संज्ञपनप्रकारश्चेति ( ख० १–१६ )।

[ अ० ८ ब्रा० २ ]

**पत्नीकर्मविधिः—**

तत्र संज्ञप्ते पशौ पत्नीवाचनम्, पशोः प्राणमुखनासादीनां पत्न्या प्रक्षालनञ्च। ततः पशुवपोत्खेदविधिः, वपाश्रपण्योः कार्ष्मर्यमयत्वविधानपूर्वकं परिवासनम्, ततो वपायागः, तदनुप्राशनञ्चेति ( ख० १–३० )।

[ अ० ८ ब्रा० ३ ]

**पशुपुरोडाशयागविधिः—**

तत्र तस्य देवताविधानादिकम्, शमितुः पशुविशसनम्, शमितृसंशासनम्, हृदयाभिघारणम्, अवदानक्रमविधानादिकम्, मनोतानां निर्वचनञ्च। ततो वसाहोमविधानम्, वनस्पतियागविधानादिकम्, दिग्व्याघारणम्, पशोः सम्मर्शनञ्चेति ( ख० १– ३७ )।

[ अ० ८ ब्रा० ४ ]

**अथोपयाजविधिः—**

तत्रैकादशप्रयाजानुयाजाः, उपयाजाश्चैकादश इति पशोस्त्रीण्येकादशानीत्यादीनां विधानम्, अनुयाजार्थं पृषदाज्यग्रहणविधानञ्च। तत उपयाजप्रसंशनम्, तन्नामनिर्वचनम्, प्रतिमन्त्रं प्रतिवषट्कारं तद्धोमविधानादिकञ्चेति ( ख० १–१८ )।

[ अ० ८ ब्रा० ५ ]

**जाघन्याः पत्नीसंयाजविधानम्—**

ततो हृदयशूलेनाऽवभृथगमनम्, परिकर्मिणे हृदयशूलसमर्पणम्, तन्निगूहनम्, तदभिमन्त्रणम्, तच्छूलोपगूहननिषेधश्चेति ( ख० १—११ )।

[ अ० ९ ब्रा० १ ]

**पश्वेकादशिन्या विधानार्थाख्यायिका—**

तत्पशूनां क्रमविधानम्, तेषामुदङ्नयने वपाप्रचारे च तत्क्रमस्यैवातिदेशविधिश्चेति ( ख० १–२७ )।

[ अ० ९ ब्रा० २ ]

**वसतीवरीग्रहणविधिः—**

ततो वसतीवरीग्रहणार्थं गमनविधानम्, तासामपां सवनत्रयार्थं विभजनम्, तद्ग्रहणकालनिर्णयादिकञ्च। ततस्तदासादनादिविधानम्, वसतीवरीशब्दनिर्वचनम्, वसतीवरीग्रहणप्रभृतीनामाग्नीध्रसादनान्तानां मन्त्राणां सप्तसंख्याकत्वेन शक्करीत्वसंपत्त्या प्रसंशनञ्चेति ( ख० १–१७ )।

[ अ० ९ ब्रा० ३ ]

**सवनीयपश्वर्थप्रयोगविधिः—**

ततः सोमोपावहरणम्, उपावहृतस्य सोमस्योपस्थानञ्च। ततः प्रातरनुवाकप्रयोगविधिः-तस्य संप्रैषकालनिर्णयादि, तत एकधनानयनार्थं होमविधानम्, चतुर्णां प्रैषाणां विधानम्, एकधनानयनार्थं होत्रादीनां मार्गनिरूपणम्, प्रचरणीहोमविधानञ्च। ततो हुताया आहुत्या अपसरणादिकम्, मैत्रावरुणचमसेनोन्नयनम्, होत्रादीनां देवयजने पुनरागमनविधानादिकञ्चेति ( ख० १–३४ )।

[ अ० ९ ब्रा० ४ ]

**सोमाभिषवप्रयोगविधिः—**

तत्र दारुमयफलकयोरुपरि पर्युपवेशनम्, अध्वर्योर्ग्रावादानम्, वाग्यमनम्, सोमोन्मानम्, सोमाभिमर्शनम्, निग्राभ्योदकैस्तत्सेचनम्, निग्राभ्याशब्दार्थकथनम्, सोमोपसर्जनम्, निग्राभ्यासिञ्चनम्, सोमप्रहरणम्, अभिषवप्रकारोपदेशश्च। ततो निग्राभ्योपायनम्, यज्ञनामनिर्वचनम्, होतृचमसेन ग्रहाणांग्रहणोपक्रमश्चेति ( ख० १–२५ )।

तृतीयं काण्डं समाप्तम्।



# चतुर्थं काण्डम्

[ अ० १ ब्रा० १ ]

**अंशुग्रहग्रहणविधिः—**

तत्र उपांशुव्युत्पत्तिप्रदर्शनम्, उक्तस्य सोमस्य गुणविशिष्टग्रहणविधानम्, उपनिवापविधानम्, उपांशुग्रहस्य सवनत्रात्मकत्वाख्यानञ्च। ततः क्षुल्लकाभिषवविधिः– तत्र विहिताभिषवपर्यायत्रये प्रहारसंख्याविशेषविधानम्, काम्यसंख्याविशेषविधानञ्च। ततः परिमार्जनम्, सादितस्य पात्रस्य समन्त्रकविधानम्, हविर्धानान्निष्क्रमणविधानम्, वरवरणम्, समन्त्रकहोमविधानम्, उन्मार्जनम्, उपांशुसवनमादानविधानञ्चेति ( ख० १–२८ )।

[ अ० १ ब्रा० २ ]

**अन्तर्यामग्रहग्रहणविधिः—**

तत्र विधास्यमानस्य ग्रहस्याऽन्तर्यामनामव्युत्पादनायोपांश्वादेः प्राणव्यानात्मकत्वप्रतिपादनम्, ततोऽन्तर्यामग्रहग्रहणादि, खरे ग्रहाणां सादनप्रशंसनम्, ततः परिमार्जनविध्यादि, उदाहरणान्तरेण यज्ञस्य पक्षिरूपत्वोपपादनम्, आसादितानामुपांश्वादीनां लोकत्रयात्मकत्वेन स्तुतिश्चेति ( ख० १–२७ )।

[ अ० १ ब्रा० ३ ]

**ऐन्द्रवायवग्रहग्रहणविधिः—**

तत ऐन्द्रवायवग्रहस्य तदानन्तर्ये कारणविधानम्, तत्राऽऽख्यायिकया ग्रहस्य देतत्त्वोपपादनम्, ऐन्द्रवायवग्रहणम्, तद्धोमविधिश्चेति ( ख० १–१९ )।

[ अ० १ ब्रा० ४ ]

**मैत्रावरुणग्रहग्रहणविधिः—**

तत्रेन्द्रवायवानन्तर्ये कारणविधानम्, ग्रहस्य द्विदेवत्वप्रतिपादनम्, तस्य समन्त्रकग्रहणविधानम्, ततः पयसा सम्मिश्रणादिकञ्चेति ( ख० १–१० )।

[ अ० १ ब्रा० ५ ]

**आश्विनग्रहग्रहणविधिः—**

तत्र भक्षणीयविध्युपयोगित्वेनाऽऽश्विनग्रहस्य श्रोत्रात्मना प्रशंसनम्, तत आश्विनग्रहविधानार्थमुपोद्घातत्वेनाऽऽख्यायिकाप्रतिपादनम्, तस्य होमकालविधानम्, ततः समन्त्रकं ग्रहणञ्चेति ( ख० १–१९ )।

[ अ० २ ब्रा० १ ]

**शुक्रामन्थिग्रहग्रहणविधिः—**

तत्र तयोश्चक्षुरात्मना प्रशंसनम्, पुनर्भोक्तृभोग्यात्मना प्रशंसनञ्च। ततस्तयोर्ग्रहणम्, ग्रहणे शण्डामर्कयोः स्वीकारस्य होमे तत्परित्यागस्य च हेतुप्रदर्शनम्, विहितशुक्रग्रहग्रहणे स्वाभिमतमन्त्रविधानपूर्वकं शाखान्तरमतनिरूपणञ्च। ततः सोमरसस्य यवपिष्टैर्मिश्रणम्, प्रसङ्गाच्छुक्रामन्थिग्रहयोर्होमकाले कर्तव्यताविशेषविधानम्, अरत्निसन्धानम्, अध्वर्युप्रतिप्रस्थात्रोः परितो गमनविधानम्, आच्छादनम्, अपनयनम्, अप्रोक्षितस्य यूपशकलस्य निरसनम्, आश्रावणपूर्वकं सम्प्रैषविधानञ्च। ततो होमविधानादि, होतृचमसे शेषस्याऽवनयनम्, चमसाभ्युन्नयनम्, होत्रकाणां याजनम्, ततो याज्यापाठानन्तरमध्वर्युरनुमन्त्रणविधिश्चेति ( ख० १–३३ )।

[ अ० २ ब्रा० २ ]

**आग्रयणग्रहग्रहणविधिः—**

तत्र तस्य प्राणादीनामाश्रयीभूतमध्यदेहात्मत्वेन स्तुतिः, ततो ग्रहणम्, ग्रहणे देवतासम्बन्धप्रदर्शनम्, आग्रयणशब्दार्थप्रतिपादनम्, वाग्यमनकारणप्रतिपादनम्, दशापवित्रेण ग्रहं गृहीत्वा हिंकुर्यादिति विधानम्, ततः समन्त्रकं वाग्विसर्जनादिकञ्चेति ( ख० १–१६ )।

[ अ० २ ब्रा० ३ ]

**उक्थ्यग्रहग्रहणविधिः—**

तत्र तस्य सूक्ष्मशरीरात्मकत्वेन स्तुतिः, ततो ग्रहणम्, होमकाले तस्यैव ग्रहस्य समन्त्रकविभागपूर्वकं ग्रहणविधानम्, ततस्तद्देवताप्रतिपादकमन्त्रप्रदर्शनादि, तत उक्थ्यपर्यायत्रये शाखान्तरीयमतनिराकरणादिकञ्चेति ( ख० १–१८ )।

[ अ० २ ब्रा० ४ ]

**ध्रुवग्रहग्रहणविधिः—**

ततो ध्रुवग्रहस्य स्थाल्या ग्रहणमुपपादयितुमायुरात्मकत्वप्रतिपादनम्, ततोऽग्निष्टोमस्तोत्रावसरे सोमशेषस्याऽवनयनप्राप्तौ तन्निषेधश्च। ततोऽग्निष्टोमस्तोत्रपर्यन्तं सदनकर्तव्यत्वोपपादनम्, गृहीतस्य सोरसस्य खरे सादनादि, ध्रुवनामनिरुक्तिः, तद्गोपनविधानम्, प्रकारान्तरेण ग्रहलक्षणप्रशंसनम्, ततो ग्रहस्य वत्सरूपत्वप्रतिपादनम्, अवनयनम्, समन्त्रकं ग्रहग्रहणविधानादिकञ्चेति ( ख० १–२४ )।

[ अ० २ ब्रा० ५ ]

**बहिष्पवमानस्तोत्रादि-विधानम्—**

तत्राऽभिषवकाले ग्रहणकाले च स्कन्नानां सोमविन्दूनां तत्प्रत्यवायपरिहाराय विप्रुषां होमः, ततो वहिष्पवमानार्थमध्वर्युणा तृणादानविधानम्, तयोरन्यतरत्तृण-निरसम्, स्तोत्राणामुपाकरणे मन्त्रान्तरप्रदर्शनञ्च। ततो बहिष्पवमानस्तोत्र सम्पादनकारणोपदेशादि, तदनन्तरमध्वर्योः कर्तव्यप्रैषोपदेशश्च। ततो यूपस्य परिव्ययणम्, पशूपाकरणम्, आलब्धस्य पशोः सवनत्रयव्यापित्वकथनम्, प्राकृतपशुद्रव्यस्य देवतासम्बन्धविधानम्, ततः सवनीयपशुपुरोडाशहोमादि-विधानञ्चेति ( ख० १—२२ )।

[ अ० ३ ब्रा० १ ]

**सोमशेषभक्षणानन्तरभाविकर्तव्यत्वप्रतिपादनम्—**

तत्र तावदध्वर्युः सवनीयपुरोडाशशकलमच्छावाकस्य पाणौ प्रक्षिपेदिति विधानम्, ततोऽच्छावाककर्तृकयागानन्तरमृतुग्रहाणां यागविधानम्, ग्रहाणां संज्ञाविशेषविधानादि, ऋतुग्रहपात्रनिरूपणम्, अध्वर्युप्रतिप्रस्थात्रोः पर्यायेण निष्क्रमणप्रवेशादिकञ्च। तत ऐन्द्राग्नग्रहग्रहणम्, तत्प्रशंसनम्, पुनस्तस्य प्रका-रान्तरेण ग्रहणम्, तत्प्रशंसनञ्च। ततो गृहीतस्य सोमस्य समन्त्रकं खरे साद-नञ्चेति ( ख० १—२७ )।

[ अ० ३ ब्रा० २ ]

**शस्त्रप्रतिगरः—**

तत्र तच्छब्दनिर्वचनम्, प्रतिगरावसरेऽध्वर्योः पर्यावृत्तिविधानम्, ततः प्रतिगरस्य कालविधानम्, प्रसङ्गात्प्रातः सवनादीनां गायत्र्यादीनि छन्दांसि प्रदर्शनम्, प्रतिगरप्रशंसनम्, तत्स्वरूपकथनञ्चेति ( ख० १—१३ )।

[ अ० ३ ब्रा० ३ ]

**माध्यन्दिनसवनीयसोमाभिषवविधिः—**

ततोऽभिषवानन्तरं शुक्रादीनां पञ्चानां ग्रहाणां विधानम्, उक्थ्यमरुत्वतीययोः पौर्वापर्ये शाखान्तरमतनिरासपूर्वकं स्वमतस्थापनम्, ततः शुक्रादीनां ग्रहाणां ग्रहणादि, ग्रहाणां ग्रहणसादनमन्त्रकथनञ्च। ततः प्रकृतग्रहणाश्रितपात्राभ्यां ग्रहणविधानम्, माहेन्द्रग्रहग्रहणम्, उपाकरणादि-विधिश्चेति ( ख० १—१९ )।

[ अ० ३ ब्रा० ४ ]

**दक्षिणादानादिविधिः—**

तत्र दक्षिणाशब्दनिरुक्तिः, तत्क्लृप्तिप्रतिपादनम्, तत्क्लृप्ते ऋत्विक्सम्बन्धविधानम्, दाक्षिणहोमविधिश्च। यज्ञे हिरण्यादयश्चतस्रो दक्षिणा दातव्या इति विधानम्, आग्नीध्रशालायां होमप्रतिपादनम्, शालाप्रवेशविधिश्च। ततो दक्षिणादानकाले आग्नीध्रस्य प्राथमिकत्वम्, दक्षिणादाननिरूपणम्, तदनन्तरं मरुत्वतीयग्रहस्याऽनुवाक्यासम्प्रैषविधानादि, मन्थादिदानविधानञ्चेति ( ख० १–३३ )।

[ अ० ३ ब्रा० ५ ]

**आदित्यग्रहग्रहणविधिः—**

तत्राऽनुवषट्कारप्रदर्शनपूर्वकं द्विदेवत्ययागोपयुक्तप्रयोगविधानम्, ततो ग्रहग्रहणात्प्राक्कर्त्तव्यमनुष्ठानविशेषविधानादि, ग्रहणानन्तरं पात्रमपगृह्य पुनरपि समन्त्रकं ग्रहणम्, ततः सार्थवादं दधिग्रहणविधानम्, दधिग्रहणादित्यग्रहणयोः प्रशंसनम्, आदित्यग्रहस्योपांशुसवनाख्येन ग्राव्णाऽऽलोडनविधानादि, निष्क्रमणम्, आग्रयणग्रहग्रहणम्, प्रतिप्रस्थातृकर्तृकसंस्रावसेचनादिकञ्चेति ( ख० १–२४ )।

[ अ० ४ ब्रा० १ ]

**सावित्रग्रहग्रहणविधिः—**

तत्रोपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहग्रहणम्, सावित्रयागे नानुवषट्कार इति विधानम्, पूतभृतः सकाशान्महावैश्वदेवग्रहग्रहणविध्यादि, ततो होतुर्महावैश्वदेवशस्त्रसंशनम्, द्विदेवत्यपात्राणां खरे निधानादिकञ्चेति ( ख० १–१८ )।

[ अ० ४ ब्रा० २ ]

**सौम्यचरुप्रचारः—**

तत्र तृतीयसवनप्रचारोपदेशः, आज्यस्योपस्तरणम्, धिष्ण्येषु प्रदीप्तशलाकानामुपरि आज्येन होमविधानादिकञ्च। ततः पात्नीवतग्रहग्रहणविधानम्, प्रचरणीशेषेण पात्नीवतस्य मिश्रणम्, पात्नीवतयागः, पत्न्या अवेक्षणादि कञ्चेति ( ख० १–१८ )।

[ अ० ४ ब्रा० ३ ]

**हारियोजनग्रहः—**

ततो द्रोणकलशे आग्रयणाद्धारियोजनग्रहग्रहणम्, तत्र धानाप्रक्षेपविधानम्, अनुवाचनम्, धानासोमयागः, सदसि भक्षणार्थं द्रोणकलशस्याऽऽहरणम्,

ततः समन्त्रकं प्राणभक्षस्य भक्षणम्, चमसिनां समन्त्रकं स्वस्वचमसस्पर्शविधानम्, मुखोपस्पर्शनविधानञ्चेति ( ख० १–१५ )।

[ अ० ४ ब्रा० ४ ]

**समिष्टयजुर्होमविधिः—**

तत्र तन्नामनिरुक्तिः, तत्फलश्रुतिः, समिष्टयजुर्होमादिविधानञ्चेति ( ख० १–१४ )।

[ अ० ४ ब्रा० ५ ]

**अवभृथः—**

तत्र तन्नामनिर्वचनम्, कृष्णविषाणादीनां चात्वाले प्रासनम्, ततोऽवभृथप्रयोगः— तत्र 'उरुꣳहीति' वाचनादि, निधनसामगानञ्च। ततोऽप्सुहोमविधानादि, वारुणयागविधानम्, ततः स्विष्टकृद्यागः, षडाहुतिकं चाऽवभृथकर्म इति विधानम्, ऋजीषकुम्भस्य जले प्लावनविधानम्, उपस्थानम्, मज्जनञ्चेति ( ख० १--२३ )।

[ अ० ५ ब्रा० १ ]

**उदयनीयेष्टिः—**

प्रसङ्गाचत्र तावत्प्रथमं प्रायणीयोदयनीययोर्नामनिर्वचनम्, ततोऽग्रेऽग्निदेवताकयागविधानादि, मैत्रावरुणीवशानूबन्ध्यालम्भनम्, तत्फलश्रुतिश्च। तत उदवसानीयेष्टिविधिः— तत्र पञ्चकपालपुरोडाशनिर्वापः, वैष्णव्यर्चा चतुर्गृहीताज्यहोमविधानञ्चेति ( ख० १–१६ )।

[ अ० ५ ब्रा० २ ]

**आनुबन्ध्ययागः—**

तत्र वशामालम्भनम्, वपाप्रचारः, निष्काश्यमानपश्वभिमन्त्रणम्, वसावदानहोमविधानादि, वनस्पतियागः, अवदानप्रकारोपदेशश्च। तत उष्णीषवेष्टितस्य वृक्षस्यासञ्जनादिकम्, 'महीद्यः' इत्यङ्गारैरभ्यूहनञ्चेति ( ख० १–१८ )।

[ अ० ५ ब्रा० ३ ]

**षोडशिग्रहः—**

तत्रौदुम्बरेण चतुःस्रक्तिना पात्रेण ग्रहणविधानम्, उपाकरणविधानञ्चेति ( ख० १–११ )।

[ अ० ५ ब्रा० ४ ]

अतिग्राह्यग्रहग्रहणविधिः—

तन्नामनिरुक्तिः, ततोऽतिग्राह्यग्रहग्रहणम्, तेषां समन्त्रकभक्षणादिविधानञ्चेति ( ख० १–१४ )।

[ अ० ५ ब्रा० ५ ]

अन्तर्यामादिग्रहपात्राणां विचारः—

तत्र तेषां फलकथनम्, ततो द्रोणकलशेऽन्ततो हारियोजनेग्रहग्रहणविधानादिकञ्चेति ( ख० १–१३ )।

[ अ० ५ ब्रा० ६ ]

ग्रहावेक्षणम्—

ततो ग्रहणक्रमेणाऽवकाशमन्त्रवाचनपूर्वकमवेक्षणम्, तत्र प्रथमं तावत् उपांशुसवनस्य, ततोऽन्तर्यामस्य, ऐन्द्रवायवस्य, मैत्रावरुणस्य, आश्विनस्य, शुक्रामन्थिनयोः, आग्रयणस्य, उक्थ्यस्य, ध्रुवस्येति। ततो द्रोणकलशस्यावेक्षणादिकञ्चेति ( ख० १–५ )।

[ अ० ५ ब्रा० ७ ]

सोमप्रायश्चित्तानि—

तत्र तन्नामनिरुक्तिः, ततो वसुरुद्रादित्यानां नामसंख्यानिरूपणम्, ततो रसरूपसोमस्कन्दनप्रायश्चित्तम्, हविर्यज्ञे स्कन्दननिमित्तप्रायश्चित्तविधानञ्चेति ( ख० १–९ )।

[ अ० ५ ब्रा० ८ ]

सहस्रदक्षिणे गर्गत्रिरात्रादौ दक्षिणाविभागः—

तत्र गोलक्षणनिरूपणम्, नीयमानामेनां साहस्रीं गां द्रोणकलशमवघ्रापयति इति विधानम्, ततो दश दशाभेदेन दक्षिणादानादिविधानञ्चेति ( ख० १–१६ )।

[ अ० ५ ब्रा० ९ ]

ब्राह्मणेऽस्मिन् व्यूढद्वादशाहधर्माः प्रतिपादिताः ( ख० १–१३ )।

[ अ० ५ ब्रा० १० ]

सोमापहरणादिविधिः—

तत्र लोहितादिपुष्पाणामभिषवोपदेशः, अरुणपुष्पाणामभावे सोमस्यांशोरेवाऽभिषवादिविधानञ्चेति ( ख० १–८ )।

[ अ० ६ ब्रा० १ ]

**अंशुग्रहः—**

तस्य चतुःस्रक्तिनौदुम्बरेण पात्रेण ग्रहणम्, ग्रावादानम्, अभिषवः, तत्र निषेधविधिविचारः, दक्षिणाविधिविचारश्चेति ( ख० १–१५ )।

[ अ० ६ ब्रा० २ ]

ब्राह्मणेऽस्मिन् अतिग्राह्यग्रहग्रहणस्यैव प्रतिपादनम्।

[ अ० ६ ब्रा० ३ ]

**पश्वयनस्तोमायने—**

तत्राऽऽग्नेयादीनां पश्वालम्भनविधिविचारश्चेति ( ख० १–३ )।

[ अ० ६ ब्रा० ४ ]

**महाव्रतीयः—**

तत्राऽऽख्यायिका, ततो महाव्रतग्रहग्रहणादिकञ्चेति ( ख० १–६ )।

[ अ० ६ ब्रा० ५ ]

**ग्रहस्तुतिः—**

तत्र प्रथमं तावत् ग्रहस्य वाग्रूपत्वविधानम्, तदन्नरूपत्वादिविधानञ्चेति ( ख० १–५ )।

[ अ० ६ ब्रा० ६ ]

**सौमिकं ब्रह्मत्वम्—**

तत्राऽऽख्यायिकामुखेनोच्चरत उपचारो यज्ञ इति विधानम्, ततो ब्रह्मजपविधिः, मैत्रावरुणजपविधिश्चेति ( ख० १–८ )।

[ अ० ६ ब्रा० ७ ]

**ब्रह्मत्व- सदो-हविर्धानविधिशेषः—**

तत्र विष्णोर्यज्ञरूपत्वोपपादनम्, प्रसङ्गात्पुरश्चरणशब्दनिरुक्तिः, सदोमण्डपस्य परिश्रयणम्, ततो हविर्धानस्य, ऋचां यजुषां च वाग्रूपत्वादि-कथनञ्चेति ( ख० १–२१ )।

[ अ० ६ ब्रा० ८ ]

**सत्रायणम्—**

तत्र प्राजापत्यपशोर्यागविधानम्, अग्निमन्थनम्, तत उद्धरणादि, सोमक्रयादि-विधानम्, उदीचीनवंशशालाविधानम्, चीनवंशशालाविधानञ्चेति (ख० १–२०)।

[ अ० ६ ब्रा० ९ ]

**सत्रधर्माः—**

ततो गार्हपत्ये आहुतिद्वयहोमविधानम्, सत्रफलश्रुतिः, सत्रोत्थानम्, पत्नीशालायां समन्त्रकं होमविधानम्, उत्तरहविर्धाने सामगानम्, दक्षिणहविर्धानेऽधोऽधः सर्पणादि, धिष्ण्योपवेशनविधानम्, सार्पराज्ञीऋक्षु स्तुवते इति विधानादि, अध्वर्योः प्रतिगरः, वाकोवाक्ये ब्रह्मोद्यवदनम्, औदुम्बरीशालायां वाग्यमनविधानादिकञ्च। ततोऽस्तमिते प्राञ्च उपनिष्क्रमणम्, वाग्विसर्जनम्, सुब्रह्मण्यामाह्वानञ्चेति ( ख० १–२५ )।

चतुर्थं काण्डं समाप्तम्।



## पञ्चमं काण्डम्

[ अ० १ ब्रा० १ ]

**वाजपेयविधिप्रस्तावः—**

तत्र ब्राह्मणस्याधिकारविधिमुन्नेतुं बृहस्पतिवृत्तान्तप्रदर्शनपूर्वकमिन्द्रवृत्तान्ताख्यानम्, वाजपेयस्य साम्राज्यफलप्रदर्शनम्, सावित्रहोमविध्यादिकञ्चेति ( ख० १–१६ )।

[ अ० १ ब्रा० २ ]

**वाजपेये ग्रहविशेषाणां विधानम्—**

ततः प्राकृतसोमक्रयविध्यनुवादपूर्वकं परिश्रुत्क्रयविधानम्, वसतीवरीणां हविर्धानप्रपादनमनूद्य परिश्रुत्प्रपादने विशेषविधानम्, ग्रहाणामन्यप्रदेशप्रापणनिषेधश्च। ततोमधुग्रहग्रहणम्, प्रसङ्गात्सुराग्रहाणां मधुग्रहस्य च माध्यन्दिनसवनमध्ये-विनियोगविधानञ्चेति ( ख० १–१९ )।

[ अ० १ ब्रा० ३ ]

**पशुतन्त्रप्रयोगविधिः—**

तत्र तावद् वाजपेयस्याग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थालक्षणसद्भावेनाऽग्निष्टोमादिगतानां सवनीयपशूनां विशेषतो विधानम्, ततोऽग्निष्टोमादिपदाऽभिधानम्,

वशावपाहोमे उज्जेषपदवत्योर्याज्यापुरोऽनुवाक्ययोर्विधानम्, प्राकृतानामाग्नेयैद्राग्न-प्रभृतीनां वपाप्रचरणेन सह मारुतीवपाप्रचरणञ्च। ततो हविषामवदानप्रकारो-पदेशादि, पश्वन्तराणाञ्चविधानम्, आश्रावणानन्तरं कर्तव्ये प्रैषेऽपि विशेष-विधिश्चेति ( ख० १–१४ )।

[ अ० १ ब्रा० ४ ]

**माध्यन्दिनसवनीयप्रयोगविधिः—**

तत्र यजमानाभिषेकः, आजिधावनञ्च। ततो रथेऽश्वत्रयाणां योजनम्, चतुर-श्वरथयुक्तस्याध्वर्यवे दानम्, ततो नीवारचरुविधिः—अश्वानां तदाघ्रापणविध्यादिक-ञ्चेति ( ख० १–१५ )।

[ अ० १ ब्रा० ५ ]

**आजिधावनप्रसंशा—**

ततो ब्रह्मणो रथचक्रे गानम्, रथादवरोहणम्, दन्दुभ्युपावहरणम्, सप्त-दशेषुप्रव्याधकरणञ्च। रथे यजमानस्य समन्त्रकारोहणादि, ततः सुराग्रहाणां मधु-ग्रहस्य च माध्यन्दिने सवने विनियोगप्रकारोपदेशः, प्रतिगृहीतसुराग्रहाणामैच्छिक-व्यवहारप्रदर्शञ्चेति ( ख० १–२८ )।

[ अ० २ ब्रा० १ ]

**यजमानस्य यूपारोहणविधिः—**

तत्र प्रथममाप्तिहोमविधानम्, यूपचषालस्य गोधूमपिष्टमयत्वविधानम्, पत्न्याश्चण्डातकपरिधापनम्, यूपे निश्रेणिस्थापनम्, यूपारोहणकाले जायामन्त्रणादि, सहिरण्याजिनयोर्दम्पत्योर्यूपादवतरणम्, तत आसन्द्यामुपवेशनादिकञ्चेति ( ख० १–२५ )।

[ अ० २ ब्रा० २ ]

**नैवारचरुप्रचारविधिः—**

तत्र वाजप्रसवीयहोमकालविधानम्, ततस्तद्धोमप्रयोगः, आवेदनविधिः, उज्जितिहोमादिविधिः, स्विष्टकृद्यागाद्यनुसन्धानादिकञ्चेति ( ख० १–२१ )।

[ अ० २ ब्रा० ३ ]

**राज्ञो राजसूयविधिः—**

तत्र पवित्रेष्टिः, तदुत्तरदिने अनुमतीष्टिः, आग्नावैष्णवयागः, अग्नीषोमी-

ययागः, ऐन्द्राग्नयागः, तदुत्तरदिने दक्षिणादिविधानम्, चातुर्मास्ययागविधानञ्चेति ( ख० १–१० )।

[ अ० २ ब्रा० ४ ]

तत्र वैश्वदेवाख्यं प्रथमं पर्व, वरुणप्रघासाख्यं द्वितीयम्, साकमेधाख्यं-तृतीयम्, शुनासीर्याख्यं चतुर्थं पर्व, तेषां विधानादिकञ्च। ततः पञ्चवातीयहोमविधानादिकम्, इन्द्रतुरीययागविधानम्, अपामार्गहोमविधानम्, उल्मुकादानम्, स्रुवक्षेपणादि–विधानञ्चेति ( ख० १–२० )

[ अ० २ ब्रा० ५ ]

**त्रिषंयुक्तेष्टिः—**

तत्र वैष्णवादियागत्रयाणामितिकर्तव्यतात्त्वादिविधानम्, ततो द्विहविष्कयागविधिः— तत्र वैश्वानरयागः प्रथमः, वारुणयागो द्वितीयः, अनयोर्दक्षिणाविधानञ्चेति ( ख० १–१७ )।

[ अ० ३ ब्रा० १ ]

**रत्नहविरिष्टिः—**

तत्र रत्नहविःप्रयोगः– सेनानीगृहे प्रथमः, पुरोहितगृहे द्वितीयः, यजमानगृहे तृतीयः, महिष्या गृहे चतुर्थः, सूतस्य गृहे पञ्चमः, ग्रामणीगृहे षष्ठः, क्षत्तुर्गृहे सप्तमः, संग्रहीतुर्गृहे अष्टमः, भागदुघस्य गृहे नवमः, पुनर्यजमानगृहे दशमः, सूतगृहे एकादश, परिवृत्तीगृहे द्वादश, एतदन्ते किञ्चित्कर्तव्यविधानञ्चेति ( ख० १–१३ )।

[ अ० ३ ब्रा० २ ]

**सौमारौद्रयागविधिः—**

यागस्याऽस्याऽऽख्यायिकामुखेन स्तुतिः, तत्र चरुपाकविधानम्, प्रसङ्गात् होमस्याऽस्य वाह्यप्रयोगप्रदर्शनम्, ततश्चरोरनुष्ठानप्रकारोपदेशः, आज्यकरणादिविधानञ्चेति ( ख० १–८ )।

[ अ० ३ ब्रा० ३ ]

**अभिषेचनीयप्रयोगः—**

तत्र देवस्रुवां हविषां विधानम्, सावित्रहविर्विधानम्, तत आग्नेयस्य, सौम्यस्य, ऐन्द्रस्य, रौद्रस्य, मैत्रस्य, वारुणस्येति। ततो देवस्वनामनिर्वचनादिकञ्चेति ( ख० १–१५ )।

[ अ० ३ ब्रा० ४ ]

**यजमानाभिषेकार्थं सप्तदशानामपां सम्भरणविधानम्—**

तत्र प्रथमं तावत् तत्पात्रनिरूपणम्, ततः सारस्वतीनामपां सम्भरणम्, ततः प्रागूर्मीणाम्, प्रत्यगूर्मीणाम्, प्रतिलोमस्यन्दमानानाम्, रुद्धप्रवाहाणाम्, परिवाहिनीनाम्, उच्छलन्तीनां समुद्राणाम्, आवर्त्तोदकानां सूर्यत्वचसाम्, आतपवर्ष्याणाम्, सरस्यानाम्, कूप्यानाम्, नीहारात्मकानाम्, मधुरूपाणाम्, गोरुल्ब्यानाम्, पयोरूपाणाम्, घृतोत्सिक्तानाम्, मरीचीनामपाञ्चेति ( ख० १–२८ )।

[ अ० ३ ब्रा० ५ ]

**यजमानाभिषेकः—**

तत्र तत्कालविधिः, अभिषेकपात्रनिरूपणादि, ततो यजमानस्य तार्प्यपाण्ड्वाधिवासोष्णीषपरिधानम्, दीक्षितवसनस्य परित्यागविधिः, धनुर्बाणग्रहणादिकञ्चेति ( ख० १–३७ )।

[ अ० ४ ब्रा० १ ]

**केशवास्ये लोहायसप्रक्षेपविधिः—**

तत्र केशवलोहायसदन्दशूकानामन्तरालवर्त्तित्वोपपादनम्, सुन्वतस्तस्य प्राच्यादि-दिगाक्रमणविध्यादि, ततोऽभिषेचनीयपात्राणामग्रे आस्तृतस्य शार्दूलचर्मणोऽपरेऽन्ते निहितस्य सीसस्य प्राशनविधानम्, अधस्तादुपरिष्टाच्च रुक्मनिधानादिकञ्च। ततः समन्त्रकबाहूद्ग्रहणम्, ऊर्द्धबाहुत्वेनैव स्थितस्य यजमानस्याऽभिषेकविधानञ्चेति ( ख० १–१७ )।

[ अ० ४ ब्रा० २ ]

**अथाभिषेकप्रकारः—**

तत्र संस्रवैः सिक्तस्य पालाशाभिषेकपात्रस्य राजपुत्राय प्रदानविधिः, तत्कर्तृको गार्हपत्येऽग्नौ होमविधानम्, पालाशपात्रशेषस्याऽऽग्नीध्रीये होमश्चेति (ख० १–१०)।

[ अ० ४ ब्रा० ३ ]

**रथोपावहरणविधिः—**

तत्र तावत्प्रथममाहवनीयस्योत्तरप्रदेशे शतानां तदधिकानां गवां स्थापनम्, ततो रथोपावहरणम्, यजमानस्य रथारोहणम्, रथस्थापनम्, तद्दक्षिणतोऽश्वस्थापनम्, रथविमोचनीयहोमविध्यादिकम्, रथादवरोहणविधिश्च। ततो हंस इति

मन्त्रस्य वैविध्यार्थप्रदर्शनम्, रथवाहनस्य दक्षिणेंऽशे शतमानयोरासञ्जनम्, तत औदुम्बर्या उपगूहनम्, पयस्यायां बाह्वोरवहरणञ्चेति ( ख० १–२७ )।

[ अ० ४ ब्रा० ४ ]

**पयस्याप्रचारविधिः—**

तत्र आसन्द्यामधिवासास्तरणम्, सुन्वतस्तत्रोपवेशनम्, यजमानहस्ते पञ्चाक्षावापः, सुन्वत्पृष्ठे दण्डैराघातादि, द्यूतस्थाननिरूपणम्, अधिदेवने हिरण्यस्थापनपूर्वकहोमविधिश्च। ततोऽक्षनिवापः, गोपणनम्, दक्षिणादानम्, पयस्यायाः स्विष्टकृदिडादि विधानञ्चेति ( ख० १–२५ )।

[ अ० ४ ब्रा० ५ ]

**दशसंसृपाहविर्विधानम्—**

तत्र दशपेयविधानम्, द्वादशकमलिनीस्रक्प्रतिमोकः, द्वादशपेयस्य दीक्षाविधानम्, आग्नेयादिहविर्निर्वापः, उपसत्त्रयार्थं हविस्त्रयकरणादिकम्, तत उपसद्यागः, द्वादशगर्भिणीनां गवां दानविधानम्, हिरण्यस्रक्रुक्मप्राकाशद्वयाश्वर्षभवासोद्वयानडुद्दानविधानञ्चेति ( ख० १–२३ )।

[ अ० ५ ब्रा० १ ]

**पञ्चबिलचरुयागविधिः—**

ततो हिरण्यादिदक्षिणादानम्, एतस्य हविःपञ्चकस्य फलान्तराय राजसूयाद्बहिःप्रयोगविधानञ्चेति ( ख० १–१२ )।

[ अ० ५ ब्रा० २ ]

**द्वादशानां प्रयुग्घविषां विधानम्—**

तत्र द्वादशप्रयुग्घविःकरणे नक्षत्रादेः दार्ढ्यत्वप्रतिपादनम्, पशुद्वयस्य विधानम्, ततोऽदितिदेवताकपशुबन्धविधानम्, तत्कर्मणो दक्षिणाविधानञ्चेति ( ख० १–१० )।

[ अ० ५ ब्रा० ३ ]

**केशवपनीयातिरात्रस्य वैशेषिका धर्माः—**

तत्राऽभिषेचनीययागानन्तरं केशवपनीयकरणे कारणविशेषप्रदर्शनम्, ततः केशवपनीयकालप्रदर्शनादि, केशवापनकेशनिकर्त्तनयोः क्रमान्निषेधविधाने, तत उपानहोपमुञ्चनविधानादिकञ्चेति ( ख० १–७ )।

५

[ अ० ५ ब्रा० ४ ]

**सौत्रामणीयागविधिः—**

तत्र पशुत्रयाणां देवतासम्बन्धविशिष्टविधानम्, इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्यात्मनोत्पत्तिप्रदर्शनम्, ततोऽपानादितस्तद्रवणात्सुरोत्पत्तिः, निष्ठीवनत्रयात्सुरासन्धानां कुवलकर्कन्धुबदराणामुत्पत्तेराख्यायिका, सौत्रामणीशब्द-निरुक्तिश्च। ततः परिश्रुत्सन्धानविधिः, तत्पावनम्, तस्यां कुवलकर्कन्ध्वादिप्रक्षे-पेणसुरात्वापादानादि, तद्धवनञ्च। ततः परिश्रुच्छेषमासिच्य रुक्मवच्छिद्रकुम्भं शि-क्ये कृत्वा दक्षिणस्याग्नेरुपरिधारयन् श्रावत्या धारया सोमवतां बर्हिषदामग्नि-ष्वात्तानाञ्च पितॄणामुपस्थानादिकम्, सौत्रामण्या दक्षिणादानविधिश्चेति ( ख० १–३५ )।

[ अ० ५ ब्रा० ५ ]

**त्रैधातवीष्टिप्रयोगः—**

तत्र तद्विधानार्थाख्यानम्, तन्नामनिर्वचनम्, तद्धविर्निरूपणम्, तद्दक्षिणा-विधिः, तत्फलश्रुतिश्च। ततो वेदत्रयरूपयाऽनया त्रैधातव्याऽभिचारपरिहाररूपा-ख्यानम्, ब्रह्मणे त्रीणि शतमानानि, होत्रे तिस्रः सवत्साः पयस्विनीर्गाः, अध्वर्यवे त्रीणि वासांसि, अग्नीधे एकां गाञ्चेति त्रयोदशदक्षिणाद्रव्याणां विधानं-ञ्चेति ( ख० १–१९ )।

पञ्चमं काण्डं समाप्तम्।



# षष्ठं काण्डम्

[ अ० १ ब्रा० १ ]

**हिरण्यगर्भकर्तृकसृष्टिवर्णनम्—**

तत्र असदर्थनिरूपणादिकम्, मध्यमप्राणस्य इन्द्रशब्दवाच्यत्वम्, एकपुरुषे सप्तपुरुषसन्निवेशनम्, चित्याग्नेः शिरसः प्रदर्शनम्, आहवनीयस्य शिरोरूप-त्वञ्च। ततो विराडुत्पत्तिः, ततश्चयनोपयुक्तसृष्टेराम्नानम्, पृथिव्याद्युत्पत्तिवर्ण-नञ्चेति ( ख० १–१५ )।

[ अ० १ ब्रा० २ ]

**वाय्वन्तरिक्षादिसृष्टिः—**

तत्र प्रजापतेश्चित्याग्निरूपत्वम्, इष्टकाशब्दस्य प्रवृत्तिनिमित्तादि-कथनम्,

पञ्चेष्टका विचारः, पश्चिष्टकावर्णनादि, मृत्तिकादीनामिष्टकासाधनत्वविचारश्चेति ( ख० १–३६ )।

[ अ० १ ब्रा० ३ ]

**चयनीयोपयुक्तानामग्न्यादीनामष्टरूपतादिविधानम्—**

ततः कुमारोत्पत्तिः, तस्याष्टनामानि, उख्याग्नेर्धारणविधानञ्चेति ( ख० १–२० )।

[ अ० २ ब्रा० १ ]

**पुरुषाश्वगोऽव्यजानां पञ्चपशूनामालम्भनविधिः—**

तत्र चतुर्विंशतिसामिधेन्यः, वैश्वानरः पुरोडाशः, कामपदयुक्ता याज्यानुवाक्याश्च । ततोऽप्सु कायचतुष्टयप्रासनम्, इष्टकानिर्माणकालप्रदर्शनम्, पशुशीर्षोपधानादिकम्, पञ्चेष्टकाविधानम्, नवसामिधेनीमन्त्राणां एकार्थताप्रतिपादनम्, आप्रीमन्त्राणां प्रदर्शनम्, कुणपमर्त्यदोषपरिहार्थं हिरण्यशीर्षोपधानञ्चेति ( ख० १–३९ )।

[ अ० २ ब्रा० २ ]

**प्रजापतिदेवत्यपश्वनुष्ठाने सम्प्रदायप्रदर्शनम्—**

तत्र तस्य पशोर्वर्णनिरूपणम्, ततः प्राजापत्यपशुपक्षप्रदर्शनम्, वायव्यपशुपक्षप्रदर्शनादिकथनम्, पश्वालम्भकालप्रतिपादनञ्च । ततोऽग्निधारणायोखासम्भरणविधिः– तत्र दीक्षाकालविधानम्, पञ्चपश्वादीनां सम्पत्तिकथनम्, चयने यजमानकर्तव्यानां नियमानां विचारादि, दक्षिणादानविधानञ्चेति ( ख० १–४० )।

[ अ० २ ब्रा० ३ ]

**उपधास्यमानानां चितीनामृषिदेवतासम्बन्धेनोत्पत्तिवर्णनम्—**

ततः स्वयमातृण्णेष्टकानां स्थानप्रतिपादनम्, तत्र चितिशब्दार्थकथनञ्चेति ( ख० १–१० )।

[ अ० ३ ब्रा० १ ]

**चयनमन्त्राणां विनियोगाभिधानम्—**

ततोऽषाढाया इष्टकात्वम्, कायप्रासनप्रदेशादुखाऽषाढेष्टकानिर्माणार्थं मृद आनयनम्, अनद्धापुरुषस्य पुरुषप्रतिनिधित्वम्, रासभस्य गवाव्योश्च प्रतिनिधिवर्णनम्, तेषां मौञ्जीबन्धनम्, रशनायास्त्रिवृतत्वम्, आहवनीयस्य दक्षिणेऽवस्थापनम्, अग्नेरैणवीत्वादिविधिश्चेति ( ख० १–४४ )।

[ अ० ३ ब्रा० २ ]

**पूर्वविहितानामश्वादि-पञ्चपशूनामभिमन्त्रणादिविधिः—**

तत्र तावत् प्रथममश्वाभिमन्त्रणम्, ततो रासभस्य, अजस्य, ततोऽभिमन्त्रणमन्त्रगतत्रित्वसंख्यायास्त्रिवृदग्न्यात्मना प्रशंनम्, उत्क्रमणविधिश्चेति ( ख० १–१० )।

[ अ० ३ ब्रा० ३ ]

**मृदाहरणाय ब्रह्माध्वर्युयजमानानामभिगमनविधिः—**

ततः अनद्धापुरुषनिरीक्षणादि, अश्वपदे आहुतिद्वयविधानादि, ततः पिण्डखननविधिविचारश्चेति ( ख० १–२६ )।

[ अ० ४ ब्रा० १ ]

**मृत्खननविधिः—**

तत्र मन्त्रद्वयविधानादि, कृष्णाजिनास्तरणम्, तत्र पुष्करपर्णनिधानम्, मृत्पिण्डसम्भरणम्, तदभिमर्शनम्, अभिमर्शनमन्त्रगतद्वित्वसंख्याया यजमानाग्निरूपेण प्रशंसनञ्चेति ( ख० १–१२ )।

[ अ० ४ ब्रा० २ ]

**मृत्पिण्डाभिमर्शनविधिः—**

तत्र ग्रहणमन्त्रविधानम्, तेषां मन्त्राणां गायत्र्यादिच्छन्दस्स्वरूपेण प्रशंसनम्, परिग्रहणे विनियुक्तानां मन्त्राणां सम्वत्सराग्न्यात्मना प्रशंसनञ्चेति (ख० १–१०)।

[ अ० ४ ब्रा० ३ ]

**उदकनिनयनविधिः—**

तत्र समन्त्रकोदकनिनयनप्रयोगः, अनामिकाङ्गुल्याऽवटेपांसुसम्वापः, आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः अन्तोद्ग्रहणविधानादिकञ्चेति ( ख० १–१० )।

[ अ० ४ ब्रा० ४ ]

**मृत्पिण्डसाहित्येन पश्वभिमन्त्रणविधिः—**

तत्राऽश्वादीनामभिमन्त्रणम्, ततस्त्रयाणाम्पशूनामुपरि समन्त्रकं पिण्डधारणविध्यादिकञ्चेति ( ख० १–२२ )।

[ अ० ५ ब्रा० १ ]

**मृत्पिण्डे पलाशपर्णक्वथितोदकसिञ्चनविधिः—**

तत्रोदकसेचनम्, फेनासेचनम्, ततः सम्मिश्रणादि, तत्र मन्त्रविधिनादिप्रतिपादनञ्चेति ( ख० १–१२ )।

[ अ० ५ ब्रा० २ ]

उखाया अधस्तान्मृत्पिण्डदानविधिः—

ततः समन्त्रकं पिण्डप्रथनम्, विस्तारिताया निधिमृद उपरि मृत्पिण्डप्रक्षेपमन्त्रविधानादि, निर्ध्रेरुद्धिद्वयस्य च समीकरणम्, उखाया उर्ध्वपरिमाणविध्यादिकम्, वर्तिकरणविधिः, रास्नाकरणम्, वर्तीनामन्ते स्तनोन्नयनविधिः, उखानिधानम्, उखासंख्याविचारादिकञ्चेति ( ख० १–२२ )

[ अ० ५ ब्रा० ३ ]

अषाढेष्टकानिर्माणविधिः—

तत उखाया निर्माणम्, तिसृणां विश्वज्योतिषामिष्टकानां निर्माणादि, आषाढादीनां मन्त्राहृतमृदोत्पन्नत्वम्, पादमात्रादिपरिमाणवत्त्वम्, आसामिष्टकानामितरेष्टकावैलक्षण्यनिरूपणम्, अवशिष्टमृदो विनियोगाख्यानम्, अश्वशकृद्भिर्धूपनञ्चेति ( ख० १–११ )।

[ अ० ५ ब्रा० ४ ]

उखादिस्थापनार्थमवटखननविधिः—

तत्रोखादीनामवस्थापनम्, पचनम्, उपावहरणम्, गर्तादुद्धरणम्, पात्रे स्थापनम्, पय आसेनञ्चेति ( १–१७ )।

[ अ० ६ ब्रा० १ ]

दीक्षणीयाप्रयोगः—

तत औदृग्रभणहोमविधिनिर्वचनादि, मुञ्जतृणावस्तरणम्, शणकुलायास्तरणञ्चेति ( ख० १–२४ )।

[ अ० ६ ब्रा० २ ]

उखाया आहवनीयेऽधिश्रयणविधिः—

ततः प्रवृञ्जनम्, समिदाधानम्, उखादीनामुत्पत्तिप्रदर्शनञ्चेति (ख० १–१६)।

[ अ० ६ ब्रा० ३ ]

द्वितीयायाः समिधो वैकङ्कतत्वादिविधिः—

ततस्त्रयोदशसमिन्मन्त्राणां विधिव्याख्याने, प्रादेशपरिमाणत्वविधानम्, तदाधाने मन्त्राणां स्वाहाकारान्ततविधानञ्चेति ( ख० १–१७ )।

[ अ० ६ ब्रा० ४ ]

भस्मौद्वपनकालविधिः—

ततो व्रतपरिग्रहादि, उखाभेदे प्रायश्चित्तविधानम्, उखाग्न्यनुगमनेऽपि प्रायश्चित्त-

विधानम्, सुत्यादिने प्रायश्चित्तानुगतौ तत् प्रायश्चित्तादिकञ्चेति ( ख० १–१५ )।

[ अ० ७ ब्रा० १ ]

**रुक्मप्रतिमोकविधिः—**

ततो रुक्मधारणप्रशंसा, तद्धारणप्रकारादिकम्, आसन्द्यामौदुम्बरीत्वविधानादिकञ्च। ततः शिक्यविध्यादि, उखाशब्दनिरुक्तिः, उख्याग्नेरिण्ड्वाभ्यां परिग्रहविधानादिकञ्चेति ( ख० १–२८ )।

[ अ० ७ ब्रा० २ ]

रुक्मप्रतिमुञ्चनप्रकाराद्युपदेशः, शिक्यपाशप्रतिमुञ्चनप्रकारादिश्च। ततः इण्ड्वाभ्यामग्नेर्ग्रहणं तत् स्थापनञ्चेति ( ख० १–१६ )।

[ अ० ७ ब्रा० ३ ]

**विष्णुक्रमविधिः—**

तत्राग्नेरूर्ध्वबाहुनौद्ग्रभणविध्यादि, ततोऽग्नेरवरोहणप्रत्यवरोहणे, तत्र तत्र विहितमन्त्राणां विध्यादिकञ्चेति ( ख० १–१६ )।

[ अ० ७ ब्रा० ४ ]

**वात्सप्रवर्णनविधिः—**

तत्रोपस्थानमन्त्रत्रयविधानम्, विष्णुक्रमवात्सप्रयोर्जगदुत्पादकतया प्रशंसनम्, दीक्षाप्रथमदिवसे विष्णुक्रमवात्सप्रयोः समसनविध्यादि, ततः सम्वत्सरानुष्ठानफलकथनादिकम्, अन्तिमदिनकर्तव्यतानिरूपणञ्चेति ( ख० १–१५ )।

[ अ० ८ ब्रा० १ ]

**गार्हपत्यचयनायोख्याग्नेर्देवयजनदेशप्रापणविधानम्—**

तत्र पुरावृत्तान्ताख्यानम्, वनीवाहनम्, तत्फलकथनञ्च। ततोऽग्नेः प्रणयनम्, शकटोपरि उख्याग्नेः स्थापनादि, समिदाधानविधानञ्चेति ( ख० १–१५ )।

[ अ० ८ ब्रा० २ ]

**भस्मोद्वपनशेषविधिः—**

तत्र अप्सु प्रक्षेपमन्त्रविध्यादि, अद्भ्यः पुनरीषास्मादानविध्यादिकम्, तत उपस्थानविधिः, द्विविधप्रायश्चित्तविध्यादिकञ्चेति ( ख० १–१२ )।

षष्ठं काण्डं समाप्तम्।





अथ शुक्लयजुर्वेदीयमाध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

## हविर्यज्ञं नाम प्रथमं काण्डम् ॥



अस्मिन् काण्डे प्रतिपाद्यो विषयः—दर्शपौर्णमासः ।

॥ओ३म्॥ व्रतमुपैष्यन् । अन्तरेणाऽऽहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नप ऽउपस्पृशति तद्यदप ऽउपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा ऽआपो मेध्यो भूत्वा व्रतमुपाऽयानीति पवित्रं वा ऽआपः पवित्रपूतो व्रतमुपाऽयानीति तस्माद्वा ऽअप ऽउपस्पृशति ॥१॥ सोऽग्निमेवाऽभीक्षमाणो व्रतमुपैति । 'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामि'त्यग्निर्वै देवानां व्रतपतिस्तस्मा ऽएवैतत्प्राऽऽह व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति नाऽत्र तिरोहितमिवाऽस्ति ॥२॥ अथ सꣳस्थिते विसृजते । 'अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधी'त्यशकद्ध्येतद्यो यज्ञस्य सꣳस्थामगन्नराधि ह्यस्मै यो यज्ञस्य सꣳस्थामगन्नेतेन न्वेव भूयिष्ठा ऽइव व्रतमुपयन्त्यनेन त्वेवोपेयात् ॥३॥ द्वयं वा ऽइदं न तृतीयमस्ति । सत्यं चैवाऽनृतं च सत्यमेव देवा ऽअनृतं मनुष्या 'ऽइदमहमनृतात्सत्यमुपैमी'ति तन्मनु

(१) शु० सं अ० १ क० ५। (२) शु० सं० अ० २ क० २८। (३) शु० सं० अ० १ क० ५।

ष्येभ्यो देवानुपैति ॥४॥ स वै सत्यमेव वदेत्। एतद्ध वै देवा व्रतं चरन्ति यत्सत्यं तस्मात्ते यशो यशो ह भवति य ऽएवं विद्वान्त्सत्यं वदति ॥५॥ अथ सꣳस्थिते विसृजते। 'इद-महं य ऽएवाऽस्मि सोऽस्मी'त्यमानुष ऽइव वा ऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद् ब्रूयादिदमहꣳ सत्यादनृतमु-पैमीति तदु खलु पुनर्म्मानुषो भवति तस्मादिदमहं य-ऽएवाऽस्मि सोऽस्मी*त्येव व्रतं विसृजेत ॥६॥ अथाऽतोऽशना-ऽनशनस्यैव। तदु हाऽऽषाढः सावयसोऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याऽऽजानन्ति त ऽएनमेतद्व्रतमुपयन्तं विदुः प्रातर्न्नो यक्ष्यत ऽइति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स ऽउपवसथः ॥ ७ ॥ तन्न्वेवाऽन-वक्लृप्तम्। यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु नैवाऽश्नीयात् ॥८॥ तदु होवाच याज्ञवल्क्यः। यदि नाऽश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानत्यश्नातीति स यदेवाऽशितमनशितं तदश्नीयादिति यस्य वै हविर्न्न गृह्णन्ति तदशितमनशितꣳ स यदश्नाति तेनाऽपितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न्न गृह्णन्ति तेनो देवान्नाऽत्यश्नाति ॥९॥ स वा ऽआरण्य-मेवाऽश्नीयात्। या वा ऽआरण्या ऽओषधयो यद्वा ऽवृक्ष्यं तदु ह स्माऽऽहाऽपि बर्कुर्वार्ष्णो माषान्मे पचत न वा ऽएतेषाꣳ हविर्गृह्णन्तीति तदु तथा न कुर्याद् व्रीहियवयोर्वा ऽएतदुपजं यच्छमीधान्यं तद् व्रीहियवावेवैतेन भूयाꣳसौ करोति तस्मा-

(१) शु० सं० अ० २ क० २८। * 'त्येवम्' इति 'ग' पुस्तके।

दारण्यमेवाऽश्नीयात् ॥१०॥ स ऽआहवनीयागारे वैताᳬ रात्रिᳬ शयीत। गार्हपत्यागारे वा देवान्न्वा ऽएष ऽउपाऽऽवर्त्तते यो व्रतमुपैति स यानेवोपाऽऽवर्त्तते तेषामेवैतन्न्मद्ध्ये शेतेऽधः शयीताऽधस्तादिव हि श्रेयस ऽउपचारः ॥११॥ स वै प्प्रातरप ऽएव। प्रथमेन कर्म्मणाऽभिपद्यतेऽपः प्प्रणयति यज्ञो वा ऽआपो यज्ञमेवैतत्प्रथमेन कर्म्मणाऽभिपद्यते ताः प्प्रणयति यज्ञमेवैतद्वितनोति ॥१२॥ स प्प्रणयति। 'कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्म्मै त्वा युनक्ती' त्येताभिरनिरुक्ताभिर्व्व्याहृतिभिरनिरुक्तो वै प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तत् प्रजापतिमेवैतद्यज्ञं र्युनक्ति ॥१३॥यद्वेवाऽपः प्प्रणयति। अद्भिर्व्वाऽइदᳬ सर्व्वमाप्तं तत्प्रथमेनैवैतत्कर्म्मणा सर्व्वमाप्नोति ॥ १४ ॥ यद्वेवाऽस्याऽत्र। होता वाऽद्ध्वर्य्युर्व्वा ब्रह्मा वाऽऽग्नीध्रो वा स्वयं व्वा यजमानो नाऽब्भ्यापयति तदेवाऽस्यैतेन सर्व्वमाप्तं भवति ॥१५॥ यद्वेवाऽपः प्प्रणयति। देवान्ह वै यज्ञेन यजमानाँस्तानसुररक्षसानि ररक्षुर्न्न यक्ष्यद्ध्व ऽइति तद्यदरक्षँस्तस्म्माद्रक्षाᳬसि ॥१६॥ ततो देवा ऽएतं व्वज्ज्रं ददृशुः। यदपो व्वज्ज्रो वाऽआपो व्वज्ज्रो हि वा ऽआपस्तस्म्माद्येनैता यन्ति निम्न्नं कुर्व्वन्ति यत्रोपतिष्ठन्ते निर्द्दहन्ति तत ऽएतं व्वज्ज्रमुदयच्छँस्तस्याऽभयेऽनाष्ट्रे निवाते यज्ञमतन्न्वत तथो ऽएवैष ऽएतं व्वज्ज्रमुद्यच्छति तस्याऽभयेऽनाष्ट्रे निवाते यज्ञं तनुते तस्म्मादपः प्प्रणयति ॥१७॥ ता ऽउत्सिच्च्योत्तरेण गार्हपत्यᳬ सादयति। योषा वाऽआपो व्वृषाऽग्निर्ग्गृहा वै गार्हपत्यस्तद् गृहेष्वेवैतन्न्मिथुनं प्रज-

(१) शु० सं० अ० १ क० ६।

ननं क्रियते वज्रं वा ऽएष ऽउद्यच्छति यो ऽपः प्रणयति यो वा ऽअप्रतिष्ठितो वज्रमुद्यच्छति नैनꣳ शक्नोत्युद्यन्तुꣳ सꣳ हैनꣳ शृणाति ॥ १८ ॥ स यद् गार्हपत्ये सादयति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति तथो हैनमेष वज्रो न हिनस्ति तस्माद् गार्हपत्ये सादयति ॥ १९ ॥ ता ऽउत्तरेणाऽऽहवनीयं प्रणयति । योषा वाऽआपो वृषाऽग्निर्मिथुनमेवैतत्प्रजननं क्रियत ऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥ २० ॥ ता नाऽन्तरेण सञ्चरेयुः । नेन्मिथुनं चर्य्यमाणमन्तरेण सञ्चरानिति ता नाऽतिहृत्य सादयेन्नो ऽअनाप्ताः सादयेत्स यदतिहृत्य सादयेदस्ति वा ऽअग्नेश्चाऽपां च विभ्रातृव्यमिव स यथेव ह तदग्नेर्भवति यत्राऽस्याऽप ऽउपस्पृशन्त्यग्नौ हाऽधि भ्रातृव्यं वर्द्धयेद्यदतिहृत्य सादयेद्यदु ऽअनाप्ताः सादयेन्नो हाऽभिस्तं काममभ्यापयेद्यस्मै कामाय प्रणीयन्ते तस्मादु सम्प्रत्येवोत्तरेणाऽऽहवनीयं प्रणयति ॥ २१ ॥ अथ तृणैः परिस्तृणाति । द्वन्द्वं पात्राण्युदाहरति शूर्प्पं चाऽग्निहोत्रहवणीं च स्फ्यं च कपालानि च शम्म्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद् द्वन्द्वं द्वन्द्वं वै वीर्य्यं यदा वै द्वौ सꣳरभेते ऽअथ तद्वीर्य्यं भवति द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥ २२ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(A) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० २. १. १ ।

अथ शूर्प्पं चाऽग्निहोत्रहवणीं चाऽऽदत्ते। 'कर्म्मणे वां वेषाय वा'मिति यज्ञो वै कर्म्म यज्ञाय हि तस्मादाह कर्म्मणे वामिति वेषाय वामिति वेवेष्टीव हि यज्ञम् ॥ १ ॥ अथ वाचं यच्छति। वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवा ऽइत्यथ प्रतपति '[2]प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽअरातयो' निष्टप्तꣳ रक्षो निष्टप्ता ऽअरातय' ऽइति वा ॥ २ ॥ देवा ह वै यज्ञं तन्वानाः। तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाꣳस्यतोऽपहन्ति ॥३॥ अथ प्रैति। '[3]उर्वन्तरिक्षमन्वेमी'त्यन्तरिक्षं वा ऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथाऽयं पुरुषोऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद् ब्रह्मणैवैतदन्तरिक्षमभयमनाष्ट्रं कुरुते ॥४॥ स वा ऽअनस ऽएव गृह्णीयात्। अनो ह वा ऽअग्रे पश्चेव वा ऽइदं यच्छालꣳ स यदेवाऽग्रे तत्करवाणीति तस्मादनस ऽएव गृह्णीयात् ॥५॥ भूमा वा ऽअनः। भूमा हि वा ऽअनस्तस्माद्यदा बहु भवत्यनोवाह्यमभूदित्याहुस्तद् भूमानमेवैतदुपैति तस्मादनस ऽएव गृह्णीयात् ॥६॥ यज्ञो वा ऽअनः। यज्ञो हि वा ऽअनस्तस्मादनस ऽएव यजूꣳषि सन्ति न कौष्ठस्य न कुम्भ्यै भस्त्रायै ह स्मर्षयो गृह्णन्ति तद्दृषीन्प्रति भस्त्रायै यजूꣳष्यासुस्तान्न्येतर्हि प्राकृतानि यज्ञायज्ञं निर्म्मिमा ऽइति तस्मादनस ऽएव गृह्णीयात् ॥ ७ ॥ उतो पात्र्यै गृह्णन्ति। अनन्तरायमु तर्हि यजूꣳषि जपेत्स्फ्यमु तर्ह्यधस्तादुपोह्य गृह्णीयाद्यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो

(१) शु० सं० अ० २ क. ६। (२) शु० सं० अ० १ क० ७। (३) शु० सं० अ० १ क० ७।

विमुञ्चन्ति ॥८॥ तस्य वा ऽएतस्याऽनसः । अग्निरेव धूरग्निर्हि वै धूरथ य ऽएनद् वहन्त्यग्निदग्धमिवैषां वहं भवत्यथ यज्जघनेन कस्तम्भीं प्र ऽउगं वेदिरेवाऽस्य सा नीड ऽएव हविर्द्धानम् ॥९॥ स धुरमभि मृशति । 'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम' ऽइत्यग्निर्वा ऽएष धुर्यस्तमेतदत्येष्यन्भवति हविर्ग्रहीष्यँस्तस्मा ऽएवैतान्निह्नुते तथो हैतमेषोऽतियन्तमग्निर्द्धुर्यो न हिनस्ति ॥१०॥ तद्ध स्मैतद्दारुणिराह । अर्द्धमासशो वा ऽअहꣳ सपत्नान्धूर्वामीत्येतद्ध स्म स तदभ्याह ॥११॥ अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति । 'देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्' । 'अह्रुतमसि हविर्द्धानं दृꣳहस्व मा ह्वा'रित्यन ऽएवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्ग्रहानीति 'मा ते यज्ञपतिर्ह्वार्षीदि'ति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते ॥ १२ ॥ अथाऽऽक्रमते । 'विष्णुस्त्वा क्रमता' मिति यज्ञो वै विष्णुः स देवेभ्य ऽइमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराऽथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष ऽएतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते ॥१३॥ अथ प्रेक्षते । 'उरु वाताये'ति प्राणो वै वातस्तद् ब्रह्मणैवैतत्प्राणाय वातायोरुगायं कुरुते ॥१४॥ अथाऽपास्यति । 'अपहतꣳ रक्ष' ऽइति यद्यत्र किञ्चिदापन्नं भवति यद्यु नाभ्येव मृशेत्तन्नाष्ट्रा ऽएवैतद्रक्षाꣳसि स्यतोऽपहन्ति ॥१५॥ अथाऽभिपद्यते । 'यच्छन्तां पञ्चे'ति पञ्च

(१-२) शु० सं० अ० १ क० ८ । (३-८) शु० सं० अ० १ क० ९ ।

वा ऽइमा ऽअङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतदत्र दधाति ॥१६॥ अथ गृह्णाति । 'देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्यां पूष्णो हस्ताब्भ्यामग्नये जुष्टं गृह्णामी'ति सविता वै देवानां प्रसविता तत्सवितृप्प्रसूत ऽएवैतद् गृह्णात्यश्विनोर्बाहुब्भ्यामित्यश्विनावद्ध्वर्यू पूष्णो हस्ताब्भ्यामिति पूषा भागदुघोऽशनं पाणिब्भ्यामुपनिधाता सत्यं देवा ऽअनृतं मनुष्यास्तत्सत्येनैवैतद् गृह्णाति ॥१७॥ अथ देवताया ऽआदिशति । सर्वा ह वै देवता ऽअद्ध्वर्युꣳ हविर्ग्रहीष्यन्तमुपतिष्ठन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति ताब्भ्य ऽएवैतत्सह सतीब्भ्यो ऽसमदं करोति ॥१८॥ यद्वेव देवताया ऽआदिशति । यावतीब्भ्यो ह वै देवताब्भ्यो हवीꣳषि गृह्यन्त ऽऋणमु हैव तास्तेन मन्न्यन्ते यदस्मै तं कामꣳ समर्द्धयेयुर्यत्काम्म्या गृह्णाति तस्माद्वै देवताया ऽआदिशत्येवमेव यथापूर्वꣳ हवीꣳषि गृहीत्वा ॥१९॥ अथाऽभिमृशति । 'भूताय त्वा नारातय' ऽइति तद्यत ऽएव गृह्णाति तदेवैतत्पुनराप्प्याययति ॥२०॥ अथ प्प्राङ् प्रेक्षते । 'स्वरभिविख्येष'मिति परिवृतमिव वा ऽएतदनो भवति तदस्यै तच्चक्षुः पाप्मगृहीतमिव भवति यज्ञो वै स्वरहर्देवाः सूर्यस्तत्स्वरेवैतदतोऽभिविपश्यति ॥२१॥ अथाऽवरोहति । 'दृꣳहन्तां दुर्याः पृथिव्व्या'मिति गृहा वै दुर्यास्ते हैत ऽईश्वरो गृहा यजमानस्य योऽस्यैषोऽद्ध्वर्युर्यज्ञेन चरति तं प्रयन्तमनु प्प्रच्च्योतोस्तस्येश्वरः कुलं व्विक्षोब्धोस्तानेवैतदस्यां पृथिव्व्यां दृꣳहति तथा नाऽनुप्प्रच्च्यवन्ते तथा न व्विक्षोभन्ते तस्मादाह

(१) शु० सं० अ० १ क० १० । (२-४) शु० सं० अ० १ क० ११ ।

दृꣳहन्तां दुर्य्याः पृथिव्यामित्यथ प्प्रैत्यु'र्व्वन्तरिक्षमन्न्वेमी'ति सोऽसावेव बन्धुः ॥२२॥ स यस्य गार्हपत्ये हवीꣳषि श्रपयन्ति। गार्हपत्ये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्हि गार्हपत्यꣳ सादयेद्यस्याऽऽहवनीये हवीꣳषि श्रपयन्त्याऽऽहवनीये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्ह्याहवनीयꣳ सादये'त्पृथिव्व्यास्त्वा नाभौ सादयामी'ति मध्यं वै नाभिर्म्मध्यमभयं तस्म्मादाह पृथिव्व्यास्त्वा नाभौ सादयामी'त्यदित्त्या ऽउपस्त्थ' ऽइत्त्युपस्त्थ ऽइवैनदभार्षुरिति वा ऽआहुर्य्यत् सुगुप्तं गोपायन्ति तस्म्मादाहाऽदित्त्या ऽउपस्त्थ ऽइ'त्यग्ने हव्व्यꣳ रक्षे'ति तदग्नये चैवैतद्धविः परिददाति गुप्त्या ऽअस्यै च पृथिव्व्यै तस्म्मादाहाऽग्ने हव्व्यꣳ रक्षेति ॥ २३ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



पवित्रे करोति। 'पवित्रे स्त्थो व्वैष्णव्व्या'विति यज्ञो वै व्विष्णुर्य्यज्ञिये स्त्थ ऽइत्त्येवैतदाह ॥१॥ ते वै द्वे भवतः। अयं वै पवित्रं योऽयं पवते सोऽयमेक ऽइवैव पवते सोऽयं पुरुषेऽन्तः प्प्रविष्टः प्प्राङ् च प्प्रत्यङ् च ताविमौ प्प्राणोदानौ तदेतस्यैवाऽनुमात्रां तस्म्माद् द्वे भवतः ॥ २ ॥ अथो ऽअपि त्रीणि स्युः। व्व्यानो हि तृतीयो द्वे त्त्वेव भवतस्ताभ्यामेताः प्प्रोक्षणीरुत्पूय ताभिः प्प्रोक्षति तद्यदेताभ्यामुत्पुनाति ॥३॥ व्वृत्रो ह वा ऽइदꣳ सर्व्वं व्वृत्त्वा शिश्ये। यदिदमन्तरेण द्यावा-

(१-४) शु० सं० अ० १ क० ११। (५) शु० सं० अ० १ क० १२।
(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १. १. २।

पृथिवी स यदिदꣳ सर्वं व्वृत्वा शिश्ये तस्माद्वृत्रो नाम ॥४॥ तमिन्द्रो जघान। स हतः पूतिः ऽसर्वत ऽएवाऽऽपोऽभि प्प्रसुस्राव सर्वत ऽइव ह्ययꣳ समुद्रस्तस्मादु हैका ऽआपो बीभत्साञ्चक्रिरे ता ऽउपर्युपर्यति पुप्लुविरे त ऽइमे दर्भा-स्ता हैता ऽअनापूयिता ऽआपोऽस्ति वा ऽइतरासु सꣳसृष्ट-मिव यदेना व्वृत्रः पूतिरभि प्प्राऽस्रवत्तदेवाऽऽसामेताब्भ्यां पवित्राब्भ्यामपहन्त्यथ मेध्याभिरेवाऽद्भिः प्प्रोक्षति तस्मा-द्वा ऽएताब्भ्यामुत्पुनाति ॥ ५ ॥ स ऽउत्पुनाति। '[1]सवि-तुर्वः प्प्रसव ऽउत्पुनाम्म्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मि-भि'रिति सविता वै देवानां प्रसविता तत्सवितृप्प्रसूत-ऽएवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति यो वा ऽअयं पवत-ऽएषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्य्यस्य रश्मिभिरित्त्येते वा-ऽउत्पवितारो यत्सूर्य्यस्य रश्मयस्तस्मादाह सूर्य्यस्य रश्मि-भिरिति ॥ ६ ॥ ताः सव्व्ये पाणौ कृत्वा। दक्षिणेनोदिङ्ग-यत्त्युपस्तौत्त्येवैना ऽएतन्नमहयत्त्येव '[2]देवीरापो ऽअग्रेगुवो ऽअग्रे-पुव' ऽइति देव्व्यो ह्यापस्तस्मादाह देवीराप ऽइत्त्यग्रेगुव ऽइति ता यत्समुद्रं गच्छन्ति तेनाऽग्रेगुवोऽग्रेपुव ऽइति ता यत्प्रथ-माः सोमस्य राज्ञो भक्षयन्ति तेनाऽग्रेपुवो'[3]ग्रे ऽइममद्य यज्ञं नयताऽग्रे यज्ञपतिꣳ सुधातुं य्यज्ञपतिं देवयुव'मिति साधु यज्ञꣳ साधु यजमानमित्त्येवैतदाह ॥७॥ '[4]युष्मा ऽइन्द्रो-ऽवृणीत व्वृत्रतूर्य्ये' ऽइति। एता ऽउ हीन्द्रोऽव्वृणीत व्वृत्रेण स्प्पर्द्धमान ऽएताभिर्ह्येनमहँस्तस्मादाह युष्मा ऽइन्द्रोऽव्वृणीत

(१-३) शु० सं० अ० १ क० १२। (४) शु० सं० अ० ६ क० १३।

व्वृत्रतूर्य्य ऽइति ॥८॥ 'यूयमिन्द्रमवृणीद्ध्वं व्वृत्रतूर्य्य' ऽइति। एता ऽउ हीन्द्रमवृणत व्वृत्रेण स्पर्द्धमानमेताभिर्ह्येनमहँस्त- स्मादाह यूयमिन्द्रमवृणीद्ध्वं व्वृत्रतूर्य्य ऽइति ॥९॥ प्रोक्षिता स्त्थेति। तदेताब्भ्यो निह्नुतेऽथ हविः प्प्रोक्षत्त्येको वै प्प्रोक्ष- णस्य बन्धुर्म्मेध्यमेवैतत्त्करोति ॥ १० ॥ स प्प्रोक्षति। 'अग्नये त्त्वा जुष्टं प्रोक्षामी'ति तद्यस्यै देवतायै हविर्ब्भवति तस्यै मेध्यं करोत्त्येवमेव यथा पूर्व्वꣳ हवीꣳषि प्प्रोक्ष्य ॥११॥ अथ यज्ञपात्त्रा- णि प्प्रोक्षति। 'दैव्व्याय कर्म्मणे शुन्धद्ध्वं देवयज्ज्याया' ऽइति दैव्व्याय हि कर्म्मणे शुन्धति देवयज्ज्यायै 'यद्वोऽशुद्धाः पराज- घ्नुरिदं वस्तच्छुन्धामी'ति तद्यदेवैषामत्त्राऽशुद्धस्तक्षा वाऽन्न्यो वाऽमेध्यः कश्चित्त्पराहन्ति तदेवैषामेतदद्भिर्म्मेध्यं करोति तस्मादाह यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामीति ॥१२॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥ (C)



अथ कृष्णाजिनमादत्ते। यज्ञस्यैव सर्व्वत्त्वाय यज्ञो ह देवेब्भ्योऽपचक्राम स कृष्णो भूत्त्वा चचार तस्य देवाऽअनु- विद्य त्त्वचमेवाऽवच्छायाऽऽजह्नुः ॥१॥ तस्य यानि शुक्लानि च कृष्णानि च लोमानि। तान्न्यृचां च साम्म्नां च रूपं यानि शुक्लानि तानि साम्म्नाꣳ रूपं यानि कृष्णानि तान्न्यृचां यदि वेतरथा यान्न्येव कृष्णानि तानि साम्म्नाꣳ रूपं यानि शुक्लानि तान्न्यृचां यान्न्येव बब्भ्रूणीव हरीणि तानि यजुषाꣳ रूपम् ॥ २ ॥ सैषा त्त्रयी व्विद्या यज्ञः। तस्या ऽएतच्छिल्पमेष

( १-४ ) शु. सं. अ. १ क. १३।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० २. १. ३।

वर्णस्तद्यत्कृष्णाजिनं भवति यज्ञस्यैव सर्वत्वाय तस्मात्कृष्णाजिनमधिदीक्षन्ते यज्ञस्यैव सर्वत्वाय तस्मादध्यवहननमधिपेषणं भवत्यस्कन्नꣳ हविरसदिति तद्यदेवाऽत्र तण्डुलो वा पिष्टं वा स्कन्दात्तद्यज्ञे यज्ञः प्रतितिष्ठादिति तस्मादध्यवहननमधिपेषणं भवति ॥३॥ अथ कृष्णाजिनमादत्ते । 'शर्म्माऽसी'ति चर्म्म वा ऽएतत्कृष्णस्य तदस्य तन्मानुषꣳ शर्म्म देवत्रा तस्मादाह शर्म्माऽसीति तदवधूनो'त्यवधूतꣳ रक्षोऽवधूता ऽअरातय' ऽइति तन्नाष्ट्रा ऽएवैतद्रक्षाꣳस्यतोऽपहन्त्यतिनत्येव पात्राण्यवधूनोति यद्ध्यस्यामेध्यमभूत्तद्ध्यस्यै तदवधूनोति ॥ ४ ॥ [ अर्धप्रपाठकः ॥६१॥ ] तत्प्रतीचीनग्रीवमुपस्तृणाति । 'अदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्वि'तीयं वै पृथिव्यदितिस्तस्या ऽअस्यै त्वग्यदिदमस्यामधि किञ्च तस्मादाहाऽदित्यास्त्वगसीति प्रति त्वाऽदितिर्वेत्त्विति प्रति हि स्वः सञ्जानीते तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्न्योऽन्न्यꣳ हिनसात ऽइत्यभिनिहितमेव सव्येन पाणिना भवति ॥५॥ अथ दक्षिणेनोलूखलमाहरति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्येन पाणिना भवति ॥ ६ ॥ अथोलूखलं निदधाति । 'अद्रिरसि वानस्पत्यो ग्रावाऽसि पृथुबुध्न' ऽइति वा तद्यथैवाऽदः सोमꣳ राजानं ग्रावभिरभिषुण्वन्त्येवमेवैतदुलूखलमुसलाभ्यां दृषदुपलाभ्याꣳ हविर्यज्ञमभिषुणोत्यद्रयऽइति वै तेषामेकं नाम तस्मादाहाऽद्रिरसीति वानस्पत्य ऽइति

(१) शु० सं० अ० १ क० १४। (२) शु० सं० अ० १ क० १४। (३) शु० सं० अ० १ क० १४।

वानस्पत्यो ह्येष ग्रावाऽसि पृथुबुध्न ऽइति ग्रावा ह्येष पृथुबुध्नो ह्येष '१प्रति त्वाऽदित्यास्त्वग्वेत्त्वि'ति तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्न्योऽन्न्यꣳ हिनसात ऽइति ॥७॥ अथ हविरावपति। '२अग्नेस्तनूरसि वाचो विसर्ज्जन'मिति यज्ञो हि तेनाऽग्नेस्तनूर्वाचो विसर्ज्जनमिति यां वा ऽअमूꣳ हविर्ग्गहीष्यन्वाचं यच्छत्यत्र वै तां विसृजते तद्यदेतामत्र वाचं विसृजतऽएष हि यज्ञ ऽउलूखले प्रत्यष्ठादेष हि प्रासारि तस्मादाह वाचो विसर्ज्जनमिति ॥ ८ ॥ स यदिदं पुरा मानुषीं वाचं व्याहरेत्। तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्ति'३र्देववीतये त्वा गृह्णामी'ति देवानवदित्यु हि हविर्ग्गृह्यते ॥ ९ ॥ अथ मुसलमादत्ते। '४बृहद्ग्रावाऽसि वानस्पत्य' ऽइति बृहद्ग्रावा ह्येष वानस्पत्यो ह्येष तदवदधाति '५स ऽइदं देवेभ्यो हविः शमीष्व सुशमि शमीष्वे'ति स ऽइदं देवेभ्यो हविः सꣳस्कुरु साधु सꣳस्कृतꣳ सꣳकुर्व्वित्त्येवैतदाह ॥१०॥ अथ हविष्कृतमुद्वादयति। '६हविष्कृदेहि हविष्कृदेही'ति वाग्वै हविष्कृद्वाचमेवैतद्विसृजते वागु वै यज्ञस्तद्यज्ञमेवैतत्पुनरुपह्वयते ॥११॥ तानि वा ऽएतानि। चत्त्वारि वाच ऽएहीति ब्राह्मणस्याऽऽगह्याद्रवेति वैश्यस्य च राजन्न्यबन्धोश्चाऽऽधावेति शूद्रस्य स यदेव ब्राह्मणस्य तदाहैतद्धि यज्ञियतममेतदु ह वै वाचः शान्ततमं यदेहीति तस्मादेहीत्त्येव ब्रूयात् ॥१२॥ तद्ध स्मैतत्पुरा।

(१) शु० सं० अ० १ क० १४। (२) शु० सं० अ० १ क० १५। (३) शु० सं० अ० १ क० १५। (४) शु० सं० अ० १ क० १५। (५-६) शु० सं० अ० १ क० १५।

जायैव हविष्कृदुपोत्तिष्ठति तदिदमप्प्येतर्हिं य ऽएव कश्चो-पोत्तिष्ठति स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति तद्यदेतामत्र वाचं प्रत्युद्वादयन्ति ॥१३॥ मनोर्ह वा ऽऋषभ ऽआस । तस्मिन्नसुरघ्नी सपत्नघ्नी वाक्प्रविष्टा स तस्य ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानानि यन्ति ते हाऽसुराः समूदिरे पापं बत नोऽयमृषभः सचते कथं न्विमं दभ्नुयामेति किलाताकुली ऽइति हाऽसुरब्रह्मावासतुः ॥१४॥ तौ होचतुः । श्रद्धादेवो वै मनुरावं नु वेदावेति । तौ हाऽऽगत्योचतुर्म्मनो याजयाव त्वेति केनेत्यनेनर्षभेणेति तथेति तस्याऽऽलब्धस्य सा वागपचक्राम ॥१५॥ सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति ततो ह स्मैवाऽसुररक्षसानि मृद्यमानानि यन्ति ते हाऽसुराः समूदिर ऽइतो वै नः पापीयः सचते भूयो हि मानुषी वाग्वदतीति किलाताकुली हैवोचतुः श्रद्धादेवो वै मनुरावं न्वेव वेदावेति तौ हागत्योचतुर्म्मनो याजयाव त्वेति केनेत्यनयैव जाययेति तथेति तस्या ऽआलब्धायै सा वागपचक्राम ॥१६॥ सा यज्ञमेव यज्ञपात्राणि प्प्रविवेश । ततो हैनां न शेकतुर्न्निर्हन्तुं सैषाऽसुरघ्नी '*सपत्नघ्नी' वागुद्वदति स यस्य हैवं विदुष ऽएतामत्र वाचं प्रत्युद्वादयन्ति पापीयाꣳसो हैवाऽस्य सपत्ना भवन्ति ॥ १७ ॥ स समाहन्ति । '[1]कुक्कुटोऽसि मधुजिह्व' ऽइति मधुजिह्वो वै स देवेभ्य ऽआसीद्विषजिह्वोऽसुरेभ्यः स यो देवेभ्य ऽआसीः स न ऽएधीत्त्येवैतदाह '[2]इषमूर्ज्जमा वद

(१) शु० सं० अ० १. क० १६। (२) शु० सं० अ० १. क० १६। * नास्त्येतपदं 'ग' पुस्तके।

त्त्वया वयꣳ सङ्ग्रातꣳसङ्ग्रातं जेष्मे'ति नाऽत्र तिरोहितमिवाऽस्ति ॥१८॥ अथ शूर्प्पमादत्ते । 'वर्षवृद्धमसी'ति वर्षवृद्धꣳ ह्येतद्यदि नडानां यदि वेणूनां यदीषीकाणां वर्षमु ह्येवैता वर्द्धयति ॥१९॥ अथ हविर्न्निर्वपति । 'प्रति त्वा वर्षवृद्धं वेत्वि'ति वर्षवृद्धा ऽउ ह्येवैते यदि व्रीहयो यदि यवा वर्षमु ह्येवैतान्वर्द्धयति तत्संज्ञामेवैतच्छूर्प्पाय च वदति नेदन्न्योऽन्न्यꣳ हिनसात ऽइति ॥२०॥ अथ निष्पुनाति । 'परापूतꣳ रक्षः परापूता ऽअरातय' ऽइत्त्यथ तुषान्प्रहन्त्य'पहतꣳ रक्ष' ऽइति तन्नाष्ट्रा ऽएवैतद्रक्षाꣳस्यतोऽपहन्ति ॥२१॥ अथाऽपविनक्ति । 'वायुर्वो विविनक्ति'त्त्ययं वै वायुर्य्योऽयं पवत ऽएष वा ऽइदꣳ सर्वं विविनक्ति यदिदं किञ्च विविच्च्यते तदेनानेष ऽएवैतद्विविनक्ति स यदैत ऽएतत्प्राप्नुवन्ति यत्रैनानद्ध्यपविनक्ति ॥२२॥ अथाऽनुमन्त्रयते । 'देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्त्वच्छिद्रेण पाणिना' सुप्रतिगृहीता ऽअसन्निति त्यथ त्रिः फलीकरोति त्रिवृद्धि यज्ञः ॥ २३ ॥ तद्धैके । देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धद्ध्वमिति फलीकुर्वन्ति तदु तथा न कुर्य्याद्दादिष्टं वा ऽएतद्देवतायै हविर्भवत्त्यथैतद्वैश्वदेवं करोति यदाह देवेभ्यः शुन्धद्ध्वमिति तत्समदं करोति तस्मादु तूष्णीमेव फलीकुर्य्यात् ॥२४॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

---

( १–६ ) शु० सं० अ० १ क० १६ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा–का० श० २. १. ३; तै० सं० ३. ३. ५. ६. ।

स वै कपालान्न्येवाऽन्न्यतरऽउपदधाति। दृषदुपले ऽअन्न्यतरस्तद्वा ऽएतदुभयꣳ सह क्रियते तद्यदेतदुभयꣳ सह क्रियते ॥१॥ शिरो ह वाऽ एतद्यज्ञस्य यत्पुरोडाशः। स यान्न्येवेमानि शीर्ष्णः कपालान्न्येतान्न्येवाऽस्य कपालानि मस्तिष्क ऽएव पिष्टानि तद्वा ऽएतदेकमङ्गमेकꣳ सह करवाव समानं करवावेति तस्माद्वा ऽएतदुभयꣳ सह क्रियते ॥२॥ स यः कपालान्न्युपदधाति। स ऽउपवेषमादत्ते 'धृष्टिरसी'ति स यदेनेनाऽग्निं धृष्णिववोपचरति तेन धृष्टिरथ यदेनेन यज्ञ ऽउपालभत ऽउपेव वा ऽएनेनैतद्वेवेष्टि तस्मादुपवेषो नाम ॥ ३॥ तेन प्राचोऽङ्गारानुदूहति। 'अपाग्ने ऽअग्निमामादं जहि निष्क्रव्व्यादꣳ सेधे'त्ययं वा ऽआमाद्येनेदं मनुष्याः पक्त्वाऽश्नन्त्यथ येन पुरुषं दहन्ति स क्रव्व्यादेतावेवैतदुभावतोऽपहन्ति ॥ ४ ॥ अथाऽङ्गारमास्कौति। 'आ देवयजं वहेति' यो देवयाट् तस्मिन्न्हवीꣳषि श्रपयाम तस्मिन्न्यज्ञं तनवामहा ऽइति तस्माद्वाऽआस्कौति ॥ ५ ॥ तं मध्यमेन कपालेनाऽभ्युपदधाति। देवा ह वै यज्ञं तन्न्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुर्न्नेन्नोऽधस्तान्नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तस्मादेवमुपदधाति तद्यदेष ऽएव भवति नाऽन्न्य ऽएष हि यजुष्कृतो मेद्ध्यस्तस्मान्न्मध्यमेन कपालेनाऽभ्युपदधाति ॥ ६ ॥ स ऽउपदधाति। 'ध्रुवमसि पृथिवीं दृꣳहे'ति पृथिव्व्या ऽएव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृ-

(१) शु० सं० अ० १ क० १७। (२) शु० सं० अ० १ क० १७। (३) शु० सं० अ० १ क० १७। (४) शु० सं० अ० १ क० १७।

व्यमवबाधते 'ब्रह्म[1]वनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाये'ति बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाऽऽशास्त ऽउभे वीर्ये सजातवनीति भूमा वै सजातास्तद्भूमानमाशास्त ऽउपदधामि भ्रातृव्यस्य वधायेति यदि नाऽभिचरेद्यद्यु ऽअभिचरेदमुष्य वधायेति ब्रूयादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ७ ॥ अथाऽङ्गारमास्कौति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ८ ॥ अथाऽङ्गारमध्यूहति । 'अग्ने ब्रह्म[2] गृभ्णीष्वे'ति नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानित्यग्निर्हि रक्षसामपहन्ता तस्मा*देवमध्यूहति ॥ ९ ॥ अथ यत्पश्चात्तदुपदधाति । 'धरुण[3]मस्यन्तरिक्षं दृꣳह'त्यन्तरिक्षस्यैव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते 'ब्रह्म[4]वनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाये'ति ॥ १० ॥ अथ यत्पुरस्तात्तदुपदधाति । 'धर्त्र[5]मसि दिवं दृꣳहे'ति दिव ऽएव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते 'ब्रह्म[6]वनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाये'ति ॥ ११ ॥ अथ यद्दक्षिण[7]तस्तदुपदधाति। 'विश्वाभ्यस्त्वाऽऽशाभ्य ऽउपदधामी'ति स यदिमाँल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद् द्विषन्तं भ्रातृव्यमवबाधतेऽनद्धा वै तद्यदिमाँल्लोकानति चतुर्थमस्ति वा न वाऽनद्धो तद्यद्विश्वा ऽआशास्त-

(१) शु० सं० अ० १ क० १७। (२-७) शु० सं० अ० १ क० १८। * 'ग' पुस्तके 'देनम्' इति।

स्मादाह विश्वाभ्यस्त्वाऽऽशाभ्य ऽउपदधामीति तूष्णीं वै वेतराणि कपालान्युपदधाति 'चितं स्थोर्द्ध्वचित' ऽइति वा ॥१२॥ अथाऽङ्गारैरभ्यूहति । 'भृगूणामङ्गिरसां तपसा तप्यद्ध्व'मित्येतद्वै तेजिष्ठं तेजो यद्भृग्वङ्गिरसाᳫं सुतप्तान्यसन्निति तस्मादेवमभ्यूहति ॥ १३ ॥ अथ षो दृषदुपले ऽउपदधाति । स कृष्णाजिनमादत्ते 'शर्म्मासी'ति तदवधूनो'त्यवधूतᳫं रक्षोऽवधूता ऽअरातय, ऽइति सोऽसावेव बन्धुस्तत्प्रतीचीनग्रीवमुपस्तृणा'त्यदित्त्यास्त्वगसि प्प्रति त्वादितिर्व्वेत्त्वि'ति सोऽसावेव बन्धुः ॥ १४ ॥ अथ दृषदमुपदधाति । 'धिषणाऽसि पर्व्वती प्प्रति त्वाऽदित्त्यास्त्वग्वेत्त्वि'ति धिषणा हि पर्व्वती हि प्प्रति त्वाऽदित्यास्त्वग्वेत्त्विति तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यᳫं हिनसात ऽइतीयमेवैषा पृथिवी रूपेण ॥ १५ ॥ अथ शम्म्यामुदीचीनाग्रामुपदधाति । 'दिवं स्कम्भनीरसी'त्यन्तरिक्षमेव रूपेणाऽन्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे तस्मादाह दिवं स्कम्भनीरसीति ॥१६॥ अथोपलामुपदधाति । 'धिषणाऽसि पार्व्वतेयी प्प्रति त्वा पर्व्वती वेत्त्वि'ति कनीयसी ह्येषा दुहितेव भवति तस्मादाह पार्व्वतेयीति प्प्रति त्वा पर्व्वती वेत्त्विति प्प्रति हि स्वः सञ्जानीते तत्संज्ञामेवैतद् दृषदुपलाभ्यां वदति नेदन्योऽन्यᳫं हिनसात ऽइति द्यौरेवैषा रूपेण हनू ऽएव दृषदुपले जिह्वैव शम्म्या

(१) । शु. सं. अ. १ कं. १८ । (२) शु. सं. अ. १ क. १८ । (३) शु. सं. अ. १ क. १९ । (४) शु० सं० अ० १ क० १९ । (५) शु० सं० अ० १ क० १९ । (६) शु० सं० अ० १ क० १९ । (७) शु० सं० अ० १ क० १९ । (८) शु० सं० अ० १ क० १९ ।

तस्माच्छम्म्यया समाहन्ति जिह्वया हि वदति ॥ १७ ॥ अथ हविरधिवपति 'धान्यमसि धिनुहि देवानि'ति धान्यꣳ हि देवान्धिनवदित्यु हि हविर्गृह्यते ॥ १८ ॥ अथ पिनष्टि । 'प्राणाय त्वोदानाय त्वा व्व्यानाय त्वा दीर्घामनु प्रसितिमायुषे धामि'ति प्रोहति 'देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्त्वच्छिद्रेण पाणिना चक्षुषे त्वे'ति ॥ १९ ॥ तद्यदेवं पिनष्टि । जीवं वै देवानाꣳ हविरमृतममृतानामथैतदुलूखलमुसलाभ्यां दृषदुपलाभ्याꣳ हविर्यज्ञं घ्नन्ति ॥ २० ॥ स यदाह । प्राणाय त्वोदानाय त्वेति तत्प्राणोदानौ दधाति व्व्यानाय त्वेति तद्व्यानं दधाति दीर्घामनु प्रसितिमायुषे धामिति तदायुर्दधाति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्त्वच्छिद्रेण पाणिना सुप्रति गृहीतान्यसन्निति चक्षुषे त्वेति तच्चक्षुर्दधात्येतानि वै जीवतो भवन्त्येवमु हैतज्जीवमेव देवानाꣳ हविर्भवत्यमृतममृतानां तस्माद्देवं पिनष्टि पिꣳषन्ति पिष्टान्यभीन्धते कपालानि ॥ २१ ॥ अथैकऽ आज्यं निर्वपति । यद्वाऽआदिष्टं देवतायै हविर्गृह्यते यावद्देवत्यं तद्भवति तदितरेण यजुषा गृह्णाति न वाऽ एतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्मादनिरुक्तेन यजुषा गृह्णाति 'महीनां पयोऽसी'ति मह्यऽइति ह वाऽएतासामेकं नाम यद्गवां तासां वाऽएतत्पयो भवति तस्मादाह महीनां पयोऽसीत्त्येव

(१) शु० सं० अ० १ क० २०। (२) शु० सं० अ० १ क० २०। (३) शु० सं० अ० १ क० २०। (४) शु० सं० अ० १ क० २०।

सु हास्यैतत्खलु यजुषैव गृहीतं भवति तस्माद्देवाऽऽह महीनां पयोऽसीति ॥ २२ ॥

## द्वितीयाऽध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पवित्रवति संवपति । पात्र्यां पवित्रे ऽअवधाय 'देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳩं संवपामी'ति सोऽसावेवैतस्य यजुषो बन्धुः ॥ १ ॥ अथान्तर्वेद्युपविशति । अथैक ऽउपसर्जनीभिरैति ता ऽआनयति ताः पवित्राभ्यां प्रतिगृह्णाति 'समाप ऽओषधीभि'रिति सᳩं ह्येतदापऽ ओषधिभिरेताभिः पिष्टाभिऽ सङ्गच्छन्ते 'समोषधयो रसेने'ति सᳩं ह्येतदोषधयो रसेनैताः पिष्टाऽ अद्भिः सङ्गच्छन्त ऽआपो ह्येतासाᳩं रसः 'सᳩं रेवतीर्ज्जगतीभिः पृच्च्यन्तामि'ति रेवत्यऽ आपो जगत्यऽ ओषधयस्ता ऽउ ह्येतदुभय्यः सम्पृच्च्यन्ते 'सं मधुमतीर्म्मधुमतीभिः पृच्च्यन्तामि'ति सᳩं रसवत्यो रसवतीभिः पृच्च्यन्तामित्येवैतदाह ॥ २॥ अथ संयौति । 'जनयत्यै त्वा संयौमी'ति यथा श्रियेऽन्नाद्यायेमाः प्प्रजा यजमानाय यच्छेदेवं वै तत्संयौत्यधिवक्ष्यन्नु वै संयौति यथा वा ऽअधिवृक्तोऽग्नेरधि जायेतैवं वै तत्संयौति ॥ ३ ॥ अथ द्वेधा करोति । यदि द्वे हविषी भवतः पौर्णमास्यां वै द्वे हविषी भव-

(१) शु० सं० अ० १ क० २१। (२) शु० सं० अ० १ क० २१। (३) शु० सं० अ० १ क० २१। (४) शु० सं० अ० १ क २१। (५) शु० सं० अ० १ क० २१। (६) शु० सं० अ० १ क० २२।

तः॑ स यत्र पुनर्न्न सꣳहरिष्यन्त्स्यात्तदभिमृश[१]'तीद्मग्नेरिदमग्नीषोमयोरि'ति नानावा ऽएतदग्रे हविर्गृह्णन्ति तत्सहाऽवघ्नन्ति तत्सह पिꣳषन्ति तत्पुनर्न्नाना करोति तस्मादेवमभिमृशत्यधिवृणक्त्येवैष पुरोडाशमधि श्रयत्यसावाज्यम् ॥ ४ ॥ तद्वा ऽएतत् । उभयꣳ सह क्रियते तद्यदेतदुभयꣳ सह क्रियतेऽर्धो ह वा ऽएष ऽआत्मनो यज्ञस्य यदाज्यमर्धो यदिह हविर्भवति स यश्चासावर्धो य ऽउ चायमर्धस्ता ऽउभावग्निं गमयावेति तस्माद्वा ऽएतदुभयꣳ सह क्रियत ऽएवमु हैष ऽआत्मा यज्ञस्य सन्धीयते ॥ ५ ॥ सोऽसावाज्यमधिश्रयति । 'इषे त्वे[२]'ति वृष्ट्यै तदाह यदाहेषे त्वेति तत्पुनरुद्वासय'त्यूर्ज्जे त्वे[३]'ति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ ६ ॥ अथ पुरोडाशमधिवृणक्ति । '[४]घर्म्मोऽसी'ति यज्ञमेवैतत्करोति यथा घर्मं प्रवृञ्ज्यादेवं प्रवृणक्ति 'विश्वायुरि'ति तदायुर्दधाति ॥ ७ ॥ तं प्रथयति । 'उरु[६] प्प्रथा ऽउरु प्प्रथस्वे'ति प्रथयत्येवैनमेत'दुरु ते यज्ञपतिः प्प्रथतामि'ति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदाशिषमाशास्ते ॥ ८ ॥ तं न सत्रा पृथुं कुर्य्यात् । मानुषꣳ ह कुर्य्याद्यत्पृथुं कुर्य्याद्द् व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद् व्यृद्धं यज्ञे करवाणीति तस्मान्न सत्रा पृथुं कुर्य्यात् ॥ ९ ॥ अश्वशफमात्रं कुर्य्यादित्यु हैक ऽआहुः । कस्तद्वेद यावानश्वशफो याव-

( १ ) शु. सं. अ. १ क. २२ । ( २ ) शु. सं. अ. १ क. २२ । ( ३ ) शु. सं. अ. १ क. १ । ( ४ ) शु. सं. अ. १ क. २२ । ( ५ ) शु. सं. अ. १ क. २२ । ( ६ ) शु. सं. अ. १ क. २२ । ( ७ ) शु. सं. अ. १ क. २२ ।

न्तमेव स्वयं मनसा न सत्रा पृथुं मन्येतैवं कुर्य्यात् ॥१०॥
तमद्भिरभिमृशति । सकृद्वा त्रिर्वा तद्यदेवास्यात्राऽवघ्नन्तो
वा पिंषन्तो वा क्षिण्वन्ति वा वि वा व्वृहन्ति शान्तिरा-
पस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्माद-
द्भिरभिमृशति ॥११॥ सोऽभिमृशति । 'अग्निष्टे त्वचं मा
हिंसीदित्यग्निना वाऽ एनमेतदभितप्स्यन्भवत्येष ते त्वचं मा
हिंसीदित्येवैतदाह ॥१२॥ तं पर्य्यग्निं करोति । अच्छिद्र-
मेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षांऽसि प्रमृ-
शानित्यग्निर्हि रक्षसापहन्ता तस्मात्पर्य्यग्निं करोति ॥१३॥
तं श्रपयति । 'देवस्त्वा[2] सविता श्रपयत्वि'ति न वा ऽएतस्य
मनुष्यः श्रपयिता देवो ह्येष तदेनं देव ऽएव सविता श्रप-
यति 'वर्षिष्ठे[3]ऽधि नाक' ऽइति देवत्रो ऽएतदाह यदाह वर्षि-
ष्ठेऽधि नाक ऽइति तमभिमृशति श्रृतं वेदानीति तस्माद्वा-
ऽअभिमृशति ॥१४॥ सोऽभिमृशति । 'मा भेर्म्मा संविक्थाऽ-
इति मा त्वं भैषीर्म्मा संविक्था यत्त्वाऽहममानुषः सन्तं
मानुषोऽभिमृशामीत्येवैतदाह ॥१५॥ यदा श्रृतोऽथाभिवा-
सयति । नेदेनमुपरिष्टान्नाष्ट्रा रक्षांस्यवपश्यानिति नेद्वेव
नग्न ऽइव मुषित ऽइव शयाता ऽइत्यु चैव तस्माद्वाऽ अभिवास-
यति ॥१६॥ सोऽभिवासयति । 'अतमेरुर्य्यज्ञोऽतमेरुर्य्यज-
मानस्य प्रजा भूयादि'ति नेदेतदनु यज्ञो वा यजमानो वा
ताम्यायद्यदिदमभिवासयामीति तस्मादेवमभिवासयति ॥१७॥

(१) शु. सं. अ. १ क. २२। (२) शु. सं. अ. १ क. २२। (३) शु. सं. अ. १ क. २२। (४) शु. सं. अ. १ क. २३। (५) शु. सं. अ. १ क. २३।

अथ पात्रीनिर्णेजनम् । अङ्गुलिप्रणेजनमाप्त्येभ्यो निनयति तद्यदाप्त्येभ्यो निनयति ॥ १८ ॥

द्वितीयाऽध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥१॥
कण्डिकासङ्ख्या ॥१२१॥



चतुर्धा विहितो ह वा ऽअग्रेऽग्निरास । स यमग्रेऽग्निꣳ होत्राय प्रावृणत स प्राधन्वद्यं द्वितीयं प्रावृणत स प्रैवाधन्वद्यं तृतीयं प्रावृणत स प्रैवाधन्वदथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा ऽअनुविद्य सहसैवाद्भ्य ऽआनिन्युः सोऽपोऽभितिष्ठेवाऽवष्ठ्यूता स्थ याऽअप्रपदनꣳ स्थ याभ्यो वो मामकामं नयन्तीति तत ऽआप्त्याः सम्बभूवुस्त्रितो द्वित ऽएकतः ॥ १ ॥ त ऽइन्द्रेण सह चेरुः । यथेदं ब्राह्मणो राजानमनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रित ऽएव जघानात्य ह तदिन्द्रोऽमुच्यत देवो हि सः ॥२॥ त ऽउ हैत ऽऊचुः । उपैवेम ऽएनो गच्छन्तु येऽस्य वध्यस्याऽवेदिषुरिति किमिति यज्ञ ऽएवैषु मृष्टामिति तदेष्वेतद्यज्ञो मृष्टे यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ॥ ३ ॥ त ऽउ हाप्त्या ऽऊचुः । अत्येव वयमिदमस्मत्परो नयामेति कमभीति य ऽएवादक्षिणेन हविषा यजाता ऽइति तस्मान्नादक्षिणेन हविषा यजेताऽऽप्त्येषु ह यज्ञो मृष्ट ऽआप्त्या ऽउ ह तस्मिन्मृजते योऽदक्षिणेन हविषा

यजते ॥ ४ ॥ ततो देवाः । एतां दर्शपूर्णमासयोर्द्दक्षिणामकल्पन्यदन्वाहार्य्यं नेददक्षिणꣳ हविरसदिति तन्नाना निनयति तथैभ्योऽसमदं करोति तदभितपति तथैषाꣳ शृतं भवति स निनयति 'त्रिताय त्वा द्वितาय त्वैकताय त्वे'ति पशुर्ह वा ऽएष ऽआलभ्यते यत्पुरोडाशः ॥५॥ पुरुषꣳ ह वै देवाः । अग्रे पशुमालेभिरे तस्याऽऽलब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्वमालभन्त तस्याऽऽलब्धस्य मेधोऽपचक्राम स गां प्रविवेश ते गामालभन्त तस्याऽऽलब्धस्य मेधोऽपचक्राम सोऽविं प्रविवेश तेऽविमालभन्त तस्याऽऽलब्धस्य मेधोऽपचक्राम सोऽजं प्रविवेश तेऽजमालभन्त तस्याऽऽलब्धस्य मेधोऽपचक्राम ॥ ६ ॥ स ऽइमां पृथिवीं प्रविवेश । तं खनन्त ऽइवाऽन्वीषुस्तमन्वविन्दंस्ताविमौ व्रीहियवौ तस्मादप्येतावेतर्हि खनन्त ऽइवैवानुविन्दन्ति स यावद्वीर्य्यवद्ध वा ऽअस्यैते सर्व्वे पशव ऽआलब्धाः स्युस्तावद्वीर्य्यवद्धास्य हविरेव भवति य ऽएवमेतद्वेदात्रो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥ ७ ॥ यदा पिष्टान्यथ लोमानि भवन्ति । यदाप ऽआनयत्यथ त्वग्भवति यदा संयौत्यथ माꣳसं भवति सन्तत ऽइव हि स तर्हि भवति सन्ततमिव हि माꣳसं यदा शृतोऽथास्थि भवति दारुण ऽइव हि स तर्हि भवति दारुणमिव ह्यस्थ्यथ यदुद्वासयिष्यन्नभिघारयति तं मज्जानन्दधात्येषो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥८॥ स यं पुरुषमालभन्त । स किम्पुरुषोऽभवद्यावश्वं च

(१) शु० सं० अ० १ क० २३ ।

गां च तौ गौरश्च गवयश्चाभवतां यमविमालभन्त सऽ उष्ट्रोऽभवद्यमजमालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनान्नाशितव्यमपक्रान्तमेधा हैते पशवः ॥ ९ ॥

द्वितीयाऽध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



इन्द्रो ह यत्र व्वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्द्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वा ऽथ यत्र प्राहरत्तच्छकलोऽशीर्य्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्य्यतैवमु स चतुर्धा वज्रोऽभवत् ॥ १ ॥ ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति । द्वाभ्याᳪं राजन्यबन्धवः संव्व्याधे यूपेन च स्फ्येन च ब्राह्मणा रथेन च शरेण च राजन्यबन्धवः ॥ २ ॥ स यत्स्फ्यमादत्ते । यथैव तदिन्द्रो व्वृत्राय वज्रमुदयच्छदेवमेवैषऽ एतं पाप्मने द्विषते भ्रातृव्व्याय वज्रमुद्यच्छति तस्माद्वै स्फ्यमादत्ते ॥ ३ ॥ तमादत्ते । 'देवस्य[1] त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामाददेऽद्ध्वरकृतं देवेभ्य'ऽ इति सविता वै देवानां प्रसविता तत्सवितृप्प्रसूतऽ एवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्य्यू तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्यां * पूष्णोहस्ताभ्यामिति पूषाभागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वा ऽएष तस्य न मनुष्यो भर्त्ता तमेताभिर्द्देवताभिरादत्ते ॥ ४ ॥ आददेऽद्ध्वरकृतं देवेभ्य ऽइति । अद्ध्वरो वै यज्ञो

( १ ) शु० सं० अ० १ क० २४ । *–'क' पुस्तके पाठोऽयमधिको दृश्यते ।

यज्ञकृतं देवेभ्यऽ इत्येवैतदाह तद्ध सव्ये पाणौ कृत्वा
दक्षिणेनाऽभिमृश्य जपति सꣳश्यत्येवैनमेतद्यज्जपति ॥ ५ ॥
स जपति । 'इन्द्रस्य[1] बाहुरसि दक्षिण' ऽइति 'सहस्रभृष्टिः[2]
शततेजा' ऽइति सहस्रभृष्टिर्वै स वज्र ऽआसीच्छततेजा यं
तं वृत्राय प्राहरत्तमेवैतत्करोति ॥ ६ ॥ 'वायुरसि[3] तिग्म-
तेजा'ऽ इति । एतद्वै तेजिष्ठं तेजो यदयं योऽयं पवत ऽएष
हीमाँल्लोकाँस्तिर्य्यङ्ङनु पवते सꣳश्यत्येवैनमेत 'द्विषतो-
वधं[4]' ऽइति यदि नाऽभिचरेद्यद्यु ऽअभिचरेदमुष्य वध ऽइति
ब्रूयात्तेन सꣳशितेन नात्मानमुपस्पृशति न पृथिवीं नेदनेन
वज्रेण सꣳशितेनाऽऽत्मानं वा पृथिवीं वा हिनसानीति
तस्मान्नात्मानमुपस्पृशति न पृथिवीम् ॥ ७ ॥ देवाश्च
वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्पृधिरे ते ह स्म
यद्देवाऽ असुरान् जयन्ति ततो ह स्मैवैनान् पुनरुपोत्तिष्ठन्ति
॥ ८ ॥ ते ह देवा ऽऊचुः । जयामो वा ऽअसुरांस्ततस्त्वेव
नः पुनरुपोत्तिष्ठन्ति कथं न्वेनाननपजय्यं जयेमेति ॥ ९ ॥
स हाग्निरुवाच । उदञ्चो वै नः पलाय्य मुच्यन्त ऽइत्युदञ्चो
ह स्मैवैषां पलाय्य मुच्यन्ते ॥ १० ॥ स हाग्निरुवाच ।
अहमुत्तरतः पर्य्येष्याम्यथ यूयमित ऽउपसꣳरोत्स्यथ तान्त्स-
ꣳरुध्यैभिश्च लोकैरभिनिधास्यामो यदु चेमाँल्लोकानति
चतुर्थं ततः पुनर्न्न सꣳहास्यन्त ऽइति ॥ ११ ॥ सोऽग्नि-
रुत्तरतः पर्य्यैत् । अथेम ऽइत ऽउपसमरुन्धँस्तान्त्सꣳ रुध्यै-

(१) शु॰ सं॰ अ॰ १ क॰ २४। (२) शु॰ सं॰ अ॰ १ क॰ २४। (३) शु॰ सं॰ अ॰ १ क॰ २४। (४) शु॰ सं॰ अ॰ १ क॰ २४।

४

भिश्च लोकैरभिन्न्यदधुर्य्यदु चेमाँल्लोकानति चतुर्थं ततः पुनर्न्न समजिहत तदेतन्निदानेन यत् स्तम्बयजुः ॥ १२ ॥ स योऽसावग्नीदुत्तरतः पर्य्येति । अग्निरेवैष निदानेन तानध्वर्य्युरेवेत ऽउप सꣳरुणद्धि तान्त्सꣳरुध्यैभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न्न सञ्जिहते तस्माद्प्येतर्ह्यसुरा न सञ्जिहते येन ह्येवैनान्देवाऽ अवाबाधन्त तेनैवैनानप्येतर्हि ब्राह्मणा यज्ञेऽवबाधन्ते ॥ १३ ॥ य ऽउ ऽएव यजमानायारातीयति । यश्चैनं द्वेष्टि तमेवैतदेभिश्च लोकैरभिनिदधाति यदु * चेमाँल्लोकानति चतुर्थꣳ स वा ऽएभिश्चलोकैरभिनिदधद्यदु चेमाँल्लोकानति चतुर्थमस्या ऽएव सर्वꣳ हरत्यस्याꣳ हीमे सर्वे लोकाः प्रतिष्ठिताः किꣳ हि हरेद्यदन्तरिक्षꣳ हरामि दिवꣳ हरामीति हरेत्तस्मादस्या ऽएव सर्वꣳ हरति ॥ १४ ॥ अथ तृणमन्तर्धाय प्रहरति । नेदनेन वज्रेण सꣳशितेन पृथिवीꣳ हिनसानीति तस्मात्तृणमन्तर्धाय प्रहरति ॥ १५ ॥ स प्रहरति । 'पृथिवि देवयजन्न्योषध्यास्ते मूलम्मा हिꣳसिषमि'त्युत्तरमूलामिव वा ऽएनामेतत्करोत्याददानस्तामेतदाहौषधीनां ते मूलानि मा हिꣳसिषमिति'व्रजं गच्छ गोष्ठानमि'त्यभिनिधास्यन्नेवैतदनपक्रमि कुरुते तद्ध्यनपक्रमि यद्व्रजेऽन्तस्तस्मादाह व्रजं गच्छ गोष्ठानमिति'वर्षतु ते द्यौरि'ति यत्र वा ऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्त-

(१) शु० सं० अ० १ क० २५। (२) शु० सं० अ० १ क० २५। (३) शु० सं० अ० १ क० २५।

* 'क' पुस्तके पाठोऽयमधिकः।

दद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादाह वर्षतु ते द्यौरिति 'बधान देवं सवितः परमस्यां पृथिव्यामि'ति देवमेवैतत्सवितारमाहान्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति 'शतेनं पाशैरि'त्यमुचे तदाह 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगि'ति यदि नाऽभिचरेद्यद्यु ऽअभिचरेदमुमतो मा मौगिति ब्रूयात् ॥१६॥ अथ द्वितीयं प्रहरति । 'अपाररुं पृथिव्यै देवयजनाद्वध्यासमि'त्यररुर्ह वै नामाऽसुररक्षसमास तं देवा ऽअस्या ऽअपाघ्नत तथो ऽएवैनमेतद्देषोऽस्या ऽअपहते 'व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगि'ति ॥ १७ ॥ तमग्नीदभिनिदधाति । 'अररो दिवं मा पप्त' ऽइति यत्र वै देवा ऽअररुमसुररक्षसमपाघ्नत स दिवमपिपतिषत्तमग्निरभिन्यदधादररो दिवम्मा पप्त ऽइति स न दिवमपतत्तथो ऽएवैनमेतदध्वर्युरेवाऽस्माँल्लोकादन्तरेति दिवोऽध्यग्नीत्तस्मादेवं करोति ॥ १८ ॥ अथ तृतीयं प्रहरति । 'द्रप्सस्ते द्यां मा स्कन्नि'त्ययं वा ऽअस्यै द्रप्सो यमस्या ऽइमᳬ रसं प्रजा ऽउपजीवन्त्येष ते दिवं मा पप्तादित्येवैतदाह 'व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देवसवितः परमस्यां पृथिव्याᳬ शतेन पाशै र्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मस्तमतो

(१) शु० सं० अ० १ क० २५। (२) शु० सं० अ० १ क० २५। (३) शु० सं० अ० १ क० २६। (४) शु० सं० अ० १ क० २६। (५) शु० सं० अ० १ क० २६। (६) शु० सं० अ० १ क० २६। (७) शु० सं० अ० १ क० २६।

ᳬ 'क' 'ख' पुस्तके पाठोयमधिको लभ्यते।

मा मौगि'ति ॥१९॥ स वै त्रिर्यजुषा हरति । त्रयो वा ऽइमे लोका ऽएभिरेवैनमेतल्लोकैरभिनिदधात्यद्धा वै तद्यदिमे लोकाऽ अद्धो तद्यद्यजुस्तस्मात्त्रिर्यजुषा हरति ॥ २० ॥ तूष्णीं चतुर्थम् । स यदिमाँल्लोकानति चतुर्थमस्ति वानवा तेनैवैतद्दिद्वषन्तं भ्रातृव्यमवबाधतेऽनद्धा वै तद्यदिमाँ ल्लोकानति चतुर्थमस्ति वा न वाऽनद्धो तद्यत्तूष्णीं तस्मात्तूष्णीं चतुर्थम् ॥ २१ ॥

द्वितीयाऽध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवा ऽअनुव्यमिवाऽऽसुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति ॥ १ ॥ ते होचुः हन्तेमां पृथिवीं विभजामहै तां विभज्योपजीवामेति तामौक्ष्णैश्चर्म्मभिः पश्चात्प्राञ्चो विभजमाना ऽअभीयुः ॥ २ ॥ तद्वै देवाः शुश्रुवुः । विभजन्ते ह वा ऽइमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा विभजन्ते के ततः स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥ ३ ॥ ते होचुः । अनु नोऽस्यां पृथिव्यामा भजतास्त्वेव नोऽप्यस्यां भाग ऽइति ते हासुरा ऽअसूयन्त ऽइवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो दद्म ऽइति ॥ ४ ॥ वामनो ह विष्णुरास । तद्देवा न जिहीडिरे महद्वै नोऽदुर्ये नो यज्ञसम्मितमदुरिति ॥ ५॥ ते प्राञ्चं विष्णुं निपाद्य । छन्दोभिरभितः पर्ययगृह्णन्

'गायत्रेण[1] त्वा च्छन्दसा परिगृह्णामी'ति दक्षिणत'स्त्रैष्टुभेन त्वा[2] च्छन्दसा परिगृह्णामी'ति पश्चा'ज्जागतेन[3] त्वा च्छन्दसा परिगृह्णामी'त्युत्तरतः ॥ ६ ॥ तं छन्दोभिरभितः परिगृह्य । अग्निं पुरस्तात् समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमाᳬं सर्वां पृथिवीᳬं समविन्दन्त तद्यदेनेनेमाᳬं सर्वाᳬं समविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती वेदिस्तावती पृथिवीत्येतया हीमाᳬं सर्वाᳬं समविन्दन्तैवᳬं ह वा ऽइमाᳬं सर्वाᳬं सपत्नानाᳬं संवृङ्क्ते निर्भजत्यस्यै सपत्नान्य ऽ एवमेतद्वेद ॥ ७॥ सोऽयं विष्णुर्ग्लानः । छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास स तत ऽएवौषधीनां मूलान्न्युपमुम्लोच ॥ ८ ॥ ते ह देवा ऊचुः क्व नु विष्णुरभूत् क्व नु यज्ञोऽभूदिति ते होचुश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवान्विच्छतेति तं खनन्त ऽइवान्वीषुस्तं त्र्यङ्गुलेऽन्वविन्दँस्तस्मात्त्र्यङ्गुला वेदिः स्यात्तदु हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याऽध्वरस्य वेदिं चक्रे ॥ ९ ॥ तदु तथा न कुर्यात् । ओषधीनां वै स मूलान्न्युपाम्लोचत्तस्मादोषधीनामेव मूलान्युच्छेत्तवै ब्रूयाद्यन्न्वेवात्र विष्णुमन्वविन्दँस्तस्माद्वेदिर्नाम ॥ १० ॥ तमनुविद्योत्तरेण परिग्रहेण पर्यगृह्णन् । 'सुक्ष्मा[4] चासि शिवा चासी'ति दक्षिणत ऽ इमामेवैतत्पृथिवीᳬं संविद्य सुक्ष्माᳬं शिवामकुर्वत 'स्योना[5] चासि सुषदा चासी'ति पश्चादि-

(१) शु० सं० अ० १ क० २७। (२) शु० सं० अ० १ क० २७। (३) शु० सं० अ० १ क० २७। (४) शु० सं० अ० १ क० २७। (५) शु० सं० अ० १ क० २७।

मामेवैतत् पृथिवीᳪ संविद्य स्योनाᳪ सुषदामकुर्वतोर्ज-स्वती चासि पयस्वती चेत्युत्तरत इमामेवैतत्पृथिवीᳪ संविद्य रसवतीमुपजीवनीयामकुर्वत ॥ ११ ॥ स वै त्रिः पूर्वं परिग्रहं परिगृह्णाति । त्रिरुत्तरं तत्षट्कृत्वः षड् वाऽऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्परिगृह्णाति ॥ १२ ॥ षड्भिर्व्याहृतिभिः । पूर्वं परिग्रहं परिगृह्णाति षड्भिरुत्तरं तद् द्वादशकृत्वो द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्परिगृह्णाति ॥ १३ ॥ व्याममात्री पश्चात्स्यादित्याहुः । एतावान्वै पुरुषः पुरुषसम्मिता हि त्र्यरत्निः प्राची त्रिवृद्धि यज्ञो नात्र मात्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्य्यात् ॥ १४ ॥ अभितोऽग्निमᳫसा ऽउन्नयति । योषा वै वेदिर्वृषाऽग्निः परिगृह्य वै योषा वृषाणᳫ शेते मिथुनमेवैतत्प्रजननं क्रियते तस्मादभितोऽग्निमᳫसा ऽउन्नयति ॥ १५ ॥ सा वै पश्चाद्वरीयसी स्यात् । मध्ये सᳪहारिता पुनः पुरस्तादुर्व्येवमिव हि योषां प्रशᳫसन्ति पृथुश्रोणिर्विमृष्टान्तराᳪसा मध्ये सङ्ग्राह्येति जुष्टामेवैनामेतद्देवेभ्यः करोति ॥ १६ ॥ सा वै प्राक् प्रवणा स्यात् । प्राची हि देवानां दिगथोऽ उदक्प्रवणोदीची हि मनुष्याणां दिग्दक्षिणतः पुरीषं प्रत्युदूहत्येषा वै दिक् पितृणाᳪ सा यद्दक्षिणाप्रवणा स्यात् क्षिप्रे ह यजमानोऽमुं लोक-

(१) शु० सं० अ० १ क २७।

मियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः पुरीषं प्रत्युदूहति पुरीषवतीं कुर्वीत पशवो वै पुरीषं पशुमतीमेवैनामेतत्कुरुते ॥ १७ ॥ तां प्रतिमार्ष्टि । देवा ह वै सङ्ग्राममः सन्निधास्यन्तस्ते होचुर्हन्त यदस्यै पृथिव्या ऽअनामृतं देवयजनं तच्चन्द्रमसि निदधामहै स यदि न ऽइतोऽसुरा जयेयुस्तत ऽएवाऽर्च्चन्तः श्राम्यन्तः पुनरभिभवेमेति स यदस्यै पृथिव्या ऽअनामृतं देवयजनमासीत्तच्चन्द्रमसि न्न्यदधत तदेतच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमित्यपि ह वा ऽअस्यैतस्मिन्देवयजन ऽइष्टं भवति तस्माद्वै प्रतिमार्ष्टि ॥ १८ ॥ स प्रतिमार्ष्टि । 'पुरा [1]क्रूरस्य विसृपो विरप्शिन्नि'ति सङ्ग्रामो वै क्रूरः सङ्ग्रामे हि क्रूरं क्रियते हतः पुरुषो हतोऽश्वः शेते पुरा ह्येतत्सङ्ग्रामान्न्यदधत तस्मादाह पुरा क्रूरस्य विसृपो विरप्शिन्नि- '[2]त्युदादाय पृथिवीं जीवदानुमि'त्युदादाय हि यदस्यै पृथिव्यै जीवमासीत्तच्चन्द्रमसि न्यदधत तस्मादाहोदादाय पृथिवीं जीवदानुमि' ति 'यामैरयँ[3]श्चन्द्रमसि स्वधाभिरि'ति यां चन्द्रमसि ब्रह्मणा दधुरित्येवैतदाह 'तामु धीरासो ऽअनुदिश्य यजन्त' ऽइत्येतेनो ह तामनुदिश्य यजन्तेऽपि ह वा ऽअस्यैतस्मिन्देवयजन ऽइष्टं भवति य ऽएवमेतद्वेद ॥१९॥ अथाह 'प्रोक्षणीरासादये'ति । वज्रो वै स्फ्यो ब्राह्मणश्चेमं पुरा यज्ञमभ्यजूगुपतां वज्रो वा ऽआपस्तद्वज्रमेवैतदभिगुप्त्या

---

(१) शु० सं० अ० १ क० २८ । (२) शु० सं० अ० १ क० २८ । (३) शु० सं० अ० १ क० २८ । (४) शु० सं० अ० १ क० २८ । (५) शु० सं० अ० १ क० २८ ।

ऽआसादयति स वा ऽउपरुर्ष्युपरुर्ष्येव प्रोक्षणीषु धार्य्यमाणास्वथ स्फ्यमुद्यच्छत्यथ यन्निहित ऽएव स्फ्ये प्रोक्षणीरासादयेद्वज्रौ ह समृच्छेयातां तथो ह वज्रौ न समृच्छेते तस्मादुपरुर्ष्युपरुर्ष्येव प्रोक्षणीषु धार्य्यमाणास्वथ स्फ्यमुद्यच्छति ॥ २० ॥ अथैतां वाचं वदति । 'प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीꣳ सन्नह्याज्येनोदेही'ति सम्प्रैष ऽएवैष स यदि कामयेत ब्रूयादेतद्यद्यु कामयेताऽपि नाद्रियेत स्वयमु ह्येवैतद्वेदेदमतः कर्म्म कर्त्तव्यमिति ॥ २१ ॥ अथोदञ्चꣳ स्फ्यं प्रहरति । अमुष्मै त्वा वज्रं प्रहरामीति यद्यभिचरेद्वज्रो वै स्फ्यस्तृणुते हैवैनेन ॥ २२ ॥ अथ पाणी ऽअवनेनिक्ते । यद्व्यस्यै क्रूरमभूत्तद्व्यस्या ऽएतद्दहार्षीत्तस्मात्पाणी ऽअवनेनिक्ते ॥ २३ ॥ स ये ह्याग्र ऽईजिरे । ते ह स्माऽवमर्शं यजन्ते ते पापीयाꣳस ऽआसुरथ ये नेजिरे ते श्रेयाꣳस ऽआसुस्ततोऽश्रद्धा मनुष्यान्विवेद ये यजन्ते पापीयाꣳसस्ते भवन्ति य ऽउ न यजन्ते श्रेयाꣳसस्ते भवन्तीति तत ऽइतो देवान्हविर्न्न जगामेतः प्रदानाद्धि देवा ऽउपजीवन्ति ॥ २४ ॥ ते ह देवा ऊचुः । बृहस्पतिमाङ्गिरसमश्रद्धा वै मनुष्यानविदत्तेभ्यो विधेहि यज्ञमिति स हेत्त्योवाच बृहस्पतिराङ्गिरसः कथा न यजध्व ऽइति ते होचुः किङ्काम्या यजेमहि ये यजन्ते पापीयाꣳसस्ते भवन्ति य ऽउ न यजन्ते श्रेयाꣳसस्ते भवन्तीति ॥ २५ ॥ स होवाच । बृहस्पतिराङ्गिरसो यद्वै शुश्रुम देवानां परिपूतं

(१) ऋ० सं० परि० ।

तदेष यज्ञो भवति यच्छृतानि हवीᳮषि क्लृप्ता वेदिस्तेनावमर्शमचारिष्ट तस्मात्पापीयाᳬंसोऽभूत तेनाऽनवमर्शं यजद्ध्वं तथा श्रेयाᳬंसो भविष्यथेत्त्या क्रियत ऽइत्त्या बर्हिषस्तरणाद्धिति बर्हिषा ह वै खल्वेषा शाम्म्यति स यदि पुरा बर्हिषस्तरणात् किञ्चिदापद्येत बर्हिरेव तत्स्तृणन्नपास्येदथ यदा बर्हिस्तृणन्त्यपि पदाभितिष्ठन्ति स यो हैवं विद्वाननवमर्शं यजते श्रेयान्हैव भवति तस्मादनवमर्शमेव यजेत ॥ २६ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



स वै स्रुचः सम्मार्ष्टि । तद्यत्स्रुचः सम्मार्ष्टि यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्माद्यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति ॥ १ ॥ अथ पात्राणि निर्णेनेनिजति । तैर्न्निर्णिज्ज्य परिवेविषत्त्येवं वा ऽएष देवानां यज्ञो भवति यच्छृतानि हवीᳮषि क्लृप्ता वेदिस्तेषामेतान्न्येव पात्राणि यत्स्रुचः ॥ २ ॥ स यत्सम्मार्ष्टि । निर्णेनेक्त्येवैना ऽएतन्निर्णिक्ताभिः प्रचराणीति तद्वै द्वयेनैव देवेभ्यो निर्णेनिजत्त्येकेनमनुष्येभ्योऽद्भिश्चब्रह्मणा च देवेभ्य ऽआपो हि कुशा ब्रह्म यजुरेकेनैव मनुष्येभ्योऽद्भिरेवैवम्वेतन्नाना भवति ॥ ३ ॥ अथ स्रुवमादत्ते । तं प्रतपति 'प्रत्त्युष्टᳮ रक्षः प्रत्त्युष्टा ऽअरातयो निष्टप्तᳮ रक्षो निष्टप्ता ऽअरातय' ऽइति वा ॥ ४ ॥ देवा ह वै यज्ञं तन्न्वानाः । तेऽसुररक्षसेभ्य

(१) शु० सं० अ० १ क० २९ ।

ऽआसङ्गाद्बिभयाञ्चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाᳬंस्यतोऽपहन्ति ॥ ५ ॥ स वा ऽइत्त्यग्रैरन्तरतः सम्मार्ष्टि । 'अनिशितोऽसि सपत्नक्षिदि'ति यथाऽनुपरतो यजमानस्य सपत्नान्क्षिणुयादेवमेतदाह 'वाजिनं[2] त्वा वाजेध्यायै सम्मार्ज्मी'ति यज्ञियं त्वा यज्ञाय सम्मार्ज्मीत्त्येवैतदाहैतेनैव सर्वाः स्रुचः सम्मार्ष्टि 'वाजिनीं[3] त्वे'ति स्रुचं तूष्णीं प्राशित्रहरणं* ॥ ६ ॥ स वा ऽइत्त्यग्रैरन्तरतः सम्मार्ष्टीति । मूलैर्बाह्यत ऽइतीव वा ऽअयं प्राण ऽइतीवोदानः प्राणोदानावेवैतद्दधाति तस्मादितीवेमानि लोमानीतीवेमानि ॥ ७ ॥ स वै सम्मृज्ज्य सम्मृज्ज्य प्रतप्प्य प्रतप्प्य प्रयच्छति । यथाऽवमर्शं निर्णिज्ज्याऽनवमर्शमुत्तमं परिक्षालयेदेवं तत्तस्मात्प्रतप्प्य प्रतप्प्य प्रयच्छति ॥ ८ ॥ स वै स्रुवमेवाग्रे सम्मार्ष्टि । अथेतराः स्रुचो योषा वै स्रुग्वृषा स्रुवस्तस्माद्यद्यपि बह्व्य ऽइव स्त्रियः सार्द्धं यन्ति य ऽएव तास्वपि कुमारक ऽइव पुमान् भवति स ऽएव तत्र प्रथम ऽएत्त्यनूच्च्यऽ इतरास्तस्मात्स्रुवमेवाऽग्रे सम्मार्ष्ट्यथेतराः स्रुचः ॥ ९ ॥ स वै तथैव सम्मृज्ज्यात् । यथाऽग्निं नाऽभिव्युक्षेद्यथा यस्मा ऽअशनमाहरिष्यन्त्स्यात्तं पात्रनिर्णेजनेनाऽभिव्युक्षेदेवं तत्तस्मादु तथैव सम्मृज्ज्याद्यथाऽग्निं नाऽभिव्युक्षेत् प्राङिवैवोत्क्रम्य ॥ १० ॥ तद्धैके । स्रुक्सम्मार्जनान्यग्नावभ्यादधति वेदस्याहाऽभूवन्त्स्रुच ऽएभिः सममार्जिषुरिदं वै किञ्चिद्यज्ञस्य नेदिदं बहिर्द्धा यज्ञाद्भव-

(१) शु० सं० अ० १ क० २९ । (२) शु० सं० अ० १ क० २९ ।
(३) शु० सं० अ० १ क० २९ ।
* 'ख' पुस्तके 'प्राशित्रहरणम्' इति ।

द्विति तदु तथा न कुर्य्याद्यथा यस्मा ऽअशनमाहरेत्तं पात्रनिर्णेजनं पाययेदेवं तत्तस्मादु परास्येदुवैतानि ॥ ११ ॥ अथ पत्नीᳬं सन्नह्यति । जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी प्राङ् मे यज्ञस्तायमानो यादिति युनक्त्येवैनामेतद्युक्ता मे यज्ञमन्वासाता ऽइति ॥ १२ ॥ योक्त्रेण सन्नह्यति । योक्त्रेण हि योग्यं युञ्जन्त्यस्ति वै पत्न्या ऽअमेध्यं यदवाचीनं नाभेरथैतद्राज्यमवेक्षिष्यमाणा भवति तदुवाऽस्या ऽएतद्योक्त्रेणाऽन्तर्द्दधात्यथ मेध्येनैवोत्तरार्द्धेनाऽऽज्यमवेक्षते तस्मात्पत्नीᳬं सन्नह्यति ॥ १३ ॥ स वा ऽअभिवासः सन्नह्यति । ओषधयो वै वासो वरुण्या रज्जुस्तदोषधीरेवैतदन्तर्द्दधाति तथो हैनामेषा वरुण्या रज्जुर्न्न हिनस्ति तस्मादभिवासः सन्नह्यति॥१४॥ स सन्नह्यति । 'अदित्यै[1] रास्नासी'तीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वाऽ एतस्य पत्नी भवति तदस्या ऽएतद्रास्नामेव करोति न रज्जुᳬं हिरो वै रास्ना तामेवाऽस्या ऽएतत्करोति ॥ १५ ॥ स वै न ग्रन्थिं कुर्य्यात् । वरुण्यो वै ग्रन्थिर्व्वरुणो ह पत्नीं गृह्णीयाद्यद् ग्रन्थिं कुर्य्यात्तस्मान्न ग्रन्थिं करोति ॥ १६ ॥ ऊर्द्ध्वमेवोद्गूहति । 'विष्णोर्व्वेष्पो[2]*ऽसी'ति सा वै न पश्चात्प्राची देवानां यज्ञमन्वासीतेयं वै पृथिव्यदितिः सेयं देवानां पत्नी सा पश्चात्प्राची देवानां यज्ञ-

(१) शु. सं. अ. १ क. ३०। (२) शु. सं. अ. १ क. ३०।

* 'विष्णोर्व्वेष्प' इत्यत्र 'विष्लृव्याप्तौ (जुहो० १३) इति धातोः 'पानीविषिभ्यः पः' (३१०) इत्यौणादिकसूत्रेण 'प' प्रत्यये वेष्प इति रूपं निष्पद्यते। अत्र वेष्य इति पाठकल्पनमौणादिकसूत्राज्ञानमूलकम्। पकारघटितपाठस्य आसेतुहिमाचलं संप्रदायसिद्धत्वादिति कातीयभाष्ये आचार्याः।

मन्वास्ते तद्धेमामभ्यारोहेत् सा पत्नी क्षिप्रेऽमुँल्लोकमियात्तथो ह पत्नी ज्ज्योग्जीवति तदस्या ऽएवैतन्निह्नुते तथो हैनामियं न हिनस्ति तस्मादु दक्षिणत ऽइवैवाऽन्वासीत ॥१७॥ अथाऽऽज्ज्यमवेक्षते। योषा वै पत्नी रेत ऽआज्ज्यं मिथुनमेवैतत्प्रजननं क्रियते तस्मादाज्ज्यमवेक्षते ॥ १८ ॥ साऽवेक्षते । 'अदब्धेन[1] त्वा चक्षुषाऽवपश्यामी'त्यनार्त्तेन त्वा चक्षुषाऽवपश्यामीत्त्येवैतदाह।'ऽग्नेर्जिह्वासीति'[2] यदा वा ऽएतदग्नौ जुह्वत्यथाऽग्नेर्जिह्वा ऽइवोत्तिष्ठन्ति तस्मादाहाऽग्नेर्जिह्वासीति 'सुहूर्देवेभ्यऽ'[3] इति साधुदेवेभ्य ऽइत्येवैतदाह 'धाम्ने धाम्ने मे भव यजुषेयजुष'[4] ऽइति सर्वस्मै मे यज्ञायैधीत्त्येवैतदाह ॥ १९ ॥ अथाऽऽज्ज्यमादाय प्राङुदाद्रवति । तदाऽऽहवनीयेऽधिश्रयति यस्याऽऽहवनीये हवीꣳषि श्रपयन्ति सर्वो मे यज्ञ ऽआहवनीये श्रृतोऽसदित्यथ यदमुत्राऽग्रेऽधिश्रयति पत्नीꣳ ह्यवकाशयिष्यन्भवति न हि तदवकल्पते यत् सामि प्रत्यग्घरेत्त्पत्नीमवकाशयिष्यामीत्यथ यत्पत्नीं नाऽवकाशयेदन्तरियाद्ध यज्ञात् पत्नीं तथो ह यज्ञात्त्पत्नीं नाऽन्तरेति तस्मादु सार्द्धमेव विलाप्प्य प्रागुदाहरत्त्यवकाश्य पत्नीं यस्यो पत्नी न भवत्यग्र ऽएव तस्याऽऽहवनीयेऽधिश्रयति तत्ततऽआदत्ते तदन्तर्वेद्यासादयति ॥ २० ॥ तदाहुः । नाऽन्तर्वेद्यासादयेदुतो वै देवानां पत्नीः संयाजयन्त्यवसभा ऽअह देवानां पत्नीः करोति परः पुꣳसो हाऽस्य पत्नी भवतीति

( १ ) शु. सं. अ. १ क. ३० । ( २ ) शु. सं. अ. १ क. ३० ।
( ३ ) शु. सं. अ. १ क. ३० । ( ४ ) शु. सं. अ. १ क. ३० ।

तदु होवाच याज्ञवल्क्यो यथाऽऽदिष्टं पत्न्या ऽअस्तु कस्तदाद्रियेत यत्परः पुछंसा वा पत्नी स्याद्यथा वा यज्ञो वेदिर्यज्ञ ऽआज्यं यज्ञायज्ञं निर्मिमा ऽइति तस्मादन्तर्वेद्येवाऽऽसादयेत् ॥ २१ ॥ प्रोक्षणीषु पवित्रे भवतः । ते तत ऽआदत्ते ताभ्यामाज्ज्यमुत्पुनात्त्येको वा ऽउत्पवनस्य बन्धुर्म्मेध्यमेवैतत्करोति ॥ २२ ॥ स ऽउत्पुनाति । 'सवितुस्त्वा[1] प्प्रसव ऽउत्पुनाम्म्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभि'रिति सोऽसावेव बन्धुः ॥ २३ ॥ अथाऽऽज्यलिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति 'सवितुर्वः[2] प्प्रसव ऽउत्पुनाम्म्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभि'रिति सोऽसावेवबन्धुः ॥ २४ ॥ तद्यदाज्ज्यालिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति तदप्सु पयो दधाति तदिदमप्सु पयो हितमिदछं हि यदा वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वाऽपः पीत्त्वा तत ऽएष रसः सम्भवति तस्मादु रसस्यो चैव सर्वत्वाय ॥ २५ ॥ अथाऽऽज्ज्यमवेक्षते। तद्धैके यजमानमवख्यापयन्ति तदु होवाच याज्ञवल्क्यः कथं नु न स्वयमध्वर्य्यवो भवन्ति कथछं स्वयं नान्वाहुर्य्यत्र भूयस्य ऽइवाऽऽशिषः क्रियन्ते कथन्न्वेषामत्रैव श्रद्धा भवतीति यां वै कां च यज्ञ ऽऋत्विजऽआशिषमाशासते यजमानस्यैव सा तस्मादध्वर्य्युरेवाऽवेक्षेत ॥ २६ ॥ सोऽवेक्षते । सत्त्यं वै चक्षुः सत्त्यछं हि वै चक्षुस्तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य ऽएव ब्रूयादहमदर्शमिति तस्मा ऽएव श्रद्दध्याम तत्सत्त्ये-

(१) शु. सं. अ. १ क. ३१। (२) शु. सं. अ. १ क. ३१।

नैवैतत्समर्द्धयति ॥ २७ ॥ सोऽवेक्षते । 'तेजोऽसि शुक्रमस्यमृतमसी'ति स ऽएष सत्य ऽएव मन्त्रस्तेजो ह्येतच्छुक्रꣳ ह्येतदमृतꣳ ह्येतत्तत्सत्येनैवैतत्समर्द्धयति ॥ २८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुतऽएष वै तायमानो यावानेव पुरुषस्तावान् विधीयते तस्मात्पुरुषो यज्ञः ॥ १ ॥ तस्येयमेव जुहूः । इयमुपभृदात्मैव ध्रुवा तद्वा ऽआत्मन ऽएवेमानि सर्वाण्यङ्गानि प्रभवन्ति तस्मादु ध्रुवाया ऽएव सर्वो यज्ञः प्रभवति ॥ २ ॥ प्राणऽएव स्रुवः । सोऽयं प्राणः सर्वाण्यङ्गान्यनु सञ्चरति तस्मादु स्रुवः सर्वा ऽअनु स्रुचः सञ्चरति ॥ ३ ॥ तस्याऽसावेव द्यौर्जुहूः । अथेदमन्तरिक्षमुपभृदियमेव ध्रुवा तद्वाऽअस्या ऽएवेमे सर्वे लोकाः प्रभवन्ति तस्मादु ध्रुवाया ऽएव सर्वो यज्ञः प्रभवति ॥ ४ ॥ अयमेव स्रुवो योऽयम्पवते । सोऽयमिमान्त्सर्वाँल्लोकाननुपवते तस्मादु स्रुवः सर्वा ऽअनु स्रुचः सञ्चरति ॥५॥ स ऽएष यज्ञस्तायमानः । देवेभ्यस्तायत ऽऋतुभ्यश्छन्दोभ्यो यद्धविस्तद्देवानां यत्सोमो राजा यत्पुरोडाशस्तत्तदादिश्य गृह्णात्यमुष्मै त्वा जुष्टं गृह्णामीत्येवमु हि तेषाम् ॥ ६ ॥ अथ यान्याज्यानि गृह्यन्ते । ऋतुभ्यश्चैव तानि छन्दोभ्यश्च गृह्यन्ते तत्तदुनादिश्याऽऽज्यस्यैव रूपेण गृह्णाति स वै चतुर्जुह्वां गृह्णात्यष्टौ-

( १ ) शु० सं० अ० १ क० ३१ ।

कृत्व ऽउपभृति ॥ ७ ॥ स यच्चतुर्ज्जुह्वां गृह्णाति । ऋतुभ्य स्तद् गृह्णाति प्रयाजेभ्यो हि तद् गृह्णात्यृतवो हि प्रयाजा-स्तत्तदुनादिश्याऽऽज्ज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्य्याद्यद्वसन्ताय त्वा ग्रीष्माय त्वेति गृह्णीयात्तस्मादुनादि-श्याऽऽज्ज्यस्यैव रूपेण गृह्णाति ॥८॥ अथ यदष्टौकृत्व ऽउप-भृति गृह्णाति । छन्दोभ्यस्तद् गृह्णात्यनुयाजेभ्यो हि तद् गृह्णाति छन्दाꣳसि ह्यनुयाजास्तत्तदुनादिश्याऽऽज्ज्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्य्याद्यद्गायत्र्यै त्वा त्रिष्टुभे त्वेति गृह्णीयात्तस्मादुनादिश्याऽऽज्ज्यस्यैव रूपेण गृह्णाति ॥९॥ अथ यच्चतुर्ध्रुवायां गृह्णाति । सर्वस्मै तद्यज्ञाय गृह्णाति तत्तदुनादिश्याऽऽज्ज्यस्यैव रूपेण गृह्णाति कस्मा ऽउ ह्यादिशे-द्यतः सर्वाभ्य ऽएव देवताभ्योऽवद्यति तस्मादुनादिश्याऽऽज्ज्य-स्यैव रूपेण गृह्णाति ॥ १० ॥ यजमान ऽएव जुहूमनु । यो ऽस्मा ऽअरातीयति स ऽउपभृतमन्वत्तेव जुहूमन्वाद्य ऽउप-भृतमन्वत्तैव जुहूराद्य ऽउपभृत्स वै चतुर्ज्जुह्वां गृह्णात्य-ष्टौकृत्व ऽउपभृति ॥ ११ ॥ स यच्चतुर्ज्जुह्वां गृह्णाति । अत्तारमेवैतत्परिमिततरं कनीयाꣳसं करोत्यथ यदष्टौकृत्व ऽउपभृति गृह्णात्याद्यमेवैतदपरिमिततरं भूयाꣳसं करोति तद्धि समृद्धं यत्रात्ता कनीयानाद्यो भूयान् ॥ १२ ॥ स वै चतुर्ज्जुह्वां गृह्णन् । भूय ऽआज्ज्यं गृह्णात्यष्टौकृत्व ऽउपभृति गृह्णन्कनीय ऽआज्ज्यं गृह्णाति ॥ १३ ॥ स यच्चतुर्ज्जुह्वां गृह्णन् । भूय ऽआज्ज्यं गृह्णात्यत्तारमेवैतत्परिमिततरं कनी-याꣳसं कुर्वंस्तस्मिन्वीर्य्यं बलं दधात्यथ यदष्टौकृत्व ऽउप-

भृति गृह्णन् कनीय ऽआज्यं गृह्णात्त्याद्यमेवैतदुपरिमिततरं भूयाꣳसं कुर्वंस्तमवीर्य्यमबलीयाꣳसं करोति तस्मादुत राजाऽपारां विशं प्रावसायाऽप्येकवेश्मनैव जिनाति त्वद्यथा त्वत्कामयते तथा सचत ऽएतेनो ह तद्वीर्य्येण यज्जुह्वां भूय ऽआज्यं गृह्णाति स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति यदुपभृति गृह्णाति जुह्वैव तज्जुहोति ॥ १४ ॥ तदाहुः । कस्मा ऽउ तर्ह्युपभृति गृह्णीयाद्यदुपभृता न जुहोतीति स यद्धोपभृता जुहुयात्पृथग्घैवेमाः प्रजाः स्युर्नैवाऽत्ता स्यान्नाद्यः स्यादथ यत्तज्जुह्वैव समानीय जुहोति तस्मादिमा विशः क्षत्रियाय बलिꣳ हरन्त्यथ यदुपभृति गृह्णाति तस्मादु क्षत्रियस्यैव वशे सति वैश्यं पशव ऽउपतिष्ठन्तेऽथ यत्त-जुह्वैव समानीय जुहोति तस्माद्यदोत क्षत्रियः कामयते-ऽथाह वैश्यमपि यत्ते परो निहितं तदाहरेति तं जिनाति त्वद्यथा त्वत्कामयते तथा सचत ऽएतेनो ह तद्वीर्य्येण ॥१५॥ तानि वा ऽएतानि । छन्दोभ्य ऽआज्ज्यानि गृह्णन्ते स यच्च-तुर्ज्जुह्वां गृह्णाति गायत्र्यै तद् गृह्णात्त्यथ यदष्टौकृत्व ऽउप-भृति गृह्णाति त्रिष्टुब्जगतीभ्यां तद् गृह्णात्यथ यच्चतु-र्ध्रुवायां गृह्णात्त्यनुष्टुभे तद् गृह्णाति वाग्वा ऽअनुष्टुब्वाचो वा ऽइदꣳ सर्वं प्रभवति तस्मादु ध्रुवाया ऽएव सर्वो यज्ञः प्रभवतीयं वा ऽअनुष्टुबस्यै वा ऽइदꣳ सर्वं प्रभवति तस्मादु ध्रुवाया ऽएव सर्वो यज्ञः प्रभवति ॥ १६ ॥ स गृह्णाति । 'धाम नामासि प्रियं देवानामि'त्त्येतद्वै देवानां

( १ ) शु. सं. अ. १ क. ३१ ।

प्रियतमं धाम यदाज्यं तस्मादाह धामनामाऽसि प्रियं देवानामित्य'नाधृष्टं देवयजनमसी'ति वज्रो ह्याज्यं तस्मादाहाऽनाधृष्टं देवयजनमसीति ॥ १७ ॥ स ऽएतेन यजुषा। सकृज्जुह्वां गृह्णाति त्रिस्तूष्णीमेतेनैव यजुषा सकृदु पभृति गृह्णाति सप्तकृत्वस्तूष्णीमेतेनैव यजुषा सकृद् ध्रुवायां गृह्णाति त्रिस्तूष्णीं तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञ ऽइति तदु नु सकृत्सकृदेवाऽत्रो ह्येव त्रिर्गृहीतः सम्पद्यते ॥ १८ ॥

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



प्रोक्षणीरध्वर्युरादत्ते । स ऽइध्ममेवाऽग्रे प्रोक्षति 'कृष्णोऽस्याऽऽखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामी'ति तन्मेध्यमेवैतदग्नये करोति ॥ १ ॥ अथ वेदिं प्रोक्षति । 'वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामी'ति* तन्मेध्यामेवैतद्बर्हिषे करोति ॥ २ ॥ अथाऽस्मै बर्हिः प्रयच्छति । तत्पुरस्ताद् ग्रन्थ्यासादयति तत्प्रोक्षति 'बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामी'ति तन्मेध्यमेवैतत्स्रुग्भ्यः करोति ॥३॥ अथ याः प्रोक्षण्यः परिशिष्यन्ते । ताभिरोषधीनां मूलान्युपनिनयत्यदित्यै व्युन्दनमसी'तीयं वै पृथिव्यदितिस्तदस्या ऽएवैतदोषधीनां मूलान्युपोनत्ति ता ऽइमा ऽआर्द्रमूला ऽओष-

*–'ग' पुस्तके 'मीति' पदं नोपलभ्यते ।

(१) शु० सं० अ० १ क० ३१ । (२) शु० सं० अ० २ क० १ । (३) शु० सं० अ० २ क० १ । (४) शु० सं० अ० २ क० १ । (५) शु० सं० अ० २ क० २ ।

६

धयस्तस्माद्यद्यपि शुष्काण्यग्राणि भवन्त्यार्द्राण्येव मूलानि भवन्ति ॥ ४ ॥ अथ विस्रꣳस्य ग्रन्थिम्। पुरस्तात्प्रस्तरं गृह्णाति 'विष्णोस्तुपोऽसी, ति यज्ञो वै विष्णुस्तस्येयमेव शिखा स्तुप ऽएतामेवाऽस्मिन्नेतद्दधाति पुरस्ताद् गृह्णाति पुरस्ताद्ध्ययꣳ स्तुपस्तस्मात्पुरस्ताद् गृह्णाति ॥ ५ ॥ अथ सन्नहनं विस्रꣳसयति। प्रक्लृप्तꣳ हैवाऽस्य स्त्री विजायत ऽइति तस्मात्सन्नहनं विस्रꣳसयति तद्दक्षिणायाꣳ श्रोणौ निदधाति नीविर्हैवाऽस्यैषा दक्षिणत ऽइव हीयं नीविस्तस्माद्दक्षिणायाꣳ श्रोणौ निदधाति तत्पुनरभिच्छादयत्यभिच्छन्नेव हीयं नीविस्तस्मात्पुनरभिच्छादयति ॥ ६ ॥ अथ बर्हि स्तृणाति। अयं वै स्तुपः प्रस्तरोऽथ यान्यवाञ्चि लोमानि तान्येवाऽस्य षदितरं बर्हिस्तान्येवाऽस्मिन्नेतद्दधाति तस्माद्बर्हि स्तृणाति ॥ ७ ॥ योषा वै वेदिः। तामेतद्देवाश्च परुर्यासते ये चेमे ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्तेष्वेवैनामेतत्परुर्यासीनेष्वनग्नां करोत्यनग्नताया ऽएव तस्माद्बर्हि स्तृणाति ॥ ८ ॥ यावती वै वेदिः। तावती पृथिव्योषधयो बर्हिस्तदस्यामेवैतत्पृथिव्यामोषधीर्दधाति ता ऽइमा ऽअस्यां पृथिव्यामोषधयः प्रतिष्ठितास्तस्माद्बर्हि स्तृणाति ॥९॥ तद्वै बहुलꣳ स्तृणीयादित्याहुः। यत्र वा ऽअस्यै बहुलतमा ऽओषधयस्तदस्या ऽउपजीवनीयतमं तस्माद्बहुलꣳ स्तृणीयादिति तद्वै तदाहर्तर्य्येवाऽधि त्रिवृत्स्तृणाति त्रिवृद्धि यज्ञोऽथो ऽअपि प्रबर्हꣳ स्तृणीयात्स्तृणन्ति बर्हिरानुष-

( १ ) शु० सं० अ० २ क० २।

गिति ह्यृ*क्रुषिणाऽभ्यनूक्तमधरमूलꣳ स्तृणात्त्यधरमूला ऽइव् हीमा ऽअस्यां पृथिव्व्यामोषधयः प्प्रतिष्ठितास्तस्मादधर-मूलꣳ स्तृणाति ॥ १० ॥ स स्तृणाति । ‘ऊर्ण्णम्म्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्य’ ऽइति साध्वीं देवेभ्य ऽइत्त्ये-वैतदाह यदाहोर्ण्णम्म्रदसं त्वेति स्वासस्थां देवेभ्य ऽइति स्वासदां देवेभ्य ऽइत्त्येवैतदाह ॥ ११ ॥ अथाऽग्निं कल्पयति । शिरो वै यज्ञस्याऽऽहवनीयः †पूर्वोऽर्द्धो वै शिरः पूर्वा ऽर्द्धमे-वैतद्यज्ञस्य कल्पयत्त्युपर्य्युपरि प्रस्तरं धारयन्कल्पयत्त्ययं वै स्तुपः प्रस्तर ऽएतमेवाऽस्मिन्नेतत्प्रति दधाति तस्मादु-पर्य्युपरि प्रस्तरं धारयन्कल्पयति ॥ १२ ॥ अथ परिधीन् परिदधाति । तद्यत्परिधीन्परिदधाति यत्र वै देवा ऽअग्रे ऽग्निꣳ होत्राय प्रावृणत तद्धोवाच न वा ऽअहमिदमुत्सहे यद्वो होता स्यां यद्वो हव्व्यं वहेयं त्रीन्पूर्वान्प्रावृढ्वं ते प्राऽध-न्विषुस्तान्नु मेऽवकल्पयताऽथ वा ऽअहमेतदुत्साक्ष्ये यद्वो होता स्यां यद्वो हव्व्यं वहेयमिति तथेति तानस्मा ऽएता-नवाऽकल्पयंस्त ऽएते परिधयः ॥ १३ ॥ स होवाच । वज्रो वै तान्वषट्कारः प्प्रावृणग्वज्राद्वै वषट्काराद्बिभेमि यन्मा वज्रो वषट्कारो न प्रवृञ्ज्यादेतैरेव मा परिधत्त तथा मा वज्रो वषट्कारो न प्रवक्ष्र्यतीति तथेति तमेतैः पर्य्यदधुस्तं न वज्रो वषट्कारः प्रावृणक्तद्ध्रम्मैवैतदग्नये नह्यति यदेतैः परिदधाति ॥ १४ ॥ त ऽउ हैत ऽऊचुः ।

(१) शु० सं० अ० २ क० २ ।

*–‘क’ पुस्तके ‘स्तृषि’ इति । ‘ख’ पुस्तके ‘ह्यृषि’ इति । ‘ग’ पुस्तके ‘त्विषि’ इति च पाठो लभ्यते । † ‘ग’ पुस्तके पूर्वाऽर्ध इति ।

इदमु चेदस्मान्त्यजे युङ्क्थास्त्वेवाऽस्माकमपि यज्ञे भाग ऽइति ॥ १५ ॥ तथेति देवा ऽअब्रुवन् । यद्वहिष्परिधि स्कन्त्स्यति तद्युष्मासु हुतमथ यद्व ऽउपर्य्युपरि होष्यन्ति *तद्वोऽविष्यत्यथ यदग्नौ होष्यन्ति तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यदेनानुपर्य्युपरि जुह्वति तदेनानवत्यथ यद्वहिष्परिधि स्कन्दति तदेतेषु हुतं तस्मादु ह नाग ऽइव स्कन्नᳬ स्यादिमां वै ते †पृथिवीं प्राविशन्न्यद्वा ऽइदं किञ्च स्कन्दत्त्यस्यामेव तत्सर्वं प्रतितिष्ठति ॥ १६ ॥ स स्कन्नमभिमृशति । [1]'भुवपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहे'त्येतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानां पतिस्तद्यथा वषट्कृतᳬ हुतमेवमस्यैतेष्वग्निषु भवति ॥ १७ ॥ तद्धैके । इध्मस्यैवैतान्परिधीन् परिदधति तदु तथा न कुर्य्यादनवक्लृप्ता ह तस्यैते भवन्ति यानिध्मस्य परिदधात्त्यभ्याधानाय ह्येवेध्मᳬ क्रियते तस्यो हैवैतेऽवक्लृप्ता भवन्ति यस्यैतानन्यानाहरन्ति परिधय ऽइति तस्मादन्यानेवाऽऽहरेयुᳬ ॥ १८ ॥ ते वै पालाशाᳬ स्युᳬ । ब्रह्म वै पलाशो ब्रह्माऽग्निरग्नयो हि तस्मात्पालाशाᳬ स्युᳬ ॥ १९ ॥ यदि पालाशान्न विन्देत् । अथो ऽअपि वैकङ्कताᳬ स्युर्य्यदि वैकङ्कतान्न विन्देदथो ऽअपि कार्ष्मर्य्यमयाᳬ स्युर्य्यदि कार्ष्मर्य्यमयान्न विन्देदथो

*—इत उत्तरं 'तद्वो' इत्यतः प्राक् पाठः 'ग' पुस्तके नास्ति ।

(१) शु० सं० अ० २ क० २ ।

†—नास्त्येतत् पाठो 'ग' पुस्तके ।

ऽअपि बैल्वाः स्युरथो खादिरा ऽअथो ऽऔदुम्बरा ऽएते हि व्वृक्षा यज्ञियास्तस्मादेतेषां व्वृक्षाणां भवन्ति ॥ २० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

कण्डिकासङ्ख्या ॥ १२२ ॥



ते वा ऽआर्द्राः स्युः । एतद्ध्येषां जीवमेतेन सतेजस ऽएतेन व्वीर्य्यवन्तस्तस्मादार्द्राः स्युः ॥ १ ॥ स मध्यममेवाऽग्रे परिधिं परिदधाति । 'गन्धर्व्वस्त्वा व्विश्वावसुः परिदधातु व्विश्वस्याऽरिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ऽईडित' ऽइति ॥ २ ॥ अथ दक्षिणं परिदधाति । 'इन्द्रस्य बाहुरसि दक्षिणो व्विश्वस्याऽरिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ऽईडित' ऽइति ॥ ३ ॥ अथोत्तरं परिदधाति । 'मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्म्मणा व्विश्वस्याऽरिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ऽईडित' ऽइत्त्यग्नयो हि तस्मादाहाऽग्निरिड ऽईडित ऽइति ॥ ४ ॥ अथ समिधमभ्यादधाति । स मध्यममेवाऽग्रे परिधिमुपस्पृशति तेनैतानग्रे समिन्धेऽथाग्नावभ्यादधाति तेनो ऽअग्निं प्रत्यक्षः समिन्धे ॥ ५ ॥ सोऽभ्यादधाति । 'वीतिहोत्रं त्वा कवे द्युमन्तः समिधीमहि । अग्ने बृहन्तमध्वर' ऽइत्त्येतया

(१) शु० सं० अ० २ क० ३। (२) शु० सं० अ० २ क० ३। (३) शु० सं० अ० २ क० ३। (४) शु० सं० अ० २ क० ४।

गायत्र्या गायत्रीमेवैतत्समिन्धे सा गायत्री समिद्धाऽन्यानि छन्दाᳬंसि समिन्धे छन्दाᳬंसि समिद्धानि देवेभ्यो यज्ञं वहन्ति ॥ ६ ॥ अथ यां द्वितीयाᳬं समिधमभ्यादधाति । वसन्तमेव तया समिन्धे स वसन्तः समिद्धोऽन्यानृतून्त्समिन्ध ऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति सोऽभ्यादधाति 'समिदसी'ति समिद्धि वसन्तः ॥७॥ अथाऽभ्याधाय जपति । 'सूर्य्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्या' ऽइति गुप्त्यै वा ऽअभितः परिधयो भवन्त्यथैतत्सूर्य्यमेव पुरस्ताद् गोप्तारं करोति नेत्पुरस्तान्नाष्ट्रा रक्षाᳬंस्यभ्यवचरानिति सूर्य्यो हि नाष्ट्राणाᳬं रक्षसामपहन्ता ॥ ८ ॥ अथ यामेवाऽमूं तृतीयाᳬं समिधमभ्यादधाति । अनुयाजेषु ब्राह्मणमेव तया समिन्धे स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं वहति ॥ ९ ॥ अथ स्तीर्णां वेदिमुपावर्त्तते । स द्वे तृणे ऽआदाय तिरश्ची निदधाति 'सवितुर्बाहू स्थ' ऽइत्ययं वै स्तुपः प्रस्तरोऽथाऽस्यैते भ्रुवावेव तिरश्ची निदधाति तस्मादिमे तिरश्च्यौ भ्रुवौ क्षत्रं वै प्रस्तरो विश ऽइतरं बर्हिः क्षत्रस्य चैव विशश्च विधृत्यै तस्मात्तिरश्ची निदधाति तस्माद्वेव विधृती नाम ॥१०॥ तत्प्रस्तरᳬं स्तृणाति । 'ऊर्णम्म्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य' ऽइति साधु देवेभ्य ऽइत्येवैतदाह यदाहोर्णम्म्रदसं त्वेति स्वासस्थं देवेभ्य ऽइति स्वासदं देवेभ्य ऽइत्ये-

(१) शु० सं० अ० २ क० ५। (२) शु० सं० अ० २ क० ५। (३) शु० सं० अ० २ क० ५। (४) शु० सं० अ० २ क० ५।

वैतदाह ॥ ११ ॥ तमभिनिदधाति । 'आ[1] त्त्वा वसवो रुद्रा ऽआदित्त्याः सदन्त्वि'त्त्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्त्या ऽएते त्त्वा सीदन्त्वित्त्येवैतदाहाऽभिनिहित ऽएव सव्व्येन पाणिना भवति ॥ १२ ॥ अथ दक्षिणेन जुहूं प्रतिगृह्णाति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहित ऽएव सव्व्येन पाणिना भवति ॥ १३ ॥ अथ जुहूं प्रति गृह्णाति । 'घृता[2]च्च्यसि जुहूर्न्नाम्ने'ति घृताची हि जुहूर्हि नाम्ना 'सेदं[3] प्रियेण धाम्ना प्प्रियꣳ सद ऽआसीदे'ति 'घृताच्च्यस्युप[4]भृन्नाम्ने'त्त्युपभृतं घृताची ह्युपभृद्धि नाम्ना 'सेदं[5] प्रियेण धाम्ना प्प्रियꣳ सद ऽआसीदे'ति 'घृताच्च्य[6]सि ध्रुवा नाम्ने'ति ध्रुवां घृताची हि ध्रुवा हि नाम्ना 'सेदं[7] प्रियेण धाम्ना प्प्रियꣳ सद ऽआसीदे'ति 'प्रियेर्ण धाम्ना प्प्रियꣳ सद ऽआसीदे'ति यदन्यद्धविः ॥ १४ ॥ स वा ऽउपरि जुहूꣳ सादयति। अध ऽइतराः स्रुचः क्षत्रं वै जुहूर्व्विश ऽइतराः स्रुचः क्षत्रमेवैतद्विश ऽउत्तरं करोति तस्मादुपर्य्यासीनं क्षत्त्रियमधस्तादिमाः प्प्रजा ऽउपासते तस्मादुपरि जुहूꣳ सादयत्त्यध ऽइतराः स्रुचः ॥ १५ ॥ सोऽभिमृशति । 'ध्रुवा[8] ऽअसदन्नि'ति ध्रुवा ह्यसद'न्नृतस्य[9] योना'विति यज्ञो वा ऽऋतस्य योनिर्य्यज्ञे ह्यसदं 'स्ता विष्णो पाहि[10] पाहि[11] यज्ञं

(१) शु० सं० अ० २ क० ५। (२) शु० सं० अ० २ क० ६। (३) शु० सं० अ० २ क० ६। (४) शु० सं० अ० २ क० ६। (५) शु० सं० अ० २ क० ६। (६) शु० सं० अ० २ क० ६। (७) शु० सं० अ० २ क० ६। (८) शु० सं० अ० २ क० ६। (९) शु० सं० अ० २ क० ६। (१०) शु० सं० अ० २ क० ६। (११) शु० सं० अ० २ क० ६।

पाहि यज्ञपतिमि’ति तद्यजमानमाह ‘पाहि मां यज्ञन्य’मिति तदुप्प्यात्मानं यज्ञान्नान्तरेति यज्ञो वै विष्णुस्तद्यज्ञायैवैतत्सर्वं परिददाति गुप्त्यै तस्मादाह ता विष्णो पाहीति ॥ १६ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

— ❀ —

इन्धे ह वा एतदध्वर्युः । इध्मेनाऽग्निं तस्मादिध्मो नाम समिन्धे सामिधेनीभिर्होता तस्मात्सामिधेन्यो नाम ॥ १ ॥ स ऽआह । अग्नये समिध्यमानायाऽनुब्रूहीत्यग्नये ह्येतत्समिध्यमानायाऽन्वाह ॥२॥ तदु हैक ऽआहुः । अग्नये समिध्यमानाय होतरनुब्रूहीति तदु तथा न ब्रूयादहोता वाऽ एष पुरा भवति यदैवैनं प्रवृणीतेऽथ होता तस्मादु ब्रूयादग्नये समिध्यमानायाऽनुब्रूहीत्येव ॥ ३ ॥ आग्नेयीरन्न्वाह । स्वयैवैनमेतद्देवतया समिन्धे गायत्रीरन्वाह गायत्रं वाऽ अग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसा समिन्धे वीर्यं गायत्री ब्रह्म गायत्री वीर्येणैवैनमेतत्समिन्धे ॥ ४ ॥ एकादशाऽन्वाह । एकादशाऽक्षरा वै त्रिष्टुब्ब्रह्म गायत्री क्षत्रं त्रिष्टुबेताभ्यामेवैनमेतदुभाभ्यां वीर्याभ्याᳫं समिन्धे तस्मादेकादशाऽन्न्वाह ॥ ५ ॥ स वै त्रिः प्रथमामन्न्वाह । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमामन्न्वाह त्रिरुत्तमाम् ॥ ६ ॥ ताः पञ्चदश सामिधेन्यः सम्पद्यन्ते । पञ्चदशो वै वज्रो वीर्यं वज्रो वीर्यमेवैतत्सामिधेनीरभि-

(१) शु० सं० अ० २ क० ६ ।

सम्पादयति तस्मादेतास्वनूच्यमानासु यं द्विष्यात्तमङ्गुष्ठाभ्याम्वबाधेतेदमहममुमवबाध ऽइति तदेनमेतेन व्वज्रेणाऽवबाधते ॥७॥ पञ्चदश वा ऽअर्द्धमासस्य रात्रयः। अर्द्धमासशो वै संवत्सरो भवन्नेति तद्रात्रीराप्नोति ॥ ८ ॥ पञ्चदशानामु वै गायत्रीणाम् । त्रीणि च शतानि षष्टिश्चाऽक्षराणि त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याऽहानि तदहान्याप्नोति तद्वेव संवत्सरमाप्नोति ॥ ९ ॥ सप्तदश सामिधेनीः । इष्ट्या ऽअनुब्रूयादुपाꣳशु तस्यै देवतायै यजति यस्याऽइष्टिं निर्व्वपति द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तव ऽएषऽएव प्रजापतिः सप्तदशः सर्वं वै प्रजापतिस्तत्सर्वेणैव तं काममनपराधꣳ राध्नोति यस्मै कामायेष्टिं निर्व्वपत्युपाꣳशु देवतां यजत्यनिरुक्तं वा ऽउपाꣳशु सर्वं वा ऽअनिरुक्तं तत्सर्वेणैव तं काममनपराधꣳ राध्नोति यस्मै कामायेष्टिं निर्व्वपत्येष ऽइष्टेरुपचारः ॥ १० ॥ एकविꣳशतिꣳ सामिधेनीः । अपि दर्शपूर्णमासयोरनुब्रूयादित्याहुर्द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विꣳशतिरेष ऽएवैकविꣳशो य ऽएष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मादेकविꣳशतिमनुब्रूयात् ॥११॥ ता हैता गतश्रेरेवाऽनुब्रूयात् । य ऽइच्छेन्न श्रेयान्त्स्यान्न पापीयानिति यादृशाय हैव स तेऽन्न्वाहुस्तादृङ्ङा हैव भवति पापीयान्वा यस्यैवं विदुष ऽएता ऽअन्न्वाहुः सो ऽएषा मीमाꣳसैव नेत्त्वेवैता ऽअनूच्यन्ते ॥ १२ ॥ त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात् । त्रयोवा ऽइमे लोका-

स्तदिमानेवैतल्लोकान्त्सन्तनोतीमाँल्लोकान्त्स्पृणुते त्रय ऽइमे पुरुषे प्प्राणा ऽएतमेवाऽस्मिन्नेतत्सन्ततमव्व्यवच्छिन्नं दधात्त्येतदनुवचनम् ॥ १३ ॥ स यावदस्य व्वशः स्यात् । एवमेवाऽनुविवक्षेत्तस्यैतस्य परिचक्षोत सामम्य-वाङ्याद्नवानन्ननुविवक्षंस्तत्कर्म्म व्विवृह्येत सा परिचक्षा ॥ १४ ॥ स यद्येतन्नोदाशङ्केसेत । अप्प्येकैकामेवाऽनवान-न्ननुब्रूयात्तद्वैकैकयैवेमाँल्लोकान्त्सन्तनोत्त्येकैकयेमाँल्लोकान्त्स्पृणु-तेऽथ यत्प्राणं दधाति गायत्री वै प्प्राणः स यत्कृ-त्स्नां गायत्रीमन्वाह तत्कृत्स्नं प्राणं दधाति तस्माद्वैकैका-मेवाऽनवानन्ननुब्रूयात् ॥ १५ ॥ ता वै सन्तता ऽअव्व्यव-च्छिन्ना ऽअन्वाह । संवत्सरस्यैवैतदहोरात्राणि सन्तनोति तानीमानि संवत्सरस्याऽहोरात्राणि सन्ततान्यव्व्यवच्छि-न्नानि परिप्लवन्ते द्विषत ऽउ चैवैतद् भ्रातृव्व्याय नोपस्थानं करोत्त्युपस्थानः ह कुर्य्याद्यदसन्तता ऽअनुब्रूयात्तस्माद्वै सन्त-ता ऽअव्व्यवच्छिन्ना ऽअन्न्वाह ॥ १६ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः समाप्तः ॥ ३ ॥



हिङ्कृत्याऽन्वाह । नाऽसामा यज्ञोऽस्तीति वा ऽआहुर्न्न-वा ऽअहिङ्कृत्य साम गीयते स यद्धिङ्करोति तद्धिङ्कारस्य रूपं क्रियते प्रणवेनैव साम्नो रूपमुपगच्छत्योꣳम् ओꣳ-मित्त्येतेनो हास्यैष सर्व्व ऽएव ससामा यज्ञो भवति ॥ १ ॥ यद्वेव हिङ्करोति । प्राणो वै हिङ्कारः प्राणो हि वै हिङ्कार-

स्तस्मादपिगृह्य नासिके न हिङ्कर्त्तुᳩं शक्नोति वाचा वाऽऋचमन्वाह वाक् च वै प्राणश्च मिथुनं तदेतत्पुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनां तस्माद्वै हिङ्कृत्त्याऽन्वाह ॥ २ ॥ स वा ऽउपाᳩंशु हिङ्करोति। अथ यदुच्चैर्हिङ्कुर्य्याद्न्यतरदेव कुर्य्याद्वाचमेव तस्मादुपाᳩंशु हिङ्करोति ॥ ३ ॥ स वा ऽएति च प्प्रेति चाऽन्वाह। गायत्रीमेवैतदर्व्वाचीं च पराचीं च युनक्ति पराच्च्यह देवेभ्यो यज्ञं वहत्त्यर्व्वाची मनुष्यानवति तस्माद्वा ऽएति च प्प्रेति चाऽन्वाह ॥ ४ ॥ यद्वेवेति च प्प्रेति चाऽन्न्वाह। प्प्रेति वै प्राण ऽएत्त्युदानᳩ प्प्राणोदानावेवैतद्दधाति तस्माद्वा ऽएति च प्प्रेति चाऽन्न्वाह ॥ ५ ॥ यद्वेवेति च प्प्रेति चाऽन्वाह। प्प्रेति वै रेतᳩ सिच्च्यत ऽएति प्प्रजायते प्प्रेति पशवो वितिष्ठन्त ऽएति समावर्त्तन्ते सर्व्वं वा ऽइदमेति च प्प्रेति च तस्माद्वा ऽएति च प्प्रेति चाऽन्न्वाह ॥ ६ ॥ सोऽन्न्वाह। प्प्रवो व्वाजा ऽअभिद्यव ऽइति तन्नु प्प्रेति भवत्त्यग्न ऽआयाहि वीतय ऽइति तद्वेति भवति ॥ ७ ॥ तदु हैक ऽआहुᳩ। उभयं वाऽ एतत्प्रेति सम्पद्यत ऽइति तदु तदाऽतिविज्ञान्न्यमिव प्प्रवो व्वाजा ऽअभिद्यव ऽइति तन्नु प्रेत्त्यग्न ऽआयाहि वीतय ऽइति तद्वेति ॥ ८ ॥ सोऽन्न्वाह। '[1]प्रवो व्वाजा अभिद्यव' ऽइति तन्नु प्प्रेति भवति व्वाजा ऽइत्त्यन्नं वै व्वाजा ऽअन्नमेवैतदभ्यनूक्तमभिद्यव ऽइत्त्यर्द्धमासा वा ऽअभिद्यवोऽर्द्धमासानेवैतदभ्यनूक्तᳩ '[2]हविष्मन्त' ऽइति

(१) 'प्रवो वाजा' इत्येकादश सामिधेनीमन्त्राः, (का० हौ० प० ११३) उपलभ्यन्ते, (ऋ० सं० अष्ट० ३ अ० १ व० २८)। (२) ऋ० सं० अष्ट० ३ अ० १ व० २८।

पशवो वै हविष्मन्तः पशूनेवैतदभ्यनूक्तम् ॥ ९ ॥ 'घृताच्चये'ति । विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार तस्य गोतमो राहूगण ऋषिः पुरोहित आस तस्मै ह स्माऽऽमन्त्र्यमाणो न प्रतिशृणोति नेन्मेऽग्निर्वैश्वानरो मुखान्निष्पद्याता इति ॥१०॥ तमृग्भिर्ह्वयितुं दध्रे । 'वीतिहोत्रं त्वा कवे द्युमन्तः समिधीमहि । अग्ने बृहन्तमध्वरे' विदेघेति ॥ ११ ॥ स न प्रतिशुश्राव । 'उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयो' विदेघा३ इति ॥ १२ ॥ स ह नैव प्रतिशुश्राव । 'तं त्वा घृतस्नवीमह' इत्येवाऽभिव्याहरदथाऽस्य घृतकीर्त्तावेवाऽग्निर्वैश्वानरो मुखादुज्जज्वाल तन्न शशाक धारयितुं सोऽस्य मुखान्निष्पेदे स इमां पृथिवीं प्रापादः ॥ १३ ॥ तर्हि विदेघो माथव आस । सरस्वत्यां स तत एव प्राङ् दहन्नभीयायेमां पृथिवीं तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद् दहन्तमन्वीयतुः स इमाः सर्वा नदीरतिददाह सदानीरेत्युत्तराद् गिरेर्निर्द्धावति तां हैव नाऽतिददाह तां ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाऽग्निना वैश्वानरेणेति ॥ १४ ॥ तत एतर्हि । प्राचीनं बहवो ब्राह्मणास्तद्धाऽक्षेत्रतरमिवाऽऽस स्रावितरमिवाऽस्वदितमग्निना वैश्वानरेणेति ॥ १५ ॥ तदु हैतर्हि । क्षेत्रतरमिव ब्राह्मणा उ हि नूनमेनद्यज्ञैरसिष्वदन्त्साऽपि जघन्ये नैदाघे समिवैव कोपयति तावच्छीताऽनति-

(१) ऋ० सं० अष्ट० ३ अ० १ व० २८ । (२) ऋ० सं० अष्ट० ४ व० १९ । (३) ऋ० सं० अष्ट० ६ अ० ३ व० ३९ । (४) ऋ० सं० अष्ट० ४ अ० ४ अ० व० १९ ।

दग्धा ह्यग्निना वैश्वानरेण ॥ १६ ॥ स होवाच । विदेघो माथवः क्वाऽहं भवानीत्त्यत ऽएव ते प्राचीनं भुवनमिति होवाच सैषाऽप्येतर्हि कोसलविदेहानां मर्य्यादा ते हि माथवाः ॥ १७ ॥ अथ होवाच । गोतमो राहूगणः कथं नु म ऽआमन्त्र्यमाणो न प्रत्त्यश्रौषीरिति स होवाचाऽग्निर्म्मे वैश्वानरो मुखेऽभूत्स नेन्मे मुखान्निष्पद्यातै तस्मात्ते न प्रत्त्यश्रौषमिति ॥ १८ ॥ तदु कथमभूदिति । यत्रैव त्त्वं घृतस्नवीमह ऽइत्त्यभिव्व्याहार्षीस्तदेव मे घृतकीर्त्तावग्निर्वैश्वानरो मुखादुदज्वालीत्तं नाशकं धारयितुः स मे मुखान्निरपादीति ॥ १९ ॥ स यत्सामिधेनीषु घृतवत् । सामिधेनमेव तत्समेवैनं तेनेन्धे व्वीर्य्यमेवाऽस्मिन्दधाति ॥२०॥ तदु घृताच्च्येति । 'देवान्[1] जिगाति सुम्नयुरि'ति यजमानो वै सुम्नयुः स हि देवान् जिगीषति स हि देवान् जिगाᳬसति तस्मादाह देवान् जिगाति सुम्नयुरिति सैषाऽऽग्नेयी सत्त्यनिरुक्ता सर्व्वं वा ऽअनिरुक्तᳬ सर्व्वेणैवैतत्प्रतिपद्यते ॥२१॥ 'अग्ने[2] ऽआयाहि वीतय' ऽइति । तद्वेति भवति व्वीतय ऽइति समन्तिकमिव ह वा ऽइमेऽग्रे लोका ऽआसुरित्त्युन्मृश्या हैव द्यौरास ॥ २२ ॥ ते देवा ऽअकामयन्त । कथं नु न ऽइमे लोका व्वितराᳬ स्युः कथं न ऽइदं व्वरीय ऽइव स्यादिति तानेतैरेव त्रिभिरक्षरैर्व्व्यनयन् वीतय ऽइति त ऽइमे व्विदूरं लोकास्ततो देवेभ्यो व्वरीयोऽभवद्वरीयो ह वा ऽअस्मै भवति यस्यैवं

(१) ऋ० सं० अष्ट० ३ अ० १ व० २८। (२) ऋ० सं० अष्ट० ४ अ० ५ व० २२।

विदुष ऽएतामन्वाहुर्वीतय ऽइति ॥ २३ ॥ 'गृणानो हव्य दातय'ऽइति । यजमानो वै हव्यदातिर्गृणानो यजमानायेत्येवैतदाह 'निहोता सत्सि बर्हिषी'त्यग्निर्वै होताऽयं लोको बर्हिरस्मिन्नेवैतल्लोकेऽग्निं दधाति सोऽयमस्मिँल्लोकेऽग्निर्हितः सैषेममेव लोकमभ्यनूक्तेममेवैतया लोकं जयति यस्यैवं विदुष ऽएतामन्वाहुः ॥२४॥ 'तं त्वा समिद्भिरङ्गिर' ऽइति । समिद्भिर्ह्येतमङ्गिरस ऽऐन्धताऽङ्गिर ऽइत्यङ्गिरा ऽउ ह्यग्नि'र्घृतेन वर्द्धयामसी'ति तत्सामिधेनं पदꣳ समेवैनं तेनेन्धे वीर्य्यमेवाऽस्मिन्दधाति ॥ २५ ॥ 'बृहच्छोचा यविष्ठ्ये'ति । बृहदु ह्येष शोचति समिद्धो यविष्ठ्येति यविष्ठो ह्यग्निस्तस्मादाह यविष्ठ्येति सैषैतमेव लोकमभ्यनूक्ताऽन्तारिक्षलोकमेव तस्मादाग्नेयी सत्यनिरुक्ताऽनिरुक्तो ह्येष लोक ऽएतमेवैतया लोकं जयति यस्यैवं विदुष ऽएतामन्वाहुः ॥ २६ ॥ 'स नः पृथु श्रवाय्यमि'ति । अदो वै पृथु यस्मिन्देवा ऽएतच्छ्रवाय्यं यस्मिन्देवा ऽअच्छा देव विवाससी'त्यच्छ देव विवासस्येतन्नो गमयेत्येवैतदाह ॥ २७ ॥ 'बृहदग्ने सुवीर्य्यमि'ति । अदो वै बृहद्यस्मिन्देवा ऽएतत्सुवीर्य्यं यस्मिन्देवाः सैषैतमेव लोकमभ्यनूक्ता दिवमेवैतमेवैतया लोकं जयति यस्यैवं विदुष ऽएतामन्वाहुः ॥ २८ ॥ सोऽन्वाह । 'ईडेन्यो नमस्य'ऽइतीडेन्यो ह्येष नमस्यो ह्येष

(१) ऋ० सं० अष्ट० ४ अ० ५ व० २२। (२) ऋ० सं० अष्ट० ४ अ० ५ व० २२। (३) ऋ० सं० अष्ट० ४ अ० ५ व० २३। (४) ऋ० सं० अष्ट० ४ अ० ५ व० २३। (५) ऋ० सं० अष्ट० ४ अ० ५ व० २३। (६) ऋ० सं० अष्ट० ४ अ० ५ व० २३। (७) ऋ० सं० अष्ट० ४ अ० ५ व० २३। (८) ऋ० सं० अष्ट० ४ अ० ५ व० २३। (९) ऋ० सं० अष्ट० ३ अ० १ व० ३०।

'तिरस्[१]तमाᳫँसि दर्शत' ऽइति तिर ऽइव ह्येष तमाᳫँसि समिद्धो ददृशे 'सम[२]ग्निरिध्यते वृषे'ति सᳫँहीध्यते वृषा 'वृषो ऽअग्निः [२]समिध्यत ऽइति सᳫँहीध्यते ॥ २९ ॥ 'अश्वो न[३] देववाहन' ऽइति । अश्वो ह वा ऽएष भूत्वा देवेभ्यो यज्ञं वहति यद्वै नेत्स्पृच्च्योमिति तत्तस्मादाहाऽश्वो न देववाहन ऽइति ॥ ३० ॥ 'तᳫँ हविष्मन्त[४] ऽईडत' ऽइति । हविष्मन्तो ह्येतं मनुष्या ऽईडते तस्मादाह तᳫँ हविष्मन्त ऽईडत ऽइति ॥३१॥ 'वृषणं त्वा वयं[५] वृषन्न्वृषणः समिधीमही'ति । सᳫँ ह्येनमिन्धतेऽ'ग्ने दीद्यतं[६] बृहदि'ति दीदयेव ह्येष बृहत्समिद्धः ॥ ३२ ॥ तं वा ऽएतम् । वृषण्वन्तं त्रिचमन्न्वाहाऽग्नेय्यो वा ऽएताः सर्वाः सामिधेन्न्यो भवन्तीन्द्रो वै यज्ञस्य देवतेन्द्रो वृषैतेनो हाऽस्यैताः सेन्द्राः सामिधेन्न्यो भवन्ति तस्माद्वृषण्वन्तं त्रिचमन्न्वाह ॥३३॥ सोऽन्वाह । 'अग्निं दूतं वृणीमह[७]' ऽइति देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे तान्त्स्पर्द्धमानान्न्गायत्र्यन्तरा तस्थौ या वै सा गायत्र्यासीदियं वै सा पृथिवीयᳫँ हैव तदन्तरा तस्थौ त ऽउभय ऽएव विदाञ्चक्रुर्यतरान्न्वै न ऽइयमुपावर्त्स्यति ते भविष्यन्ति परेतरे भविष्यन्तीति तामुभयऽएवोपमन्त्रयाञ्चक्रिरेऽग्निरेव देवानां दूत ऽआस सहरक्षा ऽइत्यसुररक्षसमसुराणाᳫँ साऽग्निमेवाऽनुप्रेयाय तस्माद्-

(१) ऋ० सं० अष्ट० ३ अ० १ व० ३०। (२) ऋ० सं० अष्ट० ३ अ० १ व० ३०।
(३) ऋ० सं० अष्ट० ३ अ० १ व० ३०। (४) ऋ० सं० अष्ट० ३ अ० १ व० ३०।
(५) ऋ० सं० अष्ट० ३ अ० १ व० ३०। (६) ऋ० सं० अष्ट० ३ अ० १ व० ३०।
(७) ऋ० सं० अष्ट० १ अ० १ व० २२।

न्न्वाहाऽग्निं दूतं वृणीमह ऽइति स हि देवानां दूत ऽआसी-'द्धोतारं[1] विश्ववेदसमि'ति ॥ ३४ ॥ तदु हैकेऽन्न्वाहुः । होता यो विश्ववेदस ऽइति नेदरमित्त्यात्मानं ब्रवाणीति तदु तथा न ब्रूयात् मानुषः ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्न्मानुषं † नेद् व्यृद्धं यज्ञे करवाणीति तस्माद्य-थैवर्चाऽनूक्तमेवमेवाऽनुब्रूयाद्धोतारं विश्ववेदसमित्त्येवा'ऽस्य यज्ञस्य[2] सुक्रतुमि'त्त्येष हि यज्ञस्य सुक्रतुर्यदग्निस्तस्मा-दाहाऽस्य यज्ञस्य सुक्रतुमिति सेयं देवानुपाववर्त्त ततो देवा ऽअभवन्न्पराऽसुरा भवति ह वा ऽआत्मना पराऽस्य सपत्ना भवन्ति यस्यैवं विदुष ऽएतामन्न्वाहुः ॥ ३५ ॥ तां वा ऽअष्टमीमनुब्रूयात् । गायत्री वा ऽएषा निदानेनाऽष्टाक्षरा वै गायत्री तस्मादष्टमीमनुब्रूयात् ॥ ३६ ॥ तद्धैके । पुरस्ता-द्धाय्ये दधत्यन्नं धाय्ये मुखत ऽइदमन्नाद्यं दध्म ऽइति वदन्तस्तदु तथा न कुर्यादनवक्लृप्ता *सा ह तस्यैषा भवति यः पुरस्ताद्धाय्ये दधाति दशमी वा हि तर्ह्येकादशी वा सम्पद्यते तस्यो हैवैषाऽवक्लृप्ता भवति यस्यैतामष्टमी-मन्न्वाहुस्तस्मादुपरिष्टादेव धाय्ये दध्यात् ॥३७॥ 'समिद्-ध्यमानो[3] ऽअध्वर' ऽइति । अध्वरो वै यज्ञः समिद्ध्यमानो यज्ञ ऽइत्त्येवैतदाहा'ऽग्निः पावक[4] ऽईड्य' ऽइति पावको ह्येष ऽईड्यो ह्येष 'शोचिष्केशस्तमीमह[5]' ऽइति शोचन्तीव

† 'ग' पुस्तके नैतत्पदमिति ।

* 'सा' इत्येतत्पदं 'ख' 'सा ह' इति 'ग' पुस्तके च नोपलभ्यते ।

( १ ) ऋ० सं० अष्ट० १ । अ० १ व० २२ । ( २ ) ऋ० सं० अष्ट० १ अ१ व० २२ । ( ३ ) ऋ० सं० अष्ट० ३ अ० १ । व० २८ । ( ४ ) ऋ० सं० अष्ट० १ अ० १ व० २८ । ( ५ ) ऋ० सं० अष्ट० ३ अ० १ व० २८ ।

ह्येतस्य केशाः समिद्धस्य 'समिद्धो ऽअग्न ऽआहुते'[1]त्यतः प्प्राचीनꣳ सर्व्वमिध्ममभ्यादध्याद्यदन्न्यत्समिधोऽपवृङ्क्त ऽइव ह्येतद्धोता यद्वा ऽअन्न्यत्समिध ऽइध्मस्याऽतिरिच्यते-ऽतिरिक्तं तद्यद्वै यज्ञस्याऽतिरिक्तं द्विषन्तꣳ हाऽस्य तद् भ्रातृव्व्यमभ्यतिरिच्यते तस्मादतः प्प्राचीनꣳ सर्व्वमिध्ममभ्यादध्याद्यदन्न्यत्समिधः ॥ ३८ ॥ 'देवान्न्यक्षि स्वध्वरे'[2]ति । अध्वरो वै यज्ञो देवान्न्यक्षि सुयज्ञियेत्त्येवैतदाह 'त्वꣳ हि हव्व्यवाडसी'[3]त्त्येष हि हव्व्यवाड्यदग्निस्तस्मादाह त्वꣳ हि हव्व्यवाडसी'त्त्याजुहोता दुर्वस्यताऽग्निं प्रयत्त्यध्वरे । व्वृणीध्वꣳ हव्व्यवाहन'मिति सम्प्रेष्यत्त्येवैतया जुहुत च यजत च यस्मै कामाय समैन्धिढ्वं तत्कुरुतेत्त्येवैतदाहाऽग्निं प्रयत्त्यध्वर ऽइत्त्यध्वरो वै यज्ञोऽग्निं प्रयति यज्ञ ऽइत्त्येवै तदाह व्वृणीध्वꣳ हव्व्यवाहनमित्त्येष हि हव्व्यवाहनो यदग्निस्तस्मादाह व्वृणीध्वꣳ हव्व्यवाहनमिति ॥ ३९ ॥ तं वा ऽएतम् । अध्वरवन्तं त्रिचमन्न्वाह देवान्ह वै यज्ञेन यजमानान्त्सपत्ना ऽअसुरा दुधूर्षाञ्चक्रुस्ते दुधूर्षन्त ऽएव न शेकुर्द्धूर्व्वितुं ते पराबभूवुस्तस्माद्यज्ञोऽध्वरो नाम दुधूर्षन्न्ह वा ऽएनꣳ सपत्नः पराभवति यस्यैवं विदुषोऽध्वरवन्तं त्रिचमन्न्वाहुर्य्यावद्वेव सौम्म्येनाऽध्वरेणेष्ट्वा जयति तावज्जयति ॥ ४० ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) ऋ० सं० अष्ट० ४ अ० १ व० २२ । (२) ऋ० सं० अष्ट० ४ अ० १ व० २२ । (३) ऋ० सं० अष्ट० ४ अ० १ व० २२ । (४) ऋ० सं० अष्ट० ४ अ० १ व० २२ ।

एतद्ध वै देवा ऽअग्निं गरिष्ठे युञ्जन् । यद्धोतृत्त्व ऽइदं नो हव्व्यं वहेति तमेतद् गरिष्ठे युक्त्वोपामदन्न्वी-र्र्यवान्न्वै त्त्वमस्यलं वै त्त्वमेतस्मा ऽअसीति व्वीर्र्यं समा-दधतो यथेदमप्प्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति तमु-पमदन्ति व्वीर्र्यवान्न्वै त्त्वमस्यलं वै त्त्वमेतस्मा ऽअसीति व्वीर्र्यं समादधतः स यदुत ऽऊद्ध्र्वमन्न्वाहोपस्तौत्त्येवैनमेत-द्वीर्र्यमेवाऽस्मिन्दधाति ॥ १ ॥ अग्ने महाँ२॥ ऽअसि ब्राह्मण भारतेति । ब्रह्म ह्यग्निस्तस्मादाह ब्राह्मणेति भार-तेत्त्येष हि देवेभ्यो हव्व्यं भरति तस्माद्भरतोऽग्निरित्त्या-हुरेष ऽउ वा ऽइमाः प्प्रजाः प्प्राणो भूत्त्वा विभर्त्ति तस्मा-द्वेवाऽऽह भारतेति ॥२॥ अथाऽऽर्षेयं प्प्रव्वृणीते । ऋषिभ्यश्चै-वैनमेतद्देवेभ्यश्च निवेदयत्त्ययं महावीर्र्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रव्वृणीते ॥ ३ ॥ परस्तादर्व्वाक् प्रव्वृणीते । पर-स्ताद्ध्यर्व्वाच्च्यः प्प्रजाः प्प्रजायन्ते ज्ज्यायसस्पतय ऽउ चैवैतं निह्नुत ऽइदꣳ हि पितैवाऽग्रेऽथ पुत्रोऽथ पौत्रस्तस्मा-त्परस्तादर्व्वाक् प्प्रव्वृणीते ॥ ४ ॥ स ऽआर्षेयमुक्त्वाऽऽह । 'देवेद्धो[१] मन्न्विद्ध' ऽइति देवा ह्येतमग्र ऽऐन्धत तस्मादाह देवेद्ध ऽइति मन्न्विद्ध ऽइति मनुर्ह्येतमग्र ऽऐन्ध तस्मादाह मन्न्विद्ध ऽइति ॥५॥ ऋषिष्टुत ऽइति । ऋषयो ह्येतमग्रे स्तुवँस्तस्मादाहर्षिष्टुत ऽइति ॥६॥ व्विप्रानुमदित ऽइति । एते वै व्विप्रा यदृषय ऽएते ह्येतमन्न्वमदंस्तस्मादाह व्विप्रा-नुमदित ऽइति ॥ ७ ॥ कविशस्त ऽइति । एते वै कवयो

( १ ) यजुर्निवित्पदानि एकादश, तै० सं० ( २, ५, ९, २, १२, )

यदृषय ऽएते ह्येतमशꣳसंस्तस्मादाह कविशस्त ऽइति ॥८॥ ब्रह्मसꣳशित ऽइति । ब्रह्मसꣳशितो ह्येष घृताहवन ऽइति घृताहवनो ह्येषः ॥ ९ ॥ प्रणीर्यज्ञानाꣳ रथीरध्वराणामिति । एतेन वै सर्वान्यज्ञान्प्रणयन्ति ये च पाकयज्ञा ये चेतरे तस्मादाह प्रणीर्यज्ञानामिति ॥ १० ॥ रथीरध्वराणामिति । रथो ह वा ऽएष भूत्वा देवेभ्यो यज्ञं वहति तस्मादाह रथीरध्वराणामिति ॥ ११ ॥ अतूर्त्तो होता तूर्णिर्हव्यवाडिति । न ह्येतꣳ रक्षाꣳसि तरन्ति तस्मादाहाऽतूर्त्तो होतेति तूर्णिर्हव्यवाडिति सर्वꣳ ह्येष पाप्मानं तरति तस्मादाह तूर्णिर्हव्यवाडिति ॥ १२ ॥ आस्पात्रं जुहूर्देवानामिति । देवपात्रं वा ऽएष यदग्निस्तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति देवपात्रꣳ ह्येष प्राप्नोति ह वै तस्य पात्रं यस्य पात्रं प्रेप्स्यति य ऽएवमेतद्वेद ॥ १३ ॥ चमसो देवपान ऽइति । चमसेन ह वा ऽएतेन भूतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान ऽइति ॥ १४ ॥ अराँ२॥ ऽइवाऽग्ने नेमिर्देवांस्त्वं परिभूरसीति । यथाऽरान्नेमिः सर्वतः परिभूरेवं त्वं देवान्त्सर्वतः परिभूरसीत्येवैतदाह ॥१५॥ आवह देवान्यजमानायेति । तदस्मै यज्ञाय देवानावोढवा ऽआहाऽग्निमग्न ऽआवहेति तदाग्नेयायाऽऽज्यभागायाऽग्निमावोढवा ऽआह सोममावहेति तत्सौम्यायाऽऽज्यभागाय सोममावोढवा ऽआहाऽग्निमावहेति तद्य ऽएष ऽउभयत्राऽच्युत ऽआग्नेयः पुरोडाशो भवति तस्मा ऽअग्निमावोढवा

(१) आवहेत्याद्यावाहननिगदमन्त्रास्त्रयोदश, तै० सं० ( २, ५, ९, ७, ८ )

ऽआह ॥ १६ ॥ अथ यथादेवतम् । देवाँ ३ ॥ ऽआज्यपाँ ३ ॥ ऽआवहेति तत्प्रयाजाऽनुयाजानावोढवा ऽआह प्रयाजाऽनुयाजा वै देवा ऽआज्यपा ऽअग्निꣳ होत्रायाऽऽवहेति तदग्निꣳ होत्रायाऽऽवोढवा ऽआह स्वं महिमानमावहेति तत्स्वं महिमानमावोढवा ऽआह वाग्वा ऽअस्य स्वो महिमा तद्वाचमावोढवा ऽआहा च वह जातवेदः सुयजा च यजेति तद्या ऽएवैतद्देवता ऽआवोढवा ऽआह ता ऽएवैतदाहा चैना ठवहाऽनुष्ठ्या च यजेति यदाह सुयजा च यजेति ॥ १७ ॥ स वै तिष्ठन्नन्वाह । अन्वाह ह्येतदसौ ह्यनुवाक्या तदसावेवैतद् भूत्वाऽन्वाह तस्मात्तिष्ठन्नन्वाह ॥ १८ ॥ आसीनो याज्यां यजति । इयꣳ हि याज्या तस्मान्न कश्चन तिष्ठन्याज्यां यजतीयꣳ हि याज्या तदियमेवैतद् भूत्वा यजति तस्मादासीनो याज्यां यजति ॥ १९ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



यो ह वा ऽअग्निः सामिधेनीभिः समिद्धः । अतितराꣳ ह वै स ऽइतरस्मादग्नेस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ १ ॥ स यथा हैवाऽग्निः । सामिधेनीभिः समिद्धस्तपत्येवꣳ हैव ब्राह्मणः सामिधेनीर्विद्वाननुब्रुवंस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ २ ॥ सोऽन्वाह । प्र व ऽइति प्राणो वै प्रवान्प्राणमेवैतया समिन्धेऽग्न ऽआयाहि वीतय ऽइत्यपानो वा ऽएतवानपानमेवैतया समिन्धे बृह-

च्छोचा यविष्ठ्येत्त्युदानो वै बृहच्छोचा ऽउदानमेवैतया समिन्धे ॥ ३ ॥ स नः पृथु श्रवाय्यमिति । श्रोत्रं वै पृथु श्रवाय्यꣳ श्रोत्रेण हीदमुरु पृथु शृणोति श्रोत्रमेवैतया समिन्धे ॥ ४ ॥ ईडेन्न्यो नमस्य ऽइति । वाग्वा ऽईडेन्न्या व्वाग्घीदꣳ सर्व्वमीट्टे व्वाचेदꣳ सर्व्वमीडितं व्वाचमेवैतया समिन्धे ॥ ५ ॥ अश्वो न देववाहन ऽइति । मनो वै देववाहनं मनो हीदं मनस्विनं भूयिष्ठं व्वनीवाह्यते मन ऽएवैतया समिन्धे ॥ ६ ॥ अग्ने दीद्यतं बृहदिति । चक्षुर्वै दीदयेव चक्षुरेवैतया समिन्धे ॥ ७ ॥ अग्निं दूतं व्वृणीमह ऽइति । य ऽएवाऽयं मध्यमः प्प्राण ऽएतमेवैतया समिन्धे सा हैषाऽन्तस्था प्प्राणानामतो ह्यन्न्य ऽऊर्द्ध्वाः प्प्राणा ऽअतोऽन्न्ये-ऽवाञ्चोऽन्तस्था ह भवन्त्यन्तस्थामेनं मन्न्यन्ते य ऽएवमेतामन्तस्थां प्राणानां व्वेद ॥ ८ ॥ शोचिष्केशस्तमीमह ऽइति । शिश्नं वै शोचिष्केशः शिश्नꣳ हीदꣳ शिश्निनं भूयिष्ठꣳ शोचयति शिश्नमेवैतया समिन्धे ॥ ९ ॥ समिद्धो ऽअग्न ऽआहुतेति । य ऽएवाऽयमवाङ् प्राण ऽएतमेवैतया समिन्ध-ऽआ जुहोता दुवस्यतेति सर्व्वमात्मानꣳ समिन्ध ऽआनखेभ्योऽथो लोमभ्यः ॥ १० ॥ स यद्येनं प्रथमायाꣳ सामिधेन्न्यामनुव्व्याहरेत् । तं प्रति ब्रूयात्प्राणं वा ऽएतदात्मनोऽग्नावाधाः प्प्राणेनाऽऽत्मन ऽआर्त्तिमारिष्यसीति तथा हैव स्यात् ॥ ११ ॥ यदि द्वितीयस्यामनुव्व्याहरेत् । तं प्रतिब्रूयादपानं वा ऽएतदात्त्मनोऽग्नावाधा ऽअपानेना-ऽऽत्मन ऽआर्त्तिमारिष्यसीति तथा हैव स्यात् ॥ १२ ॥

यदि तृतीयस्यामनुव्याहरेत् । तं प्रति ब्रूयादुदानं वा ऽएतदात्मनोऽग्नावाधा ऽउदानेनाऽऽत्मन ऽआर्त्तिमारिष्यसीति तथा हैव स्यात् ॥ १३ ॥ यदि चतुर्थ्यामनुव्याहरेत् । तं प्रति ब्रूयाच्छ्रोत्रं वा ऽएतदात्मनोऽग्नावाधाः श्रोत्रेणाऽऽत्मन ऽआर्त्तिमारिष्यसि बधिरो भविष्यसीति तथा हैव स्यात् ॥ १४ ॥ यदि पञ्चम्म्यामनुव्याहरेत् । तं प्रति ब्रूयाद्वाचं वा ऽएतदात्मनोऽग्नावाधा व्वाचाऽऽत्मन ऽआर्त्तिमारिष्यसि मूको भविष्यसीति तथा हैव स्यात् ॥ १५ ॥ यदि षष्ठ्यामनुव्याहरेत् । तं प्रति ब्रूयान्मनो वा ऽएतदात्मनोऽग्नावाधा मनसाऽऽत्मन ऽआर्त्तिमारिष्यसि ‡मनो मुषिगृहीतो मोमुघँ*श्चरिष्यसीति तथा हैव स्यात् ॥ १६ ॥ यदि सप्तम्म्यामनुव्याहरेत् । तं प्रति ब्रूयाच्चक्षुर्व्वा ऽएतदात्मनोऽग्नावाधाश्चक्षुषाऽऽत्मन ऽआर्त्तिमारिष्यस्यन्धो भविष्यसीति तथा हैव स्यात् ॥ १७ ॥ यद्यष्टम्म्यामनुव्याहरेत् । तं प्रति ब्रूयान्मद्ध्यं वा ऽएतत्प्राणमात्मनोऽग्नावाधा मध्येन प्राणेनाऽऽत्मन ऽआर्त्तिमारिष्यस्युद्(१)ध्मायं मरिष्यसीति तथा हैव स्यात् ॥ १८ ॥ यदि नवम्म्यामनुव्याहरेत् । तं प्रति ब्रूयाच्छिश्नं वा ऽएतदात्मनोऽग्नावाधाः शिश्नेनाऽऽत्मन ऽआर्त्तिमारिष्यसि क्लीबो भविष्यसीति तथा हैव स्यात् ॥ १९ ॥ यदि दशम्म्यामनु-

‡–मनसो मोषणं विपरिलोपः तेन गृहीत इति ।

*–'मोमुय' इति 'क' पुस्तके ।

(१) उद् ध्मानम् ऊर्ध्वं श्वसनम् , तत्प्राप्येत्यर्थः ।

र्व्याहरेत्। तं प्रति ब्रूयाद्वाश्चं वा ऽएतत्प्राणमात्मनो ऽग्नावाधा ऽअवाचा प्प्राणेनाऽऽत्मन ऽआर्त्तिमारिष्यस्यपिनद्धो मरिष्यसीति तथा हैव स्यात् ॥ २० ॥ यद्येकादश्यामनु-र्व्याहरेत्। तं प्रतिब्रूयात्सर्व्वं वा ऽएतदात्मानमग्नावाधाः सर्व्वेणाऽऽत्मनाऽऽर्त्तिमारिष्यसि क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात् ॥ २१ ॥ स यथा हैवाऽग्निः। सामिधेनीभिः समिद्धमापद्यार्त्तिं न्येत्त्येवꣳ हैव ब्राह्मणः सामिधेनीर्व्विद्वाꣳ समनुब्रुवन्तमनुर्व्याहृत्याऽऽर्त्तिं न्येति ॥ २२ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



तं वा ऽएतमग्निः समैन्धिषत। समिद्धे देवेभ्यो जुहवामेति तस्मिन्नेते ऽएव प्रथमे ऽआहुती जुहोति मनसे चैव वाचे च मनश्च हैव वाक् च युजौ देवेभ्यो यज्ञं वहतः ॥ १ ॥ स यदुपांशु क्रियते। तन्मनो देवेभ्यो यज्ञं वहत्त्यथ यद्वाचा निरुक्तं क्रियते तद्वाग्देवेभ्यो यज्ञं वहत्त्येतद्वा ऽइदं द्वयं क्रियते तदेते ऽएवैतत्सन्तर्प्पयति तृप्ते प्प्रीते देवेभ्यो यज्ञं वहात ऽइति ॥ २ ॥ स्रुवेण तमा-घारयति। यं मनस ऽआघारयति व्वृषा हि मनो व्वृषा हि स्रुवः ॥ ३ ॥ स्रुचा तमाघारयति। यं वाच ऽआघा-रयति योषा हि व्वाग्योषा हि स्रुक् ॥ ४ ॥ तूष्णीं तमा-घारयति। यं मनस ऽआघारयति न स्वाहेति चनाऽनिरुक्तꣳ हि मनोऽनिरुक्तꣳ ह्येतद्यत्तूष्णीम् ॥ ५ ॥ मन्त्रेण तमा-

घारयति । यं वाच ऽआघारयति निरुक्ता हि वाङ् निरुक्तो हि मन्त्रः ॥ ६ ॥ आसीनस्तमाघारयति । यं मनस ऽआघारयति तिष्ठँस्तं यं वाचे मनश्च ह वै वाक् च युजौ देवेभ्यो यज्ञं वहतो यतरो वै युजोर्ह्रसीयान्भवत्युपवहं वै तस्मै कुर्वन्ति वाग्वै मनसो ह्रसीयस्यपरिमिततरमिव हि मनः परिमिततरेव हि वाक्तद्वाच ऽएवैतदुपवहं करोति ते सयुजौ देवेभ्यो यज्ञं वहतस्तस्मात्तिष्ठन्वाच ऽआघारयति ॥ ७ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्त ऽएतद्दक्षिणतः प्रत्युदश्रयन्नुच्छ्रितमिव हि वीर्यं तस्माद्दक्षिणतस्तिष्ठन्नाघारयति स यदुभयत ऽआघारयति तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव शिरो ह वै यज्ञस्यैतयोरन्यतर ऽआघारयोर्मूलमन्यतरः ॥ ८ ॥ स्रुवेण तमाघारयति । यो मूलं यज्ञस्य स्रुचा तमाघारयति यः शिरो यज्ञस्य ॥ ९ ॥ तूष्णीं तमाघारयति । यो मूलं यज्ञस्य तूष्णीमिव हीदं मूलं नो ह्यत्र वाग्वदति ॥ १० ॥ मन्त्रेण तमाघारयति । यः शिरो यज्ञस्य वाग्घि मन्त्रः शीर्ष्णो हीयमधि वाग्वदति ॥ ११ ॥ आसीनस्तमाघारयति । यो मूलं यज्ञस्य निषण्णमिव हीदं मूलं तिष्ठंस्तमाघारयति यः शिरो यज्ञस्य तिष्ठतीव हीदꣳ शिरः ॥ १२ ॥ स स्रुवेण पूर्वमाघारमाघार्याऽऽह । अग्निमग्नीत्सम्मृड्ढीति यथा धुरमध्यूहेदेवं तद्यत्पूर्वमाघारमाघारयत्यध्युह्य हि धुरं युञ्जन्ति ॥१३॥ अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो देवेभ्यो यज्ञं वहा-

दिति तस्मात्सम्मार्ष्टि परिक्रामꣳ सम्मार्ष्टि परिक्रामꣳ हि योग्यं युञ्जन्ति त्रिस्त्रिः सम्मार्ष्टि त्रिवृद्धि यज्ञः ॥१४॥ स सम्मार्ष्टि । 'अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मी'ति यज्ञं त्वा वक्ष्यन्तं यज्ञियꣳ सम्मार्ज्मीत्येवैतदाहाऽथोपरिष्टात्तूष्णीं त्रिस्तद्यथा युक्त्वा प्राजेत्प्रेहि वहेत्येवमेवैतत्कुशयोपक्षिपति प्रेहि देवेभ्यो यज्ञं वहेति तस्मादुपरिष्टात्तूष्णीं त्रिस्तद्यदेतदन्तरेण कर्म्म क्रियते तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव ॥ १५ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिका सङ्ख्या ॥ १२८ ॥



स स्रुचोत्तरमाघारमाघारयिष्यन् । पूर्वेण स्रुचावञ्जलिं निदधाति '[1]नमो देवेभ्यः स्वधा पितृभ्य, ऽइति तद्देवेभ्यश्चैवैतत्पितृभ्यश्चाऽऽर्त्विज्यं करिष्यन्निह्नुते '[2]सुयमे मे भूयास्तामि'ति स्रुचावादत्ते सुभरे मे भूयास्तं भर्त्तुं वाꣳ शकेयमित्येवैतदाहा'[3]ऽस्कन्नमद्य देवेभ्यऽआज्यꣳ सम्भ्रियास'मित्यविक्षुब्धमद्य देवेभ्यो यज्ञं तनवा ऽइत्येवैतदाह ॥ १ ॥ '[4]अङ्घ्रिणा विष्णो मा त्वाऽवक्रमिषमि'ति । यज्ञो वै विष्णुस्तस्मा ऽएवैतन्निह्नुते मात्वाऽवक्रमिषमिति '[5]वसुमतीमग्ने

( १ ) शु० सं० अ० २ क० ७ । ( २ ) शु० सं० अ० २ क० ७ । ( ३ ) शु० सं० अ० २ क० ७ । ( ४ ) शु० सं० अ० २ क० ८ । ( ५ ) शु० सं० अ० २ क० ८ । ( ६ ) शु० सं० अ० १ क० ८ ।

ते च्छायामुपस्थेषमि’ति साध्वीमग्ने ते च्छायामुपस्थेषमित्त्येवैतदाह ॥ २ ॥ ‘विष्णोस्थानमसी’ति । यज्ञो वै विष्णुस्तस्यैव ह्येतदन्तिकं तिष्ठति तस्मादाह विष्णोस्थानमसी‘तीतऽ इन्द्रो वीर्य्यमकृणोदि’त्त्यतो हीन्द्रस्तिष्ठन्दक्षिणतो नाष्ट्रा रक्षाᳬंस्यपाऽहँस्तस्मादाहेत ऽइन्द्रो वीर्य्यमकृणोदि‘त्त्यूर्द्धोऽध्वरऽआस्थादि’त्त्यध्वरो वै यज्ञ ऽऊर्द्धो यज्ञ ऽआस्थादित्त्येवैतदाह ॥३॥ ‘अग्ने वेर्होत्रं वेर्द्दूत्त्यमि’ति । उभयं वा ऽएतदग्निर्द्देवानाᳬं होता च दूतश्च तदुभयं विद्धि यद्देवानामसीत्त्येवैतदाहा‘ऽवतां त्वां द्यावापृथिवीऽअव त्त्वं द्यावापृथिवी’ ऽइति नाऽत्र तिरोहितामिवाऽस्ति ‘स्विष्टकृद्देवेभ्य ऽइन्द्र ऽआज्येन हविषाऽभूत्स्वाहे’ तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्र ऽआज्येनेति वाचे वा ऽएतमाघारमाघारयतीन्द्रो वागित्त्यु वा ऽआहुस्तस्माद्वे वाऽऽहेन्द्र ऽआज्येनेति ॥४॥ अथाऽसᳬंस्पर्शयन्त्स्रुचौ पर्य्येत्त्य । ध्रुवया समनक्ति शिरो वै यज्ञस्योत्तर ऽआघार ऽआत्मा वै ध्रुवा तदात्मन्न्येवैतच्छिरः प्रतिदधाति शिरो वै यज्ञस्योत्तर ऽआघारः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्त्यसावमुष्यार्द्धस्य शिर ऽइत्त्याहुः ॥ ५ ॥ यजमान ऽएव ध्रुवामनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु स यद्धोपभृता समञ्ज्याद्यो यजमानायाऽरातीयति तस्मिञ्छ्रियं दध्यात्तद्यजमान ऽएवैतच्छ्रियं दधाति तस्माद् ध्रुवया समनक्ति ॥ ६ ॥ स समनक्ति । ‘सञ्ज्यो-

(१) शु० सं० अ० २ क० ८। (२) शु० सं० अ० २ क० ८। (३) शु० सं० अ० २ क० ८। (४) शु० सं० अ० २ क० ९। (५) शु० सं० अ० २ क० ९ (६) शु० सं० अ० २ क० ९। (७) शु० सं० अ० २ क० ९।

तिषा ज्योतिरि'ति ज्ज्योतिर्वा ऽइतरस्यामाज्यं भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी सङ्गच्छेते तस्मादेवꣳ समनक्ति ॥ ७ ॥ अथाऽतो मनसश्चैव वाचश्च । अहम्भद्र ऽउदितं मनश्च्च ह वै व्वाक्चाऽहम्भद्र ऽऊदाते ॥ ८ ॥ तद्ध मन ऽउवाच । अहमेव त्वच्छ्रेयोऽस्मि न वै मया त्वं किं च नाऽनभिगतं वदसि सा यन्मम त्वं कृताऽनुकराऽनुवर्त्माऽस्यहमेव त्वच्छ्रेयोऽस्मीति ॥ ९ ॥ अथ ह व्वागुवाच । अहमेव त्वच्छ्रेयस्यस्मि यद्वै त्वं व्वेत्थाऽहं तद्विज्ञपयाम्म्यहꣳ संज्ञपयामीति ॥ १० ॥ ते प्प्रजापतिं प्रतिप्प्रश्नमेयतुः । स प्प्रजापतिर्म्मनस ऽएवाऽनूवाच मन ऽएव त्वच्छ्रेयो मनसो वै त्वं कृताऽनुकराऽनुवर्त्माऽसि श्रेयसो वै पापीयान्कृताऽनुकरोऽनुवर्त्मा भवतीति ॥ ११ ॥ सा ह वाक् परोक्ता विसिष्मिये । तस्यै गर्भः पपात सा ह व्वाक् प्प्रजापतिमुवाचाऽहव्व्यवाडेवाऽहं तुभ्यं भूयासं यां मा परावोच ऽइति तस्माद्यत्किं च प्प्राजापत्त्यं यज्ञे क्रियतऽ उपाꣳश्वेव तत् क्रियतेऽहव्व्यवाड्ढि व्वाक् प्प्रजापतय ऽआसीत् ॥ १२ ॥ तद्धैतद्देवाः । रेतश्चर्म्मन्वा यस्मिन्वा बभ्रुस्तद्ध स्म पृच्छन्त्यत्रैव त्या ३ दिति ततोऽत्रिः सम्बभूव तस्मादप्प्यात्रेय्या योषितैनस्व्येतस्यै हि योषायै व्वाचो देवताया ऽएते सम्भूताः ॥ १३ ॥

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

स वै प्प्रवरायाऽऽश्रावयति । तद्यत्प्रवरायाऽऽश्रावयति यज्ञो वा ऽआश्रावणं यज्ञमभिव्व्याहृत्त्याऽथ होतारं प्रव्वृणा ऽइति तस्मात्प्रवरायाऽऽश्रावयति ॥ १ ॥ स ऽइध्मसन्नहना-न्येवाऽभिपद्याऽऽश्रावयति । स यद्धाऽनारभ्य यज्ञमद्ध्वर्य्युरा-श्रावयेद्वेपनो वा ह स्यादन्यां वाऽऽर्त्तिमाच्छेंत् ॥२॥ तद्धैके । व्वेदे स्तीर्ण्यै बर्हिरभिपद्याऽऽश्रावयन्तीध्मस्य वा शकलम-पच्छिद्याऽभिपद्याऽऽश्रावयन्तीदं वै किञ्चिद्यज्ञस्येदं यज्ञमभि-पद्याऽऽश्रावयाम ऽइति व्वदन्तस्तदु तथा न कुर्य्यादेतद्वै किञ्चि-द्यज्ञस्य यैरिध्मꣳ सन्नद्धो भवत्त्यग्निꣳ सम्मृजन्ति तद्वेव खलु यज्ञमभिपद्याऽऽश्रावयति तस्मादिध्मसन्नहनान्येवाऽ-भिपद्याऽऽश्रावयेत् ॥ ३ ॥ स ऽआश्राव्व्य । य ऽएव देवानाꣳ होता तमेवाऽग्रे प्प्रव्वृणीतेऽग्निमेव तदग्नये चैवैतद्दे-वेभ्यश्च निह्नुते यदहाऽग्रेऽग्निं प्रव्वृणीते तदग्नये निह्नुते-ऽथ यो देवानाꣳ होता तमग्रे प्प्रव्वृणीते तदु देवेभ्यो निह्नुते ॥ ४ ॥ स ऽआह । अग्निर्द्देवो दैव्व्यो होतेत्त्यग्निर्हि देवानाꣳ होता तस्मादाहाऽग्निर्द्देवो दैव्व्यो होतेति तद-ग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाऽग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवानाꣳ होता तमग्र ऽआह तदु देवेभ्यो निह्नुते ॥ ५ ॥ देवान्न्यक्षद्विद्वाँश्चिकित्त्वानिति । एष वै देवाननु विद्वान्न्यदग्निꣳ स एनाननु विद्वाननुष्ठ्या यक्ष-दित्त्येवैतदाह ॥ ६ ॥ मनुष्वद्भरतवदिति । मनुर्ह वा ऽअग्रे यज्ञेनेजे तदनुकृत्त्येमाꣳ प्प्रजा यजन्ते तस्मादाह मनु-ष्वदिति मनोर्य्यज्ञ ऽइत्त्यु वाऽ आहुस्तस्माद्वेवाऽऽह मनुष्व-

दिति ॥ ७ ॥ भरतवदिति । एष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुरेष ऽउ वा ऽइमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाऽऽह भरतवदिति ॥ ८ ॥ अथाऽऽर्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते ॥ ९ ॥ परस्तादर्वाक् प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय ऽउ चैवैतन्निह्नुत ऽइदꣳ हि पितैवाऽग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक् प्रवृणीते ॥ १० ॥ स ऽआर्षेयमुक्त्वाऽऽह । ब्रह्मण्वदिति ब्रह्म ह्यग्निस्तस्मादाह ब्रह्मण्वदित्या च वक्षदिति तद्या ऽएवैतद्देवता ऽआवोढवा ऽआह ता ऽएवैतदाहा च वक्षदिति ॥ ११ ॥ ब्राह्मणा ऽअस्य यज्ञस्य प्राऽवितार ऽइति । एते वै ब्राह्मणा यज्ञस्य प्राऽवितारो येऽनूचाना ऽएते ह्येनं तन्वत ऽएत ऽएनं जनयन्ति तदु तेभ्यो निह्नुते तस्मादाह ब्राह्मणा ऽअस्य यज्ञस्य प्राऽवितार ऽइति ॥ १२ ॥ असौ मानुष ऽइति । तदिमं मानुषꣳ होतारं प्रवृणीतेऽहोता हैष पुराऽथैतर्हि होता ॥ १३ ॥ स प्रवृतो होता जपति । देवता ऽउपधावति यथाऽनुष्ठ्या देवेभ्यो वषट् कुर्य्याद्यथाऽनुष्ठ्या देवेभ्यो हव्यं वहेद्यथा न ह्वलेदेवं देवता ऽउपधावति॥१४॥ तत्र जपति । एत त्त्वा देव सवितर्वृणत ऽइति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविताऽग्निꣳ होत्रायेति तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाऽग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवानाꣳ होता तमग्र ऽआह तदु

देवेभ्यो निह्नुते ॥ १५ ॥ सह पित्रा वैश्वानरेणेति । संवत्सरो वै पिता वैश्वानरः प्रजापतिस्तत्संवत्सरायैवै-तत्प्रजापतये निह्नुतेऽग्ने पूषन् बृहस्पते प्र च वद प्र च यजेत्त्यनुवक्ष्यन्वा ऽएतद्यक्ष्यन् भवति तदेताभ्य ऽएवैत-द्देवताभ्यो निह्नुते यूयमनु ब्रूत यूयं यजतेति ॥ १६ ॥ वसूनाᳬं रातौ स्याम । रुद्राणामुर्व्यायाᳬं स्वादित्त्या ऽअदितये स्यामाऽनेहस ऽइत्त्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्त्या ऽएतेषामभिगुप्तौ स्यामेत्त्येवैतदाह ॥ १७ ॥ जुष्टामद्य देवेभ्यो वाचमुद्यासमिति । जुष्टमद्य देवेभ्यो-ऽनूच्च्यासमित्त्येवैतदाह तद्धि समृद्धं यो जुष्टं देवेभ्यो ऽनुब्रवत् ॥ १८ ॥ जुष्टां ब्रह्मभ्य ऽइति । जुष्टमद्य ब्राह्मणे-भ्योऽनूच्च्यासमित्त्येवैतदाह तद्धि समृद्धं यो जुष्टं ब्राह्मणे-भ्योऽनुब्रवत् ॥ १९ ॥ जुष्टां नराशᳬंसायेति । प्रजा वै नरस्तत्सर्वाभ्यः प्रजाभ्य ऽआह तद्धि समृद्धं यश्च वेद यश्च न साद्ध्वन्नवोचत्साद्ध्वन्नवोचदित्त्येव विसृज्ज्यन्ते यदद्य होतृवर्य्ये जिह्मं चक्षुः परापतत् । अग्निष्टत्पुनराभ्रि-याज्जातवेदा विचर्षणिरिति यथा यानग्रेऽग्नीन्होत्राय प्रावृ-णत ते प्राऽधन्वन्नेवं यन्मेऽत्र प्रवरेणाऽमायि तन्मे पुनरा-प्प्याययेत्त्येवैतदाह तथो हाऽस्यैतत्पुनराप्प्यायते ॥ २० ॥ अथाऽध्वर्य्युं चाऽग्नीधं च सम्मृशति । मनो वा ऽअद्ध्वर्य्यु-र्वाग्घोता तन्मनश्चैवैतद्वाचं च सन्दधाति ॥ २१ ॥ तत्र जपति । षण्णमोर्वीरᳬंहसस्पान्त्वग्निश्च पृथिवी चाऽऽपश्च वातश्चाऽहश्च रात्रिश्चेत्त्येता मा देवता ऽआर्त्तेर्गोपाय-

न्विदत्येवैतदाह तस्यो हि न ह्वलाऽस्ति यमेता देवता ऽआर्त्तेर्गोपायेयुः ॥ २२ ॥ अथ होतृषदनमुपाऽऽवर्त्तते । स होतृषदनादेकं तृणं निरस्यति 'निरस्तः[1] परावसुरि'ति *परावसुर्ह वै नामाऽसुराणाथ्ं होता स तमेवैतद्धोतृषदनान्निरस्यति ॥ २३ ॥ अथ होतृषदन ऽउपविशति । इदमहमर्वा वसोः सदने सीदामीत्यर्वा वसुर्वै नाम देवानाथ्ं होता तस्यैवैतत्सदने सीदति ॥ २४ ॥ तत्र जपति । विश्वकर्म्मस्तनूपा ऽअसि मा मो दोषिष्टं मा मा हिंसिष्टमेष वां लोक ऽइत्युदङ्ङेजत्यन्तरा वा ऽएतदाहवनीयं च गार्हपत्यं चाऽऽस्ते तदु ताभ्यां निह्नुते मा मो दोषिष्टं मा मा हिंसिष्टमिति तथो हैनमेतौ न हिंस्तः ॥ २५ ॥ अथाऽग्निमीक्षमाणो जपति । 'विश्वे[2] देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानी'ति यथा येभ्यः पक्वं स्यात्तान् ब्रूयादनु मा शास्त यथा व ऽआहरिष्यामि यथा वः परिवेक्ष्यामीत्येवमेवैतद्देवेषु प्रशासनमिच्छतेऽनु मा शास्त यथा वोऽनुष्ठ्या वषट्कुर्य्यामनुष्ठ्या हव्यं वहेयमिति तस्मादेवं जपति ॥ २६ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

अग्निर्होता वेत्त्वग्नेर्होत्रमिति । अग्निरिदं होता वेत्त्वित्येवैतदाहाऽग्नेर्होत्रमिति तस्यो हि होत्रं वेत्तु प्रावित्र-

* 'ग' पुस्तके पुरावसुर्ह इति ।

(१) सांख्या० श्रौ० सू० १, ६, ६ । (२) ऋ० सं० म० १०, सू० ५२, ऋ० १ ।

मिति यज्ञो वै प्प्रावित्रं व्वेत्तु यज्ञमित्त्येवैतदाह साधु ते यजमान देवतेति साधु ते यजमान देवता यस्य तेऽग्निर्होतेत्त्येवैतदाह घृतवतीमद्ध्वर्य्यो स्रुचमास्यस्वेति तदद्ध्वर्य्युं प्रसौति स यद्देकामिवाऽऽह ॥ १ ॥ यजमान ऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु स यद्द्द्वे ऽइव ब्रूयाद्यजमानाय द्विषन्तं भ्रातृव्व्यं प्रत्त्युद्यामिनं कुर्य्याद्त्तैव जुहूमन्न्त्राद्य ऽउपभृतमनु स यद्द्वे ऽइव ब्रूयादत्र ऽआद्यं प्रत्त्युद्यामिनं कुर्य्यात्तस्माद्देकामिवैवाऽऽह ॥ २ ॥ देवयुवं व्विश्ववारामिति । उपस्तौत्त्येवैनामेतन्महयत्त्येव यदाह देवयुवं व्विश्ववारामितीडामहै देवाँ २ ॥ ऽईडेन्न्यान्नमस्याम नमस्यान् यजाम यज्ञियानितीडामहै तान्दे वाऽन्न्य ऽईडेन्न्या नमस्याम ताऽन्न्ये नमस्या यजाम यज्ञियानिति मनुष्या वा ऽईडेन्न्याः पितरो नमस्या देवा यज्ञियाः ॥३॥ या वै प्प्रजा यज्ञेऽनन्न्वाभक्ताः । पराभूता वै ता ऽएवमेवैतद्या ऽइमाः प्प्रजा ऽअपराभूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु व्वयाᳬंस्योषधयो व्वनस्पतयो यदिदं किञ्चैवमु तत्सर्व्वं यज्ञ ऽआभक्तम् ॥ ४ ॥ ता वा ऽएताः । नव व्व्याहृतयो भवन्ति नवेमे पुरुषे प्प्राणा ऽएतानेवाऽस्मिन्नेतद्दधाति तस्मान्नव व्व्याहृतयो भवन्ति ॥ ५ ॥ यज्ञो ह देवेभ्योऽपचक्राम । तं देवा ऽअन्न्वमन्त्रयन्ता नः श्रृणूप न ऽआवर्त्तस्वेति सोऽस्तु तथेत्त्येव देवानुपाववर्त्त तेनोपाऽवृत्तेन देवा ऽअयजन्त तेनेष्ट्वैतदभवन्न्यदिदं देवाः ॥६॥ स यदाश्रावयति । यज्ञमेवैतदनुमन्त्रयत ऽआ नः श्रृणूप

न ऽआवर्त्तस्वेत्यथ यत्प्रत्याश्रावयति यज्ञ ऽएवैतदुपाऽऽवर्त्तते-ऽस्तु तथेति तेनोपाऽऽवृत्तेन रेतसा भूतेनर्त्त्विजः सम्प्रदायं चरन्ति यजमानेन परोक्षं यथा पूर्ण्णपात्रेण सम्प्रदायं चरेयुरेवमनेनर्त्त्विजः सम्प्रदायं चरन्ति तद्वाचैवैतत्सम्प्रदायं चरन्ति वाग्घि यज्ञो वागु हि रेतस्तदेतेनैवैतत्सम्प्रदायं चरन्ति ॥ ७ ॥ सोऽनुब्रूहीत्त्येवोक्त्वाऽद्ध्वर्य्युः । नाऽपव्व्याहरेन्नो ऽएव होताऽपव्व्याहरेदाश्रावयत्त्यद्ध्वर्य्युस्तदग्नीधं यज्ञ ऽउपा-ऽऽवर्त्तते ॥ ८ ॥ सोऽग्नीन्नाऽपव्व्याहरेत् । आप्रत्या-श्रावणात्प्रत्याश्रावयत्त्यग्नीत्तत्पुनरद्ध्वर्य्युं यज्ञ ऽउपाऽऽवर्त्तते ॥ ९ ॥ सोऽद्ध्वर्य्युर्न्नाऽपव्व्याहरेत् । आयजेति वक्तोर्य्यजेत्येवाऽद्ध्वर्य्युर्होत्रे यज्ञꣳ सम्प्रयच्छति ॥ १० ॥ स होता नाऽपव्व्याहरेत् । आवषट्कारात्तं वषट्कारे-णाऽग्नावेव योनौ रेतो भूतꣳ सिञ्चत्त्यग्निर्वै योनिर्य्यज्ञस्य स ततः प्प्रजायत ऽइति नु हविर्य्यज्ञेऽथ सौम्म्येऽद्ध्वरे ॥११॥ स वै ग्रहं गृहीत्वाऽद्ध्वर्य्युः । नाऽपव्व्याहरेदोपाकरणादुपाऽऽव-र्त्तेद्ध्वमित्त्येवाऽध्वर्य्युरुद्गातृभ्यो यज्ञꣳ सम्प्रयच्छति ॥१२॥ त ऽउद्गातारो नाऽपव्व्याहरेयुः । ओत्तमाया ऽएषोत्तमे-त्त्येवोद्गातारो होत्रे यज्ञꣳ सम्प्रयच्छन्ति ॥ १३ ॥ स होता नाऽपव्व्याहरेत् । आवषट्कारात्तं वषट्कारेणाऽग्नावेव योनौ रेतो भूतꣳ सिञ्चत्त्यग्निर्वै योनिर्य्यज्ञस्य स ततः प्प्रजा-यते ॥ १४ ॥ स यद्ध सोऽपव्व्याहरेत् । यं यज्ञ ऽउपाऽऽ-वर्त्तते यथा पूर्ण्णपात्रं परासिञ्चेदेवꣳ ह स यजमानं परासिञ्चेत्स यत्र हैवमृत्त्विजः संविदाना यज्ञेन चरन्ति

सर्व्वमेव तत्र कल्पते न मुह्यति तस्मादेवमेव यज्ञो भर्त्तव्यः ॥ १५ ॥ ता वा ऽएताः । पञ्च व्याहृतयो भवन्त्योश्रावया ऽस्तु श्रौषड्यज ये यजामहे वौषडिति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्यैषैका यज्ञस्य मात्रैषा सम्पत् ॥१६॥ तासाꣳ सप्तदशाऽक्षराणि । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ ऽएषैका यज्ञस्य मात्रैषा सम्पत् ॥१७॥ ओ श्रावयेति वै देवाः । पुरो वातꣳ ससृजिरेऽस्तु श्रौषडित्यभ्राणि समप्लावयन्यजेति विद्युतं ये यजामह ऽइति स्तनयित्नुं वषट्कारेणैव प्रावर्षयन् ॥ १८ ॥ स यदि वृष्टिकामः स्यात् । यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वैवं ब्रूयाद्वृष्टिकामो वा ऽअस्मीति तत्रो ऽअध्वर्युं ब्रूयात्पुरो वातं च विद्युतश्च मनसा ध्यायेत्यभ्राणि मनसा ध्यायेत्यग्नीधꣳ स्तनयित्नुं च वर्षं च मनसा ध्यायेति होतारꣳ सर्व्वाण्येतानि मनसा ध्यायेति ब्रह्माणं वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति ॥ १९ ॥ ओ श्रावयेति वै देवाः । विराजमभ्याजुहुवुरस्तु श्रौषडिति वत्समुपाऽवाऽसृजन्यजेत्युदजयन्ये यजामह ऽइत्युपाऽऽसीदन्वषट्कारेणैव विराजमदुहतेयं वै विराडस्यैवा ऽएष दोह ऽएवꣳ ह वा ऽअस्मा ऽइयं विराट् सर्वान् कामान्दुहे य ऽएवमेतं विराजो दोहं वेद ॥ २० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



ऋतवो ह वै प्प्रयाजाः । तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः ॥ १ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्त्याः पस्पृधिर ऽएतस्मिन्न्यज्ञे प्प्रजापतौ पितरि संवत्त्सरेऽस्माकमयं भविष्यत्त्यस्माकमयं भविष्यतीति ॥ २ ॥ ततो देवाः । अर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतान्प्रयाजान् ददृशुस्तैरयजन्त तैर्ऋतून्त्संवत्त्सरं प्राजयन्नृतुभ्यः संवत्त्सरात्त्सपत्नानन्तरायँस्तस्मात्प्रजयाः प्प्रजया ह वै नामैतद्यत्प्रयाजा ऽइति तथो ऽएवैष ऽएतैर्ऋतून्त्संवत्त्सरं प्रजयत्त्यृतुभ्यः संवत्त्सरात्त्सपत्नानन्तरेति तस्मात्प्रयाजैर्य्यजते ॥ ३ ॥ ते वा ऽआज्ज्यहविषो भवन्ति । व्वज्ज्रो वा ऽआज्ज्यमेतेन वै देवा व्वज्ज्रेणाऽऽज्ज्येनर्त्तून्त्संवत्त्सरं प्राजयन्नृतुभ्यः संवत्त्सरात्त्सपत्नानन्तरायंस्तथो ऽएवैष ऽएतेन व्वज्ज्रेणाऽऽज्ज्येनर्त्तून्त्संवत्त्सरं प्रजयत्त्यृतुभ्यः संवत्त्सरात्त्सपत्नानन्तरेति तस्मादाज्ज्यहविषो भवन्ति ॥ ४ ॥ एतद्वै संवत्त्सरस्य स्वं पयः । यदाज्ज्यं तत्त्स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत तथो ऽएवैनमेष ऽएतत्त्स्वेनैव पयसा स्वीकुरुते तस्मादाज्ज्यहविषो भवन्ति ॥ ५ ॥ स यत्रैव तिष्ठन् प्रयाजेभ्य ऽआश्रावयेत् । तत ऽएव नाऽपक्रामेत्सङ्ग्रामो वा ऽएष सन्निधीयते यः प्प्रयाजैर्य्यजते यतरो वै संयत्तयोः पराजयतेऽप वै सङ्क्रामत्त्यभितरामु वै जयन्क्रामति तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्ज्जुहुयात् ॥ ६ ॥ तदु तथा न कुर्य्यात् । यत्रैव तिष्ठन् प्रयाजेभ्य ऽआश्रावयेत्तत ऽएव नाऽपक्रा-

मेद्यत्रो ऽएव समिद्धतमं मन्येत तदाहुतीर्ज्जुहुयात्समि-
द्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ७ ॥ स ऽआश्रा-
व्याऽऽह । समिधो यजेति तद्वसन्तꣳ समिन्धे स वसन्तः
समिद्धोऽन्न्यानृतून्त्समिन्ध ऽऋतवः समिद्धाः प्प्रजाश्च्च
प्रजनयन्त्योषधीश्च्च पचन्ति तद्वेव खलु सर्व्वानृतून्नि-
राहाऽथ यज यजेत्त्येवोत्तरानाहाऽजामितायै जामि ह
कुर्य्याद्यत्तनूनपातं यजेडो यजेति ब्रूयात्तस्माद्यज यजेत्त्ये-
वोत्तरानाह ॥ ८ ॥ स वै समिधो यजति । वसन्तो वै
समिद्वसन्तमेव तद्देवा ऽअवृञ्जत वसन्तात्त्सपत्नानन्तराय-
न्वसन्तम्वेवैष ऽएतद् वृङ्क्ते वसन्तात्त्सपत्नानन्तरेति तस्मा-
त्समिधो यजति ॥ ९ ॥ अथ तनूनपातं यजति । ग्रीष्मो
वै तनूनपाद् ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्रीष्ममेव
तद्देवा ऽअवृञ्जत ग्रीष्मात्त्सपत्नानन्तरायन् ग्रीष्मम्वेवैष
ऽएतद्वृङ्क्ते ग्रीष्मात्त्सपत्नानन्तरेति तस्मात्तनूनपातं यजति
॥ १० ॥ अथेडो यजति । वर्षा वा ऽइड ऽइति हि वर्षा
ऽइडो यदिदं क्षुद्रꣳ सरीसृपं ग्रीष्महेमन्ताभ्यान्नित्त्यक्तं
भवति तद्वर्षा ऽईडितमिवाऽन्नमिच्छमानं चरति तस्माद्वर्षा
ऽइडो वर्षा ऽएव तद्देवा ऽअवृञ्जत वर्षाभ्यः सपत्नानन्त-
रायन्वर्षा ऽउ ऽएवैष ऽएतद्वृङ्क्ते वर्षाभ्यः सपत्नानन्तरेति
तस्मादिडो यजति ॥ ११ ॥ अथ बर्हिर्य्यजति । शरद्वै
बर्हिरिति हि शरद्बर्हिर्य्या ऽइमा ऽओषधयो ग्रीष्महेम-
न्ताभ्यां नित्त्यक्ता भवन्ति ता वर्षा वर्द्धन्ते ताः शरदि
बर्हिषो रूपं प्रस्तीर्ण्णाः शेरे तस्माच्छरद्बर्हिः शरदमेव

तद्देवा ऽअवृञ्जत शरदः सपत्नानन्तरायञ्छरदम्वेवैष ऽएतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्य्यजति ॥ १२ ॥ अथ स्वाहा स्वाहेति यजति । अन्तो वै यज्ञस्य स्वाहाकारोऽन्त ऽऋतूनाᳪं हेमन्तो वसन्ताद्धि पराद्ध्योंऽन्तेनैव तदन्तं देवा ऽअवृञ्जताऽन्तेनाऽन्तात्सपत्नानन्तरायन्नन्तेनोऽएवैष ऽएतदन्तं वृङ्क्तेऽन्तेनाऽन्तात्सपत्नानन्तरेति तस्मात्स्वाहा स्वाहेति यजति ॥ १३ ॥ तद्वा ऽएतत् । वसन्त ऽएव हेमन्तात्पुनरसुरेतस्माद्ध्येष पुनर्भवति पुनर्ह वाऽअस्मिँल्लोके भवति य ऽएवमेतद्वेद ॥ १४ ॥ स वै व्व्यन्तु वेत्त्विति यजति । अजामितायै जामि ह कुर्य्याद्यद्व्यन्तु व्व्यन्त्विति वैव यजेद्वेत्तु वेत्त्विति वा व्व्यन्त्विति वै योषा वेत्त्विति व्वृषा मिथुनमेवैतत्प्रजननं क्रियते तस्माद्व्यन्तु वेत्त्विति यजति ॥ १५ ॥ अथ चतुर्थे प्प्रयाजे समानयति बर्हिषि । प्प्रजा वै बर्ही रेत ऽआज्ज्यं तत्प्रजास्वेवैतद्रेतः सिच्च्यते तेन रेतसा सिक्तेनेमाः प्प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते तस्माच्चतुर्थे प्प्रयाजे समानयति बर्हिषि ॥ १६ ॥ सङ्ग्रामो वा ऽएष सन्निधीयते । यः प्प्रयाजैर्य्यजते यतरं वै संयत्तयोर्म्मित्रमागच्छति स जयति तदेतदुपभृतोऽधि जुहूं मित्रमागच्छति तेन प्प्रजयति तस्माच्चतुर्थे प्प्रयाजे समानयति बर्हिषि ॥ १७ ॥ यजमान ऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु यजमानायैवैतद् द्विषन्तं भ्रातृव्व्यं बलिᳪं हारयत्यत्तैव जुहूमन्न्वाद्य ऽउपभृतमन्न्वत्र ऽएवैतदाद्यं बलिᳪं हारयति

तस्माच्चतुर्थे प्रयाजे समानयति ॥ १८ ॥ स वा ऽअनवमृशन्त्समानयति । स यद्धाऽवमृशेद्यजमानं द्विषता भ्रातृव्येणा ऽवमृशेदत्तारमाद्येनाऽवमृशेत्तस्मादनवमृशन्त्समानयति ॥१९॥ अथोत्तरां जुहूमध्यूहति । यजमानमेवैतद् द्विषति भ्रातृव्ये ऽध्यूहत्यत्तारमाद्ये ऽध्यूहति तस्मादुत्तरां जुहूमध्यूहति ॥ २० ॥ देवा ह वा ऽऊचुः । हन्त विजितमेवाऽनु सर्वं यज्ञꣳ सꣳस्थापयाम यदि नोऽसुररक्षसान्न्यासजेयुः सꣳस्थित ऽएव नो यज्ञः स्यादिति ॥२१॥ त ऽउत्तमे प्रयाजे । स्वाहाकारेणैव सर्वं यज्ञꣳ समस्थापयन्त्स्वाहाऽग्निमिति तदाग्नेयमाज्यभागꣳ समस्थापयन्त्स्वाहा सोममिति तत्सौम्यमाज्यभागꣳ समस्थापयन्त्स्वाहाऽग्निमिति तद्य ऽएष ऽउभयत्राऽच्युत ऽआग्नेयः पुरोडाशो भवति तꣳ समस्थापयन् ॥ २२ ॥ अथ यथादेवतꣳ । स्वाहा देवा ऽआज्यपा ऽइति तत्प्रयाजाऽनुयाजान्त्समस्थापयन्प्रयाजाऽनुयाजा वै देवा ऽआज्यपा जुषाणोऽअग्निराज्यस्य वेत्विति तदग्निꣳ स्विष्टकृतꣳ समस्थापयन्नग्निर्हि स्विष्टकृत्स ऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठते यथैवैनं देवाः समस्थापयꣳस्तस्मादुत्तमे प्रयाजे स्वाहा स्वाहेति यजति यावन्ति हवीꣳषि भवन्ति विजितमेवैतदनु सर्वं यज्ञꣳ सꣳस्थापयति तस्माद्यदत ऽऊर्ध्वं विलोम यज्ञे क्रियेत न तदाद्रियेत सꣳस्थितो मे यज्ञ ऽइति ह विद्यात्सहैष यज्ञो यातयामेवाऽऽस यथा वषट्कृतꣳ हुतꣳ स्वाहाकृतम् ॥ २३ ॥ ते देवा ऽअकामयन्त । कथं

न्विमं यज्ञं पुनराप्प्यायेमाऽयातयामानं कुर्य्याम तेनाऽयातयाम्ना प्प्रचरेमेति ॥२४॥ स यज्जुह्वामाज्ज्यं परिशिष्टमासीत् । येन यज्ञꣳ समस्थापयँस्तेनैव यथापूर्व्वꣳ हवीꣳष्यभ्यघारयन्न्पुनरेवैनानि तदाप्प्याययन्नयातयामान्न्यकुर्व्वन्नयातयाम ह्याज्ज्यं तस्मादुत्तमं प्रयाजमिष्ट्वा यथापूर्व्वꣳ हवीꣳष्यभिघारयति पुनरेवैनानि तदाप्प्याययत्त्ययातयामानि करोत्त्ययातयाम ह्याज्ज्यं तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत ऽएव तत्पुनराप्प्याययत्त्ययातयाम करोत्त्यथ यदा स्विष्टकृतेऽवद्यति न ततः पुनरभिघारयति नो हि ततः काञ्चन हविषोऽन्नावाहुतिꣳ होष्यन्न्भवति ॥ २५ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



स वै समिधो यजति । प्प्राणा वै समिधः प्प्राणानेवैतत्समिन्धे प्प्राणैर्ह्ययं पुरुषः समिद्धस्तस्मादभिमृशेति ब्रूयाद्यद्युपतापी स्यात्स यद्युष्णः स्यादेव तावच्छꣳसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्न शꣳसेत तत्प्राणान्नेवाऽस्मिन्नेतद्दधाति तस्मात्समिधो यजति ॥ १ ॥ अथ तनूनपातं यजति । रेतो वै तनूनपाद्रेत ऽएवैतत्सिञ्चति तस्मात्तनूनपातं यजति ॥ २ ॥ अथेडो यजति । प्प्रजा वा ऽइडो यदा वै रेतः सिक्तं प्रजायतेऽथ तदीडितमिवाऽन्नमिच्छमानं चरति तत्प्रैवैतज्जनयति तस्मादिडो यजति ॥३॥

अथ बर्हिरुर्यजति । भूमा वै बर्हिर्भूमानमेवैतत्प्रजनयति तस्माद्बर्हिरुर्यजति ॥ ४ ॥ अथ स्वाहा स्वाहेति यजति । हेमन्तो वा ऽऋतूनाᳫं स्वाहाकारो हेमन्तो हीमाः प्प्रजाः स्वं वशमुपनयते तस्माद्धेमन् म्लायन्त्योषधयः प्प्रवनस्पतीनां पलाशानि मुच्च्यन्ते प्प्रतितरामिव वयाᳫंसि भवन्त्यधस्तरामिव वयाᳫंसि पतन्ति विपतितलोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्प्रजाः स्वं वशमुपनयते स्वीह वै तमर्द्ध कुरुते श्रियेऽन्नाद्याय यस्मिन्नर्द्धे भवति य ऽएवमेतद्वेद ॥ ५ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्त्याः पस्पृधिरे ते दण्डैर्द्धनुर्भिर्न्न व्व्यजयन्त ते हाऽविजयमाना ऊचुर्हन्त वाच्च्येव ब्रह्मन्न्विजिगीषामहै स यो नो वाचं व्व्याहृतां मिथुनेन नाऽनुनिक्रामात्स सर्व्वं पराजयाता ऽअथ सर्व्वमितरे जयानिति तथेति देवा ऽअब्रुवँस्ते देवा ऽइन्द्रमब्रुवन्न्व्याहरेति ॥ ६ ॥ स ऽइन्द्रोऽब्रवीत् । एको ममेत्यथाऽस्माकमेकेऽतीतरेऽब्रुवँस्तदु तन्न्मिथुनमेवाऽविन्दन्न्मिथुनᳫं ह्येकश्चैका च ॥ ७ ॥ द्वौ ममेतीन्द्रोऽब्रवीत् । अथाऽस्माकं द्वे ऽइतीतरे ऽब्रुवँस्तदु तन्न्मिथुनमेवाऽविन्दन्न्मिथुनᳫं हि द्वौ च द्वे च ॥ ८ ॥ त्रयो ममेतीन्द्रोऽब्रवीत् । अथाऽस्माकं तिस्र ऽइतीतरेऽब्रुवँस्तदु तन्न्मिथुनमेवाऽविन्दन्न्मिथुनᳫं हि त्रयश्च तिस्रश्च ॥ ९ ॥ चत्त्वारो ममेतीन्द्रोऽब्रवीत् । अथाऽस्माकं चतस्र ऽइतीतरेऽब्रुवँस्तदु तन्न्मिथुनमेवाऽविन्दन्न्मिथुनᳫं हि चत्त्वारश्च चतस्रश्च ॥ १० ॥ पञ्च ममेतीन्द्रोऽब्रवीत् । तत

ऽइतरे मिथुनं नाऽविन्दन्नो ह्यत ऽऊर्द्धं मिथुनमस्ति पञ्च पञ्चेति ह्येवैतदुभयं भवति ततोऽसुराः सर्व्वं पराजयन्त सर्व्वस्माद्देवा ऽअसुरानजयन्त्सर्व्वस्मात्सपत्नानसुरान्निरभजन् ॥ ११ ॥ तस्मात्प्रथमे प्प्रयाज ऽइष्ट्वे ब्रूयात् । एको ममेत्येका तस्य यमहं द्वेष्मीति यद्यु न द्विष्याद्योऽस्मान्द्वेष्टि यं च वयं द्विष्म ऽइति ब्रूयात् ॥ १२ ॥ द्वौ ममेति द्वितीये प्प्रयाजे । द्वे तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्मऽइति ॥ १३ ॥ त्रयो ममेति तृतीये प्प्रयाजे । तिस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म ऽइति ॥ १४ ॥ चत्त्वारो ममेति चतुर्थे प्प्रयाजे । चतस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म ऽइति ॥ १५ ॥ पञ्च ममेति पञ्चमे प्प्रयाजे । न तस्य किं चन योऽस्मान्द्वेष्टि यं च वयं द्विष्म ऽइति स पञ्च पञ्चेत्त्येव भवन्नपरा भवति तथाऽस्य सर्व्वं संव्वृङ्क्ते सर्व्वस्मात्सपत्नान्निर्भजति य ऽएवमेतद्वेद ॥ १६ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



ऋतवो ह वै देवेषु यज्ञे भागमीषिरे । आ नो यज्ञे भजत मा नो यज्ञादन्तर्गतास्त्वेव नोऽपि यज्ञे भाग ऽइति ॥ १ ॥ तद्वै देवा न जज्ञुः । त ऽऋतवो देवेष्वजानत्स्वसुरानुपाऽऽवर्त्तन्ताऽप्रियान्देवानां द्विषतो भ्रातृव्यान् ॥२॥ ते हैतामेधतुमेधां चक्रिरे । यामेषामेतामनु श्रृण्वन्ति

कृषन्तो ह स्मैव पूर्व्वे वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः शश्वद्धैभ्योऽकृष्टपच्च्या ऽएवौषधयः पेचिरे ॥ ३ ॥ तद्वै देवानामाग ऽआस । कनीय ऽइन्न्वतो द्विषन् द्विषतेऽरातीयति किम्वेतावन्नमात्रमुपजानीत यथेदमितोऽन्यथाऽसदिति ॥ ४ ॥ ते होचुः । ऋतूनेवाऽनुमन्त्रयामहाऽइति केनेति प्प्रथमानैवैनान्द्यज्ञे यजामेति ॥ ५ ॥ स हाऽग्निरुवाच । अथ यन्मां पुरा प्प्रथमं यजथ क्वाऽहं भवानीति न त्वामायतनाच्च्यावयाम ऽइति ते यदृतूनभिह्वयमानाऽअथाऽग्निमायतनान्नाऽच्च्यावयँस्तस्मादग्निरच्च्युतो न ह वाऽआयतनाच्च्यवते यस्मिन्नायतने भवति य ऽएवमेतमग्निमच्च्युतं वेद ॥ ६ ॥ ते देवा ऽअग्निमब्रुवन् । परेह्येनांस्त्वमेवाऽनुमन्त्रयस्वेति स हेत्त्याग्निरुवाचर्त्तवोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविद ऽइति प्प्रथमानेव वो यज्ञे यक्ष्यन्तीति ॥ ७ ॥ त ऽऋतवोऽग्निमब्रुवन् । आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद ऽइति स ऽएषोऽग्निर्ऋतुष्वाभक्तः समिधो ऽअग्ने तनूनपादग्न ऽइडो ऽअग्ने बर्हिरग्ने स्वाहाऽग्निमित्त्याभक्तो ह वै तस्यां पुण्ण्यकृत्त्यायां भवति यामस्य समानो ब्रुवाणः करोत्त्यग्निमते ह वा ऽअस्मा ऽअग्निमन्त ऽऋतव ऽओषधीः पचन्तीदछ सर्व्वं य ऽएवमेतमग्निमृतुष्वाभक्तं वेद ॥ ८ ॥ तदाहुः । यदुत्तमान्प्रयाजानावाहयन्त्यथ कस्मादेनान्प्रथमान्न्यजन्तीत्त्युत्तमान्ह्येनान्न्यज्ञेऽवाकल्पयन्न्प्रथमाद्वो यजामेत्त्यब्रुवँस्तस्मादुत्तमानावाहयन्ति प्रथमान्न्य-

जन्ति ॥ ९ ॥ चतुर्थेन वै प्प्रयाजेन देवाः । यज्ञमाप्नुवँस्तं पञ्चमेन समस्थापयन्नथ यदुत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य स्वर्गमेव तेन लोकꣳ समाश्नुवत ॥ १० ॥ ते स्वर्गं लोकं यन्तः । असुररक्षसेभ्य ऽआसङ्गाद्विभयाञ्चक्रुस्तेऽग्निं पुरस्तादकुर्वत रक्षोहणꣳ रक्षसामपहन्तारमग्निं मद्ध्यतोऽकुर्वत रक्षोहणꣳ रक्षसामपहन्तारमग्निं पश्चादकुर्वत रक्षोहणꣳ रक्षसामपहन्तारꣳ ॥ ११ ॥ स यद्येनान्पुरस्तात् । असुररक्षसान्यासिसंक्षन्नग्निरेव तान्यपाऽहन्त्रक्षोहा रक्षसामपहन्ता यदि मद्ध्यत ऽआसिसंक्षन्नग्निरेव तान्यपाऽहन्त्रक्षोहा रक्षसामपहन्ता यदि पश्चादासिसंक्षन्नग्निरेव तान्यपाऽहन्त्रक्षोहा रक्षसामपहन्ताऽत एवꣳ सर्वतोऽग्निभिर्गुप्प्यमानाः स्वर्गं लोकꣳ समाश्नुवत ॥ १२ ॥ तथो ऽएवैष ऽएतत् । चतुर्थेनैव प्प्रयाजेन यज्ञमाप्नोति तं पञ्चमेन सꣳस्थापयत्यथ यदुत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य स्वर्गमेव तेन लोकꣳ समश्नुते ॥ १३ ॥ स यदाग्नेयमाज्यभागं यजति । अग्निमेवैतत्पुरस्तात्कुरुते रक्षोहणꣳ रक्षसामपहन्तारमथ यदाग्नेयः पुरोडाशो भवत्यग्निमेवैतन्मद्ध्यतः कुरुते रक्षोहणꣳ रक्षसामपहन्तारमथ यदग्निꣳ स्विष्टकृतं यजत्यग्निमेवैतत्पश्चात् कुरुते रक्षोहणꣳ रक्षसामपहन्तारꣳ ॥ १४ ॥ स यद्येनं पुरस्तात् । असुररक्षसान्यासिसंक्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि मद्ध्यत(१)ऽआसि-

(१) 'असुररक्षसानि' इति 'ग' पुस्तके ।

संक्षन्त्यग्निरेव तान्न्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि पश्चादा(१)सिसंक्षन्त्यग्निरेव तान्न्यपहन्ति रक्षोहा रक्षसामपहन्ता स ऽएवꣳ सर्वतोऽग्निभिर्गुप्प्यमानः स्वर्गं लोकꣳ समश्नुते ॥ १५ ॥ स यद्येनं पुरस्तात् । यज्ञस्याऽनुव्व्याहरेत्तं प्रति ब्रूयान्मुख्यामार्त्तिमारिष्यस्यन्धो वा बधिरो वा भविष्यसीत्त्येता वै मुख्या ऽआर्त्तयस्तथा हैव स्यात् ॥ १६ ॥ यदि मद्ध्यतो यज्ञस्याऽनुव्व्याहरेत् । तं प्रति ब्रूयादप्प्रजा ऽअपशुर्भविष्यसीति प्प्रजा वै पशवो मद्ध्यं तथा हैव स्यात् ॥ १७ ॥ यद्यन्ततो यज्ञस्याऽनुव्व्याहरेत् । तं प्रति ब्रूयादप्प्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात्तस्मादु ह नाऽनुव्व्याहारीव स्यादुत ह्येवंवित्परो भवति ॥ १८ ॥ संवत्सरꣳ ह वै प्प्रयाजैर्ज्जयं जयति । स ह त्वेवैनं जयति योऽस्य द्वाराणि वेद किꣳ हि स तैर्गृहैः कुर्य्याद्यानन्तरतो न व्व्यव विद्याद्यथा यथाऽस्य ते भवन्ति तस्य वसन्त ऽएव द्वारꣳ हेमन्तो द्वारं तं वा ऽएतꣳ संवत्सरꣳ स्वर्गं लोकं प्रपद्यते सर्वं वै संवत्सरः सर्वं वा ऽअक्षय्यमेतेनो हाऽस्याऽक्षय्यꣳ सुकृतं भवत्यक्षय्यो लोकः ॥ १९ ॥ तदाहुः । किं देवत्त्यान्यग्याज्ज्यानीति प्प्राजापत्त्यानीति ह ब्रूयादनिरुक्तो वै प्प्रजापतिरनिरुक्तान्न्याज्ज्यानि तानि हैतानि यजमानदेवत्त्यान्न्येव यजमानो ह्येव स्वे यज्ञे प्प्रजापतिरेतेन ह्युक्ता ऽऋत्विजस्तन्वते तं जनयन्ति ॥२०॥ स ऽआज्यस्योपस्तीर्य्य । द्विर्हविषोऽवदायाऽथोपरिष्टा-

(१) 'असुररक्षसानि' इति 'ग' पुस्तक एव दृश्यते ।

द्वाज्यस्याऽभिधारयति सैषाऽऽज्येन मिश्राहुतिर्हूयते यजमानेन हैवैषैतन्मिश्रा हूयते यदि ह वाऽ अपि दूरे सन्न्यजते यद्यन्तिके यथा हैवाऽन्ते सत ऽइष्टꣳ स्यादेवꣳ हैवैवं विदुष ऽइष्टं भवति यद्यु ह्याऽपि बह्विव पापं करोति नो हैव बहिर्द्धा यज्ञाद्भवति य ऽएवमेतद्वेद ॥ २१ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिका सङ्ख्या ॥ १२१ ॥



यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथन्न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम तद्वा ऽऋषीणामनुश्रुतमास ॥ १ ॥ यज्ञेन ह वै देवाः । इमां जितिं जिग्युर्य्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति तमन्वेष्टुं दध्रिरे ॥२॥ तेऽर्चन्तः श्राम्म्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति यदेषां जय्यमासर्षयश्च तेभ्यो देवा वैव प्ररोचयाञ्चक्रुः स्वयं वैव दध्रिरे प्रेत तदेष्यामो यतो देवाः स्वर्गं लोकꣳ समाश्नुवतेति ते किं प्ररोचते किं प्ररोचत ऽइति चेरुरेऽपुरो-

डाशमेव कूर्म्मं भूत्वा सर्प्पन्तं ते ह सर्व्वं ऽएव मेनिरे-
ऽयं वै यज्ञ ऽइति ॥ ३ ॥ ते होचुः । अश्विभ्यां तिष्ठ
सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स ससर्प्पैवाऽग्नये तिष्ठेति
ततस्तस्थावग्नये वा ऽअस्थादिति तमग्नावेव परिगृह्य सर्व्व-
हुतमजुहवुराहुतिर्हि देवानां तत ऽएभ्यो यज्ञः प्प्रारोचत
तमसृजन्त तमतन्न्वत सोऽयं परोऽवरं यज्ञोऽनूच्च्यते
पितैव पुत्राय ब्रह्मचारिणे ॥ ४ ॥ स वा ऽएभ्यस्तत्पुरो-
ऽदाशयत् । य ऽएभ्यो यज्ञं प्राऽरोचयत्तस्मात्पुरोदाशः
पुरोदाशो ह वै नामैतद्यत्पुरोडाश ऽइति स ऽएष ऽउभ-
यत्राऽच्च्युत ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥
स न पौर्ण्णमासः हविः । नामाऽवास्यमग्नीषोमीय ऽएव
पौर्ण्णमासः हविः सान्नाय्यमामावास्यं यज्ञ ऽएवैष ऽउभ-
त्राऽवक्लृप्तो नेद्यज्ञादयानीति न्न्वेव पुरस्तात्पौर्ण्णमासस्य
क्रियत ऽएवं वाऽमावास्यस्यैतन्नु तद्यस्मादत्र क्रियते ॥ ६ ॥
यद्यु ऽएनमुपधावेत् । इष्ट्या मा याजयेत्त्येतयैव याज-
येद्यत्कामा वा ऽएतमृषयोऽजुहवुः स ऽएभ्यः कामः
समर्द्ध्यत यत्कामो ह वा ऽएतेन यज्ञेन यजते सोऽस्मै
कामः समृद्ध्यते यस्यै वै कस्यै च देवतायै हविर्गृह्यतेऽग्नौ
वै तस्यै जुह्वत्यग्ना ऽउ चेद्धोष्यन्त्स्यात्किमन्न्यस्यै देवताया
ऽआदिशेत्तस्मादग्नय ऽएव ॥ ७ ॥ अग्निर्वै सर्वा देवताः ।
अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति तद्यथा सर्व्वा देवता
ऽउपधावेदेवं तत्तस्मादग्नय ऽएव ॥ ८ ॥ अग्निर्वै देवानाम-
द्धातमाम् । यं वा ऽअद्धातमां मन्न्येत तमुपधावेत्तस्मादग्नय

ऽएव ॥ ९ ॥ अग्निर्वै देवानां मृदुहृदयतमः । यं वै मृदुहृदयतमं मन्न्येत तमुपधावेत्तस्मादग्नय ऽएव ॥ १० ॥ अग्निर्वै देवानां नेदिष्ठम् । यं वै नेदिष्ठमुपसर्त्तव्व्यानां मन्न्येत तमुपधावेत्तस्मादग्नय ऽएव ॥ ११ ॥ स यद्दीष्टिं कुर्वीत । सप्तदश सामिधेनीरनुब्रूयादुपांशु देवतां यजति तद्दीष्टिरूपं मूर्द्धन्न्वत्यौ याज्ज्याऽनुवाक्ये स्यातां व्वार्त्रघ्नावाज्ज्यभागौ व्विराजौ संयाज्ज्ये ॥ १२ ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



त्वष्टुर्ह वै पुत्रः। त्रिशीर्षा षडक्ष ऽआस तस्य त्रीण्ण्येव मुखान्यासुस्तद्यदेवꣳ रूप ऽआस तस्माद्विश्वरूपो नाम ॥ १ ॥ तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्न्यस्मा ऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥ स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक ऽइव बभ्रुरिव हि सोमो राजा ॥ ३ ॥ अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत् क ऽइव व्वदत्यभिमाद्यन्निव हि सुरां पीत्त्वा व्वदति ॥ ४ ॥ अथ यदन्न्यस्मा ऽअशनायाऽऽस । ततस्तित्तिरिः समभवत्तस्मात्स व्विश्वरूपतम ऽइव सन्त्येव घृतस्तोका ऽइव त्वन्मधुस्तोका ऽइव त्वत्पर्ण्णेष्व्वाश्च्युतिता ऽएवꣳ रूपमिव हि स तेनाऽशनमावयत् ॥ ५ ॥ स त्वष्टा चुक्रोध । कुविन्न्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथाऽयꣳ सोमः

प्प्रसुत ऽएवमपेन्द्र ऽएवाऽऽस ॥ ६ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे । इदं वै मा सोमादन्तर्य्यन्तीति स यथा बलीयानबलीयस ऽएवमनुपहूत ऽएव यो द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिंꣳस सोऽस्य विष्वङ्ङेव प्प्राणेभ्यो दुद्राव मुखाद्धैवाऽस्य न दुद्रावाऽथ सर्वेभ्योऽन्न्येभ्यः प्प्राणेभ्योऽद्रवत्तदद्रुः सौत्रामणीतीष्टि-स्तस्यां तद्व्याख्यायते यथैनं देवा ऽअभिषज्ज्यन् ॥ ७ ॥ स त्वष्टा चुक्रोध । कुविन्न्मेऽनुपहूतः सोममवभक्षदिति स स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः परिशिष्ट ऽआस तं प्रवर्त्तयाञ्चकारेन्द्रशत्रुर्वर्द्धस्वेति सो-ऽग्निमेव प्राप्प्य सम्बभूवाऽन्तरैव सम्बभूवेत्त्यु हैक ऽआहुः सोऽग्नीषोमावेवाऽभिसम्बभूव सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यꣳ सर्वाꣳ श्रीꣳ ॥ ८ ॥ स यद्वर्त्तमानः सम-भवत् । तस्माद्वृत्रोऽथ यदपात्समभवत्तस्मादहिस्तं दनुश्च दनायूश्च मातेव च पितेव च परिजगृहतुस्तस्मा-द्दानव ऽइत्त्याहुः ॥ ९ ॥ अथ यदब्रवीदिन्द्रशत्रुर्वर्द्धस्वेति । तस्मादु हैनमिन्द्र ऽएव जघानाऽथ यद्ध शश्वदवक्ष्य-दिन्द्रस्य शत्रुर्वर्द्धस्वेति शश्वदु ह स ऽएवेन्द्रमहनिष्यत् ॥ १० ॥ अथ यदब्रवीद्वर्द्धस्वेति । तस्मादु ह स्मेषुमात्र मेव तिर्य्यङ् वर्द्धत ऽइषुमात्रं प्राङ्क्सोऽवैवाऽवरꣳ समुद्रं दधावपूर्वꣳ स यावत्स ऽआस सहैव तावदन्नाद ऽआस ॥ ११ ॥ तस्मै ह स्म पूर्वाह्णे देवाः । अशन-मभिहरन्ति मध्यन्दिने मनुष्या ऽअपराह्णे पितरः ॥ १२ ॥

स वा ऽइन्द्रस्तथैव नुत्तश्चरन् । अग्नीषोमा ऽउपमन्त्रयाञ्चक्रेऽग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि न युवयोरेष किञ्चन कं म ऽइमं दस्युं वर्द्धयथ ऽउप माऽऽवर्त्तेथामिति ॥ १३ ॥ तौ होचतुः । किमावयोस्ततः स्यादिति ताभ्यामेतमग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत्तस्मादग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति ॥ १४ ॥ तावेनमुपाऽऽववृततुः । तावनु सर्वे देवाः प्रेयुः सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यꣳ सर्वा श्रीस्तेनेष्ट्वेन्द्र ऽएतदभवद्यदिदमिन्द्र ऽएष ऽउ पौर्णमासस्य बन्धुः स यो हैवं विद्वान् पौर्णमासेन यजत ऽएताꣳ हैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो भवति ॥ १५ ॥ तद्वेव खलु हतो वृत्रः । स यथा दृतिर्निष्पीत[1] ऽएवꣳ संब्लीनः शिश्ये यथा निर्ध्वूतसक्तुर्भस्त्रैवꣳ संब्लीनः शिश्ये तमिन्द्रोऽभ्यादुद्राव हनिष्यन् ॥ १६ ॥ स होवाच । मा नु मे प्रहार्षीस्त्वं वै तदेतर्ह्यसि यदहं व्व्येव मा कुरु माऽमुयाऽभूवमिति स वै मेऽन्नमेऽधीति तथेति तं द्वेधाऽन्ववभिनत्तस्य यत्सौम्म्यं न्यक्तमास तं चन्द्रमसं चकाराऽथ यदस्याऽऽसुर्य्यमास तेनेमाः प्रजा ऽउदरेणाऽविद्ध्यत् तस्मादाहुर्व्वृत्र ऽएव तर्ह्यन्नाद ऽआसीद्व्वृत्र ऽएतर्हीतीदꣳ हि यदसावापूर्य्यतेऽस्मादेवैतल्लोकादाप्प्यायतेऽथ यदिमाः प्रजा ऽअशनमिच्छन्तेऽस्मा ऽएवैतद् व्वृत्रायोदराय बलिꣳ हरन्ति स यो हैवमेतं व्वृत्र-

(१) निष्पीतो दृतिरिव चर्मनिर्मितपात्रमिव ।

मन्नादं व्वेदान्नादो हैव भवति ॥ १७ ॥ ता ऽउ हैता देवता ऽऊचुः । या ऽइमा ऽअग्नीषोमावन्न्वाजग्मुरग्नीषोमौ युवं वै नो भूयिष्ठभाजौ स्थो ययोर्व्वामिदं युवयोरस्मानन्न्वाभजतमिति ॥ १८ ॥ तौ होचतुः । किमावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्न्निर्व्वपांस्तद्वां पुरस्तादाज्ज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्न्निर्व्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तन्न सौम्म्येऽध्वरे न पशौ यस्यै कस्यै च देवतायै हविर्न्निर्व्वपानिति ह्यब्रुवन् ॥ १९ ॥ स हाऽग्निरुवाच । मय्येव वः सर्व्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मादग्नौ सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुरग्निः सर्व्वा देवता ऽइति ॥ २० ॥ अथ ह सोम ऽउवाच । मामेव वः सर्व्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मात्सोमः सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्व्वा देवता ऽइति ॥ २१ ॥ अथ यदिन्द्रे सर्व्वे देवास्तस्थानाः । तस्मादाहुरिन्द्रः सर्व्वा देवता ऽइन्द्रश्रेष्ठा देवा ऽइत्त्येतद्ध वै देवास्त्रेधैकदेवत्त्या ऽअभवन्त्स यो हैव मेतद्वेदैकधा हैव स्वानाᳯश्रेष्ठो भवति ॥ २२ ॥ द्वयं वा ऽइदं न तृतीयमस्ति । आर्द्रञ्चैव शुष्कञ्च यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्म्यमथ यदिदं द्वयमेवाऽथ किमेतावत्क्रियत ऽइत्त्यग्नीषोमयोरेवाऽऽज्ज्यभागावग्नीषोमयोरुपाᳯशुयाजोऽग्नीषोमयोः पुरोडाशो यदेत ऽएकतमेनैवेदᳯ सर्व्वमाप्नोत्त्यथ किमेतावत्क्रियत ऽइत्त्यग्नीषोमयोर्हैवैतावती व्विभूतिः प्प्रजातिः

॥२३॥ सूर्य्य ऽएवाऽऽग्नेयश्चंद्रमाः । सौम्म्योऽहरेवाऽऽग्नेयꣳ रात्रिः सौम्म्या य ऽएवाऽऽपूर्य्यतेऽर्द्धमासः स ऽआग्नेयो यो-ऽपक्षीयते स सौम्म्यः ॥ २४ ॥ आज्यभागाभ्यामेव । सूर्य्याचन्द्रमसावाप्नोत्त्युपाꣳशुयाजेनैवाऽहोरात्रे ऽआप्नोति पुरोडाशेनैवाऽर्द्धमासावाऽऽप्नोतीत्त्यु हैक ऽआहुः ॥ २५ ॥ तदु होवाचाऽऽसुरिः । आज्यभागाभ्यामेवाऽतो यतमे वा यतमे वा द्वे ऽआप्नोत्त्युपाꣳशुयाजेनैवाऽतो *यतमे वा यतमे वा द्वे ऽआप्नोति पुरोडाशेनैवाऽतो यतमे वा यतमे वा द्वे ऽआप्नोति सर्व्वं म ऽआप्तमसत्त्सर्व्वं जितꣳ सर्व्वेण व्वृत्रꣳ हनानि सर्व्वेण द्विषन्तं भ्रातृव्व्यꣳ हनानीति तस्माद्वा ऽएतावत्क्रियत ऽइति ॥ २६ ॥ तदाहुः । किमिदं जामि क्रियतेऽग्नीषोमयोरेवाऽऽज्ज्यस्याऽग्नीषोम-योः पुरोडाशस्य यदनन्तर्हितं तेन जामीत्त्यनेन ह त्त्वेवा-ऽजाम्म्याज्ज्यस्येतरं पुरोडाशस्येतरं तदन्न्यदिवेतरमन्न्यदिवे-तरं भवत्यृचमनूच्च्य जुषाणेन यजत्यृचमनूच्च्यर्च्चा यजति तदन्न्यदिवेतरमन्न्यदिवेतरं भवत्त्यनेन ह त्त्वेवा-ऽजाम्म्युपाꣳश्वाज्ज्यस्य यजत्त्युच्चैः पुरोडाशस्य स यदु-पाꣳशु तत्प्राजापत्त्यꣳ रूपं तस्मात्तस्याऽनुष्टुभमनुवा-क्यामन्वाह व्वाग्घ्यनुष्टुब्वाग्घि प्प्रजापतिः ॥ २७ ॥ एतेन वै देवाः । उपाꣳशुयाजेन यं यमसुराणामकामयन्त तमु-पत्त्सर्य्य व्वज्ज्रेण वषट्कारेणाऽघ्नꣳस्तथो ऽएवैष ऽएतेनोपा-

* 'ग' पुस्तके-यतमे० द्वे० इत्यस्य स्थाने-'अहोरात्रेऽआप्नोति पुरोडाशेनैवाऽतोऽर्धमासौ' इति पाठो लभ्यते ।

ꣳशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्व्यमुपत्त्सर्ज्य व्वज्ज्रेण व्वषट्कारेण हन्ति तस्मादुपाꣳशुयाजं यजति ॥ २८ ॥ स वा ऽऋचमनूच्च्य जुषाणेन यजति । तदुन्न्विमा ऽअन्न्यतरतोदन्ताः प्प्रजाः प्प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्तोऽन्न्यतरतो ह्येतदस्थि करोति ॥ २९ ॥ अथर्च्चमनूच्च्यर्च्चा यजति । तदुन्न्विमा ऽउभयतोदन्ताः प्प्रजाः प्प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्त ऽउभयतो ह्येतदस्थि करोत्त्येता वा ऽइमा द्वय्यः प्प्रजा ऽअन्न्यतरतोदन्ताश्च्चैवोभयतोदन्ताश्च्च स यो हैवं व्विद्वानग्नीषोमयोः प्प्रजातिं यजति बहुर्हैव प्प्रजया पशुभिर्भवति ॥ ३० ॥ स वै पौर्ण्णमासेनोपवत्त्स्यन् । न सत्राऽसुहित ऽइव स्यात्तेनेदमुदरमसुर्य्यं ब्बिलनात्त्याहुतिभिः प्रातर्द्दैवमेष ऽउ पौर्ण्णमासस्योपचारः ॥ ३१ ॥ स वै सम्प्रत्त्येवोपवसेत् । सम्प्रति व्वृत्रꣳ हनानि सम्प्रति द्विषन्तं भ्रातृव्व्यꣳ हनानीति ॥ ३२ ॥ स वा ऽउत्तरामेवोपवसेत् । समिव वा ऽएष क्रमते यः सम्प्रत्त्युपवसत्त्यनद्धा वै सङ्क्रान्तयोर्यदीतरो वेतरमभिभवतीतरो वेतरमथ य ऽउत्तरामुपवसति यथा पराश्चमावृत्तꣳ सम्पिꣳष्याद्प्रत्त्यालभमानꣳ सोऽन्यतो घात्त्येव स्यादेवं तद्य ऽउत्तरामुपवसति ॥ ३३ ॥ स वै सम्प्रत्त्येवोपवसेत् । यथा वा ऽअन्न्यस्य हतꣳ सम्पिꣳष्यादेवं तद्य ऽउत्तरामुपवसति सोऽन्न्यस्यैव कृताऽनुकरोऽन्न्यस्योपाऽव्रसायी भवति तस्मादु सम्प्रत्त्येवोपवसेत् ॥ ३४ ॥ प्प्रजापतेर्ह वै प्प्रजाः । ससृजानस्य

पर्वाणि विसस्रꣳसुः स वै संवत्सर ऽएव प्रजापतिस्तस्यैतानि पर्वाण्यहोरात्रयोः सन्धी पौर्णमासी चाऽमावास्या चर्त्तुमुखानि ॥ ३५ ॥ स विस्रस्तैः पर्वभिः । न शशाक सꣳहातुं तमेतैर्हविर्यज्ञैर्देवा ऽअभिषज्यन्नग्निहोत्रेणैवाऽहोरात्रयोः सन्धी तत्पर्वाऽभिषज्यँस्तत्समदधुः पौर्णमासेन चैवाऽमावास्येन च पौर्णमासीं चाऽमावास्यां च तत्पर्वाऽभिषज्यँस्तत्समदधुश्चातुर्म्मास्यैरेवर्त्तुमुखानि तत्पर्वाऽभिषज्यँस्तत्समदधुः ॥ ३६ ॥ स सꣳहितैः पर्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यꣳ स यो हैवं विद्वान्त्सम्प्रत्युपवसति सम्प्रति हैव प्रजापतेः पर्व भिषज्यत्त्यवति हैनं प्रजापतिः स ऽएवमेवाऽन्नादो भवति य ऽएवं विद्वान्त्सम्प्रत्युपवसति तस्मादु सम्प्रत्येवोपवसेत् ॥ ३७ ॥ चक्षुषी ह वा ऽएते यज्ञस्य यदाज्यभागौ । तस्मात्पुरस्ताज्जुहोति पुरस्ताद्धीमे चक्षुषी तत्पुरस्ताद्देवेतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी ॥ ३८ ॥ उत्तरार्द्धपूर्वार्द्धे हैके । आग्नेयमाज्यभागं जुह्वति दक्षिणार्द्धपूर्वार्द्धे सौम्यमाज्यभागमेतत्पुरस्ताच्चक्षुषी यथ ऽइति वदन्तस्तदु तदाऽविज्ञान्यमिव हवीꣳषि ह वा ऽआत्मा यज्ञस्य स यदेव पुरस्ताद्धविषां जुहोति तत्पुरस्ताच्चक्षुषी दधाति यत्रो ऽएव समिद्धतमं मन्येत तदाहुतीर्ज्जुहुयात्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ३९ ॥ स वा ऽऋचमनूच्य जुषाणेन यजति । तस्मादिमे ऽअस्थन्त्सत्यनस्थिके चक्षुषी ऽआश्लिष्टे ऽअथ यदृचमनूच्य-

र्चा षजेदस्थि हैव कुर्य्यान्न चक्षुः ॥ ४० ॥ ते वा ऽएते । अग्नीषोमयोरेव रूपमन्न्वायत्ते षच्छुक्लं तदाग्नेयं षत् कृष्णं तत्सौम्म्यं षदि वेतरथा षदेव कृष्णं तदाग्नेयं षच्छुक्लं तत्सौम्म्यं षदेव व्वीक्षते तदाग्नेयꣳ रूपꣳ शुष्के ऽइव हि व्वीक्षमाणस्याऽक्षिणी भवतः शुष्कमिव ह्याग्नेयं षदेव स्वपिति तत्सौम्म्यꣳ रूपमार्द्रे ऽइव हि सुषुपुषोऽक्षिणी भवत ऽआर्द्र ऽइव हि सोम ऽआजरसꣳ ह वा ऽअस्मिँ-ल्लोके चक्षुष्मान्भवति सचक्षुरमुष्मिँल्लोके सम्भवति ष ऽएवमेतौ चक्षुषी ऽआज्यभागौ व्वेद ॥ ४१ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



इन्द्रो ह षत्र व्वृत्राय व्वज्रं प्रजहार । सोऽबलीयान्मन्न्यमानो नाऽस्तृषीतीव व्बिभ्यन्निलयांचक्रे स पराः[1] परावतो जगाम देवा ह वै व्विदांचक्रुर्हतो वै व्वृत्रोऽथेन्द्रो न्यलेष्टेति ॥ १ ॥ तमन्वेष्टुं दध्रिरे । अग्निर्देवतानाꣳ हिरण्यस्तूप ऽऋषीणां बृहतीच्छन्दसां तमग्निरनु व्विवेद तेनैताꣳ रात्रिꣳ सहाऽऽजगाम स वै देवानां व्वसुर्वीरो ह्येषाम् ॥ २ ॥ ते देवा ऽअब्रुवन् । अमा वै नोऽद्य व्वसुर्व्वसति षो नः प्प्राऽवात्सीदिति ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहाऽऽगताभ्याꣳ समानमोदनं पचेदजं वा तदुह मानुषꣳ हविर्देवानामेवमाभ्यामेतत्समानꣳ हवि-

(१) 'पराः परावतो जगाम' अत्यन्तं विप्रकृष्टदेशं गतवानित्यर्थः ।

न्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशं तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ३ ॥ स ऽइन्द्रोऽब्रवीत् । यत्र वै व्वृत्राय वज्रं प्राऽहरं तद्व्यथसमये स कृश ऽइवाऽस्मि न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तथेति देवा ऽअब्रुवन् ॥ ४ ॥ ते देवा ऽअब्रुवन् । न वा ऽइममन्यत्सोमाद्धिनुयात्सोममेवाऽस्मै सम्भरामेति तस्मै सोमꣳ समभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाꣳ स यत्रैष ऽएताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स ऽइहैवाऽऽपश्चौषधीश्च प्प्रविशति स वै देवानां वस्वन्नꣳ ह्येषां तद्यदेष ऽएताꣳ रात्रिमिहाऽमा वसति तस्मादमावास्या नाम ॥५॥ तं गोभिरनुविष्याप्प्य समभरन् । यदोषधीराश्नंस्तदोषधिभ्यो यदपोऽपिबंस्तदद्भ्यस्तमेवꣳ सम्भृत्यातच्य तीव्रीकृत्य तमस्मै प्प्राऽयच्छन् ॥६॥ सोऽब्रवीत् । धिनोत्येव मेदं नेव तु मयि श्रयते यथेदं मयि श्रयातै तथोपजानीतेति तꣳ श्रृतेनैवाऽश्रयन् ॥ ७ ॥ तद्वा ऽएतत् । समानमेव सत् पय ऽएव सदिन्द्रस्यैव सत्तत्पुनर्न्नानेवाऽऽचक्षते यदब्रवीद्धिनोति मेति तस्माद्दध्यथ यदेनꣳ श्रृतेनैवाऽऽश्रयंस्तस्माच्छ्रृतꣳ ॥८॥ स यथाऽꣳशुराप्प्यायेत । एवमाप्प्यायताऽप पाप्प्मानꣳ हरिमाणमह तैष ऽउ ऽआमावास्यस्य बन्धुꣳ स यो हैवं विद्वान्त्सन्नयत्त्येवꣳ हैव प्प्रजया पशुभिराप्प्यायतेऽप पाप्प्मानꣳ हते तस्माद्वै सन्नयेत् ॥ ९ ॥ तदाहुः । नाऽसोमयाजी सन्नयेत्सोमाहुतिर्व्वा ऽएषा साऽनवरुद्धाऽसोमयाजिनस्तस्मान्नाऽसोमयाजी सन्नयेदिति ॥१०॥

तदु समेव नयेत् । नन्वत्राऽन्तरेण शुश्रुम सोमेन नु मा याजयताऽथ म ऽएतदाप्यायनꣳ सम्भरिष्यथेत्यब्रवीदिति न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तस्मा ऽएतदाप्यायनꣳ समभरँस्तस्मादप्यसोमयाजी समेव नयेत् ॥ ११ ॥ वार्त्रघ्नं वै पौर्णमासम् । इन्द्रो ह्येतेन वृत्रमहन्नथैतदेव वृत्रहत्यं यदामावास्यं वृत्रꣳ ह्यस्मा ऽएतज्जघ्नुष ऽआप्यायनमकुर्वन् ॥ १२ ॥ तद्वा ऽएतदेव वार्त्रघ्नम् । यत्पौर्णमासमथैष ऽएव वृत्रो यच्चन्द्रमाः स यत्रैष ऽएताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदेनमेतेन सर्वꣳ हन्ति नाऽस्य किं चन परिशिनष्टि सर्वꣳ ह वै पाप्मानꣳ हन्ति न पाप्मनः किं चन परिशिनष्टि य ऽएवमेतद्वेद ॥ १३ ॥ तद्धैके । दृष्ट्वोपवसन्ति श्वो नोदेतेत्यदो हैव देवानामविक्षीणमन्नं भवत्यथैभ्यो वयमित ऽउपप्रदास्याम ऽइति तद्धि समृद्धं यदक्षीण ऽएव पूर्वस्मिन्नन्नेऽथाऽपरमन्नमागच्छति स ह बह्वन्न ऽएव भवत्यसोमयाजी तु क्षीरयाज्यदो हैव सोमो राजा भवति ॥ १४ ॥ अथ यथैव पुरा । केवलीरोषधीरश्नन्ति केवलीरपः पिबन्ति ताः केवलमेव पयो दुह्र ऽएवं तदेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स ऽइहाऽऽपश्चौषधीश्च प्रविशति तदेनमद्भ्य ऽओषधिभ्यः सम्भृत्याहुतिभ्योऽधि जनयति स ऽएष ऽआहुतिभ्यो जातः पश्चाद्ददृशे ॥ १५ ॥ तद्वा ऽएतत् । अविक्षीणमेव देवानामन्नाद्यं परिप्लवतेऽविक्षीणꣳ ह वा

ऽअस्याऽस्मिँल्लोकेऽन्नं भवत्त्यक्षय्यममुष्मिँल्लोके सुकृतं य ऽएवमेतद्वेद ॥ १६ ॥ तद्वा ऽएताᳬं रात्रिम् । देवेभ्योऽन्नाद्यं प्रच्च्यवते तदिमं लोकमागच्छति ते देवा ऽअकामयन्त कथं नु न ऽइदं पुनरागच्छेत्कथं न ऽइदं परागेव न प्प्रणश्ये-दिति तद्य ऽएव सन्नयन्ति तेष्वाशᳬसन्त ऽएत ऽएव नः सम्भृत्य प्प्रदास्यन्तीत्त्याह वा ऽअस्मिन्त्स्वाश्च निष्ट्य्याश्च्च शᳬसन्ते य ऽएवमेतद्वेद यो वै परमतां गच्छति तस्मि-न्नाऽशᳬसन्ते ॥ १७ ॥ तद्वा ऽएष ऽएवेन्द्रः । य ऽएष तप-त्यथैष ऽएव व्वृत्रो यच्चन्द्रमाः सोऽस्यैष भ्रातृव्व्यजन्न्मेव तस्माद्यद्यपि पुरा व्विदूरमिवोदितोऽथैनमेताᳬं रात्रिमुपैव न्न्याप्प्लवते सोऽस्य व्व्यात्तमापद्यते ॥ १८ ॥ तं ग्रसित्त्वो-देति । स न पुरस्तान्न पश्च्चाद्ददृशे ग्रसते ह वै द्विषन्तं भ्रातृव्व्यमयमेवाऽस्ति नाऽस्य सपत्त्नाः सन्तीत्त्याहुर्य्य ऽएवमे-तद्वेद ॥ १९ ॥ तं निर्द्धीय निरस्यति । स ऽएष धीतः पश्च्चाद्ददृशे स पुनराप्प्यायते स ऽएतस्यैवाऽन्नाद्याय पुनरा-प्प्यायते यदि ह वा ऽअस्य द्विषन्भ्रातृव्व्यो व्वणिज्ज्यया वा केनचिद्वा संभवत्त्येतस्य हैवाऽन्नाद्याय पुनः सम्भवति य ऽएवमेतद्वेद ॥ २० ॥ तद्धैके । महेन्द्रायेति कुर्व्वन्तीन्द्रो वा ऽएष पुरा व्वृत्रस्य वधादथ व्वृत्रᳬ हत्त्वा यथा महा-राजो व्विजिग्यान ऽएवं महेन्द्रोऽभवत्तस्मान्न्महेन्द्रायेति तद्विन्द्रायेत्त्येव कुर्य्यादिन्द्रो वा ऽएष पुरा व्वृत्रस्य वधा-दिन्द्रो व्वृत्रं जघ्निवाँस्तस्माद्विन्द्रायेत्त्येव कुर्य्यात् ॥ २१ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

स वै पर्ण्णशाखया वत्सानपाकरोति । तद्यत्पर्ण्णशाखया वत्सानपाकरोति यत्र वै गायत्री सोममच्छाऽपतत्तदस्या ऽआहरन्त्या ऽअपा ‡ ऽदस्ताभ्यायत्त्य पर्ण्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्त्वा पर्ण्णोऽभवत्तस्मात्पर्ण्णो नाम तद्यदेवाऽत्र सोमस्य न्यक्तं तदिहाऽप्प्यसदिति तस्मात्पर्ण्णशाखया वत्सानपाकरोति ॥ १ ॥ तमाच्छिनत्ति । 'इषे[1] त्त्वोर्ज्जेत्त्वे'ति ठवृष्ट्यै तदाह यदाहेषे त्त्वेत्यूर्ज्जे त्त्वेति यो ठवृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ २ ॥ अथ मातृभिर्वत्सान्त्समवार्ज्जन्ति । स वत्सꣳ शाखयोपस्पृशति 'वायव[2] स्थेत्त्य'यं वै वायुर्योऽयं पवतऽएष वा ऽइदꣳ सर्वं प्रप्प्याययति यदिदं किं च वर्षत्त्येष वा ऽएतासां प्रप्प्याययिता तस्मादाह वायव स्थे'त्त्युपायव[3] स्थेत्त्यु' हैक ऽआहुरुप हि द्वितीयोऽवतीति तदु तथा न ब्रूयात् ॥ ३ ॥ अथ मातॄणामेकाꣳ शाखयोपस्पृशति । वत्सेन ठव्याकृत्त्य 'देवो[4] वꣳ सविता प्प्राऽर्प्पयत्त्वि'ति सविता वै देवानां प्रसविता सवितृप्प्रसूता यज्ञꣳ सम्भरानिति तस्मादाह देवो वꣳ सविता प्प्राऽर्प्पयत्त्विति ॥ ४ ॥ 'श्रेष्ठतमाय[5] कर्म्मण' ऽइति । यज्ञो वै श्रेष्ठतमं कर्म्म यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्म्मण ऽइति ॥ ५ ॥ 'आप्प्यायद्ध्वमघ्न्या[6] ऽइन्द्राय भागमि'ति । तद्यथैवाऽदो देवतायै हविर्ग्गृह्णन्नादिशत्त्येवमेवैतद्देवताया

‡ 'अपाधस्ताभ्या' इति माधवसम्मतः । वस्तुतस्तु-'अपादस्ता' अप-अदस्तम् अनुपक्षीणमित्येव साधु प्रतिभाति, इति ( तै० ब्रा० ३,२,३,१२ ) द्रष्टव्यम् ।

( १ ) शु० सं० अ० १ क० १ । (२) शु० सं० अ० १ क० १ । (३) तै० सं० १.१.१। (४) शु० सं० अ० १ क० १ । (५) शु० सं० अ० १ क० १ । (६) शु० सं० अ० १ क० १ ।

ऽआदिशति यदाहाऽऽप्यायद्ध्वमघ्न्या ऽइन्द्राय भागमिति ॥६॥ 'प्रजावतीरनमीवा ऽअयक्ष्मा' ऽइति । नाऽत्र तिरोहितमिवाऽस्ति 'मा वः स्तेन ऽईशत माऽघशꣳस' ऽइति मा वो नाष्ट्रा रक्षाꣳसीशतेत्त्येवैतदाह 'ध्रुवा ऽअस्मिन्गोपतौ स्यात बह्वी'रित्त्यनपक्रमिण्ण्योऽस्मिन्यजमाने बह्व्यः स्यातेत्त्येवैतदाह ॥ ७ ॥ अथाऽऽहवनीयागारस्य वा पुरस्तात् । गार्हपत्त्यागारस्य वा शाखामुपगूहति 'यजमानस्य पशून्पाही'ति तद् ब्रह्मणैवैतद्यजमानस्य पशून्परिददाति गुप्त्यै ॥ ८ ॥ तस्यां पवित्रं करोति । 'वसोः पवित्रमसी'ति यज्ञो वै वसुस्तस्मादाह वसोः पवित्रमसीति ॥ ९ ॥ अथ यवाग्वैताꣳ* रात्रिमग्निहोत्रं जुहोति । आदिष्टं वा ऽएतद्देवतायै हविर्भवति यत्पयः स यत्पयसा जुहुयाद्यथाऽन्न्यस्यै देवतायै हविर्गृहीतं तदन्न्यस्यै जुहुयादेवं तत्तस्माद्यवाग्वैताꣳ रात्रिमग्निहोत्रं जुहोति जुह्वत्त्यग्निहोत्रमुपक्लृप्तोखा भवत्त्यथाऽऽहोपसृष्टां प्रब्रूतादिति यदा प्राऽऽहोपसृष्टेति ॥ १० ॥ अथोखामादत्ते । 'द्यौरसि पृथिव्व्यसी'त्त्युपस्तौत्त्येवैनामेतन्महयत्त्येव यदाह द्यौरसि पृथिव्व्यसीति 'मातरिश्वनो घर्म्मोऽसी'ति यज्ञमेवैतत्करोति यथा घर्म्मं प्रव्वृञ्ज्यादेवं प्रव्वृणक्ति 'विश्वधा ऽअसि परमेण धाम्ना दृꣳहस्व मा ह्वा'रिति दृꣳहत्त्येवैनामेतदशिथिलां

(१) शु० सं० अ० १ क० १। (२) शु० सं० अ० १ क० १। (३) शु० सं० अ० १ क० १। (४) शु० सं० अ० १ क० १। (५) शु० सं० अ० १ क० २। (६) शु० सं० अ० १ क० २। (७) शु० सं० अ० १ क० २। (८) शु० सं० अ० १ क० २।

* तण्डुलानां शिथिलः पाको यवागूरित्युच्यते ।

करोति 'मा ते यज्ञपतिर्ह्वार्षीदि'ति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते ॥ ११ ॥ अथ पवित्रं निदधाति । तद्वै प्राङ् निदध्यात्प्राची हि देवानां दिगथो ऽउदगुदीची हि मनुष्याणां दिगयं वै पवित्रं योऽयं पवते सोऽयमिमाँल्लोकाँस्तिर्य्यङ्ङनु पवते तस्मादुदङ् निदध्यात् ॥ १२ ॥ तद्यथैवाऽदः । सोमꣳ राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयत्युदीचीनदशं वै तत्पवित्रं भवति येन तत्सोमꣳ राजानꣳ सम्पावयन्ति तस्मादुदङ् निदध्यात् ॥ १३ ॥ तन्निदधाति । 'वसोः पवित्रमसी'ति यज्ञो वै वसुस्तस्मादाह वसोः पवित्रमसीति 'शतधारꣳ सहस्रधारमि'त्युपस्तौत्येवैनदेतन्महयत्येव यदाह शतधारꣳ सहस्रधारमिति ॥ १४ ॥ अथ वाचंयमो भवति आ तिसृणां दोग्धोर्वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवा ऽइति ॥ १५ ॥ तदानीयमानमभिमन्त्रयते । 'देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वे'ति तद्यथैवाऽदः सोमꣳ राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयति ॥ १६ ॥ अथाऽऽह 'कामधुक्ष' ऽइति । अमूमिति 'सा विश्वायु' रित्यथ द्वितीयां पृच्छति कामधुक्ष ऽइत्यमूमिति 'सा विश्वकर्म्मे'त्यथ तृतीयां पृच्छति कामधुक्ष ऽइत्यमूमिति 'सा विश्वधाया' ऽइति तद्यत्पृच्छति वीर्य्याण्येवाऽऽस्वेतद्द-

---

(१) शु० सं० अ० १ क० २। (२) शु० सं० अ० १ क० ३। (३) शु० सं० अ० १ क० ३। (४) शु० सं० अ० १ क० ३। (५) शु० सं० अ० १ क० ३। (६) शु० सं० अ० १ क० ४। (७) शु० सं० अ० १ क० ४। (८) शु० सं० अ० १ क० ४।

धाति तिस्रो दोग्धि त्रयो वा ऽइमे लोका ऽएभ्य ऽएवैन-देतल्लोकेभ्यः सम्भरत्यथ कामं वदति ॥ १७ ॥ अथोत्तमां दोहयित्वा । येन दोहयति पात्रेण तस्मिन्नुदस्तोकमानीय पैल्यङ्ग्य* ‡ प्रत्यानयति यदत्र पयसोऽहायि तदिहाऽप्यसदिति रसस्यो चैव सर्वत्त्वायेदः हि यदा वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वाऽपः पीत्त्वा तत ऽएष रसः सम्भवति तस्मादु रसस्यो चैव सर्वत्त्वाय तदुद्वास्याऽऽतनक्ति तीव्री-करोत्येवैनदेतत्तस्मादुद्वास्याऽऽतनक्ति ॥ १८ ॥ स ऽआ-तनक्ति । 'इन्द्रस्य[1] त्वा भागः सोमेनाऽऽतनच्मी'ति तद्यथैवाऽदो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताया ऽआदिशति यदाहेन्द्रस्य त्वा भागमिति सोमेनाऽऽतन-च्मीति स्वदयत्येवैनदेतद्देवेभ्यः ॥ १९ ॥ अथोदकवतो-त्तानेन पात्रेणाऽपिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षाꣳसि स्यवमृशानितिवज्रो वा ऽआपस्तद्वज्रेणैवैतन्नाष्ट्रारक्षाꣳसि स्यतोऽपहन्ति तस्मादुदकवतोत्तानेन पात्रेणाऽपिदधाति ॥ २० ॥ सोऽपिदधाति । 'विष्णो[2] हव्यꣳ रक्षे'ति यज्ञो वै विष्णुस्तद्यज्ञायैवैतद्धविः परिददाति गुप्त्यै तस्मादाह विष्णो हव्यꣳ रक्षेति ॥ २१ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

* परिपूर्वाङ्गतेः रूपमिदम्; 'पल्यङ्ग्य' परितोगमयित्वा दोहपात्र उदकमासिच्येत्यर्थः ।

‡ ( ग ) पुस्तके 'पल्यङ्ग्य' इति पाठः ।

( १ ) शु० सं० अ० १ क० ४ । ( २ ) शु० सं० अ० १ क० ४ ।

ऋण᳖ं ह वै जायते योऽस्ति । स जायमान ऽएव देवेभ्य ऽऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥ १ ॥ स यदेव यजेत । तेन देवेभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेनान्यजते यदेभ्यो जुहोति ॥ २ ॥ अथ यदेवाऽनुब्रुवीत । तेनर्षिभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोत्यृषीणान्निधिगोप ऽइति ह्यनूचानमाहुः ॥ ३ ॥ अथ यदेव प्रजामिच्छेत । तेन पितृभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेषाᳬं सन्तताऽव्यवच्छिन्ना प्रजा भवति ॥ ४ ॥ अथ यदेव वासयेत । तेन मनुष्येभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेनान्वासयते यदेभ्योऽशनं ददाति स य ऽएतानि सर्वाणि करोति स कृतकर्म्मा तस्य सर्वमाप्तᳬं सर्वं जितᳬं ‡ ॥ ५ ॥ स येन देवेभ्य ऽऋणं जायते । तदेनाँस्तदवदयते यद्यजतेऽथ यदग्नौ जुहोति तदेनाँस्तदवदयते तस्माद्यत्किञ्चाऽग्नौ जुह्वति तदवदानं नाम ॥ ६ ॥ तद्वै चतुरवत्तं भवति । इदं वा ऽअनुवाक्याऽथ याज्याऽथ वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवत्येवᳬं हि देवता ऽअवदानान्यन्वायत्ताऽवदानानि वा देवता ऽअन्वायत्तान्यतिरिक्तᳬं ह तदवदानं यत्पञ्चमं कस्मा ऽउ हि तदवद्येत्तस्माच्चतुरवत्तं भवति ॥७॥ उतो पञ्चाऽवत्तमेव भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्यैषो पञ्चाऽवत्तस्य सम्पद्ध हुहैव प्रजया पशुभिर्भवति यस्यैवं विदुषः पञ्चाऽवत्तं क्रियत ऽएतद्ध

‡ 'ख' पुस्तके 'जितम्' इत्युपलभ्यते ।

ह्वेव प्रज्ञातं कौरुपाञ्चालं यच्चतुरवत्तं तस्माच्चतुरवत्तं भवति ॥ ८ ॥ स वै यावन्मात्रमिवैवाऽवद्येत् । मानुषꣳ ह कुर्य्याद्यन्महदवद्येद् व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यावन्मात्रमिवैवाऽवद्येत् ॥ ९ ॥ स ऽआज्यस्योपस्तीर्य्य । द्विर्हविषोऽवदायाऽथोपरिष्टादाज्यस्याऽभिधारयति द्वे वा ऽआहुती सोमाहुतिरेवाऽन्न्याज्ज्याहुतिरन्न्या तत ऽएषा केवली यत्सोमाहुतिरथैषाऽऽज्ज्याहुतिर्य्यद्धविर्य्यज्ञो यत्पशुस्तदाज्ज्यमेवैतत्करोति तस्मादुभयत ऽआज्यं भवत्येतद्वै जुष्टं देवानां यदाज्यं तज्जुष्टमेवैतद्देवेभ्यः करोति तस्मादुभयत ऽआज्यं भवति ॥ १० ॥ असौ वा ऽअनुवाक्येयं याज्या । ते ऽउभे योषे तयोर्म्मिथुनमस्ति वषट्कार ऽएव तद्वा ऽएष ऽएव वषट्कारो य ऽएष तपति स ऽउद्यन्नेवाऽमूमधिद्द्रवत्यस्तं यन्निमामधिद्रवति तदेतेन ऽवृषणेमां प्रजातिं प्रजायते यैनयोरियं प्रजातिः ॥ ११ ॥ सोऽनुवाक्यामनूच्य । याज्यामनुद्रुत्य पश्चाद्वषट् करोति पश्चाद्वै परीत्य ऽवृषा योषामधिद्द्रवति तदेने ऽउभे पुरस्तात्कृत्वा ऽवृषणा वषट् कारेणाऽधिद्रावयति तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १२ ॥ देवपात्रं वा ऽएष यद्वषट्कारः । तद्यथा पात्र ऽउद्धृत्य प्प्रयच्छेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथाऽधोभूमौ निदिग्धं तदमुया स्यादेवं तत्तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १३ ॥ तद्यथा योनौ रेतः सिञ्चेत् । एवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथा योनौ रेतः सिक्तं तदमुया स्यादेवं

तत्तस्मादु सह वैव व्वषट्कारेण जुहुयाद्व्वषट्कृते वा ॥ १४ ॥ असौ वा ऽअनुवाक्येयं याज्या। सा वै गायत्रीयं त्रिष्टुबसौ स वै गायत्रीमन्वाह तदमूमनुब्रुवन्नसौ ह्यनुवाक्येमामन्वाहेयꣳ हि गायत्री ॥ १५ ॥ अथ त्रिष्टुभा यजति। तदनया यजन्नियꣳ हि याज्याऽमुष्या ऽअधि व्वषट् करोत्यसा ऽउ हि त्रिष्टुप्तदेने सयुजौ करोति तस्मादिमे सम्भुञ्जाते ऽअनयोरनु सम्भोगमिमाः सर्वाः प्रजा ऽअनु सम्भुञ्जते ॥१६॥ स वाऽअङ्खयन्निवैवाऽनुवाक्यामनुब्रूयात्*। असौ ह्यनुवाक्या बृहद्ध्यसौ बार्हतꣳ हि तद्रूपं क्षिप्र ऽएव याज्यया त्वरेतेयꣳ हि याज्या रथन्तरꣳ हीयꣳ राथन्तरꣳ हि तद्रूपꣳ ह्वयति वा ऽअनुवाक्यया प्प्रयच्छति याज्यया तस्मादनुवाक्यायै रूपꣳ हुवे हुवामह ऽआगच्छेदं बर्हिः सीदेति यद्ध्वयति हि तया प्प्रयच्छति याज्यया तस्माद्याज्यायै रूपं व्वीहि हविर्जुषस्व हविराव्वृषायस्वाऽद्धि पिब प्प्रेति यत्प्र हि तया यच्छति ॥ १७ ॥ सा या पुरस्ताल्लक्षणा। साऽनुवाक्या स्यादसौ ह्यनुवाक्या तस्याऽमुष्याऽ अवस्ताल्लक्ष्म चन्द्रमा नक्षत्राणि सूर्यः ॥ १८ ॥ अथ योपरिष्टाल्लक्षणा। सा याज्या स्यादियꣳ हि याज्या तस्याऽ अस्या ऽउपरिष्टाल्लक्ष्मौषधयो व्वनस्पतय ऽआपोऽग्निरिमाः प्रजाः ॥१९॥ सा ह न्वेव समृद्धाऽनुवाक्या। यस्यै प्रथमात्पदाद्देवतामभिव्याहरति सो ऽएव समृद्धा याज्या यस्या ऽउत्तमात्पदाद्देवताया ऽअधि व्वषट् करोति व्वीर्यं वै देवत-

* 'अङ्ख्यन्निव' वर्णानालोडयन्निवेत्यर्थः ।

र्चस्तदुभयत ऽएवैतद्वीर्य्येण परिगृह्य यस्यै देवतायै हविर्भवति तस्यै प्रयच्छति ॥ २० ॥ स वै वौगिति करोति। वाग्वै वषट्कारो वाग्रेतो रेत ऽएवैतत्सिञ्चति षडित्यृतवो वै षट् तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति ॥ २१ ॥ देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुरेतावेवाऽर्द्धमासौ य ऽएवाऽऽपूर्य्यते तं देवा ऽउपायन्योऽपक्षीयते तमसुराः ॥ २२ ॥ ते देवा ऽअकामयन्त। कथं न्विममपि संवृञ्जीमहि योऽयमसुराणामिति तेऽर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतद्धविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ ताभ्यामयजन्त ताभ्यामिष्ट्वैतमपि समवृञ्जत ॥२३॥ य ऽएषोऽसुराणामासीत्। यदा वा ऽएता ऽउभौ परिप्लवेते ऽअथ मासो भवति मासशः संवत्सरः सर्वं वै संवत्सरः सर्वमेव तद्देवा ऽअसुराणां समवृञ्जत सर्वस्मात्सपत्नानसुरान्निरभजन्त्सर्वं वेवैष ऽएतत्सपत्नानां संवृङ्क्ते सर्वस्मात्सपत्नान्निर्भजति य ऽएवमेतद्वेद ॥ २४ ॥ स यो देवानामासीत्। स यवाऽयुवत हि तेन देवा योऽसुराणां सोऽयवा न हि तेनाऽसुरा ऽअयुवत ॥ २५ ॥ अथो ऽइतरथाऽऽहुः। य ऽएव देवानामासीत्सोऽयवा न हि

(१) अमायां पूर्णिमायां चाऽनुष्ठेयत्वादेवानयोः कर्मणोः 'दर्शपूर्णमासौ' इति नाम। अत्र पौर्णमास्यामाग्नेयोऽष्टाकपालः पुरोडाशयागः, आज्यद्रव्यकोऽग्नीषोमीय उपांशुयागो द्वितीयः, अग्नीषोमीय एकादशपालः पुरोडाशयागस्तृतीयः। तथा च अमायां—अग्निदेवताकः पुरोडाशयाग एकः, ऐन्द्रो दधिद्रव्यको यागो द्वितीयः, पुनरैन्द्रः पयोद्रव्यविशिष्टो यागस्तृतीयः, उभयत्र मिलित्वा षट् यागाः सम्पद्यन्ते।

तमसुरा ऽअयुवत यो ऽसुराणाᳩं स यवा ऽयुवत हि तं देवाः सब्दमहः सगरा रात्रिरुर्यव्या मासाः सुमेकः संवत्सरः स्वैको ह वै नामैतद्यत्सुमेक ऽइति यवा च हि वा ऽअयवा यवेतीवा ऽथ येनैतेषाᳩं होता भवति तद्या-विहोत्रमित्त्याचक्षते ॥ २६ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥ ५ ॥

कंडिकासंख्या ॥ १२१ ॥



यज्ञेन वै देवाः । दिवमुपोदक्रामन्नथ यो ऽयं देवः पशूनामीष्टे स ऽइहा ऽहीयत तस्माद्वास्तव्य ऽइत्त्याहुर्वास्तौ हि तदहीयत ॥ १ ॥ स येनैव देवा दिवमुपोदक्रामन् । तेनो ऽएवा ऽर्चन्तः श्राम्म्यन्तश्चेरुरथ यो ऽयं देवः पशूनामीष्टे य ऽइहा ऽहीयत ॥ २ ॥ स ऽऐक्षत । अहा ऽस्य हा ऽन्तरुर्यन्त्यु मा यज्ञादिति सो ऽनूच्चक्राम स ऽआयतयोत्तरत ऽउपोत्त्पेदे य* ऽएष स्विष्टकृतः कालः ॥ ३ ॥ ते देवा ऽअब्रुवन् । मा विस्राक्षीरिति ते वै मा यज्ञान्मा ऽन्तर्गता ऽऽहुतिं मे कल्पयतेति तथेति स समबृहत्स ना ऽस्यत्स न कंचना ऽहिनत् ॥ ४ ॥ ते देवा ऽअब्रुवन् । यावन्ति नो हवीᳩंषि गृहीतान्न्यभूवन्त्सर्वेषां तेषाᳩं हुतमुपजानीत यथा ऽस्मा ऽआहुतिं कल्पयामेति ॥ ५ ॥ ते ऽध्वर्युमब्रुवन् । यथापूर्वᳩं हवीᳩंष्यभिघारयै-

* 'ग' पुस्तके 'स' इति ।

कस्मा ऽअवदानाय पुनराप्प्यायय्याऽयातयामानि कुरु तत ऽएकैकमवदानमवद्येति ॥ ६ ॥ सोऽद्ध्वर्य्युः । यथापूर्व्वᳪ हवीᳪष्यभ्यघारयदेकस्मा ऽअवदानाय पुनराप्प्याययदुया-तयामान्यकरोत्तत ऽएकैकमवदानमवाद्यत्तस्माद्वास्तव्य ऽइत्त्याहुर्व्वास्तु हि तद्यज्ञस्य यद्धुतेषु हविःषु तस्माद्यस्यै कस्यै च देवतायै हविर्ग्गृह्यते सर्व्वत्रैव स्विष्टकृदन्न्वाभक्तᳪ सर्व्वत्र ह्येवैनं देवा ऽअन्न्वाभजन् ॥ ७ ॥ तद्वा ऽअग्नय ऽइति क्रियते । अग्निर्व्वै स देवस्तस्यैतानि नामानि शर्व्व ऽइति यथा प्प्राच्च्या ऽआचक्षते भव ऽइति यथा बाहीकाᳪ पशूनाम्पती रुद्रोऽग्निरिति तान्न्यस्याऽशान्तान्न्येवेतराणि नामान्न्यग्निरित्त्येव शान्ततमं तस्मादग्नय ऽइति क्रियते स्विष्टकृत ऽइति ॥ ८ ॥ ते होचुः । यत्त्वस्यमुत्र सत्त्ययक्ष्महि तन्नᳪ स्विष्टं कुर्व्विति तदेभ्यᳪ स्विष्टमकरोत्तस्मात्त्स्विष्टकृत* ऽइति ॥९॥ सोऽनुवाक्यामनूच्च्य सम्पश्यति । ये तथा '[1]ऽग्निᳪ स्विष्टकृतमयाडग्निरग्नेᳪ प्प्रिया धामानी'ति तदा-ग्नेयमाज्ज्यभागमाह[2]'ऽयाट् सोमस्य प्प्रिया धामानी'ति तत्त्सौ-म्म्यमाज्ज्यभागमाहाऽ[3]'याडग्नेᳪ प्प्रिया धामानी'ति तद्य ऽएष ऽउभयत्राऽच्च्युत ऽआग्नेयᳪ पुरोडाशो भवति तमाह ॥१०॥ अथ यथादेवतम् । '[4]अयाड् देवानामाज्ज्यपानां प्रिया धामा-नी'ति तत्त्प्रयाजाऽनुयाजानाह प्प्रयाजाऽनुयाजा वै देवा ऽआज्ज्यपा '[5]यक्षदग्नेर्होतुᳪ प्प्रिया धामानी'ति तदग्निᳪ होता-

* प्रधानयागस्य सुष्ठु इष्टं करोतीति स्विष्टकृत्, कृतस्य प्रधानयागस्य पौष्कल्यापादक इति ।

(१) शु० सं० अ० २१ क० ४७। (२) शु० सं० अ० २१ क० ४७। (३) शु० सं० अ० २१ क० ४७। (४) शु० सं० अ० २१ क० ४७। (५) शु० सं० अ० २१ क० ४७।

रमाह तदस्मा ऽएतां देवा ऽआहुतिं कल्पयित्वाऽथैनेनैतद्भूयः समशाम्म्यन्प्रिय ऽएनं धामन्नुपाऽऽह्वयन्त तस्मादेवꣳ सम्पश्यति ॥ ११ ॥ तद्धैके । देवतां पूर्वां कुर्वन्त्ययाट्कारादग्नेरयाट् सोमस्याऽयाडिति तदु तथा न कुर्य्याद्विलोम ह ते यज्ञे कुर्वन्ति ये देवतां पूर्वां कुर्वन्त्ययाट्कारादिदꣳ हि प्प्रथममभिव्व्याहरन्नयाट्कारमेवाऽभिव्व्याहरति तस्मादयाट्कारमेव पूर्वं कुर्य्यात् ॥१२॥ 'यक्षत्त्स्वं[1] महिमानमि'ति। यत्र वा ऽअदो देवता ऽआवाहयति तदपि स्वं महिमानमावाहयति तदतः प्प्राङ् नैव किंचन स्वायमहिम्म्न ऽइति क्रियते तदत्र तं प्रीणाति तथो हाऽस्यैषोऽमोघायाऽऽवाहितो भवति तस्मादाह यक्षत्त्स्वं महिमानमिति ॥ १३ ॥ 'अ[2] यजताभिज्या ऽइष' ऽइति। प्प्रजा वा ऽइषस्ता ऽएवैतद्यायजूकाः करोति ता ऽइमाः प्प्रजा यजमाना ऽअर्च्चन्त्यः श्राम्म्यन्त्यश्चरन्ति ॥ १४ ॥ 'सो ऽअद्ध्वरा[3] जातवेदा जुषताꣳ हवि' रिति । तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्ज्जुषन्ते तेन हि महज्जयति तस्मादाह जुषताꣳ हविरिति ॥ १५ ॥ तद्यदेते ऽअत्र । याज्ज्याऽनुवाक्ये ऽअवक्लृप्ततमे भवतस्तृतीयसवनं वै स्विष्टकृद्वैश्वदेवं वै तृतीयसवनं 'पिप्प्रीहि[4] देवाँ २॥ ऽउशतो यविष्ठ्ठे'ति तदनुवाक्यायै वैश्वदेवमग्ने 'यदद्य[5] विशो ऽअद्ध्वरस्य होत'रिति तद्याज्ज्यायै वैश्वदेवं तद्यदेते ऽएवꣳ रूपे भवतस्तेनो ऽएते तृतीयसव-

(१) शु० सं० अ० २१ क० ४७। (२) शु० सं० अ० २१ क० ४७। (३) शु० सं० अ० २१ क० ४७। (४) तै० सं० ४. ३. १३। (५) तै० सं० ४. ३. १३।

नस्य रूपं तस्माद्वा ऽएते ऽअत्र याज्याऽनुवाक्येऽअवक्लृप्ततमे भवतः ॥ १६॥ ते वै त्रिष्टुभौ भवतः । वास्तु वा ऽएतद्यज्ञस्य यत्स्विष्टकृद्वीर्य्यं वै वास्त्विन्द्रियं वीर्य्यं त्रिष्टुबिन्द्रियमेवैतद्वीर्य्यं वास्तौ स्विष्टकृति दधाति तस्मात्त्रिष्टुभौ भवतः ॥ १७ ॥ उतो ऽअनुष्टुभावेव भवतः । वास्त्वनुष्टुब्वास्तु स्विष्टकृद्वास्तावेवैतद्वास्तु दधाति पेसुकं वै वास्तु पिस्यति ह प्रजया पशुभिर्य्यस्यैवं विदुषोऽनुष्टुभौ भवतः ॥ १८ ॥ तदु ह भाल्लवेयः । अनुष्टुभमनुवाक्यांचक्रे त्रिष्टुभं याज्यामेतदुभयं परिगृह्णामीति स रथात्पपात स पतित्वा बाहुमपि शश्रे स परिमम्̣शे यत्किमकरं तस्मादिदमापदीति स हैतदेव मेने यद्विलोम यज्ञेऽकरमिति तस्मान्न विलोम कुर्य्यात्सच्छन्दसावेव स्यातामुभे वैवाऽनुष्टुभा ऽउभे वा त्रिष्टुभौ ॥ १९ ॥ स वा ऽउत्तरार्द्धादवद्यति । उत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोत्येतस्यै वै दिशऽ उदपद्यत तं तत ऽएवाऽशमयँस्तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोति ॥ २० ॥ स वा ऽअभ्यर्द्ध ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति । इतरा ऽआहुतीः पशवोऽनुप्रजायन्ते रुद्रियः स्विष्टकृद्रुद्रियेण पशून्प्रसजेद्यदितराभिराहुतिभिः सꣳसृजेत्तेऽस्य गृहाः पशव ऽउपमूर्य्यमाणा ऽईयुस्तस्मादभ्यर्द्ध ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति ॥ २१ ॥ एष वै स यज्ञः । येन तद्देवा दिवमुपोदक्रामन्नेष ऽआहवनीयोऽथ य ऽइहाऽहीयत स गार्हपत्यस्तस्मादेतं गार्हपत्यात्प्राञ्चमुद्धरन्ति ॥ २२ ॥

तं वा ऽअष्टासु विक्रमेष्वादधीत । अष्टाऽक्षरा वै गायत्री गायत्र्यैवैतद्दिवमुपोत्क्रामति ॥ २३ ॥ एकादशस्वादधीत । एकादशाऽक्षरा वै त्रिष्टुप् त्रिष्टुभैवैतद्दिवमुपोत्क्रामति ॥ २४ ॥ द्वादशस्वादधीत । द्वादशाऽक्षरा वै जगती जगत्यैवैतद्दिवमुपोत्क्रामति नाऽत्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्न्येत तदादधीत स यद्वा ऽअप्प्यल्पकमिव प्प्राञ्चमुद्धरति तेनैव दिवमुपोत्क्रामति ॥ २५ ॥ तदाहुः । आहवनीये हवीꣳषि श्रपयेयुरतो वै देवा दिवमुपोदक्रामँस्तेनो ऽएवाऽर्च्चन्तः श्राम्म्यन्तश्चेरुस्तस्मिन्हवीꣳषि श्रपयाम तस्मिन्यज्ञं तनवामहा ऽइत्त्य पस्खल ऽइव ह स हविषां यद् गार्हपत्त्ये श्रपयेयुर्य्यज्ञ ऽआहवनीयो यज्ञे यज्ञं तनवामहा ऽइति ॥ २६ ॥ उतो गार्हपत्त्य ऽएव श्रपयन्ति । आहवनीयो वा ऽएष न वा ऽएष तस्मै यदस्मिन्नश्रृतꣳ श्रपयेयुस्तस्मै वा ऽएष यदस्मिञ्छृतं जुहुयुरित्त्यतो यतरथा कामयेत तथा कुर्य्यात् ॥ २७ ॥ स हैष यज्ञ ऽउवाच । नग्नताया वै बिभेमीति का तेऽनग्नतेत्त्यभित ऽएव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनु तृप्प्येयमिति तस्मात्सꣳस्थिते यज्ञे ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयति ॥ २८ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ । दिवं वोषसं

वा मिथुन्न्येनया स्यामिति ताᳬं सम्बभूव ॥ १ ॥ तद्वै देवानामाग ऽआस । य ऽइत्थᳬं स्वां दुहितरमस्माकᳬं स्वसारं करोतीति ॥ २ ॥ ते ह देवा ऽऊचुः । योऽयं देवः पशूनामीष्टेऽतिसन्धं वा ऽअयं चरति य ऽइत्थᳬं स्वां दुहितरमस्माकᳬं स्वसारं करोति विध्येममिति तᳯ रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास ॥ ३ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति तदाग्निमारुतमित्युक्थं तस्मिँस्तद्व्याख्यायते यथा तद्देवा रेतः प्राऽजनयँस्तेषां यदा देवानां क्रोधो व्यैदथ प्रजापतिमभिषज्यँस्तस्य तᳯ शल्यं निरकृन्तन्त्स वै यज्ञ ऽएव प्रजापतिः ॥४॥ ते होचुः । उपजानीत यथेदन्नाऽमुयाऽसत्कनीयो हाऽऽहुतेर्यथेदᳬं स्यादिति ॥५॥ ते होचुः । भगायैनद्दक्षिणत ऽआसीनाय परिहरत तद्भगः प्राशिष्यति तद्यथाऽहुतमेवं भविष्यतीति तद्भगाय दक्षिणत ऽआसीनाय पर्य्याजह्रुस्तद्भगोऽवेक्षाञ्चक्रे तस्याऽक्षिणी निर्ददाह तथेन्नूनं तदास तस्मादाहुरन्धो भग ऽइति ॥ ६ ॥ ते होचुः । नो न्वेवाऽत्राऽशमत्पूषण ऽएनत्परिहरतेति तत्पूष्णे पर्य्याजह्रुस्तत्पूषा प्राऽऽश तस्य दतो निर्ज्जघान तथेन्नूनं तदास तस्मादाहुरदन्तकः पूषेति तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति यथाऽदन्तकायैवम् ॥ ७ ॥ ते होचुः । नो न्वेवाऽत्राऽशमद् बृहस्पतय ऽएनत्परिहरतेति तद् बृहस्पतये पर्य्याजह्रुः स बृहस्पतिः सवितारमेव प्रसवायोपाऽ-

धावत्सविता वै देवानां प्रसवितेदम्मे प्रसुवेति तदस्मै सविता प्रसविता प्राऽसुवत्तदेनꣳ सवितृप्रसूतं नाऽहिनत्ततोऽर्वाचीनꣳ शान्तं तदेतन्निदानेन यत्प्राशित्रम्† ॥ ८ ॥ स यत्प्राशित्रमवद्यति । यदेवाऽत्राऽविद्धं यज्ञस्य यद्रुद्रियं तद्देवैतन्निर्म्मिमीतेऽथाऽप ऽउपस्पृशति शान्तिरापस्तदद्भिꣳ शमयत्यथेडां पशून्त्समवद्यति ॥ ९ ॥ स वै यावन्मात्रमिवैवाऽवद्येत् । तथा शल्यꣳ प्रच्च्यवते तस्माद्यावन्मात्रमिवैवाऽवद्येदन्यतरत ऽआज्यं कुर्य्यादधस्ताद्वोपरिष्टाद्वा तथा खदन्निस्सरणवद्भवति तथा निस्रवति तस्मादन्यतरत ऽआज्ज्यं कुर्य्यादधस्ताद्वोपरिष्टाद्वा ॥ १० ॥ स ऽआज्ज्यस्योपस्तीर्य्य । द्विर्हविषोऽवदायाऽथोपरिष्टादाज्ज्यस्याऽभिघारयति तद्यथैव यज्ञस्याऽवदानमेवमेव तत् ॥११॥ तन्न पूर्व्वेण परिहरेत् । पूर्व्वेण हैके परिहरन्ति पुरस्ताद्वै प्रत्यञ्चो यजमानं पशव ऽउपतिष्ठन्ते रुद्रियेण ह पशून्प्रसजेद्यत्पूर्व्वेण परिहरेत्तेऽस्य गृहाꣳ पशव उपमूर्य्यमाणा ऽईयुस्तस्मादित्त्येव तिर्य्यक्प्रजिहीत तथा ह रुद्रियेण पशून्न प्रसजाति तिर्य्यगेवैनं निर्म्मिमीते ॥ १२ ॥ तत्प्रतिगृह्णाति । 'देवस्य त्वा सवितुꣳ प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यां प्रतिगृह्णामी'ति ॥ १३ ॥ तद्यथैवाऽदो बृहस्पतिꣳ । सवितारं प्रसवायोपाऽधावत्सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्राऽसुवत्तदेनꣳ सवितृप्रसूतं

† ब्रह्मणो भागः प्राशित्रमिति ।

( १ ) शु० सं० अ० २ क० ११ ( २ ) शु० सं० अ० २ क० ११ ।

नाऽहिनदेवमैवैष ऽएतत्त्सवितारमेव प्प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्प्रसुवेति तदस्मै सविता प्प्रसविता प्प्रसौति तदेनꣳ सवितृप्प्रसूतं न हिनास्ति ॥१४॥ तत्प्राश्नाति । 'अग्नेष्ट्वास्येन प्प्राश्नामी'ति न वा ऽअग्निं किंचन हिनास्ति तथो हैनमेतन्न हिनास्ति ॥ १५ ॥ तन्न दद्भिꣳ खादेत् । नेन्म ऽइदꣳ रुद्रियं दतो हिनसदिति तस्मान्न दद्भिꣳ खादेत् ॥ १६ ॥ अथाऽप ऽआचामति । शान्तिरापस्तदद्भिꣳ शान्त्या शमयतेऽथ परिक्षाल्य पात्रम् ॥ १७ ॥ अथाऽस्मै ब्रह्मभागं पर्य्याहरन्ति । ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता स ऽएतं भागं प्रतिविदान ऽआस्ते यत्प्राशित्रं तदस्मै पर्य्याहार्षुस्तत्प्राऽऽशीदथ यमस्मै ब्रह्मभागं पर्य्याहरन्ति तेन भागी स यदत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा ऽअस्मै ब्रह्मभागं पर्य्याहरन्ति ॥ १८ ॥ स वै वाचंयम ऽएव स्यात् । ब्रह्मन्प्रस्थास्यामीत्येतस्माद्वचसो विवृहन्ति वा ऽएते यज्ञं क्षण्वन्ति ये मद्ध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति ब्रह्मा वा ऽऋत्विजां भिषक्तमस्तद्ब्रह्मा सन्दधाति न ह सन्दद्ध्याद्यद्वाऽवव्यमान ऽआसीत तस्माद्वाचंयम ऽएव स्यात् ॥ १९ ॥ स यदि पुरा मानुषीं वाचं व्व्याहरेत् । तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्प्रायश्चित्तिः ॥२०॥ स यत्राऽऽह ब्रह्मन्प्रस्थास्यामीति तद् ब्रह्मा जप'[१]त्येतं ते[२] देव सवितर्य्यज्ञं प्राऽऽहु'रिति तत्सवितारं

(१) शु० सं० अ० २ क० ११। (२) शु० सं० अ० २ क० १२।

प्रसवायोपधावति स हि देवानां प्रसविता 'बृहस्पतये ब्रह्मण' ऽइति बृहस्पतिर्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्मा ऽएवैतत्प्राऽऽह तस्मादाह बृहस्पतये ब्रह्मण ऽइति 'तेन यज्ञमव तेन यज्ञपतिं तेन मामवे'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ २१ ॥ 'मनो जूतिर्ज्जुषतामाज्यस्ये'ति । मनसा वा ऽइदꣳ सर्वमाप्तं तन्मनसैवैतत्सर्वमाप्नोति बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधात्वि'ति यद्विवृढं तत्सन्दधाति 'विश्वे देवास ऽइह मादयन्तामि'ति सर्वं वै विश्वे देवाः सर्वेणैवैतत्सन्दधाति स यदि कामयेत ब्रूया'त्प्रतिष्ठे'ति' यद्यु कामयेताऽपि नाऽऽद्रियेत ॥ २२ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

मनवे ह वै प्रातः। अवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाऽऽहरन्त्येवं तस्याऽवनेनिजानस्य मत्स्यः पाणी ऽआपेदे ॥ १ ॥ स हाऽस्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ ऽइमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयिताऽस्मीति कथं ते भृतिरिति ॥ २ ॥ स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य ऽएव मत्स्यं गिलति

(१) शु० सं० अ० २ क० १२ । (२) शु० सं० अ० २ क० १२ । (३) शु० सं० अ० २ क० १३ । (४) शु० सं० अ० २ क० १३ । (५) शु० सं० अ० २ क० १३ । (६) शु० सं० अ० २ क० १३ ।

कुम्भ्यां माऽग्रे बिभरासि स यदा तामतिवर्द्धा ऽअथ कर्षूं* खात्त्वा तस्यां मा बिभरासि स यदा तामतिवर्द्धा ऽअथ मा समुद्र्द्रमभ्यवहरासि तर्हि वा ऽअतिनाष्ट्रो भविताऽस्मीति ॥ ३ ॥ शश्वद्ध झष ऽआस । स हि ज्येष्ठं वर्द्धतेऽथे-तिथीᳫं समां तदौघ ऽआगन्ता तं मा नावमुपकल्ल्प्योपाऽऽ-सासै स ऽऔघ ऽउत्थिते नावमापद्यासै ततस्त्वा पारयिता-ऽस्मीति ॥ ४ ॥ तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीᳫं समां नावमुपकल्ल्प्योपाऽऽसाञ्चक्रे स ऽऔघ ऽउत्थिते नावमापेदे तᳫं स मत्स्य ऽउपन्न्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमधिदुद्राव ॥ ५ ॥ स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व⁂ तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावदुदकᳫं समवाऽयात्तावत्तावदन्ववसर्प्पाऽसीति स ह तावत्तावदेवाऽन्ववससर्प्प तदप्येतदुत्तरस्य गिरेर्म्मनोरवसर्प्पणमित्यौघो ह ताः सर्व्वाः प्प्रजा निरुवाहाऽथेह मनुरेवैकः परिशिशिषे ॥ ६ ॥ सोऽर्चञ्छ्राम्यँश्चचार प्प्रजाकामः । तत्राऽपि पाकयज्ञेनेजे स घृतं दधि मस्त्वाँमिक्षामित्त्यप्सु* जुहवाञ्चकार ततः संवत्सरे योषित्सम्बभूव सा †हपिब्दमानेवोदेयाय तस्यै

---

* कर्षूः खातिका इत्यर्थः ।

⁂ (क) पुस्तके 'प्रबध्नीष्व' इति ।

* गव्यम्पय उष्णं कृत्वा तप्ते पयसि दधि प्रक्षिप्तं चेत् तदा तत्पयो द्विधा भवति घनीभूतं द्रवीभूतञ्च । तत्र यो घनीभूतोंऽशस्तद्वाजिनम्, यो द्रवीभूतोंऽशस्तच्च 'आमिक्षा' इति पदैर्व्यवह्रियते ।

† 'पिब्दमाना' पाकधर्मात्मिका इव सा योषिदित्यर्थः ।

ह स्म घृतं पदे सन्तिष्ठते तया मित्रावरुणौ सञ्जग्माते ॥ ७ ॥ ताᳩं होचतुः काऽसीति । मनोर्दुहितेत्यावयो-र्ब्रूष्वेति नेति होवाच य ऽएव मामजीजनत तस्यैवा-ऽहमस्मीति तस्यामपित्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञा-वतित्वेवेयाय सा मनुमाजगाम ॥ ८ ॥ ताᳩं ह मनुरुवाच काऽसीति । तव दुहितेति कथं भगवति मम दुहितेति या ऽअमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साऽऽशीरस्मि तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै माऽवकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि ‡यामु मया काञ्चाऽऽशिषमाशासिष्यसे सा ते सर्वा समर्द्धि-ष्यत ऽइति तामेतन्मद्ध्ये यज्ञस्याऽवाऽकल्पयन्मद्ध्यᳩं ह्येतद्यज्ञस्य यदन्तरा प्रयाजाऽनुयाजान् ॥ ९ ॥ तयाऽर्च्चे-ञ्छ्राम्म्यँश्चचार प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्य्याम्वेनया काञ्चाऽऽशिषमाशास्त साऽस्मै सर्वा समार्द्ध्यत ॥ १० ॥ सैषा निदानेन यदिडा*। स यो हैवं विद्वानिडया चरत्त्येताᳩं हैव प्रजातिं प्रजायते यां मनुः प्राऽजायत याम्वेनया काञ्चाऽऽशिषमाशास्ते साऽस्मै सर्वा समृद्ध्यते ॥ ११ ॥ सा वै पञ्चाऽवत्ता भवति । पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्चाऽवत्ता भवति ॥ १२ ॥ स समवदायेडाम् । पूर्वार्द्धं पुरोडाशस्य प्रशीर्ष्य पुरस्ताद्ध्रुवायै निदधाति ताᳩं होत्रे प्रदाय

‡ 'यामसुया' इति 'ग–च' पुस्तके समुपलभ्यते ।

* इडाशब्देन इडापात्र्यावत्तं पुरोडाशादि–द्रव्यमुच्यते ।

दक्षिणाऽत्त्येति ॥ १३ ॥ स होतुरिह निलिम्पति । तद्धोतौष्ठयोर्न्निलिम्पते '[1]मनसस्पतिना ते हुतस्याऽश्नामीषे प्प्राणाये'ति ॥ १४ ॥ अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्न्निलिम्पते '[2]वाचस्पतिना ते हुतस्याऽश्नाम्म्यूर्ज्ज ऽउदानाये'ति ॥ १५ ॥ एतद्ध वै मनुर्व्विभयाञ्चकार । इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म ऽइह रक्षाᳬसि यज्ञं न हिᳬस्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येव प्प्रापयत तथो ऽएवैनामेष ऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येव प्प्रापयतेऽथ यत्प्रत्त्यक्षं न प्प्राऽश्नाति नेदनुपहूतां †प्राऽश्नानीत्त्येतदेवैनां प्प्रापयते यदोष्ठयोर्न्निलिम्पते ॥ १६ ॥ अथ होतुः पाणौ समवद्यति । समवत्तामेव सतीं तदेनां प्रत्त्यक्षᳬ होतरि श्रयति तयात्मञ्छृतया होता यजमानायाऽऽशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥ १७ ॥ अथोपाᳬशूपह्वयते । एतद्ध वै मनुर्व्विभयाञ्चकारेदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म ऽइह रक्षाᳬसि यज्ञं न हन्न्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येवोपाᳬशूपाऽह्वयत तथो ऽएवैनामेष ऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य ऽइत्त्येवोपाᳬशूपह्वयते ॥ १८ ॥ स ऽउपह्वयते । '[3]उपहूतᳬ रथन्तरᳬ सह पृथिव्व्योप माᳬ रथन्तरᳬ सह पृथिव्व्या ह्वयतामुपहूतं वामदेव्व्यᳬ सहाऽन्तरिक्षेणोप मां वाम-

---

† 'प्राश्नामि' इति 'ग–च' पुस्तके ।

( १–२ ) तै० सं० २. ६. ८ । ( ३ ) तै० ब्रा० ३. ५. १३ ।

दे॰ऽयꣳ सहाऽन्तरिक्षेण ह्वयतामुपहूतं बृहत्सह दिवोप-मां बृहत्सह दिवाऽऽह्वयतामिति' तदेतामेवैतदुपह्वयमान ऽइमाँश्च लोकानुपह्वयत ऽएतानि च सामानि ॥ १९ ॥ 'उपहूता गावः सहर्षभा' ऽइति । पशवो वा ऽइडा तदेनां परोऽक्षमुपह्वयते सहर्षभा ऽइति समिथुनामेवैनामेतदु-पह्वयते ॥ २० ॥ 'उपहूता सप्तहोत्रे'ति । तदेनाꣳ सप्तहोत्रा सौम्म्येनाऽध्वरेणोपह्वयते ॥ २१ ॥ 'उपहूतेडा ततुरि'रिति । तदेनां प्रत्यक्षमुपह्वयते ततुरिरिति सर्वꣳ ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति ॥ २२ ॥ 'उपहूतः सखा भक्ष' ऽइति । प्प्राणो वै सखा भक्षस्तत्प्राणमुपह्वयत ऽउपहूतꣳ हेगिति तच्छरीरमुपह्वयते तत्सर्वामुपह्वयते ॥ २३ ॥ अथ प्प्रतिपद्यते । 'इडोपहूतोपहूतेडोपो ऽअस्माँ२॥ ऽइडा ह्वयता-मिडोपहूते'ति तदुप्रहूतामेवैनामेतत्सतीं प्रत्यक्षमुपह्वयते या वै साऽऽसीद् गौर्वै साऽऽसीच्चतुष्पदी वै गौस्तस्माच्चतुरुपह्वयते ॥ २४ ॥ स वै चतुरुपह्वयमानः । अथ नानेवोपह्वयते ऽजामितायै जामि ह कुर्य्याद्यदिडोपहूतेडोपहूतेत्येवोपह्व-येतो'पहूतेडेति वेडोपहूते'ति तदर्वाची'मुपह्वयत ऽउँपहूतेडे'ति तत्पराची'मुपो' ऽअस्माँ२॥ ऽइडा ह्वयतामि'ति तदात्मानं चैवैतन्नाऽन्तरेत्त्यन्यथेव च भवतीडोपहूतेति तत्पुनरर्वाची-मुपह्वते तदर्वाचीं चैवैनामेतत्पराचीं चोपह्वयते ॥ २५ ॥ 'मानवीघृतपदी'ति । मनुर्ह्येतामग्रेऽजनयत तस्मादाह मान-

(१) तै॰ ब्रा॰ ३. ५. १३। (२) तै॰ ब्रा॰ ३. ५. १३। (३) तै॰ ब्रा॰ ३. ५. १३। (४) तै॰ ब्रा॰ ३. ५. १३। (५) तै॰ ब्रा॰ ३. ५. १३। (६) तै॰ ब्रा॰ ३. ५. १३। (७) तै॰ ब्रा॰ ३. ५. १३। (८) तै॰ ब्रा॰ ३. ५. १३।

वीति घृतपदीति यद्देवाऽस्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति ॥ २६ ॥ उत मैत्रावरुणीति। यदेव मित्रावरुणाभ्याᳫं समगच्छत स एव मैत्रावरुणो न्यङ्गो 'ब्रह्म[1] देवकृतोपहूते'ति ब्रह्म ह्येषां* देवकृतोपहूतोपहूता 'दैव्या[2] अध्वर्यव उपहूता मनुष्या' इति तद्देवांश्चैवैतदध्वर्यूनुपह्वयते ये च मानुषा वत्सा वै दैव्या अध्वर्यवोऽथ य इतरे ते मानुषाः ॥ २७ ॥ य इमं यज्ञमवान्ये च यज्ञपतिं वर्द्धानिति। एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवाᳫंसोऽनूचाना एते ह्येनं तन्वत एत एनं जनयन्ति तदु तेभ्यो निह्नुते वत्सा उ वै यज्ञपतिं वर्द्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्वर्द्धते तस्मादाह ये च यज्ञपतिं वर्द्धानिति ॥ २८ ॥ 'उपहूते[3] द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे' इति। तदिमे द्यावापृथिवी उपह्वयते ययोरिदᳫं सर्वमध्युपहूतोऽयं यजमान इति तद्यजमानमुपह्वयते तद्यदत्र नाम न गृह्णाति परोऽक्षᳫं स्वत्राऽऽशीर्यदिडायां मानुषᳫं ह कुर्याद्यन्नाम गृह्णीयाद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति॥ २९ ॥ 'उत्तरस्यां[4] देवयज्यायामुपहूत' इति। तदस्मा एतज्जीवातुमेव परोऽक्षमाशास्ते जीवन् हि पूर्वमिष्ट्वाऽथाऽपरं यजते ॥ ३० ॥ तदस्मा एतत्प्रजामेव परोऽक्षमाशास्ते। यस्य हि प्रजा

(१) तै० ब्रा० ३. ५. १३। (२) तै० ब्रा० ३. ५. १३। (३) तै० ब्रा० ३. ५. १३। (४) तै० ब्रा० ३. ५. १३।

* 'क' पुस्तके 'ब्रह्माद्येषा देव' इति पाठः।

भवत्यमुं लोकमात्मनैत्त्यथाऽस्मिँल्लोके प्प्रजा यजते तस्मा-त्प्रजोत्तरा देवयज्या ॥ ३१ ॥ तदस्मा ऽएतत्त्पशूनेव परोऽक्ष-माशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाऽथाऽपरं यजते ॥ ३२ ॥ 'भूयसि हविष्करण ऽउपहूत' ऽइति । तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन्हि पूर्व-मिष्ट्वाऽथ भूयो भूय ऽएव हविष्करोति ॥३३॥ तदस्मा ऽए-तत्प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्प्रजा भवत्येक ऽआत्मना भवत्यथोत दशधा प्प्रजया हविष्क्रियते तस्मा-त्प्रजा भूयो हविष्करणम् ॥ ३४ ॥ तदस्मा ऽएतत्त्पशूनेव परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाऽथ भूयो भूय ऽएव हविष्करोति ॥ ३५ ॥ एषा वा ऽआशीः । जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमिति तद्यत्पशूनाशास्ते तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेव तदाशीभ्याᳫँ सर्वमाप्तं तस्माद्वा ऽएते ऽअत्र द्वे ऽआशिषौ क्रियेते ॥ ३६ ॥ 'देवा म ऽइदᳫँ हविर्ज्जुषन्तामिति तस्मिन्नुपहूत' ऽइति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्ज्जुषन्ते तेन हि महज्जयति तस्मादाह जुषन्तामिति ॥ ३७ ॥ तां वै प्राऽश्नन्त्येव । नाऽग्नौ जुह्वति पशवो वा ऽइडा नेत्पशूनग्नौ प्प्रवृणजामेति तस्मान्नाऽग्नौ जुह्वति ॥ ३८ ॥ प्प्राणेष्वेव हूयते । होतरि त्वद्यजमाने त्वदद्ध्वर्य्यौ त्वदथ यत्पूर्वार्द्धं पुरोडाशस्य प्प्रशीर्ष्य पुरस्ताद्ध्रुवायै निदधाति यजमानो वै द्ध्रुवा तद्यजमानस्य प्प्राऽशितं भवत्यथ

(१) तै० ब्रा० ३. ५. १३ । (२) तै० ब्रा० ३. ५. १३ ।

यत्प्रत्यक्षं न प्राऽश्नाति नेदसꣳस्थिते यज्ञे प्राऽश्नानीत्त्येतदेवाऽस्य प्राऽशितं भवति सर्व्वे प्राऽश्नन्ति सर्व्वेषु मे हुताऽसदिति पञ्च प्राऽश्नन्ति पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्च प्राऽश्नन्ति ॥ ३९ ॥ अथ यत्र प्रतिपद्यते । तच्चतुर्द्धा* पुरोडाशं कृत्वा बर्हिषदं करोति तदत्र पितॄणां भाजनेन चतस्रो वा ऽअवान्तरदिशो वाऽन्तरदिशो वै पितरस्तस्माच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥ ४० ॥ अथ यत्राऽऽहो'पहूते† द्यावापृथिवी' ऽइति । तदग्नीध ऽआदधाति तदग्नीत्प्राश्ना'त्युपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहोपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहे'ति द्यावापृथिव्यो वा ऽएष यदाग्नीद्ध्रस्तस्मादेवं प्राऽश्नाति ॥४१॥ अथ यत्राऽऽशिषमाशास्ते । तज्जपति '[२]मयीदमिन्द्र ऽइन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिष' ऽइत्त्याशिषामेवैष प्रतिग्रहस्तद्या ऽएवाऽत्र्त्विजो यजमानायाऽऽशिष ऽआशासते ता ऽएवैतत्प्रतिगृह्याऽऽत्मन्कुरुते ॥४२॥ अथ पवित्रयोर्म्मार्ज्जयन्ते । पाकयज्ञियेव वा ऽएतदिडयाऽचारिषुः पवित्रपूता यदत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्पवित्रयोर्म्मार्ज्जयन्ते ॥ ४३ ॥ अथ ते पवित्रे प्रस्तरेऽपि सृजति ।

---

* भक्षणेऽयं क्रमो बोध्यः—पूर्वं चतुर्धाकरणभागस्य भक्षणम्, ततः षडवत्तभागस्य, तत इडाभागस्येति ।

† का० हौ० परि० ।

( १ ) शु० सं० अ० २ क० १०–११ । ( २ ) शु० सं० अ० २ क० ११ ।

यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यजमाने तत्प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥४४॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥१॥



ते वा ऽएते ऽउल्मुके ऽउदूहन्ति । अनुयाजेभ्यो यातयामेव वा ऽएतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान्भवत्ययातयाम्न्यनुयाजाँस्तनवामहा ऽइति तस्माद्वा ऽएते ऽउल्मुके ऽउदूहन्ति ॥ १ ॥ ते पुनरनु सꣳस्पर्शयन्ति । पुनरेवैतदग्निमाप्यायन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदुत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्पुनरनु सꣳस्पर्शयन्ति ॥ २ ॥ अथ समिधमभ्यादधाति । समिन्ध ऽएवैनमेतत्समिद्धे यदुत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्समिधमभ्यादधाति ॥ ३ ॥ ताꣳ होताऽनुमन्त्रयते । 'एषा[1] ते ऽअग्ने समित्तया वर्धस्व चाऽऽच प्यायस्व वर्द्धिषीमहि च वयमा च प्यासिषीमही'ति तद्यथैवाऽदः समिद्ध्यमानायाऽन्वाहैवमेवैतदन्वाह तदेतद्धोतुः कर्म्म स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥ ४ ॥ अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो यदुत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात्सम्मार्ष्टि सकृत्सकृत्सम्मार्ष्टि त्रिस्त्रिर्वा ऽअग्रे देवेभ्यः सम्मृजन्ति नेत्तथा

(१) शु० सं० अ० २ क० १२ ।

करवाम यथा देवेभ्य ऽइति तस्मात्सकृत्सकृत्सम्मार्ष्ट्यजामितायै जामि ह कुर्य्याद्यत्त्रिः पूर्वं त्रिरपरं तस्मात्सकृत्सकृत्सम्मार्ष्टि ॥ ५ ॥ स सम्मार्ष्टि । 'अग्ने वाजजिद्वाजं त्वा सस्रृवाᳬंसं वाजजितᳩ सम्माज्र्मी'ति सरिष्यन्तमिति वा ऽअग्र ऽआह सरिष्यन्निव हि तर्हि भवत्यथाऽत्र सस्रृवाᳬंसमिति ससृवेव ह्यत्र भवति तस्मादाह सस्रृवाᳬंसमिति ॥ ६ ॥ अथाऽनुयाजान्यजति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्वा वै तत्ता ऽइष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवाऽनुयजति तस्मादनुयाजा नाम ॥ ७ ॥ अथ यदनुयाजान्यजति । छन्दाᳬंसि वा ऽअनुयाजाᳩ पशवो वै देवानां छन्दाᳬंसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र च्छन्दाᳬंसि देवान्त्समतर्प्पयन्नथ च्छन्दाᳬंसि देवाᳩ समतर्प्पयँस्तदतस्तत्प्रागभूद्यच्छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् ॥ ८ ॥ अथ यदनुयाजान्यजति । छन्दाᳬंसि वा ऽअनुयाजाश्छन्दाᳬंस्येवैतत्सन्तर्प्पयति तस्मादनुयाजान्यजति तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैनत्सुहितं कुरुतेत्येष ऽउ वाहनस्याऽपह्नवᳩ ॥ ९ ॥ स वै खलु बर्हिᳩ प्रथमं यजति । तद्वै कनिष्ठं छन्दᳩ सद् गायत्री प्रथमा च्छन्दसां युज्यते तदु तद्वीर्य्येणैव यच्छयेनो भूत्वा दिवᳩ सोममाहरत्तद्यथाऽयथं मन्यन्ते

(१) शु० सं० अ० २ क० १४।

यत्कनिष्ठं छन्दः सद् गायत्री प्रथमा च्छन्दसां युज्यतेऽथाऽत्र यथायथं देवाश्छन्दाᳬंस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमसदिति ॥ १० ॥ स वै खलु बर्हिः प्रथमं यजाति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्रतिष्ठितास्तदिदᳬं सर्वं जगदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्वन् ॥ ११ ॥ अथ नराशᳬंसं द्वितीयं यजाति । अन्तरिक्षं वै नराशᳬंसः प्रजा वै नरस्ता ऽइमा ऽअन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्वै वदति शᳬंसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशᳬंसोऽन्तरिक्षमु वै त्रिष्टुप् तत्त्रिष्टुभं द्वितीयामकुर्वन् ॥ १२ ॥ अथाऽग्निरुत्तमः । गायत्री वा ऽअग्निस्तद् गायत्रीमुत्तमामकुर्वन्नेवं यथायथेन क्लृप्तेन च्छन्दाᳬंसि प्रत्यतिष्ठँस्तस्मादिदमपापवस्यसम् ॥ १३ ॥ 'देवान्यजे'[1]त्येवाऽद्ध्वर्युराह । 'देवन्देवमि'[2]ति सर्वेषु होता देवानां वै देवाः सन्ति च्छन्दाᳬंस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दाᳬंसि वा ऽअनुयाजास्तस्माद्देवान्यजेत्येवाऽद्ध्वर्युराह देवन्देवमिति सर्वेषु होता ॥ १४ ॥ 'वसुवने वसुधेयस्ये'[3]ति । देवताया ऽएव वषट् क्रियते देवतायै हूयते न वा ऽअत्र देवताऽस्त्यनुयाजेषु 'देवं बर्हि'[4]रिति तत्र नाऽग्निर्नेन्द्रो न सोमो 'देवो नराशᳬंस'[5] ऽइति नाऽत ऽएकं चन यो वा ऽअत्राऽग्निर्गायत्री स* निदानेन ॥ १५ ॥ अथ

(१) का० श्रौ० सू० ३. ५. ६ । (२) का० श्रौ० सू० ३. ५ ८ । (३) तै० ब्रा० ३. ५. ९ । (४) तै० ब्रा० ३. ५. ९ । (५) तै० ब्रा० ३. ५. ९ ।

* 'क' पुस्तके 'सा निदानेन' इति समुपलभ्यते ।

'यद्वसुवने वसुधेयस्ये'ति यजति । अग्निर्वै वसुवनिरिन्द्रो वसुधेयोऽस्ति वै च्छन्दसां देवतेन्द्राऽग्नी ऽएवैवमु हैतद्देवताया ऽएव वषट् क्रियते देवतायै हूयते ॥ १६ ॥ अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति । प्रयाजाऽनुयाजा वा ऽएते तद्यथैवाऽदः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिᳪं हारयत्त्यत्र ऽआद्यं बलिᳪं हारयत्त्येवमेवैतदनुयाजेषु बलिᳪं हारयति ॥ १७॥ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे षष्ठः प्रपाठकः ॥ ६ ॥

कण्डिकासङ्ख्या ॥ १११ ॥



स वै स्रुचौ[*] [†]व्यूहति । [1]'अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामी'ति जुहूं प्राचीं दक्षिणेन पाणिना[2]'ऽग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनाऽपोहामी'त्त्युपभृतं प्रतीचीᳪं सव्येन पाणिना यदि स्वयं यजमानः ॥ १ ॥ यद्यु ऽअद्ध्वर्युः । [3]'अग्नीषोमयोरुज्जितिमनूज्जयत्त्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहाम्म्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनाऽपोहामी'ति पौर्णमास्यामग्नीषोमीयᳪं हि पौर्णमासᳪं हविर्भवति ॥ २ ॥

---

(१) तै० ब्रा० ३. ५. ९ । (२) शु० सं० अ० २ क० १५ । (३) शु० सं० अ० २ क० १५ । (४) का० श्रौ० सू० ३. ५. १९ ।

* पलाशकाष्ठनिर्मिता बाहुप्रमाणा हंसमुखप्रणालिका 'स्रुक्' इत्युच्यते । तस्या अपरपर्यायो 'जुहूः' इति ।

† परस्परविपरीतत्वेनाऽपनोदनम् 'व्यूहनम्' इत्युच्यते ।

अथाऽमावास्यायाम् । '[1]इन्द्राग्न्योरुज्जितिमनूज्जेषं व्वाजस्य मा प्प्रसवेन प्प्रोहामीन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो व्वाजस्यैनं प्रसवेनाऽपोहामी'ति यदि स्वयं यजमानः ॥ ३ ॥ यद्यु ऽअद्ध्वर्युः । इन्द्राग्न्योरुज्जितिमनूज्जयत्त्वयं यजमानो व्वाजस्यैनं प्रसवेन प्प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीत्त्यमावास्यायामैन्द्राग्नᳬ ह्यामावास्यᳬ हविर्भवत्त्येवं यथा देवतं व्व्यूहति तद्यदेवं व्व्यूहति ॥ ४ ॥ यजमान ऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृ*तमनु प्प्राश्चमेवैतद्यजमानमुदूहत्त्यपाश्चं तमपोहति योऽस्मा ऽअरातीयत्त्यत्त्वैव जुहूमन्न्वाद्य ऽउपभृतमनु प्प्राश्चमेवैतदत्तारमुदूहत्त्यपाश्चमाद्यमपोहति ॥ ५ ॥ तद्वा ऽएतत् । समान ऽएव कर्म्मन्व्याक्रियते तस्मादु समानादेव पुरुषादत्ता चाऽऽद्यश्च जायेते ऽइदᳬ हि चतुर्थे पुरुषे तृतीये सङ्गच्छामह ऽइति विदेवं दीव्व्यमाना जात्त्या ऽआसत ऽएतस्मादु तत् ॥ ६ ॥ अथ जुह्वा परिधीन्त्समनक्ति । यया देवेभ्योऽहौषीद्यया यज्ञᳬ समतिष्ठिपत्तयैवैतत्त्परिधीन्न्प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति ॥ ७ ॥ स समनक्ति । '[2]व्वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्त्येभ्यस्त्वे'त्त्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्त्या ऽएतेभ्यस्त्वेत्त्येवैतदाह ॥ ८ ॥

---

(१) शु० सं० अ० २ क० १५ । (२) शु० सं० अ० २ क० १६ ।

* अश्वत्थकाष्ठनिर्मिता जुहूसदृशी उपसमीपे भ्रियते ध्रियते इति व्युत्पत्त्या अध्वर्युणा होमार्थं धृतदक्षकरसम्बन्धिजुह्वन्तिके धारणादुपभृदित्युच्यते ।

अथ परिधिमभिपद्याऽऽश्रावयति । परिधिभ्यो ह्येतदाश्रावयति यज्ञो वा ऽआश्रावणं यज्ञेनैवैतत्प्रत्यक्षं परिधीन्प्रीणाति तस्मात्परिधिमभिपद्याऽऽश्रावयति ॥ ९ ॥ स ऽआश्राव्याऽऽह । 'इषिता[1] दैव्या होतार' ऽइति दैव्या वा ऽएते होतारो यत्परिधयोऽग्नयो हीष्टा दैव्या होतार ऽइत्येवैतदाह यदाहेषिता दैव्या होतार ऽइति 'भद्रवाच्च्याये'[2]ति स्वयं वा ऽएतस्मै देवा युक्ता भवन्ति यत्साधु वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्च्यायेति 'प्रेषितो[3] मानुषः सूक्तवाकाये'ति तदिमं मानुषः होतारः सूक्तवाकाय प्रसौति ॥ १० ॥ अथ प्रस्तरमादत्ते। यजमानो वै प्रस्तरस्तद्यत्राऽस्य यज्ञोऽगँस्तदेवैतद्यजमानः स्वगाकरोति देवलोकं वा ऽअस्य यज्ञोऽगन्देवलोकमेवैतद्यजमानमपि नयति ॥ ११ ॥ स यदि वृष्टिकामः स्यात् । एतेनैवाऽऽददीत 'सञ्ज्ञानाथां[4] द्यावापृथिवी'ऽइति यदा वै द्यावापृथिवी सञ्ज्ञानाते* ऽथ वर्षति तस्मादाह सञ्ज्ञानाथां द्यावापृथिवी ऽइति 'मित्रा[5]वरुणौ त्वा वृष्ट्यावतामि'ति तद्यो वर्षस्येष्टे स त्वा वृष्ट्याऽवत्वित्येवैतदाहाऽयं वै वर्षस्येष्टे योऽयं पवते सोऽयमेक ऽइवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च ताविमौ प्राणोदानौ प्राणोदानौ वै मित्रावरुणौ तद्य ऽएव वर्षस्येष्टे स त्वा वृष्ट्याऽवत्वित्येवैतदाह तमेते-

---

(१) का० श्रौ० सू० ३, ६, १। (२) का० श्रौ० सू० ३, ६, २। (३) का० श्रौ० सू० ३, ६, १। (४) शु० सं० अ० २ क० १६। (५) शु० सं० अ० २ क० १६।

* 'ग' पुस्तके 'सज्जानाथे' इति।

नैवाऽऽददीत यदा ह्येव कदा च वृष्टिः शमिव* तमनक्त्या-हुतिमेवैतत्करोत्याहुतिर्भूत्वा देवलोकं गच्छादिति ॥ १२ ॥ स वा ऽअग्रं जुह्वामनक्ति । मद्ध्यमुपभृति मूलं ध्रुवायामग्र-मिव हि जुहूर्मद्ध्यमिवोपभृन्मूलमिव ध्रुवा† ॥१३॥ सोऽ-नक्ति । '[1]व्यन्तु वयोऽक्तꣳ रिहाणा' ऽइति वय ऽएवैनमे-तद्भूतमस्मान्मनुष्यलोकाद्देवलोकमभ्युत्पातयति तन्नीचैरिव हरति द्वयं तद्यस्मान्नीचैरिव हरेद्यजमानो वै प्रस्तरोऽस्या ऽएवैनमेतत्प्रतिष्ठायै नोद्धन्तीहो ऽएव वृष्टिं नियच्छति ॥ १४ ॥ स हरति 'म[2]रुतां पृषतीर्गच्छे'ति देवलोकं गच्छेत्येवैतदाह यदाह मरुतां पृषतीर्गच्छेति '[3]वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावहे'तीयं वै वशा पृश्निर्यदिदमस्यां मूलि चाऽमूलं चाऽन्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरियं भूत्वा दिवं गच्छेत्येवैतदाह ततो नो वृष्टिमावहेति वृष्टाद्वा ऽऊर्ग्रसः सुभूतं जायते तस्मादाह ततो नो वृष्टिमावहेति ॥ १५ ॥ अथैकं तृणमपगृह्णाति । यजमानो वै प्रस्तरः स यत्कृत्स्नं प्रस्तरमनुप्रहरेत् क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति यावद्वेवाऽस्येह मानुषमायुस्तस्मा ऽएवैतदुपगृह्णाति ॥ १६ ॥ तन्मुहूर्त्तं धारयित्वाऽनुप्रहरति ।

* 'ख' पुस्तके 'समिव' इति ।

† विकङ्कतकाष्ठनिर्मिता जुहूसदृशी यागसमाप्तिं यावत् विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति गमनरहिता भवतीति ध्रुवा ।

(१) शु० सं० अ० २ क० १६ । (२) शु० सं० अ० २ क० १६ । (३) शु० सं० अ० २ क० १६ ।

तद्यत्राऽस्येतर ऽआत्माऽगँस्तद्देवाऽस्यैतद् गमयत्यथ यन्नाऽनुप्प्रहरेदन्तरियाद्ध यजमानं लोकात्तथो ह यजमानं लोकान्नाऽन्तरेति ॥ १७ ॥ तं प्प्राञ्चमनुसमस्यति । प्प्राची हि देवानां दिगथो ऽउदञ्चमुदीची हि मनुष्याणां दिक्तमङ्गुलिभिरेव *योयुप्प्येरन्न काष्ठैर्द्दारुभिर्व्वा ऽइतरछ शवं ऽव्यूषन्ति नेत्तथा करवाम यथेतरछ शवमिति तस्मादङ्गुलिभिरेव योयुप्प्येरन्न काष्ठैर्य्यदा होता †सूक्तवाकमाह ॥ १८ ॥ अथाऽग्नीदाहाऽनुप्प्रहरेति । तद्यत्राऽस्येतर ऽआत्माऽगँस्तद्देवाऽस्यैतद् गमयेत्त्येवैतदाह तूष्णीमेवाऽनुप्प्रहृत्य '[1]चक्षुष्पा ऽअग्नेऽसि चक्षुर्म्मे पाही'त्यात्मानमुपस्पृशति तेनो ऽअप्प्यात्मानं नाऽनुप्प्रव्वृणक्ति॥ १९ ॥ अथाऽऽह '[2]संव्वदस्वे'ति। संव्वादयैनं देवैरित्त्येवैतदाह'[3]ऽगानग्नीदि'त्यगन् खल्वित्त्येवैतदाहाऽगन्नितीतरछ प्प्रत्याह '[4]श्रावये'ति तं वै देवैछ श्रावय तमनुबोधयेत्त्येवैतदाह '[5]श्रौषडि'ति विदुर्व्वा ऽएनमनु वा ऽएनमभुत्सतेत्त्येवैतदाहैवमद्ध्वर्य्युश्चाऽग्नीच्च देवलोकं यजमानमपि नयतछ ॥२०॥ अथा ऽऽह '[6]स्वगा दैव्व्या होतृभ्य' ऽइति । दैव्व्या वा ऽएते होतारो यत्परिधयोऽग्नयो हि तानेवैतत्स्वगाकरोति तस्मादाह स्वगा दैव्व्या होतृभ्य ऽइति '[7]स्वँस्तिर्म्मानुषेभ्य' ऽइति तदस्मै मानुषाय होत्रे-

* 'युप रुप लुप विमोहने' दिवा० प० (१२९–१३१) 'योयुप्येरन्' अतिशयेन तं मूर्छयेयुरित्यर्थः।

† 'इदं द्यावापृथिवी भद्रमभूत्' इत्यनुवाकप्रतिपाद्यो मन्त्रविशेषः सूक्तवाकः, का० हौ० परि० (१. १३) इति।

(१) शु० सं० अ० २ क० १६। (२) का० श्रौ० सू० ३, ६, १५। (३) का० श्रौ० सू० ३, ६, १५। (४) का० श्रौ० सू० ३, ६, १५। (५) का० श्रौ० सू० ३, ६, १५। (६–७) का० श्रौ० सू० ३, ६, १५।

ऽह्वलामाशास्ते ॥ २१ ॥ अथ परिधीननुप्प्रहरति । स मद्ध्यममेवाऽग्रे परिधिमनुप्प्रहरति 'यं परिधिं पर्य्यधत्था ऽअग्ने देव पणिभिर्गुह्यमानः । तन्त ऽएतमनु जोषं भराम्म्येष नेत्त्वदपचेतयाता' ऽइत्य'ग्नेः प्प्रियं पाथोऽपीत'मितीतरावनुसमस्यति ॥ २२ ॥ अथ जुहूं चोपभृतं च सम्प्रगृह्णाति । अदो हैवाऽऽहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं चोपभृतं च सम्प्रगृह्णाति ॥ २३ ॥ स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । यद्वा ऽअनादिष्टं देवतायै हविर्गृह्यते सर्वा वै तस्मिन्देवता अपित्विन्यो मन्न्यन्ते न वा ऽएतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णात्त्येतदु वैश्वदेवꣳ हविर्यज्ञे ॥ २४ ॥ स सम्प्रगृह्णाति । 'सꣳस्रवभागा स्थेषा बृहन्त' ऽइति सꣳस्रवो ह्येव खलु परिशिष्टो भवति 'प्प्रस्तरेष्ठाः परिधेयाश्च देवा' ऽइति प्प्रस्तरश्च हि परिधयश्चाऽनुप्प्रहृता भवन्ती'मां वाचमभि विश्वे गृणन्त' ऽइत्येतदु वैश्वदेवं करो'त्यासद्याऽस्मिन्बर्हिषि मादद्ध्वꣳ स्वाहा वाडि'ति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २५ ॥ स यस्याऽनसो हविर्गृह्णन्ति । अनसस्तस्य धुरि विमुञ्चन्ति यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति यस्यो पात्र्यै स्फ्ये तस्य

* बाहुमात्र्यः पलाशादिसमिध आहवनीयस्य परितो निधानात् 'परिधयः' इत्युच्यन्ते ।

(१) शु० सं० अ० २ क० १७ । (२) शु० सं० अ० २ क० १७ । (३) शु० सं० अ० २ क० १८ । (४) शु० सं० अ० २ क० १८ । (५) शु० सं० अ० २ क० १९ । (६) शु० सं० अ० २ क० १९ ।

यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति ॥ २६ ॥ युजौ ह वा ऽएते यज्ञस्य यत्स्रुचौ । ते ऽएतद्युङ्क्ते यत्प्रचरति स यं निधाया-ऽवद्येग्रथा वाहनमवाच्छैंदेवं तत्ते ऽएतत्स्विष्टकृति विमोचन-मागच्छतस्ते तत्सादयति तद्विमुञ्चति ते ऽएतत्पुनः प्प्रयुङ्क्तेऽनुयाजेषु सोऽनुयाजैश्चरित्वैतद्विमोचनमागच्छति ते तत्सादयति तद्विमुञ्चति ते ऽएतत्पुनः प्प्रयुङ्क्ते यत्स-म्प्रगृह्णाति तद्यां गतिमभियुङ्क्ते तां गतिं गत्वा विमुञ्चते यज्ञं वा ऽअनुप्प्रजास्तस्मादयं पुरुषो युङ्क्तेऽथ विमु-ञ्चतेऽथ युङ्क्ते तद्यां गतिमभियुङ्क्ते तां गतिं गत्वाऽन्ततो विमुञ्चते स सादयति '[1]घृताची स्थो धुर्य्यौ पातꣳ सुम्म्ने स्थꣳ सुम्म्ने मा धत्तमि'ति साध्व्यौ स्थꣳ साधौ मा धत्तमित्ये-वैतदाह ॥ २७ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥



स यत्राऽऽह । '[2]इषिता दैव्व्या होतारो भद्द्रवाच्च्याय-प्प्रेषितो मानुषꣳ सूक्तवाकाये'ति यदुतो होताऽन्वाह सूक्तैव* तदाह यजमानायैवैतदाशिषमाशास्ते तद्वा ऽएतदुपरिष्टाद्यज्ञस्याऽऽशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टा-

(१) शु० सं० अ० २ क० १९ । (२) का० श्रौ० सू० ३. ६. २ ।

* 'ग-च' पुस्तके "सूक्त ऽइव' इति पाठः ।

यज्ञस्याऽऽशिषमाशास्ते ॥ १ ॥ यज्ञं वा ऽएष जनयति । यो यजत ऽएतेन ह्युक्ता ऽऋत्विजस्तन्न्वते तं जनयन्त्यथाऽऽशिषमाशास्ते तामस्मै यज्ञ ऽआशिषꣳ सन्नमयति यामाशिषमाशास्ते यो माऽजीजनतेति तस्माद्वा ऽउपरिष्टाद्यज्ञस्याऽऽशिषमाशास्ते ॥ २ ॥ देवान्न्वा ऽएष प्रीणाति । यो यजत ऽएतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्त्वा तेष्वपित्त्वी भवति तेष्वपित्त्वी भूत्त्वाऽथाऽऽशिषमाशास्ते तामस्मै देवा ऽआशिषꣳ सन्नमयन्ति यामाशिषमाशास्ते यो नोऽप्रैषीदिति तस्माद्वा ऽउपरिष्टाद् यज्ञस्याऽऽशिषमाशास्ते ॥ ३॥ अथ प्रातिपद्यते । '[१]इदं द्यावापृथिवी भद्रमभूदि'ति भद्रꣳ ह्यभूद्यो यज्ञस्य सꣳस्थामग'न्नाधर्म [२]सूक्तवाकमुत नमोवाकमि'त्युभयं वा ऽएतद्यज्ञ ऽएव यत्सूक्तवाकश्च नमोवाकश्चाऽरात्स्म यज्ञमविदाम यज्ञमित्त्येवैतदाहा'[३]ऽग्ने त्वꣳ सूक्तवागस्युपश्रुती दिवस्पृथिव्योरि'त्त्यग्निमेवैतदाह त्वꣳ सूक्तवागस्युपशृण्वत्योरनयोर्द्यावापृथिव्योरित्त्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्त्यन्नवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्त्येवैतदाह ॥ ४ ॥ '[४]शङ्गवी *जीवदानू'ऽइति । शङ्गवी ते जीवदानू स्तामित्त्येवैतदा'हाऽत्रस्नूऽअप्रवेदे' ऽइति माऽऽह कस्माच्चन प्रत्राऽऽसीर्म्मो त ऽइदं

(१) तै० ब्रा० ३, ५, १०। (२) तै० ब्रा० ३, ५, १०। (३) तै० ब्रा० ३. ५. १०। (४) तै० ब्रा० ३. ५. १०।

* 'जीवदानू' 'जीरदानू' शब्दौ अभिन्नार्थकौ, शाखाभेदात् भिन्नरूपौ श्रूयेते ॥

पुष्टं कश्चन प्रविदतेत्येवैतदाह ॥५॥ '[1]उरुगव्यूती ऽअभयङ्कृतावि'ति । उरुगव्यूती तेऽभये स्तामित्येवैतदाह '[2]वृष्टिद्यावा *रीत्यापे'ति वृष्टिमत्यौ ते स्तामित्येवैतदाह ॥ ६ ॥ '[3]शम्भुवौ मयोभुवा'विति । शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाहो'[4]र्जस्वती च पयस्वती चे'ति रसवत्यौ त ऽउपजीवनीये स्तामित्येवैतदाह ॥ ७ ॥ 'सूपचर[5]णा च स्वधिचरणा' चेति । सूपचरणाह तेऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो त ऽइयमस्तु यामुपरिष्टादधिचरसीत्येवैतदाह 'तयो[6]राविदी'ति तयोरनुमन्यमानयोरित्येवैतदाह ॥ ८ ॥ '[7]अग्निरिदꣳ हविः । अजुषताऽवीवृधत महो ज्यायोऽकृते'ति तदाग्नेयमाज्यभागमाह 'सोम ऽइदꣳ हविरजुषताऽवीवृधत महो ज्यायोऽकृते'ति तत्सौम्यमाज्यभागमाहा'ऽग्निरिदꣳ हवि[8]रजुषताऽवीवृधत महो ज्यायोऽकृते'ति तद्य ऽएष ऽउभयत्राऽच्युत ऽआग्नेयः पुरोडाशो भवति तमाह ॥ ९ ॥ अथ यथादेवतम् । 'दे[9]वा ऽआज्यपा ऽआज्यमजुषन्ताऽवीवृधन्त महो ज्यायोऽकृते'ति तत्प्रयाजाऽनुयाजानाह प्रयाजाऽनुयाजा वै देवा ऽआज्यपा 'ऽअग्नि[10]र्होत्रेणे[11]दꣳ हविरजुषताऽवीवृधत महो ज्यायोऽकृते'ति तदग्निꣳ होत्रे-

* रीतिस्तृप्तिस्तामापत इति 'रीत्यापा' सुष्ठु वर्षस्याविल्यर्थः ।

(१) तै० ब्रा० ३. ५. १०। (२) तै० ब्रा० ३. ५. १०। (३) तै० ब्रा० ३. ५. १०। (४) तै० ब्रा० ३. ५. १०। (५) तै० ब्रा० ३. ५. १०। (६) तै० ब्रा० ३. ५. १०। (७) तै० ब्रा० ३. ५. १०। (८) तै० ब्रा० ३. ५. १०। (९) तै० ब्रा० ३. ५. १०। (१०) तै० ब्रा० ३. ५. १०। (११) तै० ब्रा० ३. ५. १०।

णाऽऽहाँऽजुषतेत्त्येवं या ऽइष्टा देवता भवन्ति ताः सम्पश्य-त्यसौ हविरजुषताऽसौ हविरजुषतेति तद्यज्ञस्यैवैतत्समृद्धि-माशास्ते यद्धि देवा हविर्ज्जुषन्ते तेन हि महज्जयति तस्मादाहाऽजुषतेत्त्यऽवीवृधतेति यद्वै देवा[†] हविर्ज्जोषयन्ते तदपि गिरिमात्रं कुर्वते तस्मादाहाऽवीवृधतेति ॥ १० ॥ 'महो ज्यायोऽक्रते'ति । यज्ञो वै देवानां महस्तछं ह्येतज्ज्यायाछं-समिव कुर्वते तस्मादाह महो ज्यायोऽक्रतेति ॥ ११ ॥ 'अस्यामृधेद्धोत्रायां देवङ्गमायामि'ति । अस्याछं राध्नोतु होत्रायां देवङ्गमायामित्त्येवैतदाहाऽऽशास्तेऽयं यजमानोऽसा-विति नाम गृह्णाति तदेनं प्रत्त्यक्षमाशिषा सम्पादयति ॥ १२ ॥ 'दीर्घायुत्त्वमाशास्त' ऽइति । सा याऽमुत्रोत्तरा देव-यज्ज्या तदिह प्प्रत्त्यक्षं दीर्घायुत्त्वछं ॥ १३ ॥ 'सुप्प्रजास्त्व माशास्त' ऽइति । तद्यदमुत्र भूयो हविष्करणं तदिह प्प्रत्त्यक्षछं सुप्प्रजास्त्वं प्रशासनछं स कुर्य्याद्य ऽएवं कुर्य्या-दुत्तरां देवयज्ज्यामाशास्त ऽइति त्त्वेव ब्रूयात्तदेव जीवातुं तत्प्रजां तत्पशून् ॥ १४ ॥ 'भूयो हविष्करणमाशास्त'-ऽइति । तद्वेव तत् 'सजातवनस्यामाशास्त' ऽइति प्प्राणा वै सजाताःप्राणैर्हि सह जायतेतत्प्राणानाशास्ते ॥ १५ ॥ 'दिव्व्यं-धामाऽऽशास्त'ऽइति । देवलोके मेऽप्प्यसदिति वै यजते यो यजते तद्देवलोकऽएवैनमेतदपित्त्विनं करोति 'यदत्रेर्न

* 'णाऽजुषत' इति 'ख' 'च' पुस्तके पाठः ।

† 'ख च' पुस्तके 'हविर्ज्जुषन्ते' इति पाठः ।

( १ ) तै० ब्रा० ३. ५. १० । ( २ ) तै० ब्रा० ३. ५. १० । ( ३ ) तै० ब्रा० ३. ५. १० । ( ४ ) तै० ब्रा० ३. ५. १० । ( ५ ) तै० ब्रा० ३. ५. १० । ( ६ ) तै० ब्रा० ३. ५. १० । ( ७ ) तै० ब्रा० ३. ५. १० । ( ८ ) तै० ब्रा० ३. ५. १० ।

हविषाऽऽशास्ते तदश्याद्दृढ्याद्'ति यदनेन हविषाऽऽशास्ते तदस्मै सर्वं समृध्यतामित्येवैतदाह ॥१६॥ ता वा एताः। पञ्चाऽऽशिषः करोति तिस्र इडायां ता अष्टावष्टाक्षरा वै गायत्री वीर्यं गायत्री वीर्यमेवैतदाशिषोऽभिसम्पादयति ॥ १७ ॥ नाऽतो भूयसीः कुर्यात् । अतिरिक्तं ह कुर्याद्यदतो भूयसीः कुर्याद्यद्वै यज्ञस्याऽतिरिक्तं द्विषन्तं हाऽस्य तद् भ्रातृव्यमभ्यतिरिच्यते तस्मान्नाऽतो भूयसीः कुर्यात् ॥ १८ ॥ अपीद्धै कनीयसीः सप्त । 'तदस्मै देवा रासन्तामि'ति तदस्मै देवा अनुमन्यन्तामित्येवैतदाह 'तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषा' इति तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्मा एतद्वनवामहा इत्येवैतदाह ॥ १९ ॥ 'इष्टं च वित्तं चे'ति । ऐषिषुरिव वा एतद्यज्ञं तमविदंस्तस्मादाहेष्टं च वित्तं चे'त्युभे चैनं द्यावापृथिवी अंहसस्पाता'मित्युभे चैनं द्यावापृथिवी आर्त्तेर्गोपायतामित्येवैतदाह ॥२०॥ तदु हैक आहुः । उभे च मेति तथा होताऽऽशिष आत्मानं नाऽन्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञ आशीः किन्नु तत्रर्त्विजां यां वै काश्च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा न ह स एतां क चनाऽऽशिषं प्रतिष्ठापयति य आहोभे च मेति तस्मादु ब्रूयादुभे चैनमित्येव ॥ २१ ॥ 'इह गतिर्वामस्ये'ति । तद्यदेव यज्ञस्य साधु तदेवाऽस्मिन्ने-

(१) तै० ब्रा० ३. ५. १०। (२) तै० ब्रा० ३. ५. १०। (३) तै० ब्रा० ३. ५. १०। (४) तै० ब्रा० ३. ५. १०।

तद्दधाति तस्मादाहेह गतिर्वामस्येति ॥ २२ ॥ 'इदं[1] च नमो देवेभ्य' ऽइति । तद्यज्ञस्यैवैतत्सꣳस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदं च नमो देवेभ्य ऽइति ॥ २३ ॥ अथ शंय्वोराह । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदाञ्चकार स देवलोकमपीयाय तत्तदन्तर्हितमिव मनुष्येभ्य ऽआस ॥२४॥ तद्वा ऽऋषीणामनुश्रुतमास । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदाञ्चकार स देवलोकमपीयायेति ते तामेव यज्ञस्य सꣳस्थामुपायन्या शंयुर्बार्हस्पत्योऽवेद्यच्छंय्वोरब्रुवंस्ताम्वेवैष ऽएतद्यज्ञस्य सꣳस्थामुपैति याꣳ शंयुर्बार्हस्पत्योऽवेद्यच्छंय्वोराह तस्माद्वै शंय्वोराह ॥ २५ ॥ स प्रतिपद्यते । 'तच्छंय्वोरावृणीमह'[2] ऽइति तां यज्ञस्य सꣳस्थामावृणीमहे याꣳ शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह ॥ २६ ॥ 'गातुं यज्ञाय[3] गातुं यज्ञपतय' ऽइति । गातुꣳ ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सꣳस्थान्दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य' ऽइति स्वस्ति नो देवत्राऽस्तु स्वस्ति मनुष्यत्रेत्येवैतदा'होदूर्ध्वं जिगातु भेषजमि'त्यूदूर्ध्वं* नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥ २७ ॥ 'शं[6] नो ऽअस्तु द्विपदे शञ्चतुष्पद' ऽइति । एतावद्वा ऽइदꣳ सर्वं यावद् द्विपाच्चैव चतुष्पाच्च तस्मा ऽएवैतद्यज्ञस्य सꣳस्थां गत्वा शङ्करोति

(१) तै० ब्रा० ३. ५. १०। (२) तै० ब्रा० ३. ५. ११। (३) तै० ब्रा० ३. ५. ११। (४) तै० ब्रा० ३. ५. ११। (५) तै० ब्रा० ३. ५. ११।' (६) तै० ब्रा० ३. ५. ११।

* 'क' पुस्तके 'त्यूर्द्ध्वो नोऽयम्' इति लभ्यते ।

तस्मादाह शन्नो ऽअस्तु द्विपदे शञ्चतुष्पद ऽइति ॥ २८ ॥ अथाऽनयेत्त्युपस्पृशति । अमानुष ऽइव वा ऽएतद्भवति यदार्त्त्विज्ज्ये प्प्रवृत्त ऽइयं वै पृथिवी प्प्रतिष्ठा तदस्यामेवैतत्त्प्रतिष्ठायां प्रतितिष्ठति तदु खलु पुनर्म्मानुषो भवति तस्मादनयेत्त्युपस्पृशति ॥ २९ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



ते वै पत्नीः संयाजयिष्यन्तः प्प्रतिपरायन्ति । जुहूं च स्रुवं चाऽद्ध्वर्य्युरादत्ते वेदꣳ होताऽऽज्यविलापनीमन्नीत् ॥१॥ तद्धैकेषामद्ध्वर्य्युः । पूर्वेणाऽऽहवनीयं पर्य्येति तदु तथा न कुर्य्याद्बहिर्द्धा ह यज्ञात्स्याद्यत्तेनेयात् ॥ २ ॥ जघनेनो हैव पत्नीम् । एकेषामद्ध्वर्य्युरेति नो ऽएव तथा कुर्य्यात्पूर्वार्द्धो वै यज्ञस्याऽद्ध्वर्य्युर्ज्जघनार्द्धः पत्नी यथा भसत्तः शिरः प्प्रतिदद्ध्यादेवं तद्बहिर्द्धा हैव यज्ञात्स्याद्यत्तेनेयात् ॥ ३ ॥ अन्तरेणो हैव पत्नीम् । एकेषामद्ध्वर्य्युरेति नो ऽएव तथा कुर्य्यादन्तरियाद्ध यज्ञात्पत्नीं यत्तेनेयात्तस्मादु पूर्वेणैव गार्हपत्यमन्तरेणाऽऽहवनीयं चैति तथा ह न बहिर्द्धा यज्ञाद्भवति यथो ऽएवाऽदः प्प्रचरन्नन्तरेण सञ्चरति स ऽउ ऽएवाऽस्यैष सञ्चरो भवति ॥४॥ अथ पत्नीः* संय्याजयन्ति । यज्ञाद्वै

* दर्शपूर्णमासशेषभूताः पत्नीदेवताकाश्चत्वारो यागाः 'पत्नीसंयाजाः' । तत्प्रकारश्चेत्थम्—अध्वर्युः आहवनीयाग्नेः पूर्वतः गार्हपत्यस्य पश्चिमतो वा तत्राऽपि पत्न्या मध्यतो वा बाह्यतो वा गार्हपत्यस्येशानदेशं गत्वा उपविश्य दक्षिणं जानु भूमौ निपात्य स्थाल्याज्येन चतस्रो देवता अध्वर्युर्यजेदिति ।

प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात् प्रजायन्ते मिथुनात्प्रजायमाना ऽअन्ततो यज्ञस्य प्रजायन्ते तदेना ऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पत्नीः संयाजयन्ति ॥ ५ ॥ चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुनमेवैतत्प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥ ६ ॥ ता वा ऽआज्यहविषो भवन्ति । रेतो वा ऽआज्यः रेत ऽएवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति ॥ ७ ॥ तेनोपांशु चरन्ति । तिर ऽइव वै मिथुनेन चर्य्यते तिर ऽइवैतद्यदुपांशु तस्मादुपांशु चरन्ति ॥ ८ ॥ अथ सोमं यजति । रेतो वै सोमो रेत ऽएवैतत्सिञ्चति तस्मात्सोमं यजति ॥ ९ ॥ अथ त्वष्टारं यजति । त्वष्टा वै सिक्तः रेतो विकरोति † तदेष ऽएवैतत्सिक्तः रेतो विकरोति तस्मात्त्वष्टारं यजति ॥ १० ॥ अथ देवानां पत्नीर्य्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्य्यजति ॥ ११ ॥ स यत्र देवानां पत्नीर्य्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता ऽआसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ताभ्य ऽएवै-

† 'ख च' पुस्तके 'तदेष० विकरोति' एतदन्तं यावत् पाठो नोपलभ्यते ।

* 'देवा गातुविदः' इति मन्त्रेण विहितो होमः 'समिष्टयजुः' । सम्य इष्टा देवता इज्यन्ते अनेनेति व्यासवाक्यम् ।

तत्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर ऽइवैव पुꣳसो जिघत्सन्ति या ऽइव तु ता ऽइवेति ह स्माऽऽह याज्ञवल्क्यः ॥ १२ ॥ अथाऽग्निं गृहपतिं यजति । अयं वा ऽअग्निर्लोक ऽइममेवैतल्लोकमिमाः प्रजा ऽअभिप्रजनयति ता ऽइमं लोकमिमाः प्रजा ऽअभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥ १३ ॥ तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वा ऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वा ऽअनु जाया तदेवाऽस्याऽपि पत्नी स्वगाकृता भवतीयसि तद्ध ह कुर्य्याद्यत्प्रस्तरस्य रूपं कुर्य्यात्तस्मादिडान्तमेव स्यादुतो प्रस्तरस्यैव रूपं क्रियते ॥ १४ ॥ स यदि प्रस्तरस्य* रूपं कुर्य्यात् । यथैवाऽदः प्रस्तरेण यजमानꣳ स्वगाकरोत्त्येवमेवैतत्पत्नीꣳ स्वगाकरोति ॥ १५ ॥ स यदि प्रस्तरस्य रूपं कुर्य्यात् । वेदस्यैकं तृणमाच्छिद्याऽग्रं जुह्वामनक्ति मध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम् ॥ १६ ॥ अथाऽग्नीदाहाऽनुप्रहरेति । तूष्णीमेवाऽनुप्रहृत्य '[1]चक्षुष्पा ऽअग्नेऽसि चक्षुर्म्मे पाही'त्यात्मानमुपस्पृशति तेनो ऽअप्यात्मानं नाऽनुप्रवृणक्ति ॥१७॥ अथा ऽऽह '[2]संवदस्वे'ति । 'अगान[3]ग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्म्मानुषेभ्यः †शंय्योर्ब्रूही'ति ॥ १८ ॥ अथ

* प्रस्तरः कुशमुष्टिः ।

† 'ग' पुस्तके 'शम्योर्ब्रूहि' इत्येव पाठो दृश्यते ।

(१) शु० सं० अ० २ क० १६ । (२) का० श्रौ० सू० ३. ६. १५ । (३) का० श्रौ० सू० ३. ६. १५ ।

जुहूं च स्रुवं* च सम्प्रगृह्णाति । अदो हैवाऽऽहुतिं करोति यदनक्त्याहुतिर्भूत्त्वा देवलोकं गच्छादिति तस्माज्जुहूं च स्रुवं च सम्प्रगृह्णाति ॥१९॥ स वा ऽअग्नये सम्प्रगृह्णाति । 'अ(१)ग्ने-ऽदब्धायोऽशीतमे'त्त्यमृतो ह्यग्निस्तस्मादाहाऽदब्धायेत्त्य-शीतमेत्त्यशिष्टो ह्यग्निस्तस्मादाहाऽशीतमेति 'पाहि मा दिद्योः पाहि प्रसित्त्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या' ऽइति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्त्येवैतदा(२)'हाऽविषं नः पितुं कृणिव'त्त्यन्नं वै पितुरनमीवं न ऽइदमकिल्बिषमन्नं कुर्वित्त्येवैतदाह 'सुषदा(३) योना'वित्त्यास्मन्नेयेतदाह 'स्वाहा(४) वाडि'ति तद्यथा वषट्कृतः हुतमेवमस्यैतद्भवति ॥ २० ॥ अथ वेदं पत्नी विस्रꣳसयति । योषा वै वेदिर्वृषा वेदो मिथुनाय वै वेदः क्रियतेऽथ यदेनेन यज्ञ ऽउपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥ २१ ॥ अथ यत्पत्नी विस्रꣳसयति । योषा वै पत्नी वृषा वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्माद्वेदं पत्नी विस्रꣳसयति ॥ २२ ॥ सा विस्रꣳसयति । 'वेदोऽसि(५) येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूया' ऽइति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥ २३ ॥ तमा वेदेः सꣳस्तृणाति । योषा वै वेदिर्वृषा वेदः पश्चाद्वै परीत्य वृषा योषामधिद्रवति पश्चादेवैनामे-

* अङ्गुष्ठपर्वप्रमाणेन वृत्तमुखः स्रुवः सम्पाद्यः ।
तथा च सूत्रम्–'अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः' (का० श्रौ० सू० १. ३. ३९)इति ।

(१) शु० सं० अ० २ क० २० । (२) शु० सं० अ० २ क० २० । (३) शु० सं० अ० २ क० २० । (४) शु० सं० अ० २ क० २० । (५) शु० सं० अ० २ क० २० । (६) शु० सं० अ० २ क० २१ ।

तत्परीत्त्य व्वृष्णा वेदेनाऽधिद्द्रावयति तस्माद्वा वेदेः सध्स्तृणाति ॥ २४ ॥ अथ समिष्टयजुर्ज्जुहोति । प्प्राङ् मे यज्ञोऽनुसन्तिष्ठाता ऽइत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संख्याजयेत्प्रत्यङ्ङु हैवाऽस्यैष यज्ञः सन्तिष्ठेत तस्माद्वा ऽएतर्हि समिष्टयजुर्ज्जुहोति प्प्राङ् मे यज्ञोऽनुसन्तिष्ठाता ऽइति ॥ २५ ॥ अथ यस्मात्समिष्टयजुर्न्नाम । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्व्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्व्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्न्नाम ॥ २६ ॥ अथ यस्मात्समिष्टयजुर्ज्जुहोति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायत ऽउप ह वै ता ऽआसते यावन्न समिष्टयजुर्ज्जुह्वतीदं नु नो जुह्वत्विति ता ऽएवैतद्यथायथं व्व्यवसृजति यत्र यत्राऽऽसां चरणं तदनु यज्ञं वा ऽएतदजीजनत यदेनमतत तं जनयित्त्वा यत्राऽस्य प्प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात् समिष्टयजुर्ज्जुहोति ॥ २७ ॥ स जुहोति । '[1]देवा गातुविद' ऽइति गातुविदो हि देवा '[2]गातुं वित्त्वे'ति यज्ञं वित्त्वेत्त्येवैतदाह '[3]गातुमिते'ति तदेतेन यथायथं व्व्यवसृजति 'मनसस्पत ऽइमं देव यज्ञध्ं स्वाहा व्वाते धा'ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञध्ं सम्भृत्त्यैतस्मिन्यज्ञे प्प्रतिष्ठापयति यज्ञेन यज्ञध्ं सन्दधाति तस्मादाह स्वाहा व्वाते धा ऽइति ॥ २८ ॥ अथ बर्हिर्ज्जुहोति ।

(१) शु० सं० अ० २ क० २१। (२) शु० सं० अ० २ क० २१। (३) शु० सं० अ० २ क० २१। (४) शु० सं० अ० २ क० २१।

अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥ २९ ॥ तां वा ऽअतिरिक्तां जुहोति । समिष्टयजुर्ह्येवाऽन्तो यज्ञस्य यदूर्ध्वं समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा ऽअतिरिक्ता ऽअसम्मिता ऽओषधयः प्रजायन्ते ॥ ३० ॥ स जुहोति । '[1]सं बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहे'ति ॥ ३१ ॥ अथ प्रणीता दक्षिणतः परीत्य निनयति । युङ्क्ते वा ऽएतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङ् हाऽविमुक्त ऽएव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणीता दक्षिणतः परीत्य निनयति ॥ ३२ ॥ स निनयति । '[2]कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषाये'ति तत्पुष्टिमुत्तमां यजमानाय निराह स येनैव *प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथ †फलीकरणान्कपालेनाऽधोऽधः कृष्णाजिनमुपाऽस्यति '[3]रक्षसां भागोऽसी'ति ॥ ३३ ॥ देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिर-

( १ ) शु० सं० अ० २ क० २२ । ( २ ) शु० सं० अ० २ क० २३ । ( ३ ) शु० सं० अ० २ क० २३ ।

* चमसे गृहीता आपः प्रणीताः, तासां स्थापनम् स्वस्थाने निधानम् प्रणीताप्रणयनम् ।

† तण्डुलानां कणादिनिरसनेन शोधनं फलीकरणम् ।

ऽएतस्मिन्यज्ञे प्प्रजापतौ पितरि संव्वत्सरेऽस्माकमयं भविष्यत्त्यस्माकमयं भविष्यतीति ॥ ३४ ॥ ततो देवाः । सर्व्वं यज्ञᳬं संव्वृज्ज्याऽथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान्निरभजन्नस्ना पशोः फलीकरणैर्हविर्ष्यज्ञात्सुनिर्भक्ता ऽअसन्नित्त्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्येव स तावच्छᳬसत ऽउत हि व्रशे लब्ध्वाऽऽह किं मा बभक्थेति स यमेवैभ्यो देवा भागमकल्पयँस्तमेवैभ्य ऽएष ऽएतद्भागं करोत्त्यथ यदधोऽधः कृष्णाजिनमुपाऽस्यत्त्यनग्नावेवैभ्य ऽएतदन्धे तमसि प्प्रवेशयति तथो ऽएवाऽसृक्पशो रक्षसां भागोऽसीत्त्यनग्नावन्धे तमसि प्प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसाᳬं हि स भागः ॥३५॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



सᳬस्थिते यज्ञे । दक्षिणतः परीत्त्य पूर्ण्णपात्रं निनयति तथा ह्युदग्भवति तस्माद्दक्षिणतः परीत्त्य पूर्ण्णपात्रं निनयति देवलोके मेऽप्प्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाऽभिप्प्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ १ ॥ स ऽएष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्प्रति तमोषतो यः प्प्रत्त्युष्योऽत्त्यु तᳬ सृजेते योऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानᳬ शमयति ॥ २ ॥ पूर्ण्णं निनयति । सर्व्वं वै पूर्ण्णᳬ सर्व्वेणैवैनमेतच्छमयति

सन्ततमव्व्यवच्छिन्नं निनयति सन्ततेनैवैनमेतदव्व्यवच्छिन्नेन शमयति ॥ ३ ॥ यद्वेव पूर्ण्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते व्व्यस्य तद्वृहन्ति क्षण्वन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति ॥ ४ ॥ पूर्ण्णं निनयति । सर्व्वं वै पूर्ण्णꣳ सर्व्वेणैवैतत्सन्दधाति सन्ततमव्व्यवच्छिन्नं निनयति सन्ततेनैवैतदव्व्यवच्छिन्नेन सन्दधाति ॥ ५ ॥ तदञ्जलिना प्प्रतिगृह्णाति । 'सं व्वर्च्चसा[1] पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्न्वो यद्विलिष्टमि'ति यद्विवृढं तत्सन्दधाति ॥ ६ ॥ अथ मुखमुपस्पृशते । द्वयं तद्यस्मान्मुखमुपस्पृशतेऽमृतं वा ऽआपोऽमृतेनैवैतत्सꣳस्पृशतऽएतदु चैवैतत्कर्म्माऽऽत्मन्न्कुरुते तस्मान्मुखमुपस्पृशते ॥७॥ अथ व्विष्णुक्रमान्क्रमते । देवान्न्वा ऽएष प्प्रीणाति यो यजतऽएतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाऽभिप्प्रक्रामति ॥ ८ ॥ यद्वेव *व्विष्णुक्रमान्क्रमते । यज्ञो वै व्विष्णुः स देवेभ्य ऽइमां व्विक्रान्तिं व्विचक्रमे यैषामियं व्विक्रान्तिरिदमेव प्प्रथमेन पदेन पस्पाराऽथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष ऽएतस्मै व्विष्णुर्य्यज्ञो व्विक्रान्तिं व्विक्रमते तस्माद्विष्णुक्रमान्न्क्रमते तद्वा ऽइत ऽएव पराचीनं भूयिष्ठा ऽइव क्रमन्ते ॥ ९ ॥ तदु त'[2]त्पृथिव्व्यां व्विष्णुर्व्य-

( १ ) शु० सं० अ० २ क० २४ । ( २ ) शु० सं० अ० २ क० २५ ।

* विष्णुपादबुद्ध्या स्वपादस्य भूमौ प्रक्षेपाः विष्णुक्रमाः ।

क्रꣳस्त। गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे व्विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मो दिवि व्विष्णुर्व्यक्रꣳस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्म' इत्येवमिमाँल्लोकान्त्समारुह्याऽथैषा गतिरेषा प्रतिष्ठा य एष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोकस्तदेवमिमाँल्लोकान्त्समारुह्याऽथैतां गतिमेतां प्रतिष्ठां गच्छति परस्तात्त्वेवाऽर्वाङ् क्रमेत य इतोऽनुशासनं चिकीर्षेद् द्वयं तद्यस्मात्परस्तादर्वाङ् क्रमेत* ॥ १० ॥ अपसरणतो ह वा ऽअग्रे देवा जयन्तोऽजयन्। दिवमेवाऽग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्त्सपत्नाननुदन्त तथो ऽएवैष ऽएतदपसरणत ऽएवाऽग्रे जयञ्जयति दिवमेवाऽग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्त्सपत्नान्नुदत ऽइयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ११ ॥ तदु 'तद्दिवि व्विष्णुर्व्यक्रꣳस्त† । जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मोऽन्तरिक्षे व्विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च

---

* 'क्रमते' इति 'ग' पुस्तके।

† प्राङ्मुखो यजमान उत्थाय दक्षिणवेदिश्रोणेरारभ्य आहवनीयादर्वाक् 'दिवि व्विष्णुः' 'अन्तरिक्षे व्विष्णुः' 'पृथिव्यां विष्णुः' इति त्रिभिर्मन्त्रैः विष्णुक्रमाख्यान् क्रमणान् विदध्यादिति।

अथवा प्रथमक्रमणे 'पृथिव्यां विष्णुः' द्वितीये 'अन्तरिक्षे विष्णुः' तृतीये 'दिवि व्विष्णुः' इति मन्त्रक्रमे विकल्पो बोध्यः ।

(१) शु० सं० अ० २ क० २५।

वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया' ऽइत्यस्यां हीदं सर्वमन्नाद्यं प्रतिष्ठितं तस्मादाहाऽस्मादन्नादस्यै प्रतिष्ठाया ऽइति ॥ १२ ॥ अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ् प्रेक्षते ॥ १३ ॥ स प्रेक्षते । 'अगन्म[1] स्वरि'ति देवा वै स्वरगन्म देवानित्येवैतदाह 'सञ्ज्योतिषाऽभूमे'[2]ति सन्देवैरभूमेत्येवैतदाह ॥ १४ ॥ अथ सूर्य्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्य्यमुदीक्षते ॥ १५ ॥ स ऽउदीक्षते । 'स्वयम्भूरसि[3] श्रेष्ठो रश्मिरि'त्येष वै श्रेष्ठो रश्मिर्यत्सूर्य्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति 'वर्चोदा[4] ऽअसि वर्चो मे देही'ति त्वेवाऽहं ब्रवीमीति ह स्माऽऽह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद् ब्रह्मवर्चसी स्यादित्युतो ह स्माऽऽहौपोदितेय ऽएष वाऽव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ १६ ॥ अथाऽऽवर्त्तते । 'सूर्य्यस्या[5]ऽऽवृतमन्वावर्त्त' ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवाऽऽवृतमन्वावर्त्तते ॥ १७ ॥ अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद् गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवाऽस्येह मानुषमायुस्तस्मा ऽएवैतदुपातिष्ठते तस्माद् गार्हपत्यमुपति-

(१) शु० सं० अ० २ क० २५। (२) शु० सं० अ० २ क० २५। (३) शु० सं० अ० २ क० २६। (४) शु० सं० अ० २ क० २६। (५) शु० सं० अ० २ क० २६।

ष्ठते ॥ १८ ॥ स ऽउपातिष्ठते । 'अग्ने गृहपते सुगृहपतिस्त्वया ऽग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वम्मयाऽग्ने गृहपतिना भूया' ऽइति नाऽत्र तिरोहितमिवा'ऽस्त्यस्थूरि* णौ गार्हपत्यानि सन्त्वि'त्त्यनार्त्तानि नौ गार्हपत्त्यानि सन्त्वित्त्येवैतदाह 'शतꣳ हिमा' ऽइति शतं वर्षाणि जीव्यासमित्त्येवैतदाह तदु प्प्येतद् ब्रुवन्नाऽऽद्रियेताऽपि हि भूयाꣳसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादुप्प्येतद् ब्रुवन्नाऽऽद्रियेत ॥१९॥ अथाऽऽवर्त्तते । 'सूर्य्यस्याऽऽवृतमन्न्वावर्त्त' ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्त्वैतस्यैवाऽऽवृतमन्न्वावर्त्तते ॥ २० ॥ अथ पुत्रस्य नाम गृह्णाति । 'इदं मेऽयं वीर्य्यं पुत्रोऽनुसन्तनवदि'ति यदि पुत्रो न स्यादुप्प्यात्त्मन ऽएव नाम गृह्णीयात् ॥ २१ ॥ अथाऽऽहवनीयमुपातिष्ठते । प्राङ् मे यज्ञोऽनुसन्तिष्ठाता ऽइति तूष्णीमुपतिष्ठते ॥ २२ ॥ अथ व्रतं विसृजते । 'इदमहं य ऽएवाऽस्मि सोऽस्मी'त्त्यमानुष ऽइव वा ऽएतद्भवति यद् व्रतमुपैति न हि तदवकल्पते यद् ब्रूयादिदमहꣳ सत्त्यादनृतमुपैमीति तदु खलु पुनर्म्मानुषो

(१) शु० सं० अ० २ क० २७। (२) शु० सं० अ० २ क० २७। (३) शु० सं० अ० २ क० २७। (४) शु० सं० अ० २ क० २७। (५) मन्त्रोऽयं शाखान्तरीयः । कातीयसूत्रे तु–'इदं मे कर्मेदं वीर्यं पुत्रोऽनु सन्तनोतु (का० श्रौ० ३. ८. २२) इति। (६) शु० सं० अ० २ क० २८।

* एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते, तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिरिति ऋ० सं० भाष्ये (६. १५. १९)। शुक्लयजुःसंहिताभाष्ये तु—एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि, न स्थूरि अस्थूरि (२. २७) इति।

भवति तस्मादिदमहं य एवाऽस्मि सोऽस्मीत्येव व्रतं विसृजेत ॥ २३ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे सप्तमः प्रपाठकः ॥७॥ कण्डिका संख्या ११४ ॥

इति नवमोऽध्यायः ॥ ९ ॥

इति हविर्यज्ञनाम* प्रथमं काण्डं समाप्तम् ॥



* अस्मिन् काण्डे कण्डिकासङ्ख्या ८३७ ॥

# अथ एकपादिकानाम द्वितीयं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः—अग्न्याधानम्, पुनराधेयम्, अग्निहोत्रम्, पिण्डपितृयज्ञः, आग्रयणेष्टिः, दाक्षायणयज्ञः, चातुर्म्मास्यानि ।

॥ ॐ ॥ स यद्वा ऽइतश्चेतश्च सम्भरति । तत्सम्भाराणाᳬ सम्भारत्वं यत्र यत्राऽग्नेर्न्यक्तं ततस्ततः सम्भरति तद्यशसेव त्वदेवैनमेतत्समर्द्धयति पशुभिरिव त्वन्मिथुनेनेव त्वत्सम्भरन् ॥ १ ॥ अथोल्लिखति । तद्यदेवाऽस्यै पृथिव्या ऽअभिष्ठितं वाऽभिष्ठ्यूतं वा तदेवाऽस्या ऽएतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा ऽउल्लिखति ॥ २ ॥ अथाऽद्भिरभ्युक्षति । एष वा ऽअपाᳬ सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं वा ऽआपोऽन्नᳬ हि वा ऽआपस्तस्माद्यदेमं लोकमाप ऽआगच्छन्त्यथेहाऽन्नाद्यं जायते तदन्नाद्येनैवैनमेतत्समर्द्धयति ॥ ३ ॥ योषा वा ऽआपः । वृषाऽग्निर्म्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयत्यद्भिर्वा ऽइदᳬ सर्व्वमाप्तमद्भिरेवैनमेतदाप्त्वाऽऽधत्ते तस्मादपः सम्भरति ॥ ४ ॥ अथ हिरण्यᳬ सम्भरति । अग्निर्ह वा ऽअपोऽभिदद्ध्यौ मिथुन्न्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्राऽऽसिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्राऽऽसिञ्चत्तस्मादेनेन न धावयति न किञ्चन करोत्यथ

यशो देवरेतसꣳ हि तद्यशसैवैनमेतत्समर्द्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धिरण्यꣳ सम्भरति ॥ ५ ॥ अथोषान्त्सम्भरति । असौ ह वै द्यौरस्यै पृथिव्या ऽएतान्पशून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेव तत्पशुभिरेवैनमेतत्समर्द्धयति तेऽमुत ऽआगता ऽअस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते तदनयोरेवैनमेतद् द्यावापृथिव्यो रसेन समर्द्धयति तस्मादूषान्त्सम्भरति ॥ ६ ॥ अथाऽऽखुकरीषꣳ सम्भरति । आखवो ह वा ऽअस्यै पृथिव्यै रसं विदुस्तस्मात्ते-ऽधोऽध ऽइमां पृथिवीं चरन्तः पीविष्ठा ऽअस्यै हि रसं विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं विदुस्तत ऽउत्किरन्ति तदस्या ऽएवैनमेतत्पृथिव्यै रसेन समर्द्धयति तस्मादाखुकरीषꣳ सम्भरति पुरीष्य ऽइति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवा-ऽवरुद्ध्यै तस्मादाखुकरीषꣳ सम्भरति ॥ ७ ॥ अथ शर्कराः सम्भरति । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे सा हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं ताꣳ ह स्म वातः संवहति सोपैव देवाञ्जगामोपाऽसुरान्त्सा यत्र देवानुपजगाम ॥ ८ ॥ तद्धोचुः । हन्तेमां प्रतिष्ठां दृꣳहामहै तस्यां ध्रुवायामशिथिलायामग्नी ऽआदधामहै ततो स्यै सपत्नान्निर्भक्ष्याम ऽइति ॥ ९ ॥ तद्यथा शङ्कुभिश्चर्म्म विहन्यात् । एवमिमां प्रतिष्ठाꣳ शर्कराभिः पर्यबृꣳहन्त सेयं ध्रुवाऽशिथिला प्रतिष्ठा तस्यां

ध्रुवायामशिथिलायामग्नी ऽआदधत ततोऽस्यै सपत्नान्निर-भजन् ॥ १० ॥ तथो ऽएवैष ऽएतत् । इमां प्रतिष्ठाᳪं शर्कराभिः परिबृᳫहते तस्यां ध्रुवायामशिथिलायामग्नी ऽआधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्कराः सम्भ-रति ॥ ११ ॥ तान्वा ऽएतान् । पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्य ॥ १२ ॥ तदाहुः । षडेवर्त्तवः संवत्सरस्येति न्न्यूनमु तर्हि मिथुनं प्रजननं क्रियते न्न्यूनाद्वा ऽइमाः प्प्रजाः प्प्रजायन्ते तच्छ्रेयसमुत्तरावत्तस्मात्पञ्च भवन्ति यद्यु षडेवर्त्तवः संवत्स-रस्येत्त्यग्निरेवैतेषाᳪं षष्ठस्तथो ऽएवैतदन्न्यूनं भवति ॥१३॥ तदाहुः । नैवैकं चन सम्भारᳫ सम्भरेदित्त्यस्यां वा ऽएते सर्वे पृथिव्व्यां भवन्ति स यदेवाऽस्यामाधत्ते तत्सर्वान्स-म्भारानाप्प्नोति तस्मान्नैवैकं चन सम्भारᳫ सम्भरेदिति तदु समेव भरेद्यदहैवाऽस्यामाधत्ते तत्सर्वान्त्सम्भाराना-प्प्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु समेव भरेत् ॥ १४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

कृत्तिकास्वग्नी ऽआदधीत* । एता वा ऽअग्निनक्षत्रं यत्कृत्तिकास्तद्वै सलोम योऽग्निनक्षत्रेऽग्नी ऽआदधातै तस्मा-

* "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, वर्षासु वैश्यः" इत्यादिवचनैः त्रैवर्णिकान्प्रति तत्तद्वर्णोद्देशेन **'अमावास्यायामग्न्याधेयम्'** का० श्रौ० सू० ( ४. ७. १. ) इत्यादिसूत्रेण विहितं कर्म अग्न्याधानम् । तच्च गार्हपत्याहवनीय-दक्षिणाग्नि-सभ्याग्नि-चतुष्टयसम्पादकं तत्तत्स्थानेषु मन्त्रपुरःसरमग्नीनां स्थापनरूपमिति आचार्यकृतकातीयभूमिकायाम् ।

त्कृत्तिकास्वादधीत* ॥ १ ॥ एकं द्वे त्रीणि । चत्त्वारीति वा ऽअन्न्यानि नक्षत्राण्ण्यथैता ऽएव भूयिष्ठ्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत ॥ २ ॥ एता ह वै प्प्राच्च्यै दिशो न च्च्यवन्ते । सर्व्वाणि ह वा ऽअन्न्यानि नक्षत्राणि प्प्राच्च्यै दिशश्च्च्यवन्ते तत्प्प्राच्च्यामेवाऽस्येतद्दिश्याहितौ भवतस्तस्मात्कृत्तिकास्वादधीत ॥ ३ ॥ अथ यस्मान्न कृत्तिकास्वादधीत । †ऋक्षाणाᳬ ह वा ऽएता ऽअग्ग्रे पत्त्न्य ऽआसुः सप्तर्षीनु ह स्म वै पुरर्क्षा ऽइत्त्याचक्षते ता मिथुनेन व्व्यार्द्ध्यन्तामी ह्युत्तरा हि सप्तर्षय ऽउद्यन्ति पुर ऽएता ऽअशमिव वै तद्यो मिथुनेन व्व्यृद्धः स नेन्न्मिथुनेन व्व्यृद्ध्या ऽइति तस्मान्न कृत्तिकास्वादधीत ॥ ४ ॥ तद्वेव दधीत । अग्निर्व्वा ऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादेव दधीत ॥ ५ ॥ रोहिण्ण्यामग्नी ऽआदधीत । रोहिण्ण्याᳬ ह वै प्प्रजापतिः प्प्रजाकामोऽग्नी ऽआदधे स प्प्रजा ऽअसृजत ता ऽअस्य प्प्रजाः सृष्ट्टा ऽएकरूपा ऽउपस्तब्धास्तस्त्थू रोहिण्ण्य ऽइवैव तद्वै रोहिण्ण्यै रोहिणीत्त्वं बहुर्हैव प्प्रजया पशुभिर्ब्भवति य ऽएवं विद्वान्रोहिण्ण्यामाधत्ते ॥ ६ ॥ रोहिण्ण्यामु ह वै पशवः । अग्नी

* "माघादिपञ्चमासेषु श्रावणे चाऽऽश्विने तथा ॥
कुर्यान्मृगोत्तमाङ्गे वा आधानं शुक्लपक्षतः ॥१॥
हस्तद्वये विशाखासु कृत्तिकादित्रये तथा ॥
पुनर्वसुद्वये तद्वद्रेवतीपूत्तरासु च ॥२॥
भौमार्किवर्जिते वारे नाऽधिमासे तथा क्षये ॥
चन्द्रेऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते" ॥३॥ इति कारिकायाम् ।

† 'क्षाणाᳬ' इति 'ग च' पुस्तके दृश्यते ।

ऽआदधिरे मनुष्याणां कामꣳ रोहेमेति ते मनुष्याणां काममरोहन्न्यमु हैव तत्पशवो मनुष्येषु काममरोहँस्तमु हैव पशुषु कामꣳ रोहति य ऽएवं विद्वान्रोहिण्यामाधत्ते ॥ ७ ॥ मृगशीर्षेऽग्नी ऽआदधीत । एतद्वै प्रजापतेः शिरो यन्मृगशीर्षꣳ श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्याहुः श्रियꣳ ह गच्छति य ऽएवं विद्वान्मृगशीर्ष ऽआधत्ते ॥ ८ ॥ अथ यस्मान्न मृगशीर्ष ऽआदधीत । प्रजापतेर्वा ऽएतच्छरीरं यत्र वा ऽएनं तदविध्यँस्तदिषुणा त्रिकाण्डेनेत्याहुः स ऽएतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्य्यं तस्मान्न मृगशीर्ष ऽआदधीत ॥ ९ ॥ तद्वेव दधीत । न वा ऽएतस्य देवस्य वास्तु नाऽयज्ञियं न शरीरमस्ति यत्प्रजापतेस्तस्मादेव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति ॥ १० ॥ फल्गुनीष्वग्नी ऽआदधीत । एता वा ऽइन्द्र नक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्ज्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामाऽर्ज्जुन्न्यो वै नामैतास्ता ऽएतत्परोऽक्षमाचक्षते फल्गुन्न्य ऽइति को ह्येतस्याऽर्हति गुह्यं नाम ग्रहीतुमिन्द्रो वै यजमानस्तत्स्व ऽएवैतन्नक्षत्रेऽग्नी ऽआधत्त ऽइन्द्रो यज्ञस्य देवतैतेनो हाऽस्यैतत्सेन्द्रमग्न्याधेयं भवति पूर्व्वयोरादधीत पुरस्तात्क्रतुर्हैवाऽस्मै भवत्युत्तरयोरादधीत श्वः श्रेयसꣳ हैवाऽस्मा ऽउत्तरावद्भवति ॥ ११ ॥ हस्तेऽग्नी ऽआदधीत । य ऽइच्छेत्प्र मे दीयेतेति तद्वा ऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवाऽस्मै दीयते

॥ १२ ॥ चित्रायामग्नी ऽआदधीत । देवाश्च वा ऽअसुराश्चोभये प्प्राजापत्त्याः पस्पृधिरे त ऽउभय ऽएवाऽमुं लोकꣳ समारुरुक्षांचक्रुर्दिवमेव ततोऽसुरा रौहिणमित्त्यग्निं चिक्यिरेऽनेनाऽमुं लोकꣳ समारोक्ष्याम ऽइति ॥ १३ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे । इमं चेद्वा ऽइमे चिन्न्वते तत ऽएव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण ऽएकेष्टकां प्रबद्ध्येयाय ॥ १४ ॥ स होवाच । हन्ताहमिमामप्प्युपदधा ऽइति तथेति तामुपाऽऽधत्त तेषामल्पकाद्देवाऽग्निरसंचित ऽआस ॥ १५ ॥ अथ होवाच । अन्न्वा ऽअहं तां दास्ये या ममेहेति तामभिपद्या बवर्ह तस्यामावृढायामग्निर्व्व्यर्यवशशादाऽग्नेर्व्व्यर्यवशादमन्न्वसुरा व्व्यर्यवशेदुः स ता ऽएवेष्टका वज्जान्क्कृत्वा ग्रीवाः प्प्रचिच्छेद ॥ १६ ॥ ते ह देवाः समेत्त्योचुः । चित्रं वा ऽअभूम य ऽइयतः सपत्नानबधिष्मेति तद्वै चित्रायै चित्रात्त्वं चित्रꣳ ह भवति हन्ति सपत्नान्न्हन्ति द्विषन्तं भ्रातृव्व्यं य ऽएवं विद्वाँश्चित्रायामाधत्ते तस्मादेतत्क्षत्रिय ऽएव नक्षत्रमुपेत्सेञ्जिघाꣳसतीव ह्येष सपत्नान्वीव जिगीषते ॥ १७ ॥ नाना ह वा ऽएतान्यग्रे क्षत्राण्ण्यासुः । यथैवाऽसौ सूर्य्य ऽएवं तेषामेष ऽउद्यन्नेव वीर्य्यं क्षत्रमादत्त तस्मादादित्त्यो नाम यदेषां वीर्य्यं क्षत्रमादत्त ॥ १८ ॥ ते ह देवा ऽऊचुः । यानि वै तानि क्षत्राण्ण्यभूवन्न वै तानि क्षत्राण्ण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्त्वं तस्मादु सूर्य्यनक्षत्र ऽएव स्यादेष ह्येषां वीर्य्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वा ऽअनपराद्धं

नक्षत्रं यत्सूर्यः स ऽएतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेत्सेत्तस्मादु सूर्यनक्षत्र ऽएव स्यात् ॥ १९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



वसन्तो ग्रीष्मो वर्षाः । ते देवा ऽऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य ऽएवाऽऽपूर्य्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवा ऽअपराह्णः पितरः ॥१॥ ते वा ऽएत ऽऋतवः । देवाः पितरः स यो हैवं विद्वान्देवाः पितर ऽइति ह्वयत्त्या हाऽस्य देवा देवहूयं गच्छन्त्या पितरः पितृहूयमवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य ऽएवं विद्वान्देवाः पितर ऽइति ह्वयति ॥ २ ॥ स यत्रोदङ्ङावर्त्तते । देवेषु तर्हि भवति देवाँस्तर्ह्यभिगोपायत्त्यथ यत्र दक्षिणाऽऽवर्त्तते पितृषु तर्हि भवति पितॄँस्तर्ह्यभिगोपायति ॥ ३ ॥ स यत्रोदङ्ङावर्त्तते । तर्ह्यग्नी ऽआदधीताऽपहतपाप्मानो देवा ऽअप पाप्मानꣳ हतेऽमृता देवा नाऽमृतत्वस्याऽऽशास्ति सर्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणाऽऽवर्त्तते यस्तर्ह्या- धत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा हाऽऽयुषो म्रियते यस्तर्ह्याधत्ते ॥ ४ ॥ ब्रह्मैव वसन्तः । क्षत्रं ग्रीष्मो विडेव वर्षास्तस्माद् ब्राह्मणो वसन्त ऽआदधीत ब्रह्म हि वसन्तस्तस्मात्क्षत्रियो ग्रीष्म ऽआद- धीत क्षत्रꣳ हि ग्रीष्मस्तस्माद्वैश्यो वर्षास्वादधीत विड्ढि

व्वर्षाः ॥ ५ ॥ स यः कामयेत । ब्रह्मवर्चसी स्यामिति व्वसन्ते स ऽआदधीत ब्रह्म वै व्वसन्तो ब्रह्मवर्चसी हैव भवति ॥ ६ ॥ अथ यः कामयेत । क्षत्रꣳ श्रिया यशसा स्यामिति ग्रीष्मे स ऽआदधीत क्षत्रं वै ग्रीष्मः क्षत्रꣳ हैव श्रिया यशसा भवति ॥ ७ ॥ अथ यः कामयेत । बहुः प्प्रजया पशुभिः स्यामिति व्वर्षासु स ऽआदधीत विड् वै व्वर्षा ऽअन्नं व्विशो बहुर्हैव प्प्रजया पशुभिर्ब्भवति य ऽएवं व्विद्वान्वर्षास्वाधत्ते ॥ ८ ॥ ते वा ऽएत ऽऋतवः । उभय ऽएवाऽपहतपाप्मानः सूर्य्य ऽएवैषां पाप्मनोऽपहन्तोद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति तस्माद्यदैवैनं कदा च यज्ञ ऽउपनमेदथाऽग्नी ऽआदधीत न श्वः श्वमुपाऽऽसीत को हि मनुष्यस्य श्वो व्वेद ॥ ९ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



यदहरस्य श्वोऽग्न्याधेयꣳ स्यात् । द्विरेवाऽश्नीयान्मनो ह वै देवा मनुष्यस्याऽऽजानन्ति तेऽस्येतच्छ्वोऽग्न्याधेयं विदुस्तेऽस्य व्विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स ऽउपवसथः ॥ १ ॥ तन्न्वेवाऽनवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु द्विरेवाऽश्नीयात्तद्वपि काममेव नक्तमश्नीयान्नो ह्यनाहिताग्नेर्व्रतचर्य्याऽस्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताऽग्निस्तस्माद्वपि काममेव नक्तमश्नीयात् ॥ २ ॥

तद्धैकेऽजमुपबध्नन्ति । आग्नेयोऽजोऽग्नेरेव सर्वत्वा-येति वदन्तस्तदु तथा न कुर्य्याद्यद्यस्याऽजः स्यादग्नीध ऽएवैनं प्रातर्द्दद्यात्तेनैव तं काममाप्नोति तस्मादु तन्नाऽऽद्रियेत ॥ ३ ॥ अथ *चातुष्प्राश्यमोदनं पचन्ति । छन्दांसि ऽ स्यनेन प्रीणीम ऽइति यथा येन वाहनेन स्यन्त्स्यन्त्स्यात्तत्सुहितं कर्त्तवै ब्रूयादेवमेतदिति वदन्तस्तदु तथा न कुर्य्याद्यद्वा ऽअस्य ब्राह्मणाः कुले वसन्त्यृत्विजश्चाऽनृत्विजश्च तेनैव तं काममाप्नोति तस्मादु तन्नाऽऽद्रियेत ॥ ४ ॥ तस्य सर्पिरासेचनं कृत्वा । सर्पिरासिच्याऽऽश्वत्थीस्तिस्रः समिधो घृतेनाऽन्वज्य †समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति ‡शमीगर्भमेतदाप्नुम ऽइति वदन्तः स यः पुरस्तात्संवत्सरमभ्यादध्यात्स ह तं काममाप्नुयात्तस्मादु तन्नाऽऽद्रियेत ॥ ५ ॥ तदु होवाच भाल्लवेयः । यथा वा ऽअन्यत्करिष्यन्त्सोऽन्यत्कुर्य्याद्यथाऽन्यद्वदिष्यन्त्सोऽन्यद्वदेद्यथाऽन्येन पथैष्यन्त्सोऽन्येन प्रतिपद्येतैवं तद्य ऽएतं चातुष्प्राश्यमोदनं पचेदुपराद्धिरेव सेति न हि तदवकल्पते यस्मिन्नग्नावृचा वा साम्ना वा यजुषा वा समिधं वाऽभ्यादध्यादाहुतिं वा जुहुयाद्यत्तं दक्षिणा वा हरेयुरनु वा गमयेयुर्द्दक्षिणा वा ह्येनं हरन्त्यन्*वाहार्य्यपचनो भवि-

* चतुर्भिरध्वर्युब्रह्मादिभिर्ऋत्विग्भिः प्राशितुं योग्य ओदनश्चातुष्प्राश्य इत्यर्थः ।

† समिच्छब्दयुक्ताभिर्घृतशब्दयुक्ताभिः 'समिधाग्निम्० तं त्वा' ( शु० सं० अ० ३. ऋ० १–३ ) इत्यन्ताभिस्तिसृभिस्तिसृभिर्ऋग्भिरित्यर्थः ।

‡ शमी वृक्षमध्ये उत्पन्नोऽश्वत्थः शमीगर्भ इत्युच्यते ।

* अन्वाहरति यज्ञसम्बन्धिदोषजातं परिहरति अनेनेति अन्वाहार्यः, ऋत्विग्भ्यो देय ओदनविशेषः । श० सा० भा० ( १. ३. ३. ५ )

ष्यतीत्त्यनु वा गमयन्ति ॥ ६ ॥ अथ जाग्रति जाग्रति देवाः । तद्देवानेवैतदुपाऽऽवर्त्तते स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी ऽआधत्ते तद्वपि काममेव स्वप्प्यान्नो ह्यनाहिताग्नेर्व्रतचर्य्याऽस्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्वपि काममेव स्वप्प्यात्॥ ७ ॥ तद्धैकेऽनुदिते मथित्त्वा । तमुदिते प्प्राञ्चमुद्धरन्ति तदु तदुभे ऽअहोरात्रे परिगृह्णीमः प्प्राणोदानयोर्म्मनसश्च वाचश्च परुर्याप्त्याऽइति वदन्तस्तदु तथा न कुर्य्यादुभौ हैवाऽस्य तथाऽनुदितऽआहितौ भवतोऽनुदिते हि मथित्त्वा तमुदिते प्प्राञ्चमुद्धरन्ति स य ऽउदित ऽआहवनीयं मन्थेत्स ह तत्परुर्याप्नुयात् ॥८॥ अहर्वै देवाः । अनपहतपाप्प्मानः पितरो न पाप्प्मानमपहते मर्त्त्याः पितरः पुरा हाऽऽयुषो म्म्रियते योऽनुदिते मन्थत्त्यपहतपाप्प्मानो देवा ऽअप पाप्प्मानꣳ हतेऽमृता देवा नाऽमृतत्वस्याऽऽशास्ति सर्वमायुरेति श्रीर्द्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य ऽएवं विद्वानुदिते मन्थति ॥९॥ तदाहुः । यन्नर्चा न साम्म्ना न यजुषाऽग्निराधीयतेऽथ केनाऽऽधीयत ऽइति ब्रह्मणो हैवैष ब्रह्मणाऽऽधीयते वाग्वै ब्रह्म तस्यै वाचः सत्त्यमेव ब्रह्म ता वा ऽएताः सत्त्यमेव व्याहृतयो भवन्ति तदस्य सत्त्येनैवाऽऽधीयते ॥ १० ॥ भूरिति वै प्प्रजापतिः । इमामजनयत भुव ऽइत्त्यन्तरिक्षꣳ स्वरिति दिवमेतावद्वा ऽइदꣳ सर्वं यावदिमे लोकाः सर्वेणैवाऽऽधीयते ॥ ११ ॥ भूरिति वै प्प्रजापतिः । ब्रह्माऽजनयत भुव ऽइति क्षत्रꣳ स्वरिति विशमेतावद्वा ऽइदꣳ सर्वं यावद् ब्रह्म क्षत्रं

विट् सर्व्वेणैवाऽऽधीयते ॥ १२ ॥ भूरिति वै प्प्रजापतिः ।
आत्मानमजनयत भुव ऽइति प्प्रजाᳩ स्वरिति पशूनेतावद्वा-
ऽइदᳫ सर्व्वं यावदात्मा प्प्रजा पशवः सर्व्वेणैवाऽऽधीयते ॥१३॥
स वै 'भूर्भुव' ऽइति । एतावतैव गार्हपत्यमादधात्यथ
यत्सर्व्वैरादद्ध्यात्केनाऽऽहवनीयमादद्ध्याद् द्वे ऽअक्षरे परिशि-
नष्टि तेनो ऽएतान्न्ययातयामानि भवन्ति तैः सर्व्वैः पञ्चभि-
राहवनीयमादधाति 'भूर्भुवः स्व'रिति तान्न्यष्टावक्षराणि
सम्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैन-
मेतच्छन्दसाऽऽधत्ते ॥१४॥ देवान्ह वा ऽअग्नी ऽआधास्य-
मानान् । तानसुररक्षसानि ररक्षुर्न्नाऽऽग्निर्ज्जनिष्यते नाऽग्नी
आधास्यद्ध्वे ऽइति तद्यद्रक्षँस्तस्माद्रक्षाᳩसि ॥ १५ ॥ ततो
देवा ऽएतं व्वज्रं ददृशुः । यदश्वं तं पुरस्तादुदश्रयँस्तस्या-
ऽभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्माद्यत्राऽग्निं मन्थिष्य-
न्त्स्यात्तदश्वमानेतवै ब्रूयात्स पूर्व्वेणोपतिष्ठते व्वज्रमेवैत-
दुच्छ्रयति तस्याऽभयेऽनाष्ट्रे निवातेऽग्निर्ज्जायते ॥ १६ ॥ स
वै पूर्व्ववाट् स्यात् । स ह्यपरिमितं व्वीर्य्यमभिवर्द्धते यदि
पूर्व्ववाहं न व्विन्देदपि य ऽएव कश्चाऽश्वः स्याद्यद्यश्वं न
व्विन्देदप्प्यनड्वानेव स्यादेष ह्येवाऽनडुहो बन्धुः ॥ १७ ॥ तं
यत्र प्प्राञ्चᳫ हरन्ति । तत्पुरस्तादश्वं नयन्ति तत्पुरस्तादेवै-
तन्नाष्ट्रा रक्षाᳩस्यपघ्नन्नेत्यथाऽभयेनाऽनाष्ट्रेण हरन्ति
॥१८॥ तं वै तथैव हरेयुः । यथैनमेष प्प्रत्यङ्ङुपाऽऽचरेदेष वै
यज्ञो यदग्निः प्प्रत्यङ् हैवैनं यज्ञः प्प्रविशति तं क्षिप्प्रे यज्ञ
ऽउपनमत्यथ यस्मात्पराङ् भवति पराङ् हैवाऽस्माद्यज्ञो

भवति स यो हैनं तत्राऽनुव्व्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥१९॥ एष ऽउ वै प्प्राणः। तं वै तथैव हरेयुर्य्यथैनमेष प्प्रत्यङ्ङुपाऽऽचरेत्प्रत्यङ् हैवैनं प्राणः प्प्रविशत्यथ यस्मात्पराङ् भवति पराङु हैवाऽस्मात्प्राणो भवति स यो हैनं तत्राऽनुव्व्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह यत्तथैवं* स्यात् ॥ २० ॥ †अयं वै यज्ञो योऽयं पवते। ‡तं वै तथैव हरेयुर्य्यथैनमेष प्प्रत्यङ्ङुपाऽऽचरेत्प्रत्यङ् हैवैनं यज्ञः प्प्रविशति तं क्षिप्रे यज्ञ ऽउपनमत्यथ यस्मात्पराङ् भवति पराङु हैवाऽस्माद्यज्ञो भवति स यो हैनं तत्राऽनुव्व्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥ २१ ॥ एष ऽउ वै प्प्राणः । ते वै तथैव हरेयुर्य्यथैनमेष प्प्रत्यङ्ङुपाऽऽचरेत्प्रत्यङ् हैवैनं प्राणः प्प्रविशत्यथ यस्मात्पराङ् भवति पराङु हैवाऽस्मात्प्राणो भवति स यो हैनं तत्राऽनुव्व्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात्तस्मादु तथैव हरेयुः ॥ २२ ॥ अथाऽश्वमाक्रमयति । तमाक्रमय्य प्राञ्चमुन्नयति तं पुनरावर्त्तयति तमुदञ्चं प्रमुञ्चति व्वीर्य्यं वा ऽअश्वो नेदस्मादिदं पराग्वीर्य्यमसदिति तस्मात्पुनरावर्त्तयति ॥ २३ ॥ तमश्वस्य पद ऽआधत्ते । व्वीर्य्यं वा ऽअश्वो व्वीर्य्य ऽएवैनमेतदाधत्ते तस्मादश्वस्य पद ऽआधत्ते ॥ २४ ॥ स वै तूष्णीमेवाऽग्र ऽउपस्पृशति ।

* 'ख' पुस्तके 'तदैव' इति पाठः ।

† शतम् ९०० ।

‡ 'ते वै' इति तत्पुस्तक एव दृश्यते ।

अथोद्यच्छत्यथोपस्पृशति 'भूर्भुवः स्व'रित्त्येव तृतीयेना-ऽऽदधाति त्रयो वा ऽइमे लोकास्तदिमानेवैतल्लोकानाप्नोत्येतन्न्वेकम् ॥ २५ ॥ अथेदं द्वितीयम्। तूष्णीमेवाऽग्र ऽउपस्पृशत्त्यथोद्यच्छति 'भूर्भुवः स्व'रित्त्येव द्वितीयेना-ऽऽदधाति यो वा ऽअस्यामप्रतिष्ठितो भारमुद्यच्छति नैनꣳ शक्नोत्त्युद्यन्तुꣳ सꣳ हैनꣳ शृणाति ॥ २६ ॥ स यत्तूष्णीमुपस्पृशति। तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति* सोऽस्यां प्रतिष्ठित ऽआधत्ते तथा न व्यथते तदु हैतत्पश्चेव दध्रिर ऽआसुरिः पाञ्चिर्म्माधुकिः सर्वं वा ऽअन्यदिय-सितमिव प्प्रथमेनैवोद्यत्त्यादध्या'द्भूर्भुवः स्व'रिति तदेवा-नियसितमित्त्यतो यतमथा कामयेत तथा कुर्य्यात् ॥ २७ ॥ अथ पुरस्तात्परीत्त्य। पूर्व्वार्द्धमुल्मुकानामभिपद्य जपति 'द्यौरिवं भूम्म्ना पृथिवीव व्वरिम्म्णे'ति यथाऽसौ द्यौर्बह्वी नक्षत्रैरेवं बहुर्भूयासमित्त्येवैतदाह यदाह द्यौरिव भूम्म्नेति पृथिवीव व्वरिम्म्णेति यथेयं पृथिव्युर्व्येवमुरुर्भूयास-मित्त्येवैतदाह 'तस्यास्ते पृथिवि देवयजनि पृष्ठ' ऽइत्त्यस्यै ह्येनं पृष्ठ ऽआधत्ते'ऽग्निमन्नादमन्नाद्यायाऽऽदध' ऽइत्त्यन्ना-दोऽग्निरन्नादो भूयासमित्त्येवैतदाह सैषाऽऽशीरेव स यदि कामयेत जपेदेतद्यद्यु कामयेताऽपि नाऽऽद्रियेत ॥ २८ ॥ अथ †सर्प्पराज्ञ्या ऽऋग्भिरुपतिष्ठते। 'आँयं गौः पृश्निरक्रमी-

(१) शु० सं० अ० ३ क० ५। (२) शु० सं० अ० ३ क० ५। (३) शु० सं० अ० ३ क० ५। (४) शु० सं० अ० ३ क० ५। (५) शु० सं० अ० ३ क० ५। (६) शु० सं० अ० ३ क० ५। (७) शु० सं० अ० ३ क० ६–८।

* 'क' पुस्तके 'प्रतितिष्ठति' इत्येव पाठो लभ्यते।

† 'आयं गौः' इत्यादीनां तिसृणामृचां 'सार्पराज्ञी' इति नामधेयम्।

दुसदन्नमातरं पुरः । पितरं च प्प्रयन्त्स्वः ॥ अन्तश्चरति रोचनाऽस्य प्प्राणादपानती । व्व्यख्यन्नमहिषो दिवम् ॥ त्रिᳬंशद्धाम व्विराजति व्वाक्पतङ्गाय धीयते । प्प्रति वस्तोरह द्युभि'रिति तद्यदेवाऽस्याऽत्र सम्भारैर्वा नक्षत्रैर्व्वर्त्तुभिर्व्वाऽऽधानेन वाऽनाप्तं भवति तदेवाऽस्यैतेन सर्व्वमाप्तं भवति तस्मात्सर्प्पराज्ञ्या ऽऋग्भिरुपतिष्ठते ॥ २९ ॥

तदाहुः । न सर्प्पराज्ञ्या ऽऋग्भिरुपतिष्ठेतेतीयं वै पृथिवी सर्प्पराज्ञी स यदेवाऽस्यामाधत्ते तत्सर्व्वान्कामानाप्नोति तस्मान्न सर्प्पराज्ञ्या ऽऋग्भिरुपतिष्ठेतेति ॥ ३० ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



उद्धृत्याऽऽहवनीयं पूर्ण्णाहुतिं जुहोति । तद्यत्पूर्ण्णाहुतिं जुहोत्त्यन्नादं वा ऽएतमात्मनो जनयते यदग्निं तस्मा ऽएतदन्नाद्यमपि दधाति यथा कुमाराय वा जाताय वत्साय वा स्तनमपि दध्यादेवमस्मा ऽएतदन्नाद्यमपि दधाति ॥ १ ॥ स ऽएतेनाऽन्नेन शान्तः । उत्तराणि हवीᳬंषि श्रप्प्यमाणान्न्युपरमति शश्वद्ध वा ऽअद्ध्वर्युं वा यजमानं वा प्प्रदहेत्तौ ह्यस्य नेदिष्ठं चरतो यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा ऽएतामाहुतिं जुहोति ॥ २ ॥ तां वै पूर्ण्णां जुहोति । सर्व्वं वै पूर्ण्णᳬं सर्व्वेणैवैनमेतच्छमयति स्वाहाकारेण जुहोत्त्यनिरुक्तो वै स्वाहाकारः सर्व्वं वा

ऽअनिरुक्तꣳ सर्व्वेणैवैनमेतच्छमयति ॥ ३ ॥ यां वै प्प्रजापतिः । प्प्रथमामाहुतिमजुहोत्स्वाहेति वै तामजुहोत्सो स्विदेषा निदानेन तस्मात्स्वाहेति जुहोति तस्यां वरं ददाति सर्व्वं वै व्वरः सर्व्वेणैवैनमेतच्छमयति ॥ ४ ॥ तदाहुः । एतामेवाऽऽहुतिꣳ हुत्वाऽथोत्तराणि हवीꣳषि नाऽऽद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवीꣳषि निर्व्वपतीति ॥ ५ ॥ स वा ऽअग्नये पवमानाय निर्व्वपति । प्प्राणो वै पवमानः प्प्राणमेवाऽस्मिन्नेतद्दधाति तद्वेतयैवाऽस्मिँस्तद्दधात्यन्नꣳ हि प्प्राणोऽन्नमेषाऽऽहुतिः ॥ ६ ॥ अथाऽग्नये पावकाय निर्व्वपति । अन्नं वै पावकमन्नमेवाऽस्मिन्नेतद्दधाति तद्वेतयैवाऽस्मिँस्तद्दधात्येषा ह्येव प्प्रत्यक्षमन्नमाहुतिः ॥ ७ ॥ अथाऽग्नये शुचये निर्व्वपति । व्वीर्य्यं वै शुचि यद्वा ऽअस्यैतदुज्ज्वलत्येतदस्य व्वीर्य्यꣳ शुचि व्वीर्य्यमेवाऽस्मिन्नेतद्दधाति तद्वेतयैवाऽस्मिँस्तद्दधाति यदाह्येवाऽस्मिन्नेतामाहुतिं जुहोत्यथाऽस्यैतद्वीर्य्यꣳ शुच्च्युज्ज्वलति ॥ ८ ॥ तस्मादाहुः । एतामेवाऽऽहुतिꣳ हुत्वाऽथोत्तराणि हवीꣳषि नाऽऽद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवीꣳषि निर्व्वपतीति तदु निर्व्वपेदेवोत्तराणि हवीꣳषि परोऽक्षमिव वा ऽएतद्यददस्तदिदमितीव ॥ ९ ॥ स यदग्नये पवमानाय निर्व्वपति । प्प्राणा वै पवमानो यदा वै जायतेऽथ प्प्राणोऽथ यावन्न जायते मातुर्व्वैव तावत्प्राणमनु प्प्राणिति यथा वा तज्जात ऽएवाऽस्मिन्नेतत्प्राणं दधाति ॥ १० ॥ अथ यदग्नये पावकाय निर्व्वपति । अन्नं

वै पावकं तज्जात ऽएवाऽस्मिन्नेतदन्नं दधाति ॥ ११ ॥ अथ यदग्नये शुचये निर्व्वपति । व्वीर्य्यं वै शुचि यदा वा ऽअन्नेन व्वर्द्धतेऽथ व्वीर्य्यं तदन्नेनैवैनमेतद्वर्द्धयित्वाऽथाऽस्मिन्नेतद्वीर्य्यं शुचि दधाति तस्मादग्नये शुचये ॥ १२ ॥ तद्वेतदेव सद्विपर्य्यस्तमिव । अग्निर्हं यत्र देवेभ्यो मनुष्यानभ्युपाऽऽववर्त्त तद्धेक्षाञ्चक्रे मैव सर्व्वेणेवाऽऽत्मना मनुष्यानभ्युपाऽऽवृतमिति ॥ १३ ॥ स ऽएतास्तिस्रस्तनूरेषु लोकेषु व्विन्यधत्त । यदस्य पवमानꣳ रूपमासीत्तदस्यां पृथिव्व्यां न्यधत्ताऽथ यत्पावकं तदन्तरिक्षेऽथ यच्छुचि तद्दिवि तद्वा ऽऋषयः प्प्रतिबुबुधिरे य ऽउ तर्ह्यृषय ऽआसुरसर्व्वेण वै न ऽआत्मनाऽग्निरभ्युपाऽऽवृतदिति तस्मा ऽएतानि हवीꣳषि निरवपन् ॥ १४ ॥ स यदग्नये पवमानाय निर्व्वपति । यदेवाऽस्याऽस्यां पृथिव्व्याꣳ रूपं तदेवाऽस्यैतेनाऽऽप्नोत्यथ यदग्नये पावकाय निर्व्वपति यदेवाऽस्याऽन्तरिक्षे रूपं तदेवाऽस्यैतेनाऽऽप्नोत्यथ यदग्नये शुचये निर्व्वपति यदेवाऽस्य दिवि रूपं तदेवाऽस्यैतेनाऽऽप्नोत्येवमु कृत्स्नमेवाऽग्निमनपनिहितमाधत्ते तस्मादु निर्व्वपेदेवोत्तराणि हवीꣳषि ॥ १५ ॥ केवलबर्हिः प्रथमꣳ हविर्भवति । समानबर्हिषी ऽउत्तरे ऽअयं वै लोकः प्रथमꣳ हविरथेदमन्तरिक्षं द्वितीयं द्यौरेव तृतीयं बहुलेव वा ऽइयं पृथिवी लेलयेवाऽन्तरिक्षं लेलयेवाऽसौ द्यौरुभे चिदेनां प्रत्युद्यामिनीस्तामिति तस्मात्समानबर्हिषी ॥ १६ ॥ अष्टाकपालाः सर्व्वे पुरोडाशा भवन्ति । अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाऽऽधत्ते तानि सर्व्वाणि

चतुर्व्विंᳬशतिᳬ कपालानि सम्पद्यन्ते चतुर्व्विंᳬशत्त्यक्षरा वै गायत्री गायत्रमग्नेश्छन्दᳬ स्वेनैवैनमेतच्छन्दसाऽऽधत्ते †गायत्र्यो याज्यानुवाक्या भवन्ति गायत्रमग्नेश्छन्दᳬ स्वेनैवैनमेतच्छन्दसाऽऽधत्ते ॥ १७ ॥ अथाऽदित्त्यै चरुं निर्व्वपति । प्रच्च्यवत ऽइव वा ऽएषोऽस्माल्लोकाद्य ऽएतानि हवीᳬषि निर्व्वपतीमान्हि लोकान्त्समारोहन्नेति ॥ १८ ॥ स यददित्त्यै चरुं निर्व्वपति । इयं वै पृथिव्व्यदितिᳬ सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठ्ठायां प्रतितिष्ठ्ठति तस्माददित्त्यै चरुं निर्व्वपति ॥ १९ ॥ तस्यै विराजौ संय्याज्ये स्यातामित्त्याहुᳬ । विराड्ढीयमित्त्यथो त्रिष्टुभौ त्रिष्ट्टुब्भीयमित्त्यथो जगत्यौ जगती हीयमिति विराजावित्त्येव* स्याताम् ॥ २० ॥ तस्यै धेनुर्द्दक्षिणा । धेनुरिव वा ऽइयं मनुष्येभ्यᳬ सर्व्वान्कामान्दुहे माता धेनुर्म्मातेव वा ऽइयं मनुष्यान्बिभर्त्ति तस्माद्धेनुर्द्दक्षिणैतन्न्वेकमयनम् ॥ २१ ॥ अथेदं द्वितीयम् । आग्नेयमेवाऽष्ट्टाकपालं पुरोडाशं निर्व्वपति परोऽक्षमिव वा ऽएतद्यदग्नये पवमानायाऽग्नये पावकायाऽग्नये शुचय ऽइतीवाऽथाऽञ्जसैवैनमेतत्प्रत्यक्षमाधत्ते तस्मादग्नयेऽथाऽदित्त्यै चरुं निर्व्वपति स य ऽएव चरोर्बन्धुᳬ स बन्धुᳬ ॥ २२ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



† 'गायत्र्यो याज्ज्या० साऽऽधत्ते' इत्येष ग्रन्थभागो 'ग-च' पुस्तके नास्ति ।

* 'क' पुस्तके 'वित्त्वेव' इति ।

घ्नन्ति वा ऽएतद्यज्ञं । यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुꣳ संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याꣳ हविर्यज्ञं घ्नन्ति ॥ १ ॥ स ऽएष यज्ञो हतो न ददक्षे । तं देवा दक्षिणाभिरदक्षयँस्तद्यदेनं दक्षिणाभिरदक्षयँस्तस्माद्दक्षिणा नाम तद्यदेवाऽत्र यज्ञस्य हतस्य व्यथते तदेवाऽस्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध ऽएव यज्ञो भवति तस्माद्दक्षिणा ददाति ॥ २ ॥ ता वै षड् दद्यात्। षड् वा ऽऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति ॥ ३ ॥ द्वादश दद्यात् । द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति ॥ ४ ॥ चतुर्विंꣳशतिं दद्यात् । चतुर्विंꣳशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयत्येषा मात्रा दक्षिणानां दद्यात्त्वेव यथाश्रद्धं भूयसीस्तद्यद्दक्षिणा ददाति ॥ ५ ॥ द्वया वै देवा देवाः । अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त ऽएव यज्ञ ऽआहुतय ऽएव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्म्मनुष्यदेवान्ब्राह्मणाँछुश्रुवुषोऽनूचानाँस्त ऽएनमुभये देवाः प्रीताः सुधायां दधति ॥ ६ ॥ तद्यथा योनौ रेतो दध्यात् । एवमेवैतदृत्विजो यजमानं लोके दधति

तद्यदेभ्य ऽएतद्ददाति षे मेदुᳬ सम्प्रापिपन्निति नु दक्षिणानाम् ॥ ७ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्त्याः पस्पृधिरे त ऽउभये ऽएवाऽनात्त्मान ऽआसुर्म्मर्त्त्या ह्यासुरनात्त्मा हि मर्त्यस्तेषूभयेषु मर्त्त्येष्वग्निरेवाऽमृत ऽआस तᳬ ह स्मोभयेऽमृतमुपजीवन्ति स षᳬ ह स्मैषां घ्नन्ति तद्ध* स्मैव स भवति ॥ ८ ॥ ततो देवाः । तनीयाᳬंस ऽइव परिशिशिषिरे तेऽर्च्चन्तः श्राम्म्यन्तश्चेरुरुताऽसुरान्त्सपत्त्नान्म्मर्त्त्यानभिभवेमेति त ऽएतदमृतमग्न्याधेयं ददृशुः ॥ ९ ॥ ते होचुः । हन्तेदममृतमन्तराऽऽत्त्मन्नादधामहै त ऽइदममृतमन्तराऽऽत्त्मन्नाधायाऽमृता भूत्त्वाऽस्तर्र्व्या भूत्त्वा स्तर्र्व्यान्त्सपत्त्नान्म्मर्त्त्यानभिभविष्याम ऽइति ॥ १० ॥ ते होचुः । उभयेषु वै नोऽयमग्निः प्प्रत्त्वेवाऽसुरेभ्यो ब्रवामेति ॥ ११ ॥ ते होचुः । आ वै वयमग्नी धास्यामहेऽथ षूयं किं करिष्यथेति ॥ १२ ॥ ते होचुः । अथैनं वयं न्येव धास्यामहेऽत्र तृणानि दहाऽत्र दारूणि दहाऽत्रौदनं पचाऽत्र माᳬंसं पचेति स षं तमसुरा न्यदधत तेनाऽनेन मनुष्या भुञ्जते ॥ १३ ॥ अथैनं देवाः । अन्तराऽऽत्त्मन्नादधत त ऽइममममृतमन्तराऽऽत्त्मन्नाधायाऽमृता भूत्त्वा ऽस्तर्र्व्या भूत्त्वा स्तर्र्व्यान्त्सपत्त्नान्म्मर्त्त्यानभ्यभवँस्तथो ऽएवैष ऽएतदमृतमन्तराऽऽत्त्मन्नाधत्ते नाऽमृतत्त्वस्याऽशास्ति सर्व्वमायुरेत्त्य स्तर्र्व्यो हैव भवति न हैनᳬ सपत्त्नस्तुस्तूर्षमाणश्च न स्तृणुते तस्माद्यदाहिताग्निश्चाऽनाऽऽहिताग्निश्च स्पर्द्धेते ऽआहिताग्निरेवा-

* 'ग-च' पुस्तके 'स्म वै' इति पाठो लभ्यते ।

ऽभिभवत्यस्तर्ह्यो हि खलु स तर्हि भवत्यमृतः ॥ १४ ॥ तद्यत्रैनमदो मन्थन्ति । तज्जातमभि प्प्राणिति प्प्राणो वा ऽअग्निर्जातमेवैनमेतत्सन्तं जनयति स पुनरपानिति तदेनमन्तराऽऽत्मन्नाधत्ते सोऽस्यैषोऽन्तराऽऽत्मन्नग्निराहितो भवति ॥ १५ ॥ तमुद्दीप्प्य समिन्धे । इह यक्ष्य ऽइह सुकृतं करिष्यामीत्येवैनमेतत्समिन्धे योऽस्यैषोऽन्तराऽऽत्मन्नग्निराहितो भवति ॥ १६ ॥ अन्तरेणाऽगाद्व्यवृतादिति । न ह वा ऽअस्यैतं कश्चनाऽन्तरेणैति यावज्जीवति योऽस्यैषोऽन्तराऽऽत्मन्नग्निराहितो भवति तस्मादु तन्नाऽऽद्रियेत यदनुगच्छेन्न ह वा ऽअस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तराऽऽत्मन्नग्निराहितो भवति ॥ १७ ॥ ते वा ऽएते । प्प्राणा ऽएव यदग्नयः प्प्राणोदानावेवाऽऽहवनीयश्च गार्हपत्यश्च व्व्यानोऽन्वाहार्य्यपचनः ॥ १८ ॥ तस्य वा ऽएतस्याऽग्न्याधेयस्य । सत्यमेवोपचारः स यः सत्यं वदति यथाऽग्निः समिद्धं तं घृतेनाऽभिषिञ्चेदेवः हैनः स ऽउद्दीपयति तस्य भूयो-भूय ऽएव तेजो भवति श्वः-श्वः श्रेयान्भवत्यथ योऽनृतं वदति यथाऽग्निः समिद्धं तमुदकेनाऽभिषिञ्चेदेवः हैनः स जासयति तस्य कनीयः—कनीय ऽएव तेजो भवति श्वः-श्वः पापीयान्भवति तस्मादु सत्यमेव वदेत् ॥ १९ ॥ तदु हाऽप्प्यरुणमौपवेशिं* ज्ञातय ऽऊचुः । स्थविरो वा ऽअस्यग्नी ऽआधत्स्वेति स होवाच ते मैतद् ब्रूथ वाचंयम ऽएवैधि न वा ऽआहिताग्निनाऽनृतं

* 'क' पुस्तके 'मौपवेशिं' इत्यत्र ( । ) एष छेदो विद्यते ।

वदितव्यं न वदञ्जातु नाऽनृतं वदेत्तावत्सत्यमेवोपचार ऽइति ॥ २० ॥

## द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११४ ॥



वरुणो हैनद्राज्यकाम ऽआदधे । स राज्यमगच्छत्तस्माद्यश्च वेद यश्च न वरुणो राजेत्येवाऽऽहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवाऽऽगच्छतो यश ऽएवैतद्द्रष्टुमागच्छन्ति यशो ह भवति राज्यं गच्छति य ऽएवं विद्वानाधत्ते ॥ १ ॥ अग्नौ ह वै देवाः । सर्वाणि रूपाणि निदधिरे यानि च ग्राम्याणि यानि चाऽऽरण्यानि विजयं वोप प्रैष्यन्तः कामचारस्य वा कामायाऽयं नो गोपिष्ठो गोपायदिति वा ॥ २ ॥ तान्यु हाऽग्निर्निचकमे । तैः संगृह्यर्तून्प्रविवेश पुनरेम ऽइति देवा ऽएदग्निं तिरोभूतं तेषाᳫं हेयसेवाऽऽस किमिह कर्त्तव्यं क्वेह प्रज्ञेतीव* ॥ ३ ॥ तत ऽएतत्त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाऽग्नेः प्रियं धामोपजगाम सोऽस्माऽउभयानि रूपाणि प्रति निःससर्ज यानि च ग्राम्याणि यानि चाऽऽरण्यानि तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्वᳫं रूपमुप ह त्वेवाऽन्याः प्रजा† यावत्सो

* 'ख-च' पुस्तके 'प्रज्ञेति वा' इत्येव पाठः ।
† 'यावच्छो यावच्छ' इति 'क' पुस्तके दृश्यते ।

यावत्स ऽइव तिष्ठन्ते ॥ ४ ॥ तस्मै कं पुनराधेयमादधीत। एवꣳ हैवाऽग्नेः प्रियं धामोपगच्छति सोऽस्मा ऽउभयानि रूपाणि प्प्रति निःसृजति यानि च ग्राम्म्याणि यानि चाऽऽरण्ण्यानि तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमता वै सा स्पृहयन्त्यु हाऽस्मै तथा पुष्यति लोक्यम्वेवाऽपि ॥ ५ ॥ आग्नेयोऽयं यज्ञः। ज्योतिरग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स ऽइह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्ण्यलोकत्त्वैतन्नु तद्यस्मादादधीत ॥ ६ ॥ स वै व्वर्षास्वादधीत। व्वर्षा वै सर्व्व ऽऋतवो व्वर्षा हि वै सर्व्व ऽऋतवोऽथाऽदो व्वर्षमकुर्म्माऽदो व्वर्षमकुर्म्मेति संवत्त्सरान्त्संपश्यन्ति व्वर्षा ह त्त्वेव सर्व्वेषामृतूनाꣳ रूपमुत हि तद्व्वर्षासु भवति यदाहुर्ग्रीष्म ऽइव वा ऽअद्येत्युतो तद्व्वर्षासु भवति यदाहुः शिशिर ऽइव वा ऽअद्येति व्वर्षादिद्व्वर्षाः ॥ ७ ॥ अथैतदेव परोऽक्षꣳ रूपम्। यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपं यत्स्तनयति तद् ग्रीष्मस्य यद्व्वर्षति तद्व्वर्षाणां यद्विद्योतते तच्छरदो यद्वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य व्वर्षाः सर्व्व ऽऋतव ऽऋतून्प्राविशदृतुभ्य ऽएवैनमेतान्निर्म्मिमीते ॥ ८ ॥ आदित्त्यस्त्वेव सर्व्व ऽऋतवः। यदैवोदेत्त्यथ व्वसन्तो यदा †संगवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ व्वर्षा

* यः प्रागाधानाल्लब्धप्रतिष्ठोऽपि आधानसमनन्तरं संवत्सरादर्वागेव यस्य महत्त्वस्य कीर्तेर्हानिर्भवति धनधान्यादिहानिर्वा,-तस्य पुनराधेयसंज्ञकं कर्म भवतीति शेषः। तथा च सूत्रम्-'पुनराधेयमाधानाप्रतिज्ञातस्य' ( का० श्रौ० सू० ४. ११. १. ) इति।

† प्रातः-सङ्गव-मध्याह्न-पराह्न-सायंकालात्मका अह्नोऽवयवाः सूर्यसम्बन्धिनः पञ्चर्तवः, तत्र वर्षास्वाधानस्य विहितत्वात्तदात्मके मध्यन्दिने एव पुनराधानं कुर्यादिति।

यदाऽपराह्णोऽथ शरद्यद्वैवाऽस्तमेत्यथ हेमन्तस्तस्मादु मध्य-
न्दिन ऽएवाऽऽदधीत तर्हि ह्येषोऽस्य लोकस्य नेदिष्ठं
भवति तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्म्मिमीते ॥ ९ ॥ छाययेव
वा ऽअयं पुरुषः । पाप्मनाऽनुषक्तः सोऽस्याऽत्र कनिष्ठो
भवत्यधस्पदमिवेयस्यते तत्कनिष्ठमेवैतत्पाप्मानमवबाधते
तस्मादु मध्यन्दिन ऽएवाऽऽदधीत ॥ १० ॥ तं वै दर्भैरुद्ध-
रति । दारुभिर्वै पूर्वमुद्धरति दारुभिः पूर्वं दारुभिरपरं जामि
कुर्य्यात्समदं कुर्य्यादापो दर्भा ऽआपो वर्षा ऽऋतून्प्रावि-
शदद्भिरेवैनमेतदद्भ्यो निर्म्मिमीते तस्माद्दर्भैरुद्धरति ॥ ११ ॥
अर्कपलाशाभ्याम् । व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्य-
माधास्यन्भवति तन्निदधाति तद्गार्हपत्यमादधाति ॥ १२ ॥
अर्कपलाशाभ्याम् । यवमयमपूपं कृत्वा यत्राऽऽहवनीय-
माधास्यन्भवति तन्निदधाति तदाहवनीयमादधाति पूर्वाभ्या-
मेवैनावेतदग्निभ्यामन्तर्दध्म ऽइति वदन्तस्तदु तथा न
कुर्य्याद्रात्रिभिर्ह्येवाऽन्तर्हितौ भवतः ॥ १३ ॥ आग्नेयमेव
पञ्चकपालं पुरोडाशं निर्वपति । तस्य पञ्चपदाः पङ्क्तयो
याज्यानुवाक्या भवन्ति पञ्च वा ऽऋतव ऽऋतून्प्राविशदृ-
तुभ्य ऽएवैनमेतन्निर्म्मिमीते ॥ १४ ॥ सर्व ऽआग्नेयो भवति ।
एवᳫं हि त्वष्टाऽग्नेः प्रियं धामोपाऽगच्छत्तस्मात्सर्व ऽआग्नेयो
भवति ॥ १५ ॥ तेनोपाᳫंशु चरन्ति । यद्वै ज्ञातये वा
सख्ये वा निष्केवल्यं चिकीर्षति तिर ऽइवैतेन बोभवद्वै-
श्वदेवोऽन्न्यो यज्ञोऽथैष निष्केवल्य ऽआग्नेयो यद्वै तिर
ऽइव तदुपाᳫंशु तस्मादुपाᳫंशु चरन्ति ॥ १६ ॥ उच्चैरुत्तम-

मनुयाजं यजति । कृतकर्म्मेव हि स तर्हि भवति सर्वो हि कृतमनुबुद्ध्यते ॥ १७ ॥ स ऽआश्राव्याह । समिधो यजेति तदाग्नेयꣳ रूपं परोऽक्षं त्वग्नीन्यजेति त्वेव ब्रूयात्तदेव प्रत्यक्षमाग्नेयꣳ रूपꣳ ॥ १८ ॥ स यजति । अग्न ऽआज्यस्य व्यन्तु वौषडग्निमाज्यस्य वेतु वौषडग्निनाऽऽज्यस्य व्यन्तु वौषडग्निराज्यस्य वेतु वौषडिति ॥ १९ ॥ अथ स्वाहाग्निमित्याह । आग्नेयमाज्यभागꣳ स्वाहाग्निं पवमानमिति यदि पवमानाय क्रियेरन्त्स्वाहाग्निमिन्दुमन्तमिति यद्यग्नय ऽइन्दुमते क्रियेरन्त्स्वाहाग्निꣳ स्वाहाग्नीनाज्यपाञ्जुषाणो ऽअग्निराज्यस्य वेत्विति यजति ॥ २० ॥ अथाऽऽहाऽग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागꣳ सोऽन्वाह 'ऽग्निꣳ [1]स्तोमेन बोधय समिधानो ऽअमर्त्यम् । हव्या देवेषु नो दधदि'ति स्वपितीव खलु वा ऽएतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैनमेतत्समुदीरयति जुषाणो ऽअग्निराज्यस्य वेत्विति यजति ॥ २१ ॥ अथ यद्यग्नये पवमानाय क्रियेरन् । अग्नये पवमानायाऽनुब्रूहीति ब्रूयात्सोऽन्वाहाऽ[2]'ग्न ऽआयूꣳषि पवस ऽआसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुना'मिति तथाऽऽहाऽऽग्नेयो भवति सोमो वै पवमानस्तदु सौम्याद्वाज्यभागान्नयन्ति जुषाणो ऽअग्निः पवमान ऽआज्यस्य वेत्विति यजति ॥ २२ ॥ अथ यद्यग्नय ऽइन्दुमते क्रियेरन् । अग्नय ऽइन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वा'[3]हेह्यू षु ब्रवाणि

(१) ऋ० सं० ५. १४. १ । शु० य० सं० अ० २१, क० १५ । (२) शु० य० सं० अ० १९. क० ३८ । (३) शु० य० सं० अ० २६. क० १३ ।

तेऽग्न ऽइत्थेतरा गिरः । एभिर्वर्द्धास ऽइन्दुभिरिति तथा हाऽऽग्नेयो भवति सोमो वा ऽइन्दुस्तदु सौम्म्यादाज्यभागान्न- यन्ति जुषाणो ऽअग्निरिन्दुमानाज्यस्य व्वेत्विति यजत्येवमु सर्व्वमाग्नेयं करोति ॥ २३ ॥ अथाहाग्नयेऽनुब्रूहीति हविषः । अग्निं यजाऽग्नये स्विष्टकृतेऽनुब्रूह्यग्निꣳ स्विष्टकृतं यजेत्यथ यद्देवान्न्यजेत्यग्नीन्न्यजेत्येवैतदाह ॥ २४ ॥ स यजति । अग्नेर्वसुवने व्वसुधेयस्य व्वेतु व्वौ ऽझगग्ना ऽउ व्वसुवने व्वसु- धेयस्य व्वेतु व्वौ ऽझग्देवो ऽअग्निः स्विष्टकृदिति स्वयमाग्नेय- स्तृतीय ऽएवं वाऽऽग्नेयाननुयाजान्करोति ॥ २५ ॥ ता वा ऽएताः । षड् विभक्तीर्य्यजति चतस्रः प्प्रयाजेषु द्वे ऽअनु- याजेषु षड् वा ऽऋतव ऽऋतूनप्राविशदृतुभ्य ऽएवैनमेतन्नि- र्म्मिमीते ॥२६॥ द्वादश वा त्रयोदश वाऽक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सर- मृतून्प्राविशदृतुभ्य ऽएवैनमेतत्संव्वत्सरान्निर्म्मिमीते न द्वे चन सहाऽजामितायै जामि ह कुर्य्याद्यद् द्वे चित्सह स्यातां व्यन्तु व्वेत्वित्येव प्प्रयाजानाꣳ रूपं व्वसुवने व्वसुधेयस्येत्त्य- नुयाजानाम् ॥ २७ ॥ तस्य हिरण्यं दक्षिणा । आग्नेयो वा ऽएष यज्ञो भवत्त्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षि- णाऽनड्वान्वा स हि व्वहेनाऽग्नेयोऽग्निदग्धमिव ह्यस्य व्वहं भवति देवानाꣳ हव्यवाहनोऽग्निरिति व्वहति वा ऽएष मनुष्येभ्यस्तस्मादनड्वान्दक्षिणा ॥ २८ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



प्प्रजापतिर्ह वा ऽइदमग्र ऽएक ऽएवाऽऽस । स ऽऐक्षत कथं नु प्प्रजायेयेति सोऽश्राम्म्यत्स तपोऽतप्प्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः स यो हैवमेतमग्निमन्नादं व्वेदाऽन्नादो हैव भवति ॥ १ ॥ तद्वा ऽएनमेतदग्ग्रे देवानामजनयत । तस्मादग्निरग्निर्ह वै नामैतद्यदग्निरिति स जातः पूर्व्वः प्प्रेयाय यो वै पूर्व्व ऽएत्त्यग्र ऽएतीति वै तमाहुः सो ऽएवाऽस्याऽग्निता ॥ २ ॥ स ऽऐक्षत प्प्रजापतिः । अन्नादं वा ऽइममात्त्मनोऽजीजने यदग्निं न वा ऽइह मदन्न्यदन्नमस्ति यं वा ऽअयं नाऽद्यादिति काल्वालीकृता हैव तर्हि पृथिव्व्यास नौषधय ऽआसुर्न्न व्वनस्पतयस्तदेवाऽस्य मनस्यास ॥ ३ ॥ अथैनमग्निर्व्व्यात्ते-नोपपर्य्यावव्वर्त्त । तस्य भीतस्य स्वो महिमाऽपचक्राम व्वाग्वा ऽअस्य स्वो महिमा व्वागस्याऽपचक्राम स ऽआत्त्मन्नेवा-*हुतिमीषे स ऽउदमृष्ट तद्यदुदमृष्ट तस्मादिदं चाऽलोम-कमिदं च तत्र व्विवेद घृताहुतिं वैव पय ऽआहुतिं वोभयः ह त्त्वेव तत्पय ऽएव ॥ ४ ॥ सा हैनं नाऽभिराधयाञ्चकार । केशमिश्रेव हाऽऽस तां व्व्यौक्षदोषं† धयेति तत ऽओषधयः समभवँस्तस्मादोषधयो नाम स द्वितीयमुदमृष्ट तत्राऽपरा-माहुतिं व्विवेद घृताहुतिं वैव पय ऽआहुतिं वोभयः ह त्त्वेव तत्पय ऽएव ॥ ५ ॥ सा हैनमभिराधयाञ्चकार । स

* 'आत्मन्येवा' इति पाठः 'क' पुस्तके ।

† ओषधयः ओषद्धयन्तीति वा, ओषत्येना धयन्तीति वा, दोषं धयन्तीति वा । निरु० ( ९. ३. २६ ) ।

व्यचिकित्सज्जुहवानी३मा हौषा३मिति तꣳ स्वो महिमाऽभ्युवाद जुहुधीति स प्रजापतिर्विदाञ्चकार स्वो वै मा महिमाऽऽहेति स स्वाहेत्येवाऽजुहोत्तस्मादु स्वाहेत्येव हूयते तत ऽएष ऽउदियाय य ऽएष तपति ततोऽयं प्रबभूव योऽयं पवते तत ऽएवाऽग्निः पराङ् पर्य्यावर्त्त ॥६॥ स हुत्वा प्रजापतिः। प्र चाऽजायताऽत्तस्यतश्चाऽग्नेर्म्मृत्त्योरात्त्मानमत्रायत स यो हैवं विद्वानग्निहोत्रं* जुहोत्येताꣳ हैव प्रजातिं प्रजायते यां प्रजापतिः प्राऽजायतैवमु हैवाऽत्तस्यतोऽग्नेर्म्मृत्त्योरात्त्मानं त्रायते ॥ ७ ॥ स यत्र म्प्रियते। यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधिजायतेऽथाऽस्य शरीरमेवाऽग्निर्द्दहति तद्यथा पितुर्वा मातुर्वा जायेतैवमेषोऽग्नेरधिजायते शश्वद्ध वा ऽएष न सम्भवति योऽग्निहोत्रं न जुहोति तस्माद्वाऽअग्निहोत्रꣳ होतव्यम् ॥ ८ ॥ तद्वा ऽएतत्। एव विचिकित्सायै जन्म यत्प्रजापतिर्व्यचिकित्सत्स विचिकित्सञ्छ्रेयस्यध्रियत यः प्र चाऽजायताऽत्तस्यतश्चाऽग्नेर्म्मृत्त्योरात्त्मानमत्रायत स यो हैवमेतद्विचिकित्सायै जन्म वेद यद्ध किञ्च विचिकित्सति श्रेयसि हैव ध्रियते ॥९॥ स हुत्वा न्यमृष्ट। ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो

---

* अग्निहोत्रं नाम अग्न्युद्देशेन सायं प्रातः क्रियमाणो होमविशेषः। अत्र द्रव्याणि पय आदीनि बहूनि आम्नातानि। तत्र पयो मुख्यं द्रव्यं क्रत्वङ्गतयाऽऽम्नातम्। इतराणि च काम्यानि द्रव्याणि यवागू-तण्डुल-दधि-घृतरूपाणि श्रुतावाम्नातानि। देवता चाऽत्र अग्निर्मुख्या, अङ्गदेवता स्विष्टकृत् स्थानीया प्रजापतिः सायंकाले, प्रातश्च मुख्या देवता सूर्यः, अङ्गदेवता तु पूर्वोक्ता एव। अत एव अग्निदेवताकत्त्वं प्रवृत्तिनिमित्तमादाय अग्निहोत्रशब्दो कर्मनामधेयमिति निर्णीतं पूर्वमीमांसायाम्।

व्वृक्षस्तत ऽएते देवानां वीरा ऽअजायन्ताऽग्निरुर्षोऽयं पवते सूर्ष्यः स य्यो हैवमेतान्देवानां व्वीरान्न्वेदाऽऽहाऽस्य व्वीरो जायते ॥१०॥ त ऽउ हैत ऽऊचुः। व्वयं वै प्प्रजापतिं पितरमनु स्मो हन्त व्वयं तत्सृजामहै य्यदस्मानन्न्वसदिति ते परि-श्रित्य गायत्रेणाऽपहिंकारेण तुष्टुविरे तद्यत्पर्ष्यश्रयन्त्स समुद्रोऽथेयमेव पृथिव्व्यास्तावः ॥ ११ ॥ ते स्तुत्त्वा प्प्राञ्च ऽउच्चक्रमुः। पुनरेम ऽइति देवा ऽएद्धाऽँ सम्भूताऽँ सा हैनानुदीक्ष्य हिञ्चकार ते देवा विदाञ्चक्रुरेष साम्म्नो हिंकार ऽइत्त्यपहिंकारऽँ हैव पुरा ततः सामाऽऽस स ऽएष गवि साम्म्नो हिंकारस्तस्मादेषोपजीवनीयोपजीवनीयो ह वै भवति य्य ऽएवमेतं गवि साम्म्नो हिङ्कारं व्वेद ॥ १२ ॥ ते होचुः। भद्रं वा ऽइदमजीजनामहि य्ये गामजीजनामहि य्यज्ञो ह्येवेयं नो ह्यृते गोर्य्यज्ञस्तायतेऽन्नऽँ ह्येवेयं य्यद्धि किं चाऽन्नं गौरेव तदिति ॥ १३ ॥ तद्वा ऽएतदेवैतासां नाम। एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्ण्यमिति वह्वचो ह वा ऽअस्यैता भवन्त्युपनाऽमुक ऽएनं य्यज्ञो भवति य्य ऽएवं विद्वानेतत्परिहरति साधु पुण्ण्यमिति ॥१४॥ तामु हाऽग्नि-रभिदध्यौ। मिथुन्न्यनया स्यामिति ताऽँ सम्बभूव तस्याऽँ रेतः प्प्राऽसिञ्चत्तत्पयोऽभवत्तस्मादेतदामायां गवि सत्याऽँ श्रृतमग्नेर्हि रेतस्तस्माद्यदि कृष्णायां य्यदि रोहिण्ण्याऽँ शुक्लमेव भवत्त्यग्निसंकाशमग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णं भवत्त्यग्नेर्हि रेतः ॥१५॥ ते होचुः। हन्तेदं जुहवामहाऽइति कस्मै न इदं प्रथमाय होष्यन्तीति मह्यमिति हैवाऽग्निरुवाच

मह्यमिति योऽयं पवते मह्यमिति सूर्य्यस्ते न सम्पादयाञ्चक्रुस्ते हाऽसम्पाद्योचुः प्प्रजापतिमेव पितरं प्रत्ययाम स यस्मै न ऽइदं प्रथमाय होतव्यं वक्ष्यति तस्मै न ऽइदं प्रथमाय होष्यन्तीति ते प्प्रजापतिं पितरं प्रतीत्योचुः कस्मै न ऽइदं प्रथमाय होष्यन्तीति ॥ १६ ॥ स होवाच । अग्नयेऽग्निरनुष्ठया स्वꣳ रेतः प्प्रजनयिष्यते तथा प्प्रजनिष्यद्ध्व ऽइत्त्यथ तुभ्यमिति सूर्य्यमथ यदेव हूयमानस्य व्व्यश्नुते तदेवैतस्य योऽयं पवत ऽइति तदेभ्य ऽइदमप्प्येतर्हि तथैव जुह्वत्त्यग्नयऽएव सायꣳ सूर्य्याय प्प्रातरथ यदेव हूयमानस्य व्व्यश्नुते तदेवैतस्य योऽयं पवते ॥ १७ ॥ ते हुत्वा देवाः । इमां प्रजातिं प्राऽजायन्त यैषामियं प्रजातिरिमां व्विजितिं व्व्यजयन्त येयमेषां व्विजितिरिममेव लोकमग्निरजयदन्तरिक्षं वायुर्दिवमेव सूर्य्यः स यो हैवं विद्वानग्निहोत्रं जुहोत्त्येताꣳ हैव प्प्रजातिं प्रजायते यामेत ऽएतत्प्राऽजायन्तैतां व्विजितिं व्विजयते यामेत ऽएतद्व्यजयन्तैतैरुहैव सलोको भवति य ऽएवं विद्वानग्निहोत्रं जुहोति तस्माद्वा ऽअग्निहोत्रꣳ होतव्यम् ॥ १८ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



सूर्य्यो ह वा ऽअग्निहोत्रम् । तद्यदेतस्या ऽअग्र ऽआहुतेरुदैत्तस्मात्सूर्य्योऽग्निहोत्रम् ॥ १ ॥ स यत्सायमस्तमिते

जुहोति । य ऽइदं तस्मिन्निह सति जुहवानीत्यथ यत्प्रातरनुदिते जुहोति य ऽइदं तस्मिन्निह सति जुहवानीति तस्माद्वै सूर्य्योऽग्निहोत्रमित्याहुः ॥ २ ॥ * अथ यदस्तमेति । तदग्नावेव योनौ गर्ब्भो भूत्वा प्प्रविशति तं गर्ब्भं भवन्तमिमाः सर्वाः प्प्रजा ऽअनु गर्ब्भा भवन्तीलिता हि शेरे संजानाना ऽअथ यद्रात्रिस्तिर ऽएवैतत्करोति तिर ऽइव हि गर्ब्भाः ॥ ३ ॥ स यत्सायमस्तमिते जुहोति । गर्ब्भमेवैतत्सन्तमभिजुहोति गर्ब्भꣳ सन्तमभिकरोति स यद्गर्ब्भꣳ सन्तमभिजुहोति तस्मादिमे गर्ब्भा ऽअनश्नन्तो जीवन्ति ॥ ४ ॥ अथ यत्प्रातरनुदिते जुहोति । प्प्रजनयत्येवैनमतत्सोऽयं तेजो भूत्वा विभ्राजमान ऽउदेति शश्वद्ध वै नोदियाद्यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ५ ॥ स यथाऽहिस्त्वचो निर्म्मुच्च्येत । एवꣳ रात्रेः पाप्प्मनो निर्म्मुच्च्यते यथा ह वा ऽअहिस्त्वचो निर्म्मुच्च्येतैवꣳ सर्वस्मात्पाप्प्मनो निर्म्मुच्च्यते य ऽएवं विद्वानग्निहोत्रं जुहोति तदेतस्यैवाऽनु प्प्रजातिमिमाः सर्वाः प्प्रजा ऽअनु प्प्रजायन्ते वि हि सृज्यन्ते यथार्थꣳ† ॥६॥ स यः पुराऽऽदित्यस्याऽस्तमयात् । आहवनीयमुद्धरत्येते वै विश्वे देवा रश्मयोऽथ यत्परं भाः प्प्रजापतिर्वा स ऽइन्द्रो वैतदु ह वै विश्वे देवा ऽअग्निहोत्रं जुह्वतो गृहानागच्छन्ति स यस्यानुद्धृतमागच्छन्ति तस्माद्देवा ऽअपप्प्रयन्ति तद्वा ऽअस्मै

* अत्र शतम् १००० ॥

† 'यथार्थम्०' इति 'क' 'ख' पुस्तकयोः ।

तद्व्यृद्ध्यते यस्माद्देवा ऽअपप्रयन्ति तस्या ऽनु व्यृद्धिं यश्च वेद यश्च नाऽनुद्धृतमभ्यस्तमगादित्याहुः ॥ ७ ॥ अथ यः पुराऽऽदित्यस्याऽस्तमयात् । आहवनीयमुद्धरति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपाऽऽसीतैवं तत्स यस्योद्धृतमागच्छन्ति तस्याऽऽहवनीयं प्रविशन्ति तस्याऽऽहवनीये निविशन्ते ॥ ८ ॥ स यत्सायमस्तमिते जुहोति । अग्नावेवैभ्य ऽएतत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातरनुदिते जुहोत्यप्रेतेभ्य ऽएवैभ्य ऽएतज्जुहोति तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामह ऽइति ह स्माऽऽहाऽऽसुरिर्यथा शून्यमावसथमाहरेदेवं तदिति ॥९॥ द्वयं वा ऽइदं जीवनम् । मूलि चैवाऽमूलं च तदुभयं देवानाᳬ सन्मनुष्या ऽउपजीवन्ति पशवो मूला ऽओषधयो मूलिन्यस्ते पशवो मूला ऽओषधीर्म्मूलिनीर्ज्जग्ध्वाऽपः पीत्वा तत ऽएष रसः सम्भवति ॥ १० ॥ स यत्सायमस्तमिते जुहोति । अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदᳬ सदुपजीवाम ऽइति स यत्ततो रात्र्याश्नाति हुतोच्छिष्टमेव तन्निरवत्तवल्ल्यश्नाति हुतोच्छिष्टस्य ह्येवाऽग्निहोत्रं जुह्वदशिता ॥ ११ ॥ अथ यत्प्रातरनुदिते जुहोति । अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदᳬ सदुपजीवाम ऽइति स यत्ततोऽह्नाऽश्नाति हुतोच्छिष्टमेव तन्निरवत्तवल्ल्यश्नाति हुतोच्छिष्टस्य ह्येवाऽग्निहोत्रं जुह्वदशिता ॥ १२ ॥ तदाहुः । समेवाऽन्ये यज्ञास्तिष्ठन्तेऽग्निहोत्रमेव न सन्तिष्ठतेऽपि द्वादशसंवत्सरमन्तवदेवाऽथैतदेवानन्तᳬ सायᳬ हि हुत्वा वेद प्रातर्होष्या-

मीति प्रातर्हुत्वा वेद पुनः सायꣳ होष्यामीति तदेतदनुपस्थितमग्निहोत्रं तस्याऽनुपस्थितिमन्वनुपस्थिता ऽइमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजया प्रजायते य ऽएवमेतदनुपस्थितमग्निहोत्रं वेद ॥ १३ ॥ तद्दुग्ध्वाऽधिश्रयति । शृतमसदिति तदाहुर्य्यर्हुदन्तं त*र्हि शृतं तर्हि जुहुयादिति तद्वै नोदन्तं कुर्य्यादुप ह दहेद्यदुदन्तं कुर्य्याद्दुष्प्रजज्ञि वै रेत ऽउपदग्धं तस्मान्नोदन्तं कुर्य्यात् ॥ १४ ॥ अधिश्रित्यैव जुहुयात् । यन्न्वेवैतदग्ने रेतस्तेनं न्वेव शृतं यद्वेनदग्नावधिश्रयन्ति तेनो ऽएव शृतं तस्मादधिश्रित्यैव जुहुयात् ॥ १५ ॥ तदवज्योतयति । शृतं वेदानीत्यथाऽपः प्रत्यानयति शान्त्यै न्न्वेव रसस्यो चैव सर्वत्त्वायेदꣳ हि यदा वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वाऽपः पीत्वा तत ऽएष रसः सम्भवति तस्मादु रसस्यो चैव सर्वत्त्वाय तस्माद्यद्येनं क्षीरं केवलं पानेऽभ्याभवेदुदस्तोकमाश्च्योतयितवै ब्रूयाच्छान्त्यै न्न्वेव रसस्यो चैव सर्वत्त्वाय ॥ १६ ॥ अथ चतुरुन्नयति । चतुर्द्धाविहितꣳ हीदं पयोऽथ समिधमादायोदाद्रवति समिद्धहोमायैव सोऽनुपसाद्य पूर्वामाहुतिं जुहोति स यदुपसादयेद्यथा यस्मा ऽअशनमाहरिष्यन्त्स्यात्तदन्तरा निदध्यादेवं तदथ यदनुपसाद्य यथा यस्मा ऽअशनमाहरेत्तस्मा ऽआहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तरां नानावीर्य्ये ऽएवैने ऽएतत्करोति मनश्च ह वै वाक् चैते ऽआहुती तन्मनश्चैवैतद्वाचं च व्यावर्त्तयति तस्मादिदं मनश्च

* 'तर्हि शृतं' इति पाठः 'क' पुस्तके एव दृश्यते ।

वाक् च समानमेव सन्नानेव ॥ १७ ॥ स वै द्विरग्नौ जुहोति। द्विरुपमार्ष्टि द्विः प्राश्नाति चतुरुन्नयति तद्दश दशाक्षरा वै विराड्विराड् वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १८ ॥ स यदग्नौ जुहोति। तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यदुपमार्ष्टि तत्पितृषु चौषधीषु च जुहोति तस्मात्पितरश्चौषधयश्च सन्त्यथ यद्धुत्वा प्राऽश्नाति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्ति ॥ १९ ॥ या वै प्रजा यज्ञेऽनन्वाभक्ताः। पराभूता वै ताऽ एवमेवैतद्या इमाः प्रजा ऽअपराभूतास्ता यज्ञमुख ऽआभजति तेनो ह पशवोऽन्वाभक्ता यन्मनुष्याननु पशवः ॥ २० ॥ तदु होवाच याज्ञवल्क्यः। न वै यज्ञ ऽइव मन्तवै पाकयज्ञ ऽइव वा ऽइतीदꣳ हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोत्यथैतदग्नौ हुत्वोत्सृप्याऽऽचामति निर्लेढि तदस्य पाकयज्ञस्येवेति तदस्य तत्पशव्यꣳ रूपं पशव्यो हि पाकयज्ञः ॥ २१ ॥ सैषैकाहुतिरेवाऽग्रे। यामेवाऽमूं प्रजापतिरजुहोदथ यदेत ऽएतत्पश्चेवाऽऽध्रियन्ताऽग्निर्योऽयं पवते सूर्यस्तस्मादेषा द्वितीयाहुतिर्हूयते ॥ २२ ॥ सा या पूर्वाहुतिः। साऽऽग्निहोत्रस्य देवता तस्मात्तस्यै जुहोत्यथ योत्तरा स्विष्टकृद्भाजनमेव सा तस्मात्तामुत्तरार्द्धे जुहोत्येषा हि दिक् स्विष्टकृतस्तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते द्वन्द्वꣳ हि मिथुनं प्रजननम् ॥२३॥ तद् द्वयमेवैते ऽआहुती। भूतं चैव भविष्यच्च जातं च जनिष्यमाणं चाऽऽगतं चाऽऽशा चाऽऽद्य च श्वश्च तद् द्वयमेवाऽनु ॥ २४ ॥

आत्मैव भूतम् । अद्धा हि तद्यद्भूतमद्धो तद्यदात्मा प्रजैव भविष्यदनद्धा हि तद्यद्भविष्यदनद्धो तद्यत्प्रजा ॥ २५ ॥ आत्मैव जातम् । अद्धा हि तद्यज्जातमद्धो तद्यदात्मा प्रजैव जनिष्यमाणमनद्धा हि तद्यज्जनिष्यमाणमनद्धो तद्यत्प्रजा ॥ २६ ॥ आत्मैवाऽऽगतम् । अद्धा हि तद्यदागतमद्धो तद्यदात्मा प्रजैवाऽऽशाऽनद्धा हि तद्यदाशानद्धो तद्यत्प्रजा ॥ २७ ॥ आत्मैवाऽद्य । अद्धा हि तद्यदद्याद्धो तद्यदात्मा प्रजैव श्वोऽनद्धा हि तद्यच्छ्वोऽनद्धो तद्यत्प्रजा ॥ २८ ॥ सा या पूर्वाहुतिः । †सात्मानमभि हूयते तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रोऽद्धो तद्यदात्माऽथ योत्तरा सा प्रजामभि हूयते तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धो तद्यत्प्रजा‡ ॥ २९ ॥ स जुहोति । 'अ[1]ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे'त्यथ प्रातः '[2]सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे'ति तत्सत्येनैव हूयते यदा ह्येव सूर्योऽस्तमेत्यथाऽग्निर्ज्योतिर्यदा सूर्य उदेत्यथ सूर्यो ज्ज्योतिर्यद्वै सत्येन हूयते तद्देवान्गच्छति ॥ ३० ॥ तदु हैतदेवाऽऽरुणये । ब्रह्मवर्चसकामाय तक्षाऽनूवाचाऽग्निर्वर्चो ज्ज्योतिर्वर्चः सूर्यो वर्चो ज्ज्योतिर्वर्च इति ब्रह्मवर्चसी हैव भवति य एवं विद्वानग्नि

* 'यद्भूतम्' इति 'ख' पुस्तके ।

† 'ख' पुस्तके 'सात्मानमभि' इत्यत्र 'सात्मानमाथे' इत्येष पाठो विद्यते स तु न समीचीनः, एतदतिरिक्तपुस्तकेषु अनुपलम्भात् ।

‡ 'प्रजाः' इत्युक्तपुस्तक एवोपलभ्यते ।

( १ ) शु० सं० अ० ३. क० ९ । ( २ ) शु० सं० अ० ३. क० ९ ।

होत्रं जुहोति ॥३१॥ तद्वस्त्येव प्प्रजननस्येव रूपम्। अग्निर्ज्यो-
तिर्ज्योतिरग्निः स्वाहेति तदुभयतो ज्योती रेतो देवतया
परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्प्रजायते तदुभयत
ऽएवैतत्परिगृह्य प्प्रजनयति ॥ ३२ ॥ अथ प्प्रातः । 'सूर्य्यो[1]
ज्योतिर्ज्योतिः सूर्य्यः स्वाहे'ति तदुभयतो ज्योती रेतो
देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्प्रजायते
तदुभयत ऽएवैतत्परिगृह्य प्प्रजनयति तत्प्रजननस्य रूपम्
॥ ३३ ॥ तदु होवाच जीवलश्चैलकिः । गर्ब्भमेवाऽऽरुणिः
करोति न प्प्रजनयतीति स ऽएतेनैव सायं जुहुयात्
॥ ३४ ॥ अथ प्प्रातः । 'ज्ज्योतिः[2] सूर्य्यः सूर्य्यो ज्ज्योतिः
स्वाहे'ति तद्वहिर्द्धा ज्ज्योती रेतो देवतया करोति बहिर्द्धा
वै रेतः प्प्रजातं भवति तदेनत्प्रजनयति ॥ ३५ ॥ तदाहुः ।
अग्नावेवैतत्सायः सूर्य्यं जुहोति सूर्य्ये प्प्रातरग्निमिति
तद्वै तदुदितहोमिनामेव यदा ह्येव सूर्य्योऽस्तमेत्यथाऽग्नि-
ज्ज्योतिर्य्यदा सूर्य्य ऽउदेत्यथ सूर्य्यो ज्ज्योतिर्न्नोऽस्य सा
परिचक्षेयमेव परिचक्षा यत्तस्यै नाऽद्धा देवतायै हूयते
याऽग्निहोत्रस्य देवताऽग्निज्ज्योतिज्ज्योतिरग्निः स्वाहेति तत्र
नाऽग्नये स्वाहेत्यथ प्प्रातः सूर्य्यो ज्ज्योतिज्ज्योतिः सूर्य्यः
स्वाहेति तत्र न सूर्य्याय स्वाहेति ॥ ३६ ॥ अनेनैव जुहु-
यात् । 'सजूर्द्देवेन[3] सवित्रे'ति तत्सवितृमत्प्रसवाय 'सजू[4]
रात्र्येन्द्रवत्ये'ति तद्रात्र्या मिथुनं करोति सेन्द्रं करोतीन्द्रो

(१) शु० सं० अ० ३. क० ९। (२) शु० सं० अ० ३. क० ९। (३) शु० सं० अ० ३. क० १०। (४) शु० सं० अ० ३. क० १०।

हि यज्ञस्य देवता 'जुषाणो ऽअग्निर्वेतु स्वाहेति तदग्नये प्रत्यक्षं जुहोति ॥ ३७ ॥ अथ प्रातः । 'सजूर्देवेन सवित्रे'ति तत्सवितृमत्प्रसवाय 'सजूरुषसेन्द्रवत्ये'त्यह्नेति वा तदुह्वां वोषसां वा मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता 'जुषाणः सूर्यो वेतु स्वाहे'ति तत्सूर्याय प्रत्यक्षं जुहोति तस्मादेवमेव जुहुयात् ॥ ३८ ॥ ते होचुः । को न इदꣳ होष्यतीति ब्राह्मण ऽएवेति ब्राह्मणेदं नो जुहुधीति किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति सयत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमथ यत्स्थाल्यां यथा परीणहो निर्वपेदेवं तत्तस्मात्तद्य ऽएव कश्च पिबेत्तद्वै नाऽब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाऽब्राह्मणः पिबेत् ॥ ३९ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



एता ह वै देवता यो ऽस्ति । तस्मिन्न्वसन्तीन्द्रो यमो राजा नडो नैषिधोऽनश्नन्त्साङ्गमनोऽसन्न्पाꣳसवः ॥ १ ॥ तद्वा ऽएष ऽएवेन्द्रः । यदाहवनीयोऽथैष ऽएव गार्हपत्यो यमो राजाऽथैष ऽएव नडो नैषिधो यदन्न्वाहार्यपचनस्तद्यदेतमहरहर्दक्षिणत ऽआहरन्ति तस्मादाहुरहरहर्वै नडो नैषिधो यमꣳ राजानं दक्षिणत ऽउपनयतीति

(१) शु० सं० अ० ३. क० १०। (२) शु० सं० अ० ३. क० १०। (३) शु० सं० अ० ३. क० १०। (४) शु० सं० अ० ३. क० १०।

॥ २ ॥ अथ य ऽएष सभायामग्निः । एष ऽएवाऽनश्न-
न्त्सङ्गमनस्तद्यदेतमनशित्वेवोपसङ्गच्छन्ते तस्मादेषोऽनश्न-
न्नथ यदेतद्भस्मोद्धृत्य परावपन्त्येष ऽएवाऽसन्न्पाथ्ंसवः स
यो हैवमेतद्वेदैवं मय्येता देवता वसन्तीति सर्वाँन्हैवैताँल्लो-
काञ्जयति सर्वाँल्लोकाननुसञ्चरति ॥ ३ ॥ तेषामुपस्थानम् ।
यदेव सायं प्रातराहवनीयमुप च तिष्ठत ऽउप चाऽऽस्ते
तदेव तस्योपस्थानमथ यदेव प्प्रतिपरेत्य गार्हपत्यमास्ते
वा शेते वा तदेव तस्योपस्थानमथ यत्रैव संव्व्रजन्नन्वाहा-
र्य्यपचनमुपस्मरेत्तदेव तं मनसोपतिष्ठेत तदेव तस्यो-
पस्थानम् ॥ ४ ॥ अथ प्प्रातः । अनशित्वा मुहूर्त्तः
सभायामासित्वाऽपि कामं पल्ययेत तदेव तस्योपस्था-
नमथ यत्रैव भस्मोद्धृतमुपनिगच्छेत्तदेव तस्योपस्थान-
मेवमु हाऽस्यैता देवता ऽउपस्थिता भवन्ति ॥ ५ ॥
यजमानदेवत्यो वै गार्हपत्यः । अथैष भ्भ्रातृव्यदेवत्यो
यदन्वाहार्य्यपचनस्तस्मादेतं नाऽहरहराऽऽहरेयुर्न्न ह वा ऽअस्य
सपत्ना भवन्ति यस्यैवं विदुष ऽएतं नाऽहरहराऽऽहरन्त्यन्वा-
हार्य्यपचनो वा ऽएषः ॥ ६ ॥ उपवसथ ऽएवैनमाहरेयुः ।
यत्रैवाऽस्मिन्नयक्ष्यन्तो भवन्ति तथो हाऽस्यैषोऽमोघायाऽऽहृतो
भवति ॥ ७ ॥ नवाऽवसिते वैनमाहरेयुः । तस्मिन्नपचेयुस्तद्
ब्राह्मणा ऽअश्नीयुर्य्यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्धम-
धिश्रयितवै ब्रूयात्तस्मिन्ब्राह्मणान्पाययितवै ब्रूयात्पापीयाथ्ंसो
ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं विदुष ऽएवं कुर्वन्ति

* 'ग-च' पुस्तकयोः 'न्त्साङ्गमन' इति पाठो लभ्यते ।

तस्मादेवमेव चिकीर्षेत् ॥ ८ ॥ तद्यत्रैतत्प्रथमꣳ समिद्धो भवति । धूप्प्यत ऽइव तर्हि हैष भवति रुद्रꣳ स यꣳ कामयेत यथेमा रुद्रꣳ प्प्रजा ऽअश्रद्धयेव त्वत्सहसेव त्वन्निघातमिव त्वत्सचत ऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्प्नोति हैवैतदन्नाद्यं य ऽएवं विद्वाँस्तर्हि जुहोति ॥ ९ ॥ अथ यत्रैतत्प्रदीप्ततरो भवति । तर्हि हैष भवति वरुणꣳ स यꣳ कामयेत यथेमा वरुणꣳ प्प्रजा गृह्णन्निव त्वत्सहसेव त्वन्निघातमिव त्वत्सचत ऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्प्नोति हैवैतदन्नाद्यं य ऽएवं विद्वाँस्तर्हि जुहोति ॥ १० ॥ अथ यत्रैतत्प्रदीप्तो भवति । उच्चैर्धूमꣳ परमया जूत्या बल्बलीति तर्हि हैष भवतीन्द्रꣳ स यꣳ कामयेतेन्द्र ऽइव श्रिया यशसा स्यामिति तर्हि ह स जुहुयात्प्राप्प्नोति हैवैतदन्नाद्यं य ऽएवं विद्वाँस्तर्हि जुहोति ॥ ११ ॥ अथ यत्रैतत्प्रतितरामिव । तिरश्चीवाऽर्च्चिꣳ सꣳशाम्म्यतो भवति तर्हि हैष भवति मित्रꣳ स यꣳ कामयेत मैत्रेणेदमन्नमद्यामिति यमाहुꣳ सर्वस्य वा ऽअयं ब्राह्मणो मित्रं न वा ऽअयं कञ्चन हिनस्तीति तर्हि ह स जुहुयात्प्राप्प्नोति हैवैतदन्नाद्यं य ऽएवं विद्वाँस्तर्हि जुहोति ॥ १२ ॥ अथ यत्रैतदङ्गाराश्चाऽऽकश्यन्त ऽइव । तर्हि हैष भवति ब्रह्म स यꣳ कामयेत ब्रह्मवर्च्चसी स्यामिति तर्हि ह स जुहुयात्प्राप्प्नोति हैवैतदन्नाद्यं य ऽएवं विद्वाँस्तर्हि जुहोति ॥ १३ ॥ एतेषामेकꣳ संवत्सरमुपेप्सेत् । स्वयं जुहुयद्यदि वाऽस्याऽन्यो जुहुयादथ योऽन्यथाऽन्यथा जुहोति यथाऽऽपो वाऽभिखनन्नन्यद्वाऽन्ना-

यद्धः स सामि निवर्त्तेतैवं तदथ यः सार्द्धं जुहोति यथाऽऽपो वाऽभिखनन्नश्यद्वाऽन्नाद्यं तत्क्षिप्रेऽभितृन्द्यादेवं तत् ॥ १४ ॥ अब्भ्रयो ह वा ऽएता ऽअन्नाद्यस्य यदाहुतयः । अभि हैवैतदन्नाद्यं तृणत्ति य ऽएवं विद्वानग्निहोत्रं जुहोति ॥ १५ ॥ सा या पूर्व्वाहुतिः । ते देवा ऽअथ योत्तरा ते मनुष्या ऽअथ यत्स्रुचि परिशिनष्टि ते पशवः ॥ १६ ॥ स वै कनीय ऽइव पूर्वामाहुतिं जुहोति । भूय ऽइवोत्तरां भूय ऽइव स्रुचि परिशिनष्टि ॥ १७ ॥ स यत्कनीय ऽइव पूर्व्वामाहुतिं जुहोति । कनीयाᳩंसो हि देवा मनुष्येभ्योऽथ यद्भूय ऽइवोत्तरां भूयाᳩंसो हि मनुष्या देवेभ्योऽथ यद्भूय ऽइव स्रुचि परिशिनष्टि भूयाᳩंसो हि पशवो मनुष्येभ्यः कनीयाᳩंसो ह वा ऽअस्य भार्य्या भवन्ति भूयाᳩंसः पशवो य ऽएवं विद्वानग्निहोत्रं जुहोति तद्वै समृद्धं यस्य कनीयाᳩंसो भार्य्या ऽअसन्भूयाᳩंसः पशवः ॥ १८ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०३ ॥



यत्र वै प्प्रजापतिः प्प्रजाः ससृजे । स यत्राऽग्निᳪं ससृजे स ऽइदं जातः सर्वमेव दुग्धुं दध्र ऽइत्येवाऽविलमेव ता यास्तर्हि प्प्रजा ऽआसुस्ता हैनᳪं सम्पेष्टुं दध्रिरे सोऽ-

तितिक्षमाणः पुरुषमेवाऽभ्येयाय ॥ १ ॥ स होवाच । न वा ऽअहमिदं तितिक्षे हन्त त्वा प्प्रविशानि तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिँल्लोके जनयित्वा भरिष्यस्येवमेवाऽहं त्वाममुष्मिँल्लोके जनयित्वा भरिष्यामीति तथेति तं जनयित्वाऽबिभः ॥ २ ॥ स यदग्नी ऽआधत्ते । तदेनं जनयति तं जनयित्वा बिभर्ति स यथा हैवैष ऽएतमस्मिँल्लोके जनयित्वा बिभर्त्येवमु हैवैष ऽएतममुष्मिँल्लोके जनयित्वा बिभर्ति ॥ ३ ॥ तन्न साम्म्युद्वासयेत। सामि हाऽस्मै स ग्लायति स यथा हैवैष ऽएतस्मा ऽअस्मिँल्लोके सामि ग्लायत्येवमु हैवैष ऽएतस्मा ऽअमुष्मिँल्लोके सामि ग्लायति तस्मान्न साम्म्युद्वासयेत ॥ ४ ॥ स यत्र म्म्रियते । यत्रैनमग्नावभ्याद्धति तदेषोऽग्नेरधिजायते स ऽएष पुत्रः सन्पिता भवति ॥ ५ ॥ तस्मादेतदृषिणाऽभ्यनूक्तं*ः । '(१)शतमिन्नु शरदो ऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मद्ध्या रीरिषतायुर्ग्गन्तोरि'ति पुत्रो ह्येष सन्त्स पुनः पिता भवत्येतन्नु तद्यस्मादग्नी ऽआदधीत ॥ ६ ॥ तद्वा ऽएष ऽएव मृत्युः । य ऽएष तपति तद्यदेष ऽएव मृत्युस्तस्माद्या ऽएतस्मादर्वाच्च्यः प्प्रजास्ता म्म्रियन्तेऽथ याः पराच्च्यस्ते देवास्तस्मादु तेऽमृतास्तस्येमाः सर्वाः प्प्रजा रश्मिभिः प्प्राणेष्वभिहिता यथाऽश्वोऽश्वाभिधान्या वाऽभीशुभिर्वैवम-

---

* 'ख' पुस्तके 'नूक्तम्' इति ।

(१) शु० सं० अ० २५ क० २२ ।

स्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहितास्तस्मादु रश्मयः प्राणानभ्यववतायन्ते ॥७॥ स यस्य कामयते। तस्य प्राणमादायोदेति स म्रियते स यो हैतं मृत्युमनतिमुच्याऽथाऽमुं लोकमेति यथा हैवाऽस्मिँल्लोके न संयतमाद्रियते यदा यदैव कामयतेऽथ मारयत्येवमु हैवाऽमुष्मिँल्लोके पुनः पुनरेव प्रमारयति ॥ ८ ॥ स यत्सायमस्तमिते द्वे ऽआहुती जुहोति । तदेताभ्यां पूर्वाभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठत्यथ यत्प्रातरनुदिते द्वे ऽआहुती जुहोति तदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठति स ऽएनमेष ऽउद्यन्नेवाऽऽदायोदेति तदेतं मृत्युमतिमुच्यते सैषाऽग्निहोत्रे मृत्योरतिमुक्तिरति ह वै पुनर्मृत्युं मुच्यते य ऽएवमेतामग्निहोत्रे मृत्योरतिमुक्तिं वेद ॥९॥ यथा वा ऽइषोरनीकम् । एवं यज्ञानामग्निहोत्रं येन वा ऽइषोरनीकमेति सर्वा वै तेनेषुरेत्येतेनो हाऽस्य सर्वे यज्ञक्रतव ऽएतं मृत्युमतिमुक्ताः ॥ १० ॥ अहोरात्रे ह वा ऽअमुष्मिँल्लोके परिप्लवमाने । पुरुषस्य सुकृतं क्षिणुतोऽर्वाचीनं वा ऽअतोऽहोरात्रे तथो हाऽस्याऽहोरात्रे सुकृतं न क्षिणुतः ॥ ११ ॥ स यथा रथोपस्थे तिष्ठन् । उपरिष्टाद्रथचक्रे *पल्यङ्गमाने ऽउपावेक्षतैवं परस्तादर्वाचीनोऽहोरात्रे ऽउपावेक्षते न ह वा ऽअस्याऽहोरात्रे सुकृतं क्षिणुतो य ऽएवमेतामहोरात्रयोरतिमुक्तिं वेद ॥ १२ ॥ पूर्वेणाऽऽहवनीयं परीत्य । अन्तरेण गार्हपत्यं चैति न वै देवा मनुष्यं विदुस्त ऽएनमेतदन्तरेणाऽतियन्तं विदुरयं वै न

* 'च' पुस्तके 'पल्यङ्य' इति पाठः ।

ऽइदं जुहोतीत्यग्निर्वै पाप्मनोऽपहन्ता तावस्याऽऽहवनीयश्च गार्हपत्यश्चाऽन्तरेणाऽतियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥ १३ ॥ उत्तरतो वा ऽअग्निहोत्रस्य द्वारः । स यथा द्वारा प्रपद्येतैवं तदथ यो दक्षिणत ऽएत्याऽऽस्ते यथा बहिर्द्धा चरेदेवं तत् ॥ १४ ॥ नौर्ह वा ऽएषा स्वर्ग्या । यदग्निहोत्रं तस्या ऽएतस्यै नावः स्वर्ग्याया ऽआहवनीयश्चैव गार्हपत्यश्च नौमण्डे ऽअथैष ऽएव नावाजो* यत्क्षीरहोता ॥ १५ ॥ स यत्प्राङुपोदैति । तदेनां प्राचीमभ्यजति स्वर्गं लोकमभि तया स्वर्गं लोकं समश्नुते तस्या ऽउत्तरत ऽआरोहणं सैनᳪ स्वर्गं लोकं समापयत्यथ यो दक्षिणत ऽएत्याऽऽस्ते यथा प्रतीर्णायामागच्छेत्स विहीयेत स तत ऽएव बहिर्द्धा स्यादेवं तत् ॥ १६ ॥ अथ यामेताᳪ समिधमभ्यादधाति । सेष्टका येन मन्त्रेण जुहोति तद्यजुर्येनैतामिष्टकामुपदधाति यदा वा ऽइष्टकोपधीयतेऽथाऽऽहुतिर्हूयते तदस्योपहितास्वेवेष्टकास्वेता ऽआहुतयो हूयन्ते या ऽएता ऽअग्निहोत्राहुतयः ॥१७॥ प्रजापतिर्वा ऽअग्निः । संवत्सरो वै प्रजापतिः संवत्सरे–संवत्सरे ह वा ऽअस्याऽग्निहोत्रं चित्येनाऽग्निना सन्तिष्ठते संवत्सरेसंवत्सरे चित्यमग्निमाप्नोति य ऽएवं विद्वानग्निहोत्रं जुहोत्येतदु हाऽस्याऽग्निहोत्रं चित्येनाऽग्निना सन्तिष्ठते चित्यमग्निमाप्नोति ॥ १८ ॥ सप्त च वै शतान्यशीतीनामृचः । विंशतिश्च स यत्सायं प्रातरग्निहोत्रं जुहोति ते द्वे ऽआहुती

* नावमजति क्षिपति प्रेरयतीति नावाजो नाविक इत्यर्थः ।

ता ऽअस्य संवत्सर ऽआहुतयः सम्पद्यन्ते ॥ १९ ॥ सप्त चैव शतानि विंशतिश्च । संवत्सरे—संवत्सरे ह वा ऽअस्याऽग्निहोत्रं महतोक्थेन संम्पद्यते संवत्सरे—संवत्सरे महदुक्थमाप्नोति य ऽएवं विद्वानग्निहोत्रं जुहोत्येतदु हाऽस्याऽग्निहोत्रं महतोक्थेन सम्पद्यते महदुक्थमाप्नोति ॥२०॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



अग्नौ ह वै देवाः। सर्वान्पशून्निदधिरे ये च ग्राम्या ये चाऽऽरण्या विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायाऽयं नो गोपिष्ठो गोपायदिति वा ॥ १ ॥ तानु हाऽग्निर्निचकमे । तैः संगृह्य रात्रिं प्रविवेश पुनरेम ऽइति देवा ऽएदग्निं तिरोभूतं ते ह विदाञ्चक्रुरिह वै प्राऽविक्षद्रात्रिं वै प्राऽविक्षदिति तमेतत्प्रत्यायत्त्याथं रात्रौ सायमुपाऽतिष्ठन्त देहि नः पशून्पुनर्नः पशून्देहीति तेभ्योऽग्निः पशून्पुनरददात् ॥२॥ तस्मै कमग्नी ऽउपतिष्ठेत । अग्नी वै दातारौ तावेवैतद्याचते सायमुपतिष्ठेत सायं हि देवा ऽउपाऽतिष्ठन्त दत्तो हैवाऽस्माऽएतौ पशून्य ऽएवं विद्वानुपतिष्ठते ॥ ३ ॥ अथ यस्मान्नोपतिष्ठेत। उभये ह वा ऽइदमग्रे सहाऽऽसुर्देवाश्च मनुष्याश्च तद्यद्ध स्म मनुष्याणां न भवति तद्ध स्म देवान्याचन्त ऽइदं वै नो नाऽस्तीदं नोऽस्त्विति ते तस्या ऽएव याञ्च्यायै द्वेषेण देवास्तिरोभूता नेद्धिनसानि नेद्द्वेष्योऽसानीति तस्मान्नोपतिष्ठेत ॥ ४ ॥ अथ यस्मादुपैव तिष्ठेत । यज्ञो वै देवानामाशीर्र्यजमानस्य तद्वा ऽएष ऽएव यज्ञो यदाहुतिराशीरेव

यजमानस्य तद्यद्देवाऽस्याऽत्र तद्देवैतदुपतिष्ठमानः कुरुते तस्मादुपैव तिष्ठेत ॥ ५ ॥ अथ यस्मान्नोपतिष्ठेत । यो वै ब्राह्मणं वा शश्वसमानोऽनुचरति क्षत्रियं वाऽयं मे दास्यत्ययं मे गृहान्करिष्यतीति यो वै तं व्वाद्येन वा कर्म्मणा वाऽभिरिराधयिषति तस्मै वै स देयं मन्न्यतेऽथ य ऽआह किं नु त्वं ममाऽसि यो मे न ददासीतीश्वर ऽएनं द्वेष्टोरीश्वरो निर्वेदं गन्तोस्तस्मान्नोपतिष्ठेतैतद्वित्त्वेवैष ऽएतं याचते यदिन्धे यज्जुहोति तस्मान्नोपतिष्ठेत ॥ ६ ॥ अथ यस्मादुपैव तिष्ठेत । उत वै याचन्दातारं लभत ऽएवोतो भर्त्ता भार्य्यं नाऽनुबुद्ध्यते स यदैवाऽऽह भार्य्यो वै तेऽस्मि बिभृहि मेत्त्यथैनं व्वेदाऽथैनं भार्य्यं मन्न्यते तस्मादुपैव तिष्ठेतेदमित्तु समस्तं यस्मादुपतिष्ठेत ॥ ७ ॥ प्प्रजापतिर्व्वा ऽएष भूत्वा । यावत ऽईष्टे यावदेनमनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीदमेवैतत्सर्व्वमुपतिष्ठमानोऽनु विकरोतीदꣳ सर्व्वमनु प्प्रजनयति ॥८॥ स वा ऽउपवत्त्या प्प्रतिपद्यते । इयं वा ऽउप द्व्येनेयमुप यद्धीदं किञ्च जायतेऽस्यां तदुपजायतेऽथ यद्वृषच्छत्त्यस्यामेव तदुपोप्प्यते तदुह्वा रात्र्या भूयो-भूय ऽएवाऽक्षय्यं भवति तदक्षय्येणैवैतद्भूम्म्ना प्प्रतिपद्यते ॥९॥ स ऽआह । '[1]उपप्प्रयन्तो ऽअद्ध्वर'मित्त्यद्ध्वरो वै यज्ञ ऽउपप्प्रयन्तो यज्ञमित्येवैतदाह 'मन्त्रं[2] व्वोचेमाऽऽग्नय' ऽइति मन्त्रमु ह्यस्मा ऽएतद्वक्ष्यन्भवत्त्या'रे ऽ[3]अस्मे च शृण्वत' ऽइति यद्यप्प्यस्मदारका-

(१) शु० सं० अ० ३ क० ११। (२) शु० सं० अ० ३ क० ११। (३) शु० सं० अ० ३ क० ११।

दस्युथ न ऽएतच्छृण्वन्वैवमेवैतन्मन्यस्वेत्त्येवैतदाह ॥१०॥ 'अग्निर्म्मूर्द्धा[1] दिवः । ककुत्पतिः पृथिव्व्या ऽअयम् । अपाथं रेताथंसि जिन्न्वती'त्त्यन्वेव धावति तद्यथा याचन्कल्याणं ब्रुदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्मा ऽअसीत्त्येवमेषा ॥ ११ ॥ अथैन्द्राग्नी । 'ऽउभा वा[2]मिन्द्राग्नी ऽआहुवद्ध्या ऽउभा राधसः सह मादयद्ध्यै । उभा दातारविषाथं रयीणामुभा व्राजस्य सातये हुवे वामि'त्त्येष वा ऽइन्द्रो य ऽएष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावेवैतत्सह सन्ता ऽउपतिष्ठत ऽउभौ मे सह सन्तौ दत्तामिति तस्मादैन्द्राग्नी ॥ १२ ॥ 'अयं[3] ते योनिर्ऋ-त्त्वियः । यतो जातो ऽअरोचथाः । तं जानन्नग्न ऽआरो-हाऽथा नो व्वर्धया रयिमि'ति पुष्टं वै रयिर्ब्भूयो-भूय ऽएव न ऽइदं पुष्टं कुर्व्वित्त्येवैतदाह ॥ १३ ॥ 'अयमिह[4] प्प्रथमः । धायि धातृभिर्होता यजिष्ठो ऽअद्ध्वरेष्वीड्यः । यमप्प्नवानो भृगवो व्विरुरुचुर्व्वनेषु चित्रं व्विभ्वं व्विशे-विश' ऽइत्त्यन्वेव धावति तद्यथा याचन्कल्याणं ब्रुदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्मा ऽअसीत्त्येवमेषा यथो ऽएवैष तथो ऽएवैनमेतदाह यदाह व्विभ्वं व्विशे-विश ऽइति व्विभूर्ह्येष व्विशे-विशे ॥ १४ ॥ 'अस्य[5] प्प्रत्नाम् । अनु द्युतथं शुक्रं दुदुह्रे ऽअह्रयः । पयः सहस्रसामृषिमि'ति परमा वा ऽएषा सनीनां यत्सहस्रसनिस्तदेतस्यैवाऽवरुद्ध्यै

(१) शु० सं० अ० ३ क० १२। (२) शु० सं० अ० ३. क० १३। (३) शु० सं० अ० ३. क० १४। (४) शु० सं० अ० ३. क० १५। (५) शु० सं० अ ३ क० १६।

तस्मादाह पयः सहस्रसामृषिमिति ॥ १५ ॥ तदेतत्समाहार्ष्यं षड्चम्। तस्योपवती प्रथमा प्रत्नवत्युत्तमाऽवोचाम तद्यस्मादुपवत्यथाऽदु ऽएव प्रत्नं यावन्तो ह्येव सनाऽग्रे देवास्तावन्त ऽएव देवास्तस्माददः प्रत्नं तदिमे ऽएवाऽन्तरेण सर्वे कामास्ते ऽअस्मा ऽइमे सञ्जानाने सर्वान्कामान्त्सन्नमतः ॥ १६ ॥ स वै त्रिः प्रथमां जपति । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमां जपति त्रिरुत्तमाम् ॥ १७ ॥ यद्ध वा ऽअत्राऽग्निहोत्रं जुह्वत् । वाचेन वा कर्म्मणा वा मित्थ्या करोत्यात्मनस्तदुवद्यत्या-युषो वा वर्च्चसो वा प्रजायै वा ॥ १८ ॥ तदु खलु । 'तनूपा ऽअग्नेऽसि तन्वं मे पाह्यायुर्दा ऽअग्नेऽस्यायुर्म्मे देहि वर्च्चोदा ऽअग्नेऽसि वर्च्चो मे देहि। अग्ने यन्मे तन्वा ऽऊनं तन्म ऽआपृणे'ति ॥ १९ ॥ यद्ध वा ऽअत्राऽग्निहोत्रं जुह्वत् । वाचेन वा कर्म्मणा वा मित्थ्या करोत्यात्मनस्तदुवद्यत्यायुषो वा वर्च्चसो वा ऽप्रजायै वा तन्मे पुनराप्यायये त्येवैतदाह तथो हाऽस्यैतत्पुनराप्यायते ॥ २० ॥ 'इन्धानास्त्वा । शतं हिमा द्युमन्तं समिधीमही'ति शतं वर्षाणि जीव्यास्मेत्येवैतदाह तावत्त्वा महान्तं समिधीमहीति यदाह द्युमन्तं समिधीमहीति 'वयस्वन्तो वयस्कृतं सहस्वन्तः सहस्कृतमि'ति वयस्वन्तो वयं भूयास्म वयस्कृत्त्वं भूया ऽइत्येवैतदाह सहस्वन्तो वयं भूयास्म सहस्कृत्त्वं भूया

(१) शु० सं० अ० ३. क० १७। (२) शु० सं० अ० ३. क० १८। (३) शु० सं० अ० ३. क० १८।

ऽइत्येवैतदाह'ऽग्ने[1] सपत्नदम्भनमदब्धासो ऽअदाभ्यमि'ति त्वया वयꣳ सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह ॥ २१ ॥ 'चित्रावसो[2] स्वस्ति ते पारमशीये'ति । त्रिरेतज्जपति रात्रिर्वै चित्रावसुः सा हीयꣳ सङ्गृह्येव चित्राणि वसति तस्मान्नाऽऽरकाच्चित्रं ददृशे ॥ २२ ॥ एतेन ह स्म वा ऽऋषयः । रात्रेः स्वस्ति पारꣳ समश्नुवत ऽएतेनो ह स्मैनान्रात्रेर्न्नाष्ट्रा रक्षाꣳसि न विन्दन्त्येतेनो ऽएवैष ऽएतद्रात्रेः स्वस्ति पारꣳ समश्नुत ऽएतेनो ऽएनꣳ रात्रेर्न्नाष्ट्रा रक्षाꣳसि न विन्दन्त्येतावन्नु तिष्ठञ्जपति ॥ २३ ॥ अथाऽऽसीनः । 'सं[3] त्वमग्ने सूर्य्यस्य वर्च्चसा गथा' ऽइति तद्यदस्तं यन्नाऽऽदित्य ऽआहवनीयं प्रविशति तेनैतदाह 'समृषीणाꣳ[4] स्तुतेने'ति तद्यदुपतिष्ठते तेनैतदाह 'सं[5] प्रियेण धाम्ने'त्याहुतयो वा ऽअस्य प्प्रियं धामाऽऽहुतिभिरेव तदाह 'समहमायुषा[6] सं वर्च्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीये'ति यथा त्वमेतैः समगथा ऽएवमहमायुषा वर्च्चसा प्प्रजया रायस्पोषेणेति यद्भूम्नेति तदेवमहमेतैः सङ्गच्छा ऽइत्येवैतदाह ॥ २४ ॥ अथ गामभ्यैति । 'अन्धँ[7] स्थाऽन्धो वो भक्षीय मह स्थ महो वो भक्षीये'ति यानि वो वीर्य्याणि यानि वो महाꣳसि तानि वो भक्षीयेत्येवैतदा'होर्ज्ज[8] स्थोर्ज्जं वो भक्षीये'ति रस स्थ रसं वो भक्षीयेत्येवैतदाह 'रायस्पोष[9]

(१) शु० सं० अ० ३. क० १८ । (२) शु० सं० अ० ३. क० १८ । (३) शु० सं० अ० ३. क० १९ । (४) शु० सं० अ० ३. क० १९ । (५) शु० सं० अ० ३. क० १९ । (६) शु० सं० अ० ३. क० १९ । (७) शु० सं० अ० ३. क० २० । (८) शु० सं० अ० ३. क० २० । (९) शु० सं० अ० ३. क० २० ।

स्त्थ रायस्पोषं वो भक्षीये'ति भूमा स्त्थ भूमानं वो भक्षीयेत्त्येवैतदाह ॥ २५ ॥ 'रेवती रमद्ध्वमि'ति । रेवन्तो हि पशवस्तस्मादाह रेवती रमद्ध्वमि'त्त्यस्मिन्न्योनावस्मिन्न्गोष्ठेऽस्मिँल्लोकेऽस्मिन्न्क्षये । इहैव स्त माऽपगाते'त्त्यात्त्मन ऽएवैतदाह मदेव माऽपगातेति ॥ २६ ॥ अथ गामभिमृशति । 'सꣳहितांऽसि विश्वरूपी'ति विश्वरूपा ऽइव हि पशवस्तस्मादाह विश्वरूपी'त्त्यूर्ज्जा माऽऽविशे गौपत्त्येने'त्त्यूर्ज्जेति यदाह रसेनेति तदाह गौपत्त्येनेति यदाह भूम्नेति तदाह ॥ २७ ॥ अथ गार्हपत्त्यमभ्भ्यैति । स गार्हपत्त्यमुपतिष्ठत 'ऽउप त्त्वाऽग्ने दिवे-दिवे दोषावस्तर्द्धिया वयम् । नमो भरन्त ऽएमसी'ति नम ऽएवाऽस्मा ऽएतत्त्करोति यथैनं न हिꣳस्यात् ॥ २८ ॥ 'राजन्तमद्ध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दम' ऽइति स्वं वै त ऽइदं यन्म्मम तन्नो भूयो-भूय ऽएव कुर्वित्त्येवैतदाह ॥ २९ ॥ 'सँ नः पितेव *सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तय' ऽइति यथा पिता पुत्राय सूपचरो नैवैनं केन चन हिनस्त्त्येवं नः सूपचर ऽएधि मैव त्त्वा केन चन हिꣳसिष्मेत्त्येवैतदाह ॥ ३० ॥ अथ द्विपदाः । 'अग्ने त्त्वन्नो ऽअन्तम ऽउत त्राता शिवो भवा वरूत्थ्यः ।

---

* 'ख. ग. च' पुस्तकेषु 'सूनवे । अग्ने' इत्येव पाठो दृश्यते ।

( १ ) शु० सं० अ० ३. क० २१ । ( २ ) शु० सं० अ० ३. क० २१ । ( ३ ) शु० सं० अ० ३. क० २२ । ( ४ ) शु० सं० अ० ३. क० २२ । ( ५ ) शु० सं० अ० ३. क० २२ । ( ६ ) शु० सं० अ० ३. क० २३ । ( ७ ) शु० सं० अ० ३. क० २४ । ( ८ ) शु० सं० अ० ३. क० २५-२६ ।

वसुरग्निर्वसुश्रवा ऽअच्छा नक्षि द्युमत्तमꣳ रयिन्दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्या णो ऽअघायतः समस्मादि'ति ॥ ३१ ॥ यद्वा ऽआहवनीयमुपतिष्ठते । पशूँस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठत ऽउच्चावचा ऽइव हि पशवोऽथ यद् गार्हपत्यं पुरुषाँस्तद्याचते तद् गायत्रं प्रथमं त्रिचं गायत्रं वा ऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपपरैति ॥ ३२ ॥ अथ द्विपदाः । पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा ऽअयं पुरुषः पुरुषानेवैतद्याचते पुरुषान्न्हि याचते तस्माद् द्विपदाः पशुमान्न्ह वै पुरुषवान्भवति य ऽएवं विद्वानुपतिष्ठते ॥ ३३ ॥ अथ गामभ्यैति । 'इड ऽएह्यदित ऽएही'तीडा हि गौरदितिर्हि गौस्तामभिमृशति 'काम्म्या ऽएते'ति मनुष्याणाꣳ ह्येतासु कामाः प्प्रविष्टास्तस्मादाह काम्म्या ऽएतेति 'मयि वः कामधरणं भूयादि'त्यहं वः प्प्रियो भूयासमित्त्येवैतदाह ॥ ३४ ॥ अथाऽन्तरेणाऽऽहवनीयं च गार्हपत्यं च । प्प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति 'सोमानꣳ स्वरणं कृणुहि ब्ब्रह्मणस्पते । कक्षीवन्तं य ऽऔशिजः ॥ यो रेवान्न्यो ऽअमीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ मा नः शꣳसो ऽअररुषो धूर्त्तिः प्प्रणङ् मर्त्त्यस्य । रक्षा णो ब्ब्रह्मणस्पत' ऽइति ॥ ३५ ॥ यद्वा ऽआहवनीयमुपतिष्ठते । दिवं तदुपतिष्ठ-

(१) शु० सं० अ० ३. क० २७ । (२) शु० सं० अ० ३. क० २७ । (३) शु० सं० अ० ३. क० २७ । (४) शु० सं० अ० ३ क० २८–३० ।

तेऽथ यद् गार्हपत्त्यं पृथिवीं तद्थैतदन्तरिक्षमेषा हि दिग्बृहस्पतेरेताᳪं ह्येतद्दिशमुपतिष्ठते तस्माद्बार्हस्पत्त्यं जपति ॥ ३६ ॥ 'मंहि[1] त्रीणामवोऽस्तु । द्युक्षं मित्रस्याऽर्य्यम्म्णः । दुराधर्षं व्वरुणस्य ॥ न हि तेषाममा चन नाऽध्वसु वारणेषु । ईशे रिपुरघशᳫसः ॥ ते हि पुत्रासोऽअदितेः प्प्रजीवसे मर्त्त्याय । ज्योतिर्य्यच्छन्त्यजस्र'मिति तत्राऽस्ति नाऽध्वसु वारणेष्विर्त्त्येते ह वा ऽअध्वानो वारणा य ऽइमेऽन्तरेण द्यावापृथिवी ऽएतान्ह्येतदुपतिष्ठते तस्मादाह नाऽध्वसु वारणेष्विति ॥ ३७ ॥ अथैन्द्री । इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्त्थानं कुरुते 'कदा[2] चन स्तरीरसि नेन्द्र सश्चसि दाशुष' ऽइति यजमानो वै दाश्वान्न यजमानाय द्रुह्यसीर्त्त्येवैतदा'होपोपेन्नु[3] मघवन्भूय ऽइन्नु ते दानं देवस्य पृच्च्यत' ऽइति भूयो भूय ऽएव न ऽइदं पुष्टं कुर्व्वित्त्येवैतदाह ॥ ३८ ॥ अथ सावित्री । सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएते सवितृप्प्रसूता ऽएव सर्व्वे कामाः समृध्यन्ते 'तत्सवितुर्व्वरेण्ण्यं[4] भर्ग्गो देवस्य धीमहि । धियो यो नः प्प्रचोदयादि'ति ॥ ३९ ॥ अथाऽऽग्नेयी । तदग्नय ऽएवैतदात्मानमन्ततः परिददाति गुप्त्यै 'परि ते[5] दूडभो रथोऽस्माँ ॥ ३ ऽअश्नोतु विश्वतः । येन रक्षसि दाशुष' ऽइति यजमाना वै दाश्वाᳪंसो यो ह वा ऽअस्याऽनाधृष्यतमो रथस्तेनैष यजमाना-

(१) शु० सं० अ० ३ क० ३१–३३ । (२) शु० सं० अ० ३. क० ३४ । (३) शु० सं० अ० ३ ३४ । (४) शु० सं० अ० ३ क० ३५ । (५) शु० सं० अ० ३ क० ३६ ।

नभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्व्वतोऽभिगोपायेत्त्येवैतदाह त्रिरेतज्जपति ॥ ४० ॥ अथ पुत्रस्य नाम गृह्णाति । 'इदं मेऽयं वीर्य्यं पुत्रोऽनुसन्तनवदि'ति यदि पुत्रो न स्यादप्प्यात्मन ऽएव नाम गृह्णीयात् ॥ ४१ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



अथ हुतेऽग्निहोत्र ऽउपतिष्ठते । 'भूर्भुवः स्वरि'ति तत्सत्त्येनैवैतद्वाचः समर्द्धयति यदाह भूर्भुवः स्वरिति तया समृद्धयाऽऽशिषमाशास्ते 'सुप्प्रजाः प्प्रजाभिस्स्यामि'ति तत्प्रजामाशास्ते 'सुवीरो वीरैरि'ति तद्वीरानाशास्ते 'सुपोषः पोषैरि'ति तत्पुष्टिमाशास्ते ॥ १ ॥ यद्वा ऽअदो दीर्घमग्न्युपस्थानम् । आशीरेव साऽऽशीरियं तदेतावतैवैतत्सर्व्वमाप्प्नोति तस्मादेतेनैवोपतिष्ठेतैतेन न्न्वेव वयमुपचराम ऽइति ह स्माऽऽहाऽऽसुरिः ॥ २ ॥ अथ प्प्रवत्स्यन् । गार्हपत्त्यमेवाऽग्र ऽउपतिष्ठतेऽथाऽऽहवनीयः ॥ ३ ॥ स गार्हपत्त्यमुपतिष्ठते । 'नर्य्य प्प्रजाम्मे पाही'ति प्प्रजाया हैषऽईष्टे तत्प्रजामेवाऽस्मा ऽएतत्परिददाति गुप्त्यै ॥ ४ ॥ अथाऽऽहवनीयमुपतिष्ठते । 'शंस्य पशून्मे पाही'ति

(१) तै० ब्रा० ५. ३. । (२) शु० सं० अ० ३ क० ३७ । (३) शु० सं० अ० ३ क० ३७ । (४) शु० सं० अ० ३ क० ३७ । (५) शु० सं० अ० ३ क० ३७ । (६) शु० सं० अ० ३ क० ३७ । (७) शु० सं० अ० ३ क० ३७ ।

पशूनाᳬं हैष ऽईष्टे तत्पशूनेवाऽस्मा ऽएतत्परिददाति गुप्त्यै ॥ ५ ॥ अथ प्प्र वा व्व्रजति प्प्र वा धावयति । स यत्र व्वेलां मन्न्यते तत्स्यन्त्वा व्वाचं व्विसृजतेऽथ प्प्रोष्य परेक्ष्य यत्र व्वेलां मन्न्यते तद्वाचं यच्छति स यद्यपि राजाऽन्तरेण स्यान्नैव तमुपेयात् ॥ ६ ॥ स ऽआहवनीयमेवाऽग्र ऽउपतिष्ठते । अथ गार्हपत्त्यं गृहा वै गार्हपत्त्यो गृहा वै प्प्रतिष्ठा तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥७॥ स ऽआहवनीयमुपतिष्ठते । 'आगन्न्म व्विश्ववेदसमस्मभ्भ्यं व्वसुवित्तमम् । अग्ने सम्म्राडभि द्युम्म्नमभि सह ऽआयच्छस्वे'त्यथोपविश्य तृणान्न्युपलुम्पति ॥ ८ ॥ अथ गार्हपत्त्यमुपतिष्ठते । 'अयमग्निर्गृहपतिर्गार्हपत्त्यः प्प्रजाया व्वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्म्नमभि सह ऽआयच्छस्वे'त्यथोपविश्य तृणान्न्युपलुम्पत्त्येतन्नु जपेनैतेनन्न्वेव भूयिष्ठा ऽइवोपतिष्ठन्ते ॥ ९ ॥ स वै खलु तूष्णीमेवोपतिष्ठेत । इदं वै यस्मिन्न्वसति ब्राह्मणो वा राजा वा श्रेयान्न्मनुष्यो न्न्वेव तमेव नाऽर्हति व्वक्तुमिदं मे त्वं गोपाय प्प्राऽहं व्वत्स्यामीत्त्यथाऽस्मिन्नेते श्रेयाᳬंसो व्वसन्ति देवा ऽअग्नयः क ऽउ तानर्हति व्वक्तुमिदं मे यूयं गोपायत प्प्राऽहं व्वत्स्यामीति ॥१०॥ मनो ह वै देवा मनुष्यस्याऽऽजानन्ति । स वेद गार्हपत्त्यः परिदां मेदमुपागादिति तूष्णीमेवाऽऽहवनीयमुपतिष्ठते स वेदाऽऽहवनीयः परिदां मेदमुपाऽगादिति ॥११॥ अथ प्प्र वा व्व्रजति प्प्र वा धावयति । स यत्र व्वे*लां मन्न्यते

(१) शु० सं० अ० ३ क० ३८ । (२) शु० सं० अ० ३ क० ३९ ।

* 'ग. च' पुस्तकयोः 'वेलां' इत्यत्र 'वेलो' इति पाठः ।

तत्स्यन्त्वा व्राचं व्रिसृजतेऽथ प्प्रोष्य परेक्ष्य यत्र व्वेलां मन्न्यते तद्वाचं यच्छति स यद्यपि राजाऽन्तरेण स्यान्नैव तमुपेयात् ॥ १२ ॥ स ऽआहवनीयमेवाऽग्र ऽउपतिष्ठते । अथ गार्हपत्यं तूष्णीमेवाऽऽहवनीयमुपतिष्ठते तूष्णीमुपविश्य तृणान्न्युपलुम्पति तूष्णीमेव गार्हपत्यमुपतिष्ठते तूष्णीमुपविश्य तृणान्न्युपलुम्पति १३ ॥ अथाऽतो गृहाणामेवोपचारः । एतद्ध वै गृहपतेः प्प्रोषुष ऽआगताद् गृहाः समुत्त्रस्ता ऽइव भवन्ति किमयमिह व्वदिष्यति किं वा करिष्यतीति स यो ह तत्र किंचिद्वदति वा करोति वा तस्माद् गृहाः प्प्रत्रसन्ति तस्येश्वरः कुलं व्रिक्षोब्धोरथ यो ह तत्र न व्वदति न किं चन करोति तं गृहा ऽउपसछ्श्रयन्ते न वा ऽअयमिहाऽवादीन्न किं चनाऽकरदिति स यदिहाऽपि सुक्रुद्ध ऽइव स्याच्छ्र ऽएव ततस्तत्कुर्य्याद्यद्वदिष्यन्न्वा करिष्यन्न्वा स्यादेष ऽउ गृहाणामुपचारः ॥ १४ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



प्रजापतिं वै भूतान्न्युपाऽऽसीदन् । प्रजा वै भूतानि व्रि नो धेहि यथा जीवामेति ततो देवा यज्ञोपवीतिनो भूत्त्वा दक्षिणं जान्न्वाच्च्योपाऽऽसीदँस्तानब्रवीद्यज्ञो वोऽन्नममृतत्त्वं व ऽऊर्ग्वः सूर्य्यो वो ज्ज्योतिरिति ॥ १ ॥ अथैनं पितरः । प्प्राचीनावीतिनः सव्व्यं जान्न्वाच्च्योपाऽऽसीदँस्तानब्रवीन्मासि—मासि वोऽशनछ्ं स्वधा वो मनोजवो

वश्चन्द्रमा वो ज्ज्योतिरिति ॥ २ ॥ अथैनं मनुष्याः । प्प्रावृता ऽउपस्थं कृत्वोपाऽऽसीदँस्तानब्रवीत्सायं प्रातर्वो-ऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्ज्योतिरिति ॥ ३ ॥ अथैनं पशव ऽउपाऽऽसीदन् । तेभ्यः स्वैषमेव चकार यदैव यूयं कदा च लभाद्ध्वै यदि काले यद्यनाकालेऽथैवाऽश्नाथेति तस्मादेते यदैव कदा च लभन्ते यदि काले यद्यनाकाले-ऽथैवाऽश्नन्ति ॥ ४ ॥ अथ हैनꣳ शश्वदप्प्यसुरा ऽउपसेदु-रित्याहुः । तेभ्यस्तमश्च मायां च प्प्रददावस्त्यहैवाऽसुर-मायेतीव पराभूता ह त्त्वेव ताः प्प्रजास्ता ऽइमाः प्प्रजास्त-थैवोपजीवन्ति यथैवाऽऽभ्यः प्प्रजापतिर्व्यदधात् ॥५॥ नैव देवा ऽअतिक्रामन्ति । न पितरो न पशवो मनुष्या ऽएवैके-ऽतिक्रामन्ति तस्माद्यो मनुष्याणां मेद्यत्त्यशुभे मेद्यति विहूर्च्छति हि न ह्ययनाय चन भवत्त्यनृतꣳ हि कृत्त्वा मेद्यति तस्मादु सायम्प्रातराश्येव स्यात्स यो हैवं विद्वान्त्सा-यम्प्रातराशी भवति सर्व्वꣳ हैवाऽऽयुरेति यदु ह किं च वाचा व्व्याहरति तदु हैव भवत्त्येतद्धि देवसत्त्यं गोपायति तद्धैत-त्तेजो नाम ब्राह्मणं य ऽएतस्य व्रतꣳ शक्नोति चरितुम् ॥ ६ ॥ तद्वा ऽएतत् । मासि-मास्येव पितृभ्यो ददतो यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददात्त्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स ऽएताꣳ रात्रिं क्षीयते तस्मिन्न्क्षीणे ददाति तथैभ्योऽसमदं करोत्त्यथ यदक्षीणे दद्यात्समदꣳ ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तस्माद्यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददाति ॥ ७ ॥ स वा ऽअप-

राह्णे ददाति । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददाति ॥ ८ ॥ स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन ऽएतं गृह्णाति स तत ऽएवोपोत्थायोत्तरेणाऽन्वाहार्य्यपचनं दक्षिणा तिष्ठन्न वहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति ॥ ९ ॥ तछ्र श्रपयति । तस्मिन्नधिश्रित ऽआज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैव* पितॄणां तस्मादधिश्रित ऽआज्यं प्रत्यानयति ॥ १० ॥ स ऽउद्वास्याऽग्नौ द्वे ऽआहुती जुहोति देवेभ्यः । देवान्न्वा ऽएष ऽउपाऽऽवर्त्तते य ऽआहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाऽचारीत्तदु देवेभ्यो निन्हुते स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुद्वास्याऽग्नौ द्वे ऽआहुती जुहोति देवेभ्यः ॥ ११ ॥ स वा ऽअग्नये च सोमाय च जुहोति । स यदग्नये जुहोति सर्वत्र ह्येवाऽग्निरन्वाभक्तोऽथ यत्सोमाय जुहोति पितृदेवत्यो वै सोमस्तस्मादग्नये च सोमाय च जुहोति ॥१२॥ स जुहोति । '(१)अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहे'त्यग्नौ मेक्षणमभ्यादधाति तत्स्विष्टकृद्भाजनमथ दक्षिणेनाऽन्वाहार्य्यपचनछ्र सकृदुल्लिखति तद्वेदिभाजनछ्र सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुल्लिखति ॥ १३ ॥ अथ परस्तादुल्मुकं निदधाति । स यदुनिधा-

* 'क' पुस्तके 'ऽथैवम्' इति पाठः ।

(१) शु० सं० अ० २ क० २९ ।

योल्मुकमथैतत्पितृभ्यो दद्यादसुररक्षसानि हैषामेतद्विमथ्नीरँस्तथो हैतत्पितृणामसुररक्षसानि न विमथ्नते तस्मात्परस्तादुल्मुकं निदधाति ॥ १४ ॥ स निदधाति । 'ये रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मादि'त्यग्निर्हि रक्षसामपहन्ता तस्मादेवं निदधाति ॥ १५ ॥ अथोदपात्रमादायाऽवनेजयति । असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाऽऽशिष्यतेऽभिषिञ्चेदेवं तत् ॥ १६ ॥ अथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । अग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितृणां तस्मादुपमूलं दिनानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदाच्छिन्नानि भवन्ति ॥ १७ ॥ तानि दक्षिणोपस्तृणाति । तत्र ददाति स वा ऽइति ददातीतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितृणां तस्मादिति ददाति ॥ १८ ॥ स ददाति । असावेतत्त ऽइत्येव यजमानस्य पित्रे ये च त्वामन्वित्यु हैक ऽआहुस्तदु तथा न ब्रूयात्स्वयं वै तेषाꣳ सह येषाꣳ सह तस्मादु ब्रूयादसावेतत्त ऽइत्येव यजमानस्य पित्रेऽसावेतत्त ऽइति पितामहायाऽसावेतत्त ऽइति

(१) शु० सं० अ० २ क० ३० ।

* "कुशोत्पाटनसमय एव मूलस्याऽधस्तात् सकृत् एकेनैव शस्त्रप्रहारेण यदुत्पाटितं बर्हिः तत्सकृदाच्छिन्नमित्युच्यते" । छेदनसमये मूलस्याऽधोभाग एव लवितव्या नोर्ध्वभाग इत्यर्थः । अतो मूलं बर्हिः सकृदाच्छिन्नम् इति केषाञ्चनोक्तिः परास्तेति ॥

प्प्रपितामाहाय तद्यदितः पराग्ददाति सकृदु ह्येव पराञ्चः पितरः ॥ १९ ॥ तत्र जपति । 'अत्र[1] पितरो मादयद्ध्वं यथाभागमावृषायद्ध्वमि'ति यथाभागमश्नीतेत्त्येवैतदाह ॥ ॥ २० ॥ अथ पराङ् पर्य्यावर्त्तते । तिर ऽइव वै पितरो मनुष्येभ्यस्तिर ऽइवैतद्भवति स वा ऽआ तमितोरासीतेत्याहुरेतावान्ह्यसुरिति स वै मुहूर्त्तमेवाऽऽसित्वा ॥ २१ ॥ अथोपपल्युरुष जपति । 'अमीमदन्त[2] पितरो यथाभागमावृषायिषते'ति यथाभागमाशिषुरित्त्येवैतदाह ॥ २२ ॥ अथोदपात्रमादायाऽवनेजयति । असाववनेनिक्ष्वेत्त्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्प्रपितामहं तद्यथा †जक्षुषेऽभिषिञ्चेदेवं तत् ॥ २३ ॥ अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्त्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्त्वो नमस्करोतिषड्वाऽऋतवऽऋतवः पितरस्तस्मात्त्षट्कृत्त्वो नमस्करोति 'गृहान्नः[3] पितरो दत्ते'ति गृहाणाᳬ ह पितर ऽईशत ऽएषो ऽएतस्याऽऽशीः कर्म्मणोऽथाऽवजिघ्रति प्प्रत्त्यवधाय पिण्डान्त्स यजमानभागोऽग्नौ सकृदाच्छिन्नान्न्यभ्यादधाति पुनरुल्मुकमपि सृजति ॥२४॥

## चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(१) शु० सं० अ० २ क० ३१ । (२) शु० सं० अ० २ क० ३१ । (३) शु० सं० अ० २ क० ३२ ।

† जक्षुषे भुक्तवते पुरुषाय मुखप्रक्षालनार्थं करे उदकमभिषिञ्चेदित्यर्थः । 'जक्षुषे' इत्यत्र अदेर्लिटः क्वसुप्रत्यये 'लिट्यन्यतरस्याम्' ( पा. सू. २. ४० ) इति घसादेशः पुनश्चतुर्थ्येकवचने सम्प्रसारणे च रूपमिति ।

तदु होवाच कहोडः कौषीतकिः । अनयोर्वा ऽअयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नामेति तस्माद्वा ऽआग्रयणेष्ट्या यजत ऽइति ॥ १ ॥ तदु होवाच याज्ञवल्क्यः । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा ऽउभयीरोषधीर्याश्च मनुष्या ऽउपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्या ऽआशुर्न्न पशव ऽआलिलिशिरे ता हेमाः प्रजा ऽअनाशकेन नोत्पराबभूवुः ॥ २ ॥ तद्धै देवाः शुश्रुवुः । अनाशकेन ह वा ऽइमाः प्रजाः पराभवन्तीति ते होचुर्हन्तेदमासामपजिघाꣳसामेति केनेति यज्ञेनैवेति यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते यदेषां क*ल्प्यमासर्षयश्च ॥ ३ ॥ ते होचुः । कस्य न ऽइदं भविष्यतीति ते मम–ममेत्येव न सम्पादयाञ्चक्रुस्ते हाऽसम्पाद्योचुराजिमेवाऽस्मिन्नजामहै स यो न ऽउज्जेष्यति तस्य न ऽइदं भविष्यतीति तथेति तस्मिन्नाऽऽजिमाजन्त ॥ ४ ॥ ताविन्द्राग्नी ऽउदजयताम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीन्द्राग्नी ह्यस्य भागधेयमुदजयतां तौ यत्रेन्द्राग्नी ऽउज्जिगीवाꣳसौ तस्थतुस्तद्विश्वे देवा ऽअन्वाजग्मुः ॥ ५ ॥ क्षत्रं वा ऽइन्द्राग्नी । विशो विश्वे देवा यत्र वै क्षत्रमुज्जयत्यन्वाभक्ता वै तत्र विट् तद्विश्वान्देवानन्वाभजतां तस्मादेष वैश्वदेवश्चचरुर्भवति ॥ ६ ॥ तं वै पुराणानां कुर्य्यादित्याहुः । क्षत्रं वा ऽइन्द्राग्नी

* 'ग–च' पुस्तकयोः 'क्लृप्तम्' इति ।

नेत्क्षत्रमभ्यारोहयाणीति तौ वा ऽउभावेव नवानाᳬ स्यातां *यद्धि पुरोडाश ऽइतरश्चचरुरितरस्तेनैव क्षत्रमनभ्यारूढं तस्मादुभावेव नवानाᳬ स्याताम् ॥ ७ ॥ त ऽउ ह विश्वे देवा ऽऊचुः । अनयोर्वा ऽअयं द्यावापृथिव्यो रसो हन्तेमे-ऽअस्मिन्नाभजामेति ताभ्यामेतं भागमकल्पयन्नेतं द्यावा-पृथिव्यमेककपालं पुरोडाशं तस्माद् द्यावापृथिव्य ऽएकक-पालः पुरोडाशो भवति तस्येयमेव कपालमेकेव हीयं तस्मादेककपालो भवति ॥ ८ ॥ तस्य परिचक्षा । यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्व्वत्रैव स्विष्टकृदन्वाभक्तो-ऽथैतᳬ सर्व्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परि-चक्षोतो हुतः पर्य्यावर्त्तते ॥ ९ ॥ तदाहुः । पर्य्याभूद्वा-ऽअयमेककपालो मोहिष्यति राष्ट्रमिति नाऽस्य सा परिचक्षाऽऽहवनीयो वा ऽआहुतीनां प्रतिष्ठा स यदाहवनीयं प्राप्याऽपि दशकृत्वः पर्य्यावर्त्तेत न तदाद्रियेत यदीत्वन्ये वदन्ति कस्तत्सन्धमुपेयात्तस्मादाज्यस्यैव यजेदाज्यᳬ ह वा ऽअनयोर्द्यावापृथिव्योः प्रत्यक्षᳬ रसस्तत्प्रत्यक्षमेवैने ऽएत-स्वेन रसेन मेधेन प्रीणाति तस्मादाज्यस्यैव यजेत् ॥१०॥ एतेन वै देवाः । यज्ञेनेष्ट्वोभयीनामोषधीनां याश्च मनुष्या-ऽउपजीवन्ति याश्च पशवः कृत्यामिव त्वद्विषमिव त्वदपजघ्नु-स्तत ऽआश्नन्मनुष्या ऽआलिशन्त पशवः ॥११॥ अथ यदेष ऽएतेन यजते । तन्नाऽहं न्वेवैतस्य तथा कश्चन कृत्ययेव त्वद्विषेणेव त्वत्प्रलिम्पतीति देवा ऽअकुर्वन्निति त्वेवैष

* 'क' पुस्तके 'यद्व' इति दृश्यते ।

ऽएतत्करोति यमु चैव देवा भागमकल्पयन्त तमु चैवैभ्य-ऽएष ऽएतद्भागं करोतीमा ऽउ चैवैतदुभयीरोषधीर्याश्च मनुष्या ऽउपजीवन्ति याश्च पशवस्ता ऽअनमीवा ऽअकिल्विषाः कुरुते ता ऽअस्याऽनमीवा ऽअकिल्विषा ऽइमाः प्रजा ऽउपजीवन्ति तस्माद्वा ऽएष ऽएतेन यजते ॥ १२ ॥

तस्य प्रथमजो गौर्दक्षिणा । अग्र्यमिव हीदꣳ स यदीजानः स्याद्दर्शपूर्णमासाभ्यां वा यजेताऽथैतेन यजेत यद्यु ऽअनीजानः स्याच्चातुष्प्राश्यमेवैतमोदनमन्वाहार्यपचने पचेयुस्तं ब्राह्मणा ऽअश्नीयुः ॥ १३ ॥ द्वया वै देवा देवाः । अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्य-देवास्तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति तन्नो यच्छ-क्नुयात्तद्द्यान्नाऽदक्षिणꣳ हविः स्यादिति ह्याहुर्नाऽग्निहोत्रे जुहुयात्समदꣳ ह कुर्याद्यदग्निहोत्रे जुहुयादन्यद्वा ऽआग्र-यणमन्यदग्निहोत्रं तस्मान्नाऽग्निहोत्रे जुहुयात् ॥ १४ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११३ ॥



प्रजापतिर्ह वा ऽएतेनाऽग्रे यज्ञेनेजे । प्रजाकामो बहुः प्रजया पशुभिः स्याꣳ श्रियं गच्छेयं यशः स्यामन्नादः स्यामिति ॥ १ ॥ स वै दक्षो नाम । तद्यदेनेन सोऽग्रेऽय-जत तस्माद्दाक्षायणयज्ञो नामोतैनमेके वसिष्ठयज्ञ ऽइत्या-चक्षत ऽएष वै वसिष्ठ ऽएतमेव तदन्वाचक्षते स ऽएतेन

यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयं प्रजापतेः प्प्रजातिर्य्या श्रीरेतद्बभूवैताᳬं ह वै प्प्रजातिं प्रजायत ऽएताᳬं श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २ ॥ तेनो ह तत ऽईजे। प्प्रतीदर्शः श्वैक्नः स ये तं प्रत्यासुस्तेषां विवचनमिवाऽऽस विवचनमिव ह वै भवति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ३ ॥ तमाजगाम। सुप्प्ला सार्ञ्जयो ब्रह्मचर्य्यं तस्मादेतं च यज्ञमनूचेऽन्न्यमु च सोऽनूच्च्य पुनः सृञ्जयाञ्जगाम ते ह सृञ्जया विदाञ्चक्रुर्यज्ञं वै नोऽनूच्च्याऽगन्निति ते होचुः सह वै नस्तद्देवैरागन्न्यो नो यज्ञमनूच्च्याऽगन्निति स वै सह देवः सार्ञ्जयस्तदप्प्येतन्निवचनमिवाऽस्त्यन्न्यद्वा ऽअरे सुप्प्ला नाम दध ऽइति स ऽएतेन यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयᳬं सृञ्जयानां प्रजातिर्य्या श्रीरेतद्बभूवैताᳬं ह वै प्प्रजातिं प्रजायत ऽएताᳬं श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ४ ॥ तेनो ह तत ऽईजे। देवभागः श्रौतर्षः स ऽउभयेषां कुरूणां च सृञ्जयानां च पुरोहित ऽआस परमता वै सा यो न्न्वेवैकस्य राष्ट्रस्य पुरोहितोऽसत्सा न्न्वेव परमता किमु यो द्वयोः परमतामिव ह वै गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ५ ॥ तेनो ह तत ऽईजे। दक्षः पार्वतिस्त ऽइमेऽप्प्येतर्हि *दाक्षायणा राज्यमिवैव प्प्राप्ता

* दाक्षायणयज्ञो नाम एकैकस्मिन् प्रयोगे द्विर्द्विरनुष्ठेयो यागविशेषो दर्शपूर्णमासयाग एव गुणविकृतिभूतो न कर्मान्तरम्। तेन दाक्षायणयज्ञानुष्ठानपक्षे दर्शपूर्णमासयोरक्रिया 'गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम्' ( का० श्रौ० सू० ४. ४. ३-। ) इति।

राज्यमिह वै प्राप्नोति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्मा-
द्वा ऽएतेन यजते स वा ऽएकैक ऽएवाऽनूची नाऽहं पुरोडाशो
भवत्येतेनो हाऽस्याऽसपत्नानुपबाधा श्रीर्भवति स वै द्वे
पौर्णमास्यौ यजते द्वे ऽअमावास्ये द्वे वै मिथुनं मिथुन-
मेवैतत्प्रजननं क्रियते ॥ ६ ॥ अथ यत्पूर्वेद्युः । अग्नीषो-
मीयेण यजते पौर्णमास्यां ते द्वे देवते द्वे वै मिथुनं
मिथुनमेवैतत्प्रजननं क्रियते ॥ ७ ॥ अथ प्रातः । आग्नेयः
पुरोडाशो भवत्यैन्द्रꣳ सान्नाय्यं ते द्वे देवते द्वे वै मिथुनं
मिथुनमेवैतत्प्रजननं क्रियते ॥ ८ ॥ अथ यत्पूर्वेद्युः । ऐन्द्रा-
ग्नेन यजतेऽमावास्यायां ते द्वे देवते द्वे वै मिथुनं मिथुनमेवै-
तत्प्रजननं क्रियते ॥ ९ ॥ अथ प्रातः । आग्नेयः पुरोडाशो
भवति मैत्रावरुणी पयस्या नेद्यज्ञाद्‌यानीति न्न्वेवाऽऽग्नेयः
पुरोडाशोऽथैतावेव मित्रावरुणौ द्वे देवते द्वे वै मिथुनं
मिथुनमेवैतत्प्रजननं क्रियत ऽएतदु हाऽस्य तद्रूपं येन
बहुर्भवति येन प्रजायते ॥ १० ॥ अथ यत्पूर्वेद्युः । अग्नी-
षोमीयेण यजते पौर्णमास्यां यमेवाऽमुमुपवसथेऽग्नीषोमीयं
पशुमालभते स ऽएवाऽस्य सः ॥ ११ ॥ अथ प्रातः ।
आग्नेयः पुरोडाशो भवत्यैन्द्रꣳ सान्नाय्यं प्रातः सवनमेवा-
ऽस्याऽऽग्नेयः पुरोडाश ऽआग्नेयꣳ हि प्रातः सवनमथैन्द्रꣳ
सान्नाय्यं माध्यन्दिनमेवाऽस्य तत्सवनमैन्द्रꣳ हि माध्य-
न्दिनꣳ सवनम् ॥ १२ ॥ अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यज-
तेऽमावास्यायां तृतीयसवनमेवाऽस्य तद्वैश्वदेवं वै तृतीय-
सवनमिन्द्राग्नी वै विश्वेदेवाः ॥ १३ ॥ अथ प्रातः। आग्नेयः

पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्न्वेवाऽऽग्नेयः पुरोडाशोऽथ यामेवाऽमूं मैत्रावरुणीं वशामनूबन्ध्यामालभते सैवाऽस्य मैत्रावरुणी पयस्या स पौर्ण्णमासेन चाऽमावास्येन चेष्ट्वा यावत्सौम्म्येनाऽध्वरेणेष्ट्वा जयति तावज्जयति तदु खलु महायज्ञो भवति॥ १४ ॥ अथ यत्पूर्वेद्युः। अग्नीषोमीयेण यजते पौर्ण्णमास्यामेतेन वाऽइन्द्रो व्वृत्रमहन्नेतेनो ऽएव व्व्यजयत याऽस्येयं व्विजितिस्तां तथो ऽएवैष ऽएतेन पाप्प्मानं द्विषन्तं भ्रातृव्व्यꣳ हन्ति तथो ऽएव व्विजयतेऽथ यत्सन्नयत्यामावास्यं वै साम्नाय्यं दूरे तद्यदमावास्येति क्षिप्प्र ऽएवैतद्वृत्रं जघ्नुषे तमेतेन रसेनाऽप्प्रीणन्क्षिप्प्रे ह वै पाप्प्मानमपहते य ऽएवं व्विद्वान्पौर्ण्णमास्याꣳ सन्नयत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतत्पूर्वेद्युरभिषुण्ण्वन्ति प्प्रातर्ब्भक्षयिष्यन्तस्तमेतद्भक्षयन्ति यदपक्षीयते ॥ १५ ॥ अथ यत्पूर्वेद्युः। अग्नीषोमीयेण यजते पौर्ण्णमास्यामभिषुणोत्त्येवैनमेतत्तस्मिन्नभिषुत ऽएतꣳ रसं दधात्त्येतेन रसेन तीव्व्रीकरोति स्वदयति ह वै देवेब्भ्यो हव्व्यꣳ स्वदते हाऽस्य देवेब्भ्यो हव्व्यं य ऽएवं व्विद्वान्पौर्ण्णमास्याꣳ सन्नयति ॥ १६ ॥ अथ यत्पूर्वेद्युः। ऐन्द्राग्नेन यजतेऽमावास्यायां दर्शपूर्ण्णमासयोर्व्वै देवते स्तऽइन्द्राग्नी ऽएव ते ऽएवैतदञ्जसा प्प्रत्त्यक्षं यजत्त्यञ्जसा ह वाऽअस्य दर्शपूर्ण्णमासाब्भ्यामिष्टं भवति य ऽएवमेतद्वेद ॥१७॥ अथ प्प्रातः। आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्न्वेवाऽऽग्नेयः पुरोडाशोऽथैतावेवाऽर्द्धमासौ

मित्रावरुणौ य ऽएवाऽऽपूर्य्यते स वरुणो योऽपक्षीयते स मित्रस्तावेताᳬं रात्रिमुभौ समागच्छतस्तदुभावेवैतत्सह सन्तौ प्रीणाति सर्वᳬं ह वा ऽअस्य प्रीतं भवति सर्वमाप्तं य ऽएवमेतद्वेद ॥ १८ ॥ तद्वा ऽएताᳬं रात्रिम् । मित्रो वरुणे रेतः सिञ्चति तदेतेन रेतसा प्रजायते यदापूर्य्यते तद्यदेषाऽत्र मैत्रावरुणी पयस्याऽवक्लृततमा भवति ॥ १९ ॥ सान्नाय्य-भाजना वा ऽअमावास्या । तददस्तत्पौर्णमास्यां क्रियते स यद्वाऽत्राऽपि सन्नयेज्जामि कुर्य्यात्समदं कुर्य्यात्तदेनमद्भ्य-ऽओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति स ऽएष-ऽआहुतिभ्यो जातः पश्चाद्ददृशे ॥ २० ॥ मिथुनादिद्वा-ऽएनमेतत्प्रजनयति । योषा पयस्या रेतो वाजिनं तद्वा ऽअ-नुष्ठ्या यन्मिथुनाज्जायते तदेनमेतस्मान्मिथुनात्प्रजननात्प्र-जनयति तस्मादेषाऽत्र पयस्या भवति ॥ २१ ॥ अथ वाजिभ्यो वाजिनं जुहोति । ऋतवो वै वाजिनो रेतो वाजिनं *तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्माद्वाजिभ्यो वाजिनं जुहोति ॥२२॥ स वै पश्चादिव यज्ञस्य जुहोति । पश्चाद्वै परीत्य वृषा योषामधिद्रवति तस्याᳬं रेतः सिञ्चति स वै प्रागेवाऽग्ने जुहोत्यग्ने वीहीत्यनुवषट्करोति तत्स्विष्टकृद्भाजनᳬं स वै प्रागेव जुहोति ॥ २३ ॥ अथ दिशो व्याघारयति । 'दिशः प्रदिश ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहे'ति पञ्च

* 'ख-ग-च' पुस्तकेषु 'तद्वनुष्ठ्येवैतत्' इत्येव लभ्यते ।
(१) शु० सं० अ० ६ क० १९ ।

द्विशः पञ्चर्त्तवस्तदृतुभिरेवैतद्दिशो मिथुनीकरोति ॥ २४ ॥ तद्वै पञ्चैव भक्षयन्ति। होता चाऽध्वर्य्युश्च ब्रह्मा चाऽग्नीच्च यजमानः पञ्च वा ऽऋतवस्तदृतूनामेवैतद्रूपं क्रियते तदृतुष्वेवैतद्रेतः सिक्तं प्रतिष्ठापयति प्प्रथमो यजमानो भक्षयति प्प्रथमो रेतः परिगृह्णानीत्यथो ऽअप्प्युत्तमो मय्युत्तमे रेतः प्प्रतितिष्ठादित्युपहूत ऽउपह्वयस्वेति सोममेवैतत्कुर्वन्ति ॥ २५ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



प्रजापतिर्ह वा ऽइदमग्र ऽएक ऽएवाऽऽस। स ऽऐक्षत कथं नु प्प्रजायेयेति सोऽश्राम्म्यत्स तपोऽतप्प्यत स प्प्रजा ऽअसृजत ता ऽअस्य प्प्रजाः सृष्टाः पराबभूवुस्तानीमानि वयाꣳसि पुरुषो वै प्प्रजापतेर्न्नेदिष्ठं द्विपाद्वा ऽअयं पुरुषस्तस्माद् द्विपादो वयाꣳसि ॥ १ ॥ स ऽऐक्षत प्प्रजापतिः। यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्प्येतर्ह्येक ऽएवाऽस्मीति स द्वितीयाः ससृजे ता ऽअस्य परैव बभूवुस्तदिदं क्षुद्रꣳ सरीसृपं यदन्न्यत्सर्प्पेभ्यस्तृतीयाः ससृज ऽइत्त्याहुस्ता ऽअस्य परैव बभूवुस्त ऽइमे सर्प्पा ऽएता ह न्वेव द्वयीर्य्याज्ञवल्क्य ऽउवाच त्रयीरु तु पुनर्ऋचा ॥ २ ॥ सोऽर्च्चञ्छ्राम्म्यन्प्रजापतिरीक्षाञ्चक्रे। कथं नु मे प्प्रजाः सृष्टाः पराभवन्तीति स हैतदेव ददर्शाऽनशनतया वै मे प्प्रजाः

पराभवन्तीति स ऽआत्मन ऽएवाऽग्रे स्तनयोः पय ऽआप्प्याययाञ्चक्रे स प्प्रजा ऽअसृजत ता ऽअस्य प्प्रजाः सृष्टा स्तनावेवाऽभिपद्य तास्ततः सम्बभूवुस्ता ऽइमा ऽअपराभूताः ॥ ३ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । प्रजा ह तिस्रो ऽअत्यायमीयुरिति तद्याः पराभूतास्ता ऽएवैतदभ्यनूक्त न्न्यन्न्या ऽअर्क्कमभितो विविश्र ऽइत्यग्निर्वा ऽअर्क्कस्तद्या ऽइमाः प्प्रजा ऽअपराभूतास्ता ऽअग्निमभितो निविष्टास्ता ऽएवैतदभ्यनूक्तम् ॥ ४ ॥ महद्ध तस्त्थौ भुवनेष्वन्तरिति । प्प्रजापतिमेवैतदभ्यनूक्तं पवमानो हरित ऽआविवेशेति दिशो वै हरितस्ता ऽअयं व्वायुः पवमान ऽआविष्टस्ता ऽएवैषर्गभ्यनूक्ता ता ऽइमाः प्प्रजास्तथैव प्प्रजायन्ते यथैव प्प्रजापतिः प्प्रजा ऽअसृजतेदꣳ हि यदैव स्त्रियै स्तनावाप्प्यायेते ऽऊधः पशूनामथैव यज्जायते तज्जायते तास्तत स्तनावेवाऽभिपद्य सम्भवन्ति ॥ ५ ॥ तद्वै पय ऽएवाऽन्नम् । एतद्धयग्रे प्प्रजापतिरन्नमजनयत तद्वा ऽअन्नमेव प्प्रजा ऽअन्नाद्धि सम्भवन्तीदꣳ हि यासां पयो भवति स्तनावेवाऽभिपद्य तास्ततः सम्भवन्त्यथ यासां पयो न भवति जातमेव ता ऽअथाऽदयन्ति तदु ता ऽअन्नादेव सम्भवन्ति तस्माद्वन्नमेव प्प्रजाः ॥ ६ ॥ स यः प्प्रजाकामः । एतेन हविषा यजतऽआत्मानमेवैतद्यज्ञं व्विधत्ते प्प्रजापतिं भूतꣳ ॥ ७ ॥† स वा ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखं प्रजनयिता स प्प्रजापतिस्तस्मादाग्नेयो भवति ॥ ८ ॥

† अत्र शतम् १२०० ।

अथ सौम्म्यश्चरुर्ब्भवति। रेतो वै सोमस्तदग्नौ प्प्रजनयितरि सोमꣳ रेतꣳ सिञ्चति तत्त्पुरस्तान्न्मिथुनं प्रजननम् ॥ ९ ॥ अथ सावित्रꣳ। द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता प्प्रजापतिर्म्मद्ध्यतꣳ प्प्रजनयिता तस्मात्त्सावित्रो भवति ॥ १० ॥ अथ सारस्वतश्चरुर्ब्भवति। पौष्णश्चरुर्य्योषा वै सरस्वती व्वृषा पूषा तत्त्पुनर्म्मिथुनं प्रजननमेतस्माद्वा ऽउभयतो मिथुनात्त्प्रजननात्त्प्रजापतिꣳ प्प्रजाꣳ ससृज ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तथो ऽएवैष ऽएतस्मादुभयत ऽएव मिथुनात्त्प्रजननात्त्प्रजाꣳ सृजत ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तस्माद्वा ऽएतानि पञ्च हवीꣳषि भवन्ति ॥११॥ अथाऽतꣳ पयस्याया ऽएवाऽऽयतनम्। मारुतस्तु सप्तकपालो व्विशो वै मरुतो देवविशस्ता हेदमनिषेद्धा ऽइव चेरुस्ताꣳ प्प्रजापतिं यजमानमुपेत्त्योचुर्व्वि वै ते मथिष्यामह ऽइमाꣳ प्प्रजा या ऽएतेन हविषा स्रक्ष्यस ऽइति ॥ १२ ॥ स ऽऐक्षत प्प्रजापतिꣳ। परा मे पूर्व्वाꣳ प्प्रजा ऽअभूवन्निमा ऽउ चेदिमे विमथ्नते न ततꣳ किञ्चन परिशेक्ष्यत ऽइति तेब्भ्य ऽएतं भागमकल्पयदेतं मारुतꣳ सप्तकपालं पुरोडाशꣳ स ऽएष मारुतꣳ सप्तकपालस्तद्यत्त्सप्तकपालो भवति सप्त-सप्त हि मारुतो गणस्तस्मान्न्मारुतꣳ सप्तकपालꣳ पुरोडाशो भवति ॥ १३ ॥ तं वै स्वतवोब्भ्य ऽइति कुर्य्यात्। स्वयꣳ हि त ऽएतं भागमकुर्व्वतोतो स्वतवोब्भ्यो याज्यानुवाक्येन विन्दन्ति स ऽउ खलु मारुत ऽएव स्यात्त्स वा ऽएष प्प्रजाब्भ्य-

ऽएवाऽहिꣳसायै क्रियते तस्मान्मारुतः ॥ १४ ॥ अथाऽतः
पयस्यैव । पयसो वै प्प्रजाः सम्भवन्ति पयसः सम्भूतास्त-
द्यत ऽएव सम्भूता यतः सम्भवन्ति तदेवाऽऽभ्य ऽएतत्करो-
ति तद्याः पूर्वैर्हविर्भिः प्प्रजाः सृजते ता ऽएतस्मात्पयस-
ऽएतस्यै पयस्यायै सम्भवन्ति ॥१५॥ तस्यां मिथुनमस्ति ।
योषा पयस्या रेतो व्वाजिनं तस्मान्मिथुनाद्विश्वमसंमितमनु
प्प्राऽजायत तद्यदेतस्माद्विमिथुनाद्विश्वमसंमितमनु प्प्राऽजा-
यत तस्माद्वैश्वदेवी भवति ॥१६॥ अथ द्यावापृथिव्य ऽएक-
कपालः पुरोडाशो भवति । एतैर्वै हविर्भिः प्प्रजापतिः
प्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्य्यगृह्णात्ता ऽइमा द्यावा-
पृथिवीभ्यां परिगृहीतास्तथो ऽएवैष ऽएतद्या ऽएतैर्हविर्भिः
प्प्रजाः सृजते ता द्यावापृथिवीभ्यां परिगृह्णाति तस्माद्
द्यावापृथिव्य ऽएककपालः पुरोडाशो भवति ॥ १७ ॥
अथाऽत ऽआवृदेव । नोपकिरन्त्युत्तरवेदिं व्विसृष्टमसत्सर्वम-
सद्वैश्वदेवमसदिति त्रेधा बर्हिः सन्नद्धं भवति तत्पुनरेक-
धैतद्धि प्प्रजननस्य रूपं प्रजननमु हीदं पिता माता
यज्जायते तत्तृतीयं तस्मात्त्रेधा सत्पुनरेकधा प्प्रस्व ऽउप-
सन्नद्धा भवन्ति तं प्रस्तरं गृह्णाति प्प्रजननमु हीदं प्रज-
ननमु हि प्प्रस्वस्तस्मात्प्रसूः प्प्रस्तरं गृह्णाति ॥१८॥ आसाद्य
हवीꣳष्यग्निं मन्थति । अग्निꣳ ह वै जायमानमनु प्प्रजा-
पतेः प्प्रजा जज्ञिरे तथो ऽएवैतस्याऽग्निमेव जायमानमनु
प्प्रजा जायन्ते तस्मादासाद्य हवीꣳष्यग्निं मन्थति ॥ १९ ॥
नवप्प्रयाजं भवति । नवाऽनुयाजं दशाक्षरा वै व्विराडथैतामु-

भयतोऽन्न्यूनां विराजं करोति प्प्रजननायैतस्माद्वा ऽउभयतोऽन्न्यूनात्प्रजननात्प्रजापतिः प्प्रजाः ससृज ऽइतश्चोर्द्ध्वाऽइतश्चाऽवाचीस्तथो ऽएवैष ऽएतस्मादुभयत ऽएव न्न्यूनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तस्मान्नवप्प्रयाजं भवति नवाऽनुयाजम् ॥२०॥ त्रीणि समिष्टयजूꣳषि भवन्ति। ज्याय ऽइव हीदꣳ हविर्य्यज्ञाद्यत्र नवप्प्रयाजं नवाऽनुयाजमथो ऽअप्प्येकमेव स्याद्धविर्य्यज्ञो हि तस्य प्प्रथमजो गौर्द्दक्षिणा ॥ २१ ॥ एतेन वै प्प्रजापतिः यज्ञेनेष्ट्वा। येयं प्रजापतेः प्प्रजातिर्या श्रीरेतद्बभूवैताꣳ ह वै प्प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २२ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



वैश्वदेवेन वै प्प्रजापतिः। प्प्रजाः ससृजे ता ऽअस्य प्प्रजाः सृष्टा व्वरुणस्य यवाञ्जक्षुर्व्वरुण्ण्यो ह वा ऽअग्रे यवस्तद्यन्वेव व्वरुणस्य यवानप्राऽदꣳस्तस्माद्वरुणप्प्रघासानाम ॥१॥ ता व्वरुणो जग्राह। ता व्वरुणगृहीताः परिदीर्ण्णा ऽअनत्त्यश्च प्प्राणत्त्यश्च शिश्यिरे च निषेदुश्च प्प्राणोदानौ हैवाऽऽभ्यो नाऽपचक्रमतुरथाऽन्याः सर्वा देवता ऽअपचक्रमुस्तयोर्है-

† चातुर्मास्यशब्देन इतः क्रमात् विधास्यमानानि वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि चत्वारि पर्वाण्यभिधीयन्ते। तत्र "वसन्ते वैश्वदेवेन यजेत। प्रावृषि वरुणप्रघासैः। शरदि साकमेधैः" इति। ( आप० श्रौ० ८. ४. १३ )। का० श्रौ० ५. १. १ सूत्रे चेह विवेचनीये।

वाऽस्य हेतोः प्प्रजा न पराबभूवुः ॥ २ ॥ ता ऽएतेन हविषा प्प्रजापतिरभिषज्यत् । तद्याश्च्चैवाऽस्य प्प्रजा जाता ऽआसन्याश्च्चाऽजातास्ता ऽउभयीर्व्वरुणपाशात्प्रा-ऽमुञ्चत्ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्प्रजाः प्प्राऽजायन्त* ॥ ३ ॥ अथ यदेष ऽएतैश्च्चतुर्त्थे मासि यजते । तन्नाऽऽह न्वेवैतस्य तथा प्प्रजा व्वरुणो गृह्णातीति देवा ऽअकुर्वन्निति †न्वेवैष ऽएतत्करोति याश्च्च ‡न्वेवाऽस्य प्प्रजा जाता याश्च्चाऽजातास्ता ऽउभयीर्व्वरुणपाशात्प्रमुञ्चति ता ऽअस्या-ऽनमीवा ऽअकिल्विषाः प्प्रजाः ‡‡प्प्रजायन्ते तस्माद्वा ऽएष ऽएतैश्च्चतुर्त्थे मासि यजते ॥ ४ ॥ तद्वै द्वे व्वेदी द्वावग्नी भवतः । तद्यद् द्वे व्वेदी द्वावग्नी भवतस्तदुभयत ऽएवैतद्वरुण-पाशात्प्रजाः प्प्रमुञ्चतीतश्च्चोद्र्ध्वा ऽइतश्च्चाऽवाचीस्त-स्माद् द्वे व्वेदी द्वावग्नी भवतः ॥ ५ ॥ स ऽउत्तरस्यामेव व्वेदौ । उत्तरवेदिमुपकिरति न दक्षिणस्यां क्षत्रं वै व्वरुणो व्विशो मरुतः क्षत्रमेवैतद्विश ऽउत्तरं करोति तस्मादुपर्य्या-सीनं क्षत्रियमधस्तादिमाः प्प्रजा ऽउपाऽऽसते तस्मादुत्तर-स्यामेव व्वेदा ऽउत्तरवेदिमुपकिरति न दक्षिणस्याम् ॥ ६ ॥ अथैतान्येव पञ्च हवीꣳषि भवन्ति । एतैर्व्वै हविर्भिः प्प्रजापतिः प्प्रजा ऽअसृजतैतैरुभयतो व्वरुण-

* 'ग' पुस्तके 'प्राजायत' इति ।

† 'ग-च' पुस्तकयोः 'न्न्वेवैष' इति ।

‡ 'न्न्वेवाऽस्य' इत्युक्त पुस्तकयोरेव लभ्यते ।

‡‡ 'प्रजायते' इत्यपि 'ग-च' पुस्तकयोरेव ।

पाशात्प्रजाः प्रा ऽमुञ्चदितश्चोर्ध्वा ऽइतश्चा ऽवाचीस्तस्माद्वा ऽएतानि पञ्च हवीᳬषि भवन्ति ॥ ७ ॥ अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । प्राणोदानौ वा ऽइन्द्राग्नी तद्यथा पुण्यं चक्षुषे पुण्यं कुर्य्यादेवं तत्तयोर्हैवाऽस्य हेतोः प्रजा न पराबभूवुस्तत्प्राणोदानाभ्यामेवैतत्प्रजा भिषज्यति प्राणोदानौ प्रजासु दधाति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥ उभयत्र पयस्ये भवतः । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत ऽएव सम्भूता यतः सम्भवन्ति तत ऽएवैतदुभयतो व्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा ऽइतश्चा ऽवाचीस्तस्मादुभयत्र पयस्ये भवतः ॥ ९ ॥ व्वारुण्युत्तरा भवति । व्वरुणो ह वा ऽअस्य प्रजा ऽअगृह्णात्तत्प्रत्यक्षं व्वरुणपाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणा ऽजामितायै न्वेव मारुती भवति जामि ह कुर्य्याद्यदुभे व्वारुण्यौ स्यातामतो ह वा ऽअस्य दक्षिणतो मरुतः प्रजा ऽअजिघाᳬसँस्तानेतेन भागेना ऽशमयत्तस्मान्मारुती दक्षिणा ॥ १० ॥ तयोरुभयोरेव करीराण्यावपति । कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष ऽएतत्प्रजाभ्यः कुरुते ॥ ११ ॥ तयोरुभयोरेव शमीपलाशान्न्यावपति । शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत शम्वेवैष ऽएतत्प्रजाभ्यः कुरुते ॥ १२ ॥ अथ काय ऽएककपालः पुरोडाशो भवति । कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेना ऽकुरुत कम्वेवैष ऽएतत्प्रजाभ्यः कायेनैकक-

पालेन पुरोडाशेन कुरुते तस्मात्काय ऽएककपालः पुरोडाशो भवति ॥ १३ ॥ अथ पूर्वेद्युः । अन्न्वाहार्य्यपचनेऽतुषानिव यवान्कृत्वा तानीषदिवोपतप्प्य तेषां *करम्भपात्राणि कुर्व्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनाऽतिरिक्तानि ॥ १४ ॥ तत्राऽपि मेषं च मेषीं च कुर्व्वन्ति । तयोर्म्मेषे च मेष्यां च यद्यैडकीरूर्ण्णा विन्देत्ताः प्प्रणिज्य निश्लेषये-द्यद्यु ऽअनैडकीर्न्न विन्देदथो ऽअपि कुशोर्ण्णा ऽएव स्युः ॥ १५ ॥ तद्यन्न्मेषश्च्च मेषी च भवतः । एष वै प्प्रत्त्यक्षं वरुणस्य पशुर्य्यन्न्मेषस्तत्प्रत्त्यक्षं वरुणपाशात्प्रजाः प्प्रमु-ञ्चति यवमयौ भवतो यवान्न्हि जक्षुषीर्व्वरुणोऽगृह्णान्न्मि-थुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्प्रमुञ्चति ॥ १६ ॥ स ऽउत्तरस्यामेव पयस्यायां मेषीमवदधाति । दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥ १७ ॥ स सर्व्वाण्ण्येव हवीꣳष्यध्वर्य्युः । उत्तरस्यां वेदावासादयत्त्यथैतामेव पयस्यां प्रतिप्प्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥ आसाद्य हवीꣳष्यग्निं मन्थति । अग्निं †मन्थित्वाऽनुप्प्रहृत्याऽभिजुहोत्त्यथाऽध्वर्य्यु-रेवाऽऽहाऽग्नये समिध्यमानायाऽनुब्रूहीति ता ऽउभावेवेध्माव-भ्याधत्त ऽउभौ समिधौ परिशिꣳष्ट ऽउभौ पूर्व्वावाघा-रावाघारयतोऽथाध्वर्य्युरेवाहाऽग्निमग्नीत्संमृड्ढीत्त्यसम्मृष्टमेव भवति सम्प्रेषितम् ॥१९॥ अथ प्प्रातिप्प्रस्थाता प्प्रतिपरैति ।

* दीपपात्रसदृशानि यवपिष्टनिर्मितानि करम्भपात्राणि भवन्ति ।

† 'क' पुस्तके 'मथित्वा' इति पाठः । स एव भाष्यकारसम्मतः ।

स पत्नीमुदानेष्यन्पृच्छति केन चरसीति वरुण्यं वा ऽएतत्स्त्री करोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मेऽन्तः शल्या* जुहवदिति तस्मात्पृच्छति निरुक्तं वा ऽएनः कनीयो भवति सत्यꣳ हि भवति तस्मादेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हाऽस्यै तदहितꣳ स्यात् ॥ २० ॥ तां वाचयति । '(१)प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषस' ऽइति यथा पुरोऽनुवाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति ॥ २१ ॥ तानि वै प्रति पुरुषम् । यावन्तो गृह्याः स्युस्तावन्त्येकेनाऽतिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या ऽअस्य प्रजा जातास्ता वरुणपाशात्प्रमुञ्चत्येकेनाऽतिरिक्तानि भवन्ति तद्या ऽएवाऽस्य प्रजा ऽअजातास्ता वरुणपाशात्प्रमुञ्चति तस्मादेकेनाऽतिरिक्तानि भवन्ति ॥ २२ ॥ पात्राणि भवन्ति पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवान्हि जक्षुषीर्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥ २३ ॥ पुरा यज्ञात्पुराऽऽहुतिभ्यो जुहोति । अहुतादो वै विशो विशो वै मरुतो यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा ऽअनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च तद्धाऽऽसां मरुतः पाप्मानं विमेथिरे तथो ऽएवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते तस्मात्पुरा यज्ञात्पुरा-

* 'ऽन्तः शल्या' इति 'ग-च' पुस्तकयोः ।

(१) शु० सं० अ० ३. क० ४४ ।

ऽऽहुतिभ्यो जुहोति ॥ २४ ॥ स वै दक्षिणेऽग्नौ जुहोति । 'यद् ग्रामे यदरण्य' ऽइति ग्रामे वा ह्यरण्ये वैनः क्रियते 'यत्सभायां यदिन्द्रिय' ऽइति यत्सभायामिति यन्मानुष- ऽइति तदाह यदिन्द्रिय ऽइति यद्देवत्रेति तदाह 'यदेनश्च- कृमा वयमिदं तदवयजामहे स्वाहे'ति यत्किं च वयमेन- श्चकृमेदं वयं तस्मात्सर्वस्मात्प्रमुच्यामह ऽइत्येवैतदाह ॥ २५ ॥ अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे तद्धेक्षाञ्चक्र ऽइमे ह मे प्रजा न विमथ्नीरन्निति ॥ २६ ॥ स ऽएतामैन्द्रीं मरुत्वतीमजयत् । क्षत्रं वा ऽइन्द्रो विशो मरुतः क्षत्रं वै विशो निषेद्धा निषिद्धा ऽअसन्निति तस्मादैन्द्री ॥ २७ ॥ 'मो षू णः । इन्द्राऽत्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मि- न्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीरि'ति ॥ २८ ॥ अथैनां वाचयति । 'अक्रन्कर्म्म कर्म्मकृत' ऽइत्यक्रन्हि कर्म्म कर्म्म कृतः 'सह वाचा मयोभुवे'ति सह हि वाचाऽक्रन् 'देवेभ्यः कर्म्मकृत्वे'ति देवेभ्यो हि कर्म्मकृत्वा 'ऽस्तं प्रेत सचाभुव' ऽइत्यन्यतो ह्योढया सह *भवन्ति तस्मादाह सचाभुव ऽइत्यस्तं प्रेतेति जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं

(१) शु० सं० अ० ३ क० ४५। (२) शु० सं० अ० ३ क० ४५। (३) शु० सं० अ० ३ क० ४५। (४) शु० सं० अ० ३ क० ४६। (५) शु० सं० अ० ३ क० ४७। (६) शु० सं० अ० ३ क० ४७। (७) शु० सं० अ० ३ क० ४७। (८) शु० सं० अ० ३ क० ४७।

* 'भवति' इति 'क' पुस्तके पाठः।

प्राऽसीषद्द् गृहा वा ऽअस्तं गृहाः प्प्रतिष्ठा तद् गृहेष्वेवैना-मेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥ प्रतिपराणीयोद्वैति प्प्रतिप्प्रस्त्थाता । सम्मृजन्त्यग्नीः सम्मृष्टेऽग्नौ ता ऽउभा-वेवोत्तरावाघारावाघारयतोऽथाऽद्ध्वर्य्युरेवाऽऽश्राव्व्य होतारं प्रव्वृणीते प्रव्वृतो होतोत्तरस्यै व्वेदेर्होतृषदन ऽउपविशत्युपविश्य प्प्रसौति ता ऽउभावेव प्प्रसूतौ स्रुच ऽआदायाऽतिक्रामतो-ऽतिक्क्रम्म्याऽऽश्राव्व्याऽद्ध्वर्य्युरेवाऽऽह समिधो यजेति यज-यजेति चतुर्त्थे-चतुर्त्थे प्प्रयाजे समानयमानौ नवभिः प्प्रयाजैश्चरतः ॥३०॥ अथाऽद्ध्वर्य्युरेवाऽऽहाऽग्नयेऽनुब्ब्रूहीति। आग्नेयमाज्यभागं ता ऽउभावेव चतुराज्यस्याऽवदायाऽति-क्रामतोऽतिक्क्रम्म्याऽऽश्राव्व्याऽद्ध्वर्य्युरेवाऽऽहाऽग्निं यजेति ता ऽउभावेव व्वषट्कृते जुहुतः ॥ ३१ ॥ अथाऽद्ध्वर्य्युरेवाऽऽह सोमायाऽनुब्ब्रूहीति । सौम्म्यमाज्यभागं ता ऽउभावेव चतुराज्यस्याऽवदायाऽतिक्रामतोऽतिक्क्रम्म्याऽऽश्राव्व्याऽद्ध्व-र्य्युरेवाऽऽह सोमं यजेति ता ऽउभावेव व्वषट्कृते जुहुतः ॥ ३२ ॥ तद्यत्किञ्च व्वाचा कर्त्तव्व्यम् । अद्ध्वर्य्युरेव तत्करोति न प्प्रतिप्प्रस्त्थाता तद्यदद्ध्वर्य्युरेवाऽऽश्रावयतीहैव यत्र व्वषट् क्रियते ॥ ३३ ॥ कृतानुकर ऽएव प्प्रतिप्प्रस्त्थाता । क्षत्रं वै व्वरुणो व्विशो मरुतस्तत् क्षत्रायैवैतद्विशं कृतानुकरा-मनुवर्त्मानं करोति प्रत्त्युद्यामिनीर्ठं ह क्षत्राय व्विशं कुर्य्याद्य-दुपि प्प्रतिप्प्रस्त्थाताऽऽश्रावयेत्तस्मान्न प्प्रतिप्प्रस्त्थाताऽऽश्राव-यति ॥ ३४ ॥ पाणावेव प्प्रतिप्प्रस्त्थाता । स्रुचौ कृत्वो-पाऽऽस्तेऽथाऽद्ध्वर्य्युरेवैतैर्हविर्ब्भिः प्प्रचरत्त्याग्नेयेनाऽष्टाकपा-

लेन पुरोडाशेन सौम्म्येन चरुणा सावित्रेण द्वादशकपालेन वाऽष्टाकपोलन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥ अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्त्यां तं वारुण्ण्यामवदधाति या मेषी भवति वारुण्ण्यां तां मारुत्त्यामवदधाति तद्यदेवं विपरिहरतः क्षत्रं वै वरुणो वीर्य्यंपुमान्वीर्य्यमेवैतत्क्षत्रे धत्तोऽवीर्य्या वै स्त्री विशो मरुतस्तदवीर्य्यामेवैतद्विशं कुरुतस्तस्मादेवं विपरिहरतः ॥ ३६ ॥ अथाऽद्ध्वर्य्युरेवाऽऽह वरुणायाऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽस्यै वारुण्ण्यै पयस्यायै द्विरवद्यति सोऽन्न्यतरेणाऽवदानेन सह मेषमवदधात्त्यथोपरिष्टादाज्यस्याऽभिघारयति प्प्रत्त्यनक्त्त्यवदाने ऽअतिक्क्रामत्त्यतिक्रम्म्याऽऽश्राव्व्याह वरुणं यजेति वषट्कृते जुहोति ॥३७॥ सव्व्ये पाणावद्ध्वर्य्युः । स्रुचौ कृत्वा दक्षिणेन प्प्रतिप्प्रस्त्थातुर्वा सोऽन्वारभ्याऽऽह मरुद्भ्योऽनुब्रूहीत्युपस्तृणीत ऽआज्यं प्रतिप्प्रस्त्थाताऽथाऽस्यै मारुत्त्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणाऽवदानेन सह मेषीमवदधात्त्यथोपरिष्टादाज्यस्याऽभिघारयति प्प्रत्त्यनक्त्यवदाने ऽअतिक्रामत्त्यथाऽद्ध्वर्य्युरेवाऽऽश्राव्व्याऽऽह मरुतो यजेति वषट्कृते जुहोति ॥ ३८ ॥ अथाऽद्ध्वर्य्युरेव कायेन । एककपालेन पुरोडाशेन प्प्रचरति कायेनैककपालेन पुरोडाशेन प्प्रचर्य्याऽद्ध्वर्य्युरेवाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति स सर्व्वेषामेव हविषामद्ध्वर्य्युः सकृत्सकृदवद्यत्त्यथैतस्या ऽएव पयस्यायै प्प्रतिप्प्रस्त्थाता सकृदवद्य-

त्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयतस्ता ऽउभावेवाऽतिक्रामतोऽतिक्रम्म्याऽऽश्राव्व्याऽद्ध्वर्य्युरेवाऽऽहाऽग्निꣳ स्विष्टकृतं यजेति ता ऽउभावेव व्वषट्कृते जुहुतः ॥ ३९ ॥ अथाऽद्ध्वर्य्युरेव प्प्राशित्रमवद्यति । इडाꣳ समवदाय प्प्रतिप्प्रस्त्थात्रेऽतिप्प्रजिहीते तत्राऽपि प्प्रतिप्प्रस्त्थाता मारुत्त्यै पयस्यायै द्विरब्भ्यवद्यत्त्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयत्त्युपहूय मार्ज्जयन्ते ॥ ४० ॥ अथाऽद्ध्वर्य्युरेवाऽऽह ब्रह्मन्त्प्रस्त्थास्यामि । समिधमाधायाऽग्निमग्नीत्संमृड्ढीति स स्रुचोरेवाऽद्ध्वर्य्युः पृषदाज्यं व्व्यानयतेऽथ यदि प्प्रतिप्प्रस्त्थातुः पृषदाज्यं भवति तत्स द्वेधा व्व्यानयत ऽउतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्त्याज्यं तत्स द्वेधा व्व्यानयते ता ऽउभावेवाऽतिक्रम्म्याऽऽश्राव्व्याऽद्ध्वर्य्युरेवाऽऽह देवान्यजेति यज—यजेति चतुर्त्थे—चतुर्त्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतस्तद्यन्नवप्प्रयाजं भवति नवाऽनुयाजं तदुभयत ऽएवैतद्वरुणपाशात्प्रजाः प्प्रमुञ्चतीतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तस्मान्नवप्प्रयाजं भवति नवाऽनुयाजम् ॥ ४१ ॥ ता ऽउभावेव सादयित्त्वा स्रुचो व्व्यूहतः । स्रुचो व्व्युह्य परिधीन्त्समज्य परिधिमभिपद्याऽऽश्राव्व्याऽद्ध्वर्य्युरेवाऽऽहे'षिता दैव्व्या होतारो भद्रवाच्च्याय प्प्रेषितो मानुषः सूक्तवाकाये'ति सूक्तवाकः होता प्प्रतिपद्यतेऽथैता ऽउभावेव प्प्रस्तरौ समुल्लुम्पत ऽउभावनुप्प्रहरत ऽउभौ तृणे ऽअपगृह्योपाऽऽसाते यदा होता सूक्तवाकमाह ॥ ४२ ॥

(१) का० श्रौ० सू० ३. ६. २।

अथाऽग्नीदाह 'ऽनु[१]प्रहरे'ति । ता ऽउभावेवाऽनुप्रहरत ऽउभावात्त्माना ऽउपस्पृशेते ॥ ४३ ॥ अथाऽऽह 'संव्वद[२]स्वे'ति । 'अगा[३]नग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्व्या होतृब्भ्यः स्वस्तिर्म्मानुषेब्भ्यः शंय्योर्ब्रूही'त्यद्ध्वर्य्युरेवैतदाह ता ऽउभावेव परिधीननुप्रहरत ऽउभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४ ॥ अथाऽद्ध्वर्य्युरेव प्प्रतिपरेत्त्य । पत्नीः संय्याजयत्त्युपास्त ऽएव प्प्रतिप्प्रस्त्थाता पत्नीः संय्याज्योदै*त्त्यद्ध्वर्य्युः ॥ ४५ ॥ त्रीणि समिष्टयजूꣳषि जुहोति । तूष्णीमेव प्प्रतिप्प्रस्त्थाता स्रुचं प्रगृह्णाति तद्ये वैश्वदेवेन यजमानयोर्व्वाससी परिहिते स्यातां ते ऽएवाऽत्राऽपि स्यातामथाऽस्यै व्वारुण्ण्यै पयस्यायै †क्षामकर्षमिश्रमादायाऽवभृथं यन्ति व्वरुण्ण्यं वा ऽएतन्निर्व्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्म्ना किं चन क्रियते तूष्णीमेवेत्त्याऽब्भ्यवेत्त्योपमारयति ॥ ४६ ॥ 'अव[४]भृथ निचुम्पुण । निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्त्यैर्म्मर्त्त्यकृतं पुरुराव्णो देव रिषस्पाही'ति कामꣳ हैते यस्म्मै कामयेत तस्म्मै दद्यान्न हि दीक्षितवसने भवतः स यथाऽहिस्त्वचो निर्म्मुच्च्येतैवꣳ सर्व्वस्मात्त्पाप्प्मनो निर्म्मुच्च्यते ॥४७॥ अथ केशश्मश्रूप्प्त्वा । समारोह्याऽग्नी ऽउदवसायेव ह्येतेन

---

* 'उदेत्त्यद्ध्वर्य्युः' इति पाठः 'क' पुस्तके ।

† 'क्षामकर्षमिश्रम्' क्षामोऽतिपाकेन दग्धः पात्रे संसक्तः, कृष्यन्त इति कर्षः (कृष विलेखने) क्षामश्चाऽसौ कर्षश्चेति क्षामकर्षः तेन मिश्रं हविरित्यर्थः ।

( १ ) का० श्रौ० सू० ३. ६. १३ । ( २ ) का० श्रौ० सू० ३. ६. १५ ( ३ ) का० श्रौ० सू० ३. ६. १५ । ( ४ ) शुं० सं० अ० ३ क० ४८ ।

यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुया-त्तस्मादुद्वस्यति गृहानित्त्वा निर्म्मथ्याऽग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ ऽइव वा ऽएष यच्चातुर्म्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेना-ऽन्ततः प्रतितिष्ठति तस्मादुद्वस्यति ॥ ४८ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



वरुणप्रघासैर्वै प्रजापतिः। प्रजा वरुणपाशात्प्राऽमुञ्चत्ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्रजाः प्राऽजायन्ताऽथैतैः साकमेधैरेतैर्वै देवा वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव विजयते तस्माद्वा ऽएष ऽएतैश्चतुर्थे मासि यजते स वै द्व्यहमनूचीनाऽहं यजते ॥ १ ॥ स पूर्वेद्युः। अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निꣳ ह वै देवा ऽअनीकं कृत्वोपप्रेयुर्वृत्रꣳ हनिष्यन्तः स तेजो-ऽग्निर्नाऽव्यथत तथो ऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्नग्निमेवाऽनीकं कृत्वोपप्रैति स तेजो-ऽग्निर्न व्यथते तस्मादग्नयेऽनीकवते ॥ २ ॥ अथ मरुद्भ्यः सान्तनपनेभ्यः। मध्यन्दिने चरुं निर्वपति मरुतो ह वै सान्तपना मध्यन्दिने वृत्रꣳ सन्तेपुः स सन्तप्तोऽनन्नेव प्राणन्परिदीर्णः शिश्ये तथो ऽएवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः ॥ ३ ॥ अथ मरुद्भ्यो गृहमेधिभ्यः।

शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुꣳ श्रपयति चरुरु ह्येव स यत्र क च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रꣳ हनिष्यन्तस्तथो ऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्मेधो धत्ते तद्यत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुलास्तदुभयं मेधमात्मन्धत्ते तस्मात्क्षीरौदनो भवति ॥ ४ ॥ तस्याऽऽवृत् । सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलाँश्चोपनिदधति तथा सन्दोह्य चरुꣳ श्रपयति श्रपयित्वाऽभिघार्य्योद्वासयति ॥५॥ अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति तयोर्म्मध्ये सर्प्पिरासेचने कृत्वा सर्प्पिरासिञ्चति स्रुवं च स्रुचं च संमार्ष्ट्यथैता ऽओदनावादायोदैति स्रुवं च स्रुचं चाऽऽदायोदैति स ऽइमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान् कामयते तावतोऽभ्यादधात्यथैता ऽओदनावासादयति स्रुवं च स्रुचं चाऽऽसादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाऽऽददान ऽआह ॥ ६ ॥ अग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागꣳ स दक्षिणस्यौदनस्य सर्प्पिरासेचनाच्चतुराज्यस्याऽवदायाऽतिक्रामत्यतिक्रम्म्याऽऽश्राव्याऽऽहाऽग्निं यजेति वषट्कृते जुहोति ॥ ७ ॥ अथाऽऽह सोमायाऽनुब्रूहीति । सौम्म्यमाज्ज्यभागꣳ स ऽउत्तरस्यौदनस्य सर्प्पिरासेचनाच्चतुराज्ज्यस्याऽवदायाऽतिक्रामत्यतिक्रम्म्याऽऽश्राव्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥ ८ ॥ अथाऽऽह मरुद्भ्यो गृहमेधिभ्योऽनु-

ब्रूहीति । स दक्षिणस्यौदनस्य सर्प्पिरासेचनात्तत ऽआज्ज्यमुपस्तृणीते तस्य द्विरवद्यत्त्यथोपरिष्टादाज्ज्यस्याऽभिघारयत्त्यतिक्क्रामत्त्यतिक्रम्म्याऽऽश्राव्व्याऽऽह मरुतो गृहमेधिनो यजेति व्वषट्कृते जुहोति ॥ ९ ॥ अथाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । स ऽउत्तरस्यौदनस्य सर्प्पिरासेचनात्तत ऽआज्ज्यमुपस्तृणीते तस्य द्विरवद्यत्त्यथोपरिष्टादाज्ज्यस्याऽभिघारयत्त्यतिक्क्रामत्त्यतिक्रम्म्याऽऽश्राव्व्याऽऽहाऽग्निꣳ स्विष्टकृतं यजेति व्वषट्कृते जुहोत्त्यथेडामेवाऽवद्यति न प्प्राशित्रमुपहूय मार्ज्जयन्त ऽएतन्न्वेकमयनम् ॥ १० ॥ अथेदं द्वितीयꣳ । सैव स्तीर्ण्णा व्वेदिर्ब्भवति या मरुद्भ्यः सान्तपनेब्भ्यस्तस्यामेव स्तीर्ण्णायां व्वेदौ परिधींश्च शकलाँश्चोपनिदधति तथा सन्दोह्य चरुꣳ श्रपयति †नेदेव प्प्रतिवेशमाज्यमधिश्रयति श्रपयित्त्वाऽभिघार्य्योद्वास्याऽनक्ति स्त्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च संमार्ष्ट्यथैतꣳ सोखमेव चरुमादायोदैति स्त्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चाऽऽदायोदैति स ऽइमामेव स्तीर्ण्णां व्वेदिमभिमृश्य परिधीन्न्परिधाय यावतः शकलान्न्कामयते तावतोऽब्भ्यादधात्त्यथैतꣳ सोखमेव चरुमासादयति स्त्थाल्यामाज्यमासादयति स्रुवं च स्रुचं चाऽऽसादयत्त्युपविशति होता होतृषदने स्रुवं च स्रुचं चाऽऽददान ऽआह ॥ ११ ॥ अग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागꣳ स स्त्थाल्यै चतुराज्ज्यस्याऽवदायाऽतिक्क्रामत्त्यतिक्रम्म्याऽऽश्राव्व्याऽऽहाऽग्निं यजेति

† 'क' पुस्तके 'तदेव' इति पठो दृश्यते ।

वषट्कृते जुहोति ॥ १२ ॥ अथाऽऽह सोमायाऽनुब्रूहीति । सौम्म्यमाज्ज्यभागꣳ स स्स्थाल्ल्या ऽएव चतुराज्ज्यस्याऽवदायाऽतिक्क्रामत्त्यतिक्क्रम्म्याऽऽश्श्राव्व्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥ १३ ॥ अथाऽऽह मरुद्भ्यो गृहमेधिब्भ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्ज्यमथाऽस्य चरोर्द्विरवद्यत्त्यथोपरिष्टादाज्ज्यस्याऽभिघारयति प्प्रत्त्यनक्त्यवदाने ऽअतिक्क्रामत्त्यतिक्क्रम्म्याऽऽश्श्राव्व्याऽऽह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति ॥ १४ ॥ अथाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्ज्यमथाऽस्य चरोः सकृदवद्यत्त्यथोपरिष्टाद् द्विराज्ज्यस्याऽभिघारयति न प्प्रत्त्यनक्त्यवदानमतिक्क्रामत्त्यतिक्क्रम्म्याऽऽश्श्राव्व्याऽऽहाऽग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ १५ ॥ अथेडामेवाऽवद्यति न प्प्राशित्रम् । उपहूय प्प्राऽश्नन्ति यावन्तो गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्प्राऽश्नीयुरथो ऽअप्यृत्त्विजः प्प्राऽश्नीयुरथो ऽअप्प्यन्न्ये ब्राह्मणाः प्प्राऽश्नीयुर्यदि बहुरोदनः स्यादथैतामनिरशितां कुम्भीमपिधाय निदधति *पूर्ण्णदर्व्वाय मातृभिर्व्वत्त्सान्त्समवार्ज्जन्ति तदु पशवो मेधमास्मन्दधते †यवाग्वैताꣳ रात्रिमग्निहोत्रं जुहोति ‡निवान्न्यां प्प्रातर्दुहन्ति पितृयज्ञाय ॥ १६ ॥ अथ प्प्रातर्हुते वाऽहुते वा । यतरथा कामयेत सोऽस्या ऽअनिरशितायै कुम्भ्यै

* अनिरशितां शेषरहितां कुम्भीं पात्रान्तरेणाऽपिधाय, हविषा पूर्णा दर्वी यस्मिन्कर्मणि तत् पूर्णदर्वम् तस्मै 'पूर्णदर्वाय' कर्मणे तदर्थं स्थापयेत् ( सा० भा० ) ।

† तण्डुलानां शिथिलः पाको यवागूः ।

‡ स्वयं नष्टवत्सा अन्यदीयेन वत्सेन या गौर्दुह्यते सा निवान्येत्युच्यते ।

दर्व्योपहन्ति 'पूर्ण्णा[1] दर्वि परापत सुपूर्ण्णा पुनरापत । व्वस्नेव व्विक्रीणावहा ऽइषमूर्ज्जꣳ शतक्रतवि'ति यथा पुरोऽनुवाक्यैवमेषैतयैवैनमेतस्मै भागाय ह्वयति ॥ १७ ॥ अथर्षभमाह्वयितवै ब्रूयात् । स यदि रुयात्स व्वषट्कार ऽइत्त्यु हैक ऽआहुस्तस्मिन्न्वषट्कारे जुहुयादित्यथो ऽइन्द्रमेवैतत्स्वेन रूपेण ह्वयति व्वृत्रस्य वधायैतद्वा ऽइन्द्रस्य रूपं यदृषभस्तत्स्वेनैवैनमेतद्रूपेण ह्वयति व्वृत्रस्य वधाय स यदि रुयाद्दा म ऽइन्द्रो यज्ञमगन्त्सेन्द्रो मे यज्ञ ऽइति ह व्विद्याद्यद्यु न रुयाद्ब्राह्मण ऽएव दक्षिणत ऽआसीनो ब्रूयाज्जुहुधीति सैवैन्द्री व्वाक् ॥ १८ ॥ स जुहोति । 'देहि मे ददामि[2] ते नि मे धेहि नि ते दधे । निहारं च हरासि मे निहारं निहराणि ते स्वाहे'ति ॥ १९ ॥ अथ मरुद्भ्यः क्रीडिभ्यः । सप्तकपालं पुरोडाशं निर्व्वपति मरुतो ह वै क्रीडिनो व्वृत्रꣳ हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्म्महयन्तस्तथो ऽएवैतं पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्तमभितः परिक्रीडन्ते महयन्तस्तस्मान्म्मरुद्भ्यः क्रीडिभ्यो ऽथा ऽतो महाहविष ऽएव तद्यथा महाहविषस्तथो तस्य ॥ २० ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

*काण्डिका संख्या ॥ ११५ ॥



(१) शु० सं० अ० ३ क० ४९ । (२) शु० सं० अ० ३ क० ५० ।

* 'ग-च' पुस्तकयोः कण्डिकासंख्या १०५ ।

महाहविषा ह वै देवा वृत्रं जघ्नुः। तेनो ऽएव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव विजयते तस्माद्वा ऽएष ऽएतेन यजते ॥ १ ॥ तस्याऽऽवृत्। उप किरन्त्युत्तरवेदिं गृह्णन्ति पृषदाज्यं मन्थन्त्यग्निं नवप्रयाजं भवति नवाऽनुयाजं त्रीणि समिष्टयजूꣳषि भवन्त्यथैतान्येव पञ्च हवीꣳषि भवन्ति ॥ २ ॥ स यदाग्नेयोऽष्टाकपालः पुरोडाशो भवति। अग्निना ह वा ऽएनं तेजसाऽघ्नन्त्स तेजोऽग्निर्नाऽव्यथत तस्मादाग्नेयो भवति ॥३॥ अथ यत्सौम्यश्चरुर्भवति। सोमेन ह वा ऽएनꣳ राज्ञाऽघ्नन्त्सोमराजान ऽएव तस्मात्सौम्यश्चरुर्भवति ॥ ४ ॥ अथ यत्सावित्रः। द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता सवितृप्प्रसूता हैवैनमघ्नँस्तस्मात्सावित्रो भवति ॥ ५ ॥ अथ यत्सारस्वतश्चरुर्भवति। वाग्वै सरस्वती वागु हैवाऽनुममाद प्प्रहर जहीति तस्मात्सारस्वतश्चरुर्भवति ॥ ६ ॥ अथ यत्पौष्णश्चरुर्भवति। इयं वै पृथिवी पूषेयꣳ हैवैनं वधाय प्प्रतिप्प्रददावनया हैवैनं प्रतिप्प्रत्तं जघ्नुस्तस्मात्पौष्णश्चरुर्भवति ॥ ७ ॥ अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति। एतेन हैवैनमघ्नँस्तेजो वा ऽअग्निरिन्द्रियं वीर्यमिन्द्र ऽएताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन् ब्रह्म वा ऽअग्निः क्षत्रमिन्द्रस्ते ऽउभे सꣳरभ्य ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नँ-

स्तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥ अथ माहेन्द्रश्चरुर्भवति । इन्द्रो वा ऽएष पुरा वृत्रस्य वधादथ वृत्रꣳ हत्वा यथा महाराजो विजिग्यान ऽएवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रश्चरुर्भवति महान्तमु चैवैनमेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रश्चरुर्भवति ॥ ९ ॥ अथ वैश्वकर्म्मण ऽएककपालः पुरोडाशो भवति । विश्वं वा ऽएतत्कर्म्म कृतꣳ सर्वं जितं देवानामासीत्साकमेधैरीजानानां विजिग्यानानां विश्वम्वेवैतस्यैतत्कर्म्म कृतꣳ सर्वं जितं भवति साकमेधैरीजानस्य विजिग्यानस्य तस्माद्वैश्वकर्म्मण ऽएककपालः पुरोडाशो भवति ॥ १० ॥ एतेन वै देवाः । यज्ञेनेष्ट्वा येयं देवानां प्रजातिर्या श्रीरेतद् बभूवुरेताꣳ ह वै प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ११ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो ऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्संग्रामेऽघ्नꣳस्तान्पितृयज्ञेन समैरयन्त पितरो वै त ऽआसꣳस्तस्मात्पितृयज्ञो नाम ॥ १ ॥ तद्वसन्तो ग्रीष्मो वर्षाः । एते ते ये व्यजयन्त शरद्धेमन्तः शिशिरस्त ऽउ ते यान्पुनः

समैरयन्त ॥ २ ॥ अथ यदेष ऽएतेन यजते । तन्नाऽऽह त्वेवैतस्य तथा कश्चन घ्नन्तीति देवा ऽअकुर्वन्निति *त्वेवैष ऽएतत्करोति यमु चैवैभ्यो देवा भागमकल्पयँस्तमु चैवैभ्य ऽएष ऽएतद्भागं करोति यानु चैव देवाः समैरयन्त तानु चैवैतदवति स्वानु चैवैतत्पितृँल्लोकं सर्वाँल्लोकमुपोन्नयति यदु चैवाऽस्याऽत्राऽऽत्मनोऽचरणेन हन्न्यते वा मीयते वा तदु चैवाऽस्यैतेन पुनराप्प्यायते तस्माद्वा ऽएष ऽएतेन यजते ॥ ३ ॥ स पितृभ्यः सोमवद्भ्यः । षट्कपालं पुरोडाशं निर्वपति सोमाय वा पितृमते षड् वा ऽऋतव ऽऋतवः पितरस्तस्मात्षट्कपालो भवति ॥ ४ ॥ अथ पितृभ्यो बर्हिषद्भ्यः । अन्वाहार्य्यपचने धानाः कुर्वन्ति ततोऽर्द्धाः पिंषन्त्यर्द्धा ऽइत्येव धाना ऽअपिष्टा भवन्ति ता धानाः पितृभ्यो बर्हिषद्भ्यः ॥ ५ ॥ अथ पितृभ्योऽग्निष्वात्तेभ्यः । निवान्न्यायै दुग्धे सकृदुपमथित ऽएकशलाकया मन्थो भवति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुपमथितो भवत्येतानि हवीꣳषि भवन्ति ॥ ६ ॥ †तद्ये सोमेनेजानाः । ते पितरः सोमवन्तोऽथ ये दत्तेन पक्वेन लोकं जयन्ति ते पितरो बर्हिषदोऽथ ये ततो नाऽन्न्यतरच्चन यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ता ऽएत ऽउ ते ये पितरः ॥ ७ ॥ स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन ऽएतꣳ षट्क-

* 'त्वेवैष' इति 'क' पुस्तके ।

† अत्र शतम् १३०० ॥

पालं पुरोडाशं गृह्णाति स तत ऽएवोपोत्थायोत्तरेणाऽन्वाहार्य्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति ॥ ८ ॥ स दक्षिणैव दृषदुपले ऽउपदधाति । दक्षिणार्द्धे गार्हपत्यस्य षट्कपालान्न्युपदधाति तद्यदेतां दक्षिणां दिशः सचन्त ऽएषा हि दिक् पितॄणां तस्मादेतां दक्षिणां दिशः सचन्ते ॥ ९ ॥ अथ दक्षिणेनाऽन्वाहार्य्यपचनम् । चतुःस्रक्तिं वेदिं करोत्यवान्तरदिशोऽनुस्रक्तीः करोति चतस्रो वा ऽअवान्तरदिशोऽवान्तरदिशो वै पितरस्तस्मादवान्तरदिशोऽनुस्रक्तीः करोति ॥ १० ॥ तन्मध्येऽग्निः समादधाति । पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानभ्युपाऽऽवृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठञ्जुहोति सर्वतः पितरोऽवान्तरदिशो वै पितरः सर्वत ऽइव हीमा ऽअवान्तरदिशस्तस्मान्मध्येऽग्निः समादधाति ॥ ११ ॥ स तत ऽएव प्राक् *स्तम्बयजुर्हरति । स्तम्बयजुर्हृत्वाऽथेत्येवाऽग्रे परिगृह्णात्यथेत्यथेति पूर्वेण परिग्रहेण परिगृह्य लिखति हरति यद्धार्य्यं भवति स तथैवोत्तरेण परिग्रहेण परिगृह्णात्युत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्ज्याऽऽह 'प्रोक्षणी[1]रासादये'त्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति स्रुचः संमाष्ट्र्याज्ज्येनोदैति स यज्ञोपवीती भूत्वाऽऽज्ज्यानि गृह्णाति ॥ १२ ॥ तदाहुः । द्विरुपभृति गृह्णीयाद् द्वौ ह्यत्राऽनुयाजौ भवत ऽइति

---

* दर्शपूर्णमासादौ यजुर्मन्त्रेण छिन्नो दर्भः 'स्तम्बयजुः' इति कातीयभूमिकायामाचार्यपादाः ।

(१) शु० सं० अ० १ क० २८ ।

तद्वष्ट्वावेव कृत्व ऽउपभृति गृह्णीयान्नेद्यज्ञस्य विधाया ऽअयानीति तस्मादष्ट्वावेव कृत्व ऽउपभृति गृह्णीयादाज्यानि गृहीत्त्वा स पुनः प्प्राचीनावीती भूत्त्वा ॥ १३ ॥ प्रोक्षणीरद्ध्वर्युरादत्ते । स ऽइध्ममेवाऽग्रे प्प्रोक्षत्यथ वेदिमथाऽस्मै बर्हिः प्प्रयच्छन्ति तत्पुरस्ताद् ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रस्य ग्रन्थिं न प्रस्तरं गृह्णाति सकृदु ह्येव पराञ्चः पितरस्तस्मान्न प्रस्तरं गृह्णाति ॥ १४ ॥ अथ सन्नहनमनुविस्रस्य । अपसलवि त्रिः परिस्तृणन्न्पर्य्येति सोऽपसलवि त्रिः परिस्तीर्य्य यावत्प्रस्तरभाजनं तावत्परिशिनष्ट्यथ पुनः प्प्रसलवि त्रिः पर्य्येति यत्पुनः प्प्रसलवि त्रिः पर्य्येति तद्यानेवाऽमूँस्त्रयाग्निपितृनन्ववाऽगात्तेभ्य ऽएवैतत्पुनरपोदेतीमं स्वं लोकमभि तस्मात्पुनः प्प्रसलवि त्रिः पर्य्येति ॥ १५ ॥ स दक्षिणैव परिधीन्न्परिदधाति । दक्षिणा प्प्रस्तरं स्तृणाति नाऽन्तर्द्दधाति विधृती सकृदु ह्येव पराञ्चः पितरस्तस्मान्नाऽन्तर्द्दधाति विधृती ॥ १६ ॥ स तत्र जुहूमासादयति । अथ पूर्व्वामुपभृतमथ ध्रुवामथ पुरोडाशमथ धाना ऽअथ मन्थमासाद्य हवीꣳषि संमृशति ॥ १७ ॥ ते सर्व्वे ऽएव यज्ञोपवीतिनो भूत्त्वा । इत्थाऽद्ध्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत् ॥ १८ ॥ तेनोपांꣳशु चरन्ति । तिर ऽइव वै पितरस्तिर ऽइवैतद्यदुपांꣳशु तस्मादुपांꣳशु चरन्ति ॥ १९ ॥ परिवृते चरन्ति । तिर ऽइव वै पितरस्तिर ऽइवैतद्यत्परिवृतं तस्मात्परिवृते चरन्ति ॥ २० ॥ अथेध्ममभ्यादधदाह । अग्नये समिद्ध्य-

मानायाऽनु ब्रूहीति स ऽएकामेव होता सामिधेनीं त्रिरन्न्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मादेकाᳬं होता सामिधेनीं त्रिरन्न्वाह ॥ २१ ॥ सोऽन्न्वाह । 'उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत ऽआवह पितॄन्न्हविषे ऽअत्तव' ऽइत्त्यथाऽग्निमावह सोममावह पितॄन्त्सोमवत ऽआवह पितॄन्न्बर्हिषद ऽआवह पितॄनग्निष्वात्तानावह देवाँ३ ऽआज्ज्यपाँ३ ऽआवहाऽग्निᳬ होत्रायाऽऽवह स्वं महिमानमावहेत्त्यावाह्योपविशति ॥२२॥ अथाऽऽश्राव्व्य न होतारं प्रव्वृणीते । पितृयज्ञो वा ऽअयं नेद्धोतारं पितृषु दधानीति तस्मान्न होतारं प्रव्वृणीते सीद होतरित्त्येवाऽऽहोपविशति होता होतृषदन ऽउपविश्य प्प्रसौति प्प्रसूतोऽद्ध्वर्युः स्रुचावादाय प्प्रत्त्यङ्ङतिक्क्रामत्त्यतिक्रम्म्याऽऽश्राव्व्याऽऽह समिधो यजेति सोऽपबर्हिषश्च्चतुरः प्प्रयाजान्यजति प्प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादुपबर्हिषश्च्चतुरः प्प्रयाजान्यजत्त्यथाऽऽज्ज्यभागाभ्यां चरन्त्याज्ज्यभागाभ्यां चरित्त्वा ॥ २३ ॥ ते सर्व्व ऽएव प्प्राचीनावीतिनो भूत्त्वा । *एतैर्हविर्भिः प्प्रचरिष्यन्त ऽइत्थाग्यजमानश्च्च ब्रह्मा च पुरस्तात्परीतः पश्च्चादग्नीत्तदुताऽऽश्रावय†न्त्योᳬ३ᳬं स्वधेत्त्यस्तु स्वधेति प्प्रत्त्याश्रावणᳬं स्वधा नम ऽइति व्वषट्कारः ॥ २४॥

( १ ) शु० सं० अ० २० क० ७० । ऋ० सं० १०. १६. १२ ।

* 'ख-ग-च' पुस्तकेषु 'एतैर्वै हविर्भिः' इति पाठः ।

† ॐ स्वधा, इत्यादिषु स्थानापत्त्या प्लुतः स्यादेवेति । 'नित्याः प्लुतयः' इत्याश्वलायन श्रौतसूत्रनियमात् । तेन ॐ स्वधेत्यत्र ओ स्वशब्दगतोऽकारश्च प्लुतौ 'ओ३म् स्वा३धा, स्वा३धा नमः, अस्तु स्वा३धा' इति । एवं 'ये यजामहे' इत्यत्र 'ये३ स्वधामहे' इत्यपि ध्येयम् ।

तदुहोवाचाऽऽसुरिः । आश्रावयेयुरेव प्रत्याश्रावयेयु-र्वषट्कुर्य्युर्नेद्यज्ञस्य विधाया ऽअयामेति ॥ २५ ॥ अथा-ऽऽह पितृभ्यः सोमवद्भ्योऽनुब्रूहीति । सोमाय वा पितृमते स द्वे पुरोऽनुवाक्ये ऽअन्वाहैकया वै देवान्प्रच्च्या-वयन्ति द्वाभ्यां पितृन्त्सकृदु ह्येव पराञ्चः पितरस्तस्माद् द्वे पुरोऽनुवाक्ये ऽअन्वाह ॥ २६ ॥ स ऽउपस्तृणीत ऽआज्यम् । अथाऽस्य पुरोडाशस्याऽवद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदुवदधात्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति प्रत्यनक्तयवदानानि नाऽति-क्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽह पितृन्त्सोमवतो यजेति वषट्कृते जुहोति ॥ २७ ॥ अथाऽऽह पितृभ्यो बर्हिषद्भ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽऽसां धानानामवद्यति स तेनैव सह मन्थस्य तेन सह पुरो-डाशस्य तत्सकृदुवदधात्यथोपरिष्टाद् द्विराज्यस्याऽभिघार-यति प्रत्त्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थाया-ऽऽश्राव्याऽऽह पितृन्बर्हिषदो यजेति वषट्कृते जुहोति ॥ २८ ॥ अथाऽऽह पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथाऽस्य मन्थस्याऽवद्यति स तेनैव सह पुरोडाशस्य तेन सह धानानां तत्सकृदुवदधात्य-थोपरिष्टाद् द्विराज्यस्याऽभिघारयति प्रत्त्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽह पितृनग्नि-ष्वात्तान्यजेति वषट्कृते जुहोति ॥ २९ ॥ अथाऽऽहाऽग्नये कव्यवाहनायाऽनुब्रूहीति । तत्स्विष्टकृते हव्यवाहनो वै

देवानां कव्यवाहनः पितॄणां तस्मादाहाऽग्नये कव्यवाहनायाऽनुब्रूहीति ॥ ३० ॥ स ऽउपस्तृणीत ऽआज्यम् । अथाऽस्य पुरोडाशस्याऽवद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदुवद्धात्यथोपरिष्टाद् द्विराज्यस्याऽभिघारयति न प्रत्यनक्त्यवदानानि नाऽतिक्रामतीत ऽएवोपोत्थायाऽऽश्राव्याऽऽहाऽग्निं कव्यवाहनं यजेति वषट्कृते जुहोति ॥ ३१ ॥ स यन्नाऽतिक्रामति । इत ऽएवोपोत्थायं जुहोति सकृदु ह्येव पराञ्चः पितरोऽथ यत्सकृत्सकृत्सर्वेषाᳩं हविषाᳩं समवद्यति सकृदु ह्येव पराञ्चः पितरोऽथ यद्व्यतिषङ्गमवदानान्यवद्यत्यृतवो वै पितर ऽऋतूनेवैतद्व्यतिषजत्यृतून्त्सन्दधाति तस्माद्व्यतिषङ्गमवदानान्यवद्यति ॥ ३२ ॥ तद्धैके । एतमेव होत्रे मन्थमादधति तᳪं होतोपहूयाऽवैव जिघ्रति तं ब्रह्मणे प्रयच्छति तं ब्रह्माऽवैव जिघ्रति तमग्नीधे प्रयच्छति तमग्नीदुवैव जिघ्रत्येतन्न्वेवोत* कुर्वन्ति यथा त्वेवेतरस्य यज्ञस्येडाप्राशित्रᳪं समवद्यन्त्येवमेवैतस्याऽपि समवद्येयुस्तामुपहूयाऽवैव जिघ्रन्ति न प्राऽश्नन्ति प्राऽशितव्यं त्वेव वयं मन्न्यामह ऽइति ह स्माऽऽहाऽऽसुरिरुर्ध्वस्य कस्य चाऽग्नौ जुह्वतीति ॥ ३३ ॥ अथ यतरो दास्यन्भवति । यद्यध्वर्युर्वा यजमानो वा स ऽउदपात्रमादायाऽपसलवि त्रिः परिषिञ्चन्पर्य्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाऽऽशिष्यते-

* 'ख-ग-च' पुस्तकेषु 'न्वेवैतत्' इति ।

ऽभिषिञ्चेदेवं तत् ॥ ३४ ॥ अथाऽस्य पुरोडाशस्याऽवदाय । सव्व्ये पाणौ कुरुते धानानामवदाय सव्व्ये पाणौ कुरुते मन्थस्याऽवदाय सव्व्ये पाणौ कुरुते ॥ ३५ ॥ स ये मामवान्तरदिशमनु स्त्रक्तिः । तस्यां यजमानस्य पित्रे ददात्यसावेतत्त ऽइत्त्यथ ये मामवान्तरदिशमनु स्त्रक्तिस्तस्यां यजमानस्य पितामहाय ददात्त्यसावेतत्त ऽइत्त्यथ ये मामवान्तरदिशमनु स्त्रक्तिस्तस्यां यजमानस्य प्प्रपितामहाय ददात्त्यसावेतत्त ऽइत्त्यथ ये मामवान्तरदिशमनु स्त्रक्तिस्तस्यां निमृष्ट्टे-'ऽत्र पि[1]तरो मादयद्ध्वं यथाभागमावृषायद्ध्वमि'ति यथाभागमश्नीतेत्त्येवैतदाह तद्यदेवं पितृब्भ्यो ददाति तेनो स्वान्निपतृनेतस्माद्यज्ञान्नाऽन्तरेति ॥३६॥ ते सर्व्वे ऽएव यज्ञोपवीतिनो भूत्त्वा । उदञ्च ऽउपनिष्क्रम्म्याऽऽहवनीयमुपतिष्ठन्ते देवान्न्वा ऽएष ऽउपाऽऽवर्त्तते य ऽआहिताग्निर्ब्भवति यो दर्शपूर्ण्णमासाब्भ्यां यजतेऽथैतत्पितृयज्ञेनेवाऽचारिषुस्तदु देवेब्भ्यो निन्न्हुवते ॥३७॥ ऐन्द्रीब्भ्यामाहवनीयमुपतिष्ठन्ते । इन्द्रो ह्याहवनीयो '[2]ऽक्षन्नमीमदन्त ह्यव प्प्रिया ऽअधूषत । अस्तोषत स्वभानवो व्विप्प्रा नविष्ठया मती योजान्न्विन्द्र ते हरी ॥ सुसन्दृशं त्वा वयं मघवन्न्वन्दिषीमहि । प्प्र नूनं पूर्ण्णबन्धुरस्तुतो यासि व्वशाँ ३ ॥ ऽअनु योजाऽन्न्विन्द्र ते हरी' ऽइति ॥३८॥ अथ प्प्रतिपरेत्त्य गार्हपत्त्यमुपतिष्ठन्ते । '[3]मनो न्न्वाह्वामहे नाराशꣳसेन स्तोमेन । पितृणां च मन्न्मभिः ॥ आ न

(१) शु० सं० अ० २ क० ३१। (२) शु० सं० अ० ३ क० ५१, ५२। (३) शु० सं० अ० ३ क० ५३-५४।

ऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्य्यं दृशे ॥ पुनर्न्नः पितरो मनो ददातु दैव्व्यो जनः। जीवं व्व्रातꣳ सचेमही'ति पितृयज्ञेनेव वा ऽएतदचारिषुस्तदु खलु पुनर्ज्जीवानपि पद्यन्ते तस्मादाह जीवं व्व्रातꣳ सचेमहीति ॥३९॥ अथ यतरो ददाति। स पुनः प्प्राचीनावीती भूत्वाऽभिप्प्रपद्य जप'त्यमीमदन्त पितरो यथाभागमावृषायिषते'ति यथाभागमाशिषुरित्त्येवैतदाह ॥४०॥ अथोदपात्रमादाय। पुनः प्प्रसलवि त्रिः परिषिञ्चन्न्पर्य्येति स यजमानस्य पितरमवनेजयत्त्यसाववनेनिक्ष्वेत्त्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्प्रपितामहन्तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत्तद्यत्पुनः प्प्रसलवि त्रिः परिषिञ्चन्न्पर्य्येति प्प्रसलवि न ऽइदं कर्म्माऽनुसन्तिष्ठाता ऽइति तस्मात्पुनः प्प्रसलवि त्रिः परिषिञ्चन्न्पर्य्येति ॥ ४१ ॥ अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्त्या वै नीविꣳ स्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वा ऽऋतव ऽऋतवः पितरस्तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति तस्मात्षट्कृत्वो नमस्करोति 'गृहान्नः पितरो दत्ते'ति गृहाणाꣳ ह पितर ऽईशत ऽएषो ऽएतस्याऽऽशीः कर्म्मणः ॥४२॥ ते सर्व्व ऽएव यज्ञोपवीतिनो भूत्वा। अनुयाजाभ्यां प्रचरिष्यन्त ऽइत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदुपविशति होता होतृषदने ॥ ४३ ॥ अथाऽऽह ब्रह्मन्प्प्र-

(१) शु० सं० अ० २ क० ३१। (२) शु० सं० अ० २ क० ३२।

स्त्थास्यामि । समिधमाधायाऽग्निमग्नीत्सम्मृड्ढीति स्रुचावादाय प्प्रत्यङ्ङतिक्रामत्त्यतिक्रम्म्याऽऽश्राव्व्याऽऽह देवान्न्यजेति सोऽपबर्हिषौ द्वावनुयाजौ यजति प्प्रजा वै बर्हिर्न्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषौ द्वावनुयाजौ यजति ॥ ४४ ॥ अथ सादयित्वा स्रुचौ व्व्यूहति । स्रुचौ व्व्युह्य परिधीन्त्समज्य परिधिमभिपद्याऽऽश्राव्व्याऽऽहे'षिता दैव्व्या होतारो भद्द्रवाच्च्याय प्प्रेषितो मानुषः सूक्तवाकाये'ति सूक्तवाकः होता प्प्रतिपद्यते नाऽद्ध्वर्य्युः प्प्रस्तरः समुल्लुम्पतीत्त्येवोपाऽऽस्ते यदा होता सूक्तवाकमाह ॥ ४५ ॥ अथाऽग्नीदाहाऽनुप्प्रहरेति । स न किञ्चनाऽनुप्प्रहरति तूष्णीमेवाऽऽत्मानमुपस्पृशति ॥ ४६ ॥ अथाऽऽह 'संव्वदस्वे'ति । 'अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्व्या होतृभ्यः स्वस्तिर्म्मानुषेभ्यः शंय्योर्ब्रूही'त्युपस्पृशत्त्येव परिधीन्नाऽनुप्प्रहरत्त्यथैतद्बर्हिरनुसमस्यति परिधींश्च ॥ ४७ ॥ तद्धैके । हविरुच्छिष्टमनु समस्यन्ति तदु तथा न कुर्य्याद्धुतोच्छिष्टं वा ऽएतन्नेद्धुतोच्छिष्टमग्नौ जुहवामेति तस्मादपो वैवाऽभ्यवहरेयुः प्प्राऽश्नीयुर्व्वा ॥ ४८ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



महाहविषा ह वै देवा व्वृत्रं जघ्नुः । तेनो ऽएव व्व्यजयन्त येयमेषां व्विजितिस्तामथ यानेवैषां तस्मिन्त्सङ्ग्राम ऽइषव ऽआर्च्छँस्तानेतैरेव शल्पान्निरहरन्त ताद्व्व्यवृहन्त

(१) का० श्रौ० सू० ३. ६. १५। (२) का० श्रौ० सू० ३. ६. १५।

यत् त्र्यम्बकैरयजन्त ॥ १ ॥ अथ यद्देष ऽएतैर्यजते । तन्नाऽऽह त्वेवैतस्य तथा कश्चनेषुर्ऋच्छतीति देवा ऽअकुर्वन्निति त्वेवैष ऽएतत्करोति याश्च त्वेवाऽस्य प्प्रजा जाता याश्चाऽजातास्ता ऽउभयी रुद्रियात्प्रमुञ्चति ता ऽअस्याऽनमीवा ऽअकिल्बिषाः प्प्रजाः प्प्रजायन्ते तस्माद्वा ऽएष ऽएतैर्यजते ॥ २ ॥ ते वै रौद्रा भवन्ति । रुद्रस्य हीषुस्तस्माद्रौद्रा भवन्त्येककपाला भवन्त्येकदेवत्या ऽअसन्निति तस्मादेककपाला भवन्ति ॥ ३ ॥ ते वै प्प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त ऽएकेनाऽतिरिक्ता भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या ऽअस्य प्प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येकेनाऽतिरिक्ता भवन्ति तद्या ऽएवाऽस्य प्प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति तस्मादेकेनाऽतिरिक्ता भवन्ति ॥ ४ ॥ स जघनेन गार्हपत्यम् । यज्ञोपवीती भूत्वोदङ्ङासीन ऽएतान् गृह्णाति स तत ऽएवोपोत्थायोदङ् तिष्ठन्नवहन्त्युदीच्यौ दृषदुपले ऽउपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति तद्यदेव तामुत्तरां दिशꣳ सचन्त ऽएषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशꣳ सचन्ते ॥ ५ ॥ ते वा ऽअक्ताः स्युः । अक्तꣳ हि हविस्त ऽउ वा ऽअनक्ता ऽएव स्युरभिमानुको ह रुद्रः पशून्त्स्याद्यदञ्ज्यात्तस्मादनक्ता ऽएव स्युः ॥ ६ ॥ तान्त्सार्द्धं पात्र्याꣳ समुद्वास्य । अन्वाहार्यपचनादुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य देवस्य दिक् पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वा ऽअस्य जान्धितं प्रज्ञातमवसानं

यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति ॥ ७ ॥ पलाशस्य पलाशेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशं ब्रह्मणैवैतज्जुहोति स सर्वेषामेवाऽवद्यत्येकस्यैव नाऽवद्यति य ऽएषोऽतिरिक्तो भवति ॥ ८ ॥ स जुहोति । 'एष[1] ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहे' त्यम्बिका ह वै नामाऽस्य स्वसा तयाऽस्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्त्र्यम्बका नाम तद्या ऽअस्य प्प्रजा जातास्ता रुद्रियात्प्रमुञ्चति ॥ ९ ॥ अथ य ऽएष ऽएकोऽतिरिक्तो भवति । तमाखूत्कर ऽउपकिर'त्येष ते रुद्र[2] भाग ऽआखुस्ते पशु'रिति तदस्मा ऽआखुमेव पशूनामनुदिशति तेनो ऽइतरान्पशून्न हिनस्ति तद्यदुपकिरति तिर ऽइव वै गर्ब्भास्तिर ऽइवैतद्यदुपकीर्ण्णं तस्माद्वा ऽउपकिरति तद्या ऽएवाऽस्य प्प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति ॥ १० ॥ अथ पुनरेत्य जपन्ति । 'अव रुद्र[3]मदीमह्यव देवन्त्र्यम्बकम् । यथा नो व्वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्व्यवसाययात् ॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजꣳ सुखम्मेषाय मेष्या' ऽइत्त्याशीरेवैषैतस्य कर्म्मणः ॥ ११ ॥ अथाऽपसलवि त्रिः परियन्ति । सव्व्यानूरूनुपाऽऽघ्नाना'[4]स्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय माऽमृतादि'त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदाशासते तदु ह्येव शमिव यो मृत्योर्म्मु-

(१) शु० सं० अ० ३ क० ५७ । (२) शु० सं० अ० ३ क० ५७ । (३) शु० सं० अ० ३ क० ५८, ५९ । (४) शु० सं० अ० ३ क० ६० ।

च्च्यात्तै नाऽमृतात्तस्मादाह मृत्योर्म्मुक्षीय माऽमृतादिति ॥ १२ ॥ तदु हाऽपि कुमार्य्यः परीयुः । भगस्य भजामहा ऽइति या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भगस्येष्टे तस्मादु हाऽपि कुमार्य्यः परीयुर्भगस्य भजामहा-ऽइति ॥ १३ ॥ तासामुताऽऽसां मन्त्रोऽस्ति । 'त्र्यम्बकं[1] यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय माऽमुत' ऽइति सा यदित ऽइत्याह ज्ञातिभ्यस्तदाह माऽमुत ऽइति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्प्रतिष्ठा तस्मादाह माऽमुत ऽइति ॥ १४ ॥ अथ पुनः प्प्रसलवि त्रिः परियन्ति । दक्षिणानूरूनुपाऽऽघ्नाना ऽएतेनैव मन्त्रेण तद्यत्पुनः प्प्रसलवि त्रिः परियन्ति प्प्रसलवि न ऽइदं कर्म्माऽनुसन्तिष्ठाता ऽइति तस्मात्पुनः प्प्रसलवि त्रिः परि-यन्ति ॥ १५ ॥ अथैतान्यजमानोऽञ्जलौ समोप्य । ऊर्द्ध्वा-नुदस्यति यथा गौर्न्नोदाप्नुयात्तदात्मभ्य ऽएवैतच्छलपा-न्निर्म्मिमते तान्विलिप्सन्त ऽउपस्पृशन्ति भेषजमेवैतत्कु-र्व्वते तस्माद्विलिप्सन्त ऽउपस्पृशन्ति ॥ १६ ॥ तान्द्वयोर्म्मू-तकयोरुपनह्य । वेणुयष्ट्यां वा कुपे वोभयत ऽआवद्ध्योदङ् परेत्य यदि व्वृक्षं वा स्त्थाणुं वा व्वेणुं वा व्वल्मीकं व्वा व्विन्देत्तस्मिन्नासज'त्येतत्ते[2] रुद्राऽवसं तेन परो मूजवतो-ऽतीहि'त्यवसेन वा ऽअद्ध्वानं यन्ति तदेनः साऽवसमेवा-ऽन्ववाऽर्जति यत्र—यत्राऽस्य चरणं तदन्वत्र ह व्वा ऽअस्य परो मूजवद्भ्यश्चरणं तस्मादाह तेन परो मूजवतोऽतीहि-

(१) शु० सं० अ० ३ क० ६० । (२) शु० सं० अ० ३ क० ६१ ।

'त्यवततधन्वा पिनाकावस' ऽइत्त्यहिꣳ सन्नꣳ शिवोऽती-हीत्त्येवैतदाह 'कृत्तिवासा' ऽइति निष्वापयत्त्येवैनमेतत्स्वपन्नु हि न कश्चन हिनस्ति तस्मादाह कृत्तिवासा ऽइति ॥१७॥ अथ दक्षिणान्न्बाहूनन्न्वावर्त्तन्ते । ते प्प्रतीक्षं पुनरायन्ति पुनरेत्त्याऽप ऽउपस्पृशन्ति रुद्रियेणेव वा ऽएतदचारिषुꣳ शान्तिरापस्तदद्भिꣳ शान्त्या शमयन्ते ॥ १८ ॥ अथ केश-श्मश्रूप्वा । समारोह्याऽग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्म्मथ्याऽग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ-ऽइव वा ऽएष यच्चातुर्म्मास्यान्न्यथैष क्लृप्तꣳ प्प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनाऽन्ततꣳ प्प्रतितिष्ठति तस्मादुदवस्यति ॥ १९ ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



अक्षय्यꣳ ह वै सुकृतं चातुर्म्मास्ययाजिनो भवति । संवत्सरꣳ हि जयति तेनाऽस्याऽक्षय्यं भवति तं वै त्रेधा विभज्य यजति त्रेधा विभज्य प्प्रजयति सर्वं वै संवत्सरꣳ सर्वं वा ऽअक्षय्यमेतेनो हाऽस्याऽक्षय्यꣳ सुकृतं भवत्यृतुरु हैवैतद् भूत्वा देवानप्येत्त्यक्षय्यमु वै देवानामेतेनो हैवा ऽस्याऽक्षय्यꣳ सुकृतं भवत्त्येतन्नु तद्यस्माच्चातुर्म्मास्यैर्य-जते ॥ १ ॥ अथ यस्माच्छुनासीर्य्येण यजेत । या वै देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां तच्छु-

(१) शु० सं० अ० ३ क० ६१। (२) शु० सं० अ० ३ क० ६१।

नमथ यः संवत्सरस्य प्प्रजितस्य रस ऽआसीत्तत्सीरꣳ सा या चैव देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य ऽउ च संवत्सरस्य प्प्रजितस्य रस ऽआसीत्तमेवैतदुभयं परिगृह्याऽत्मन्कुरुते तस्माच्छुनासीर्येण यजते ॥ २ ॥ तस्याऽऽवृत् । नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकꣳ समिष्टयजुः ॥ ३ ॥ अथैतान्न्येव पञ्च हवीꣳषि भवन्ति । एतैर्व्वै हविर्भिः प्प्रजापतिः प्प्रजा ऽअसृजतैतैरुभयतो व्वरुणपाशात्प्रजाः प्प्राऽमुञ्चदेतैर्व्वै देवा व्वृत्रमघ्नन्नेतैर्व्वेव व्व्यजयन्त येयमेषां व्विजितिस्तां तथो ऽएवैष ऽएतैर्य्या चैव देवानाꣳ श्रीरासीत्साकमेधैरीजानानां व्विजिग्यानानां य ऽउ च संवत्सरस्य प्प्रजितस्य रस ऽआसीत्तमेवैतदुभयं परिगृह्याऽऽत्मन्कुरुते तस्माद्वा ऽएतानि पञ्च हवीꣳषि भवन्ति ॥ ४ ॥ अथ शुनासीर्य्यो द्वादशकपालः पुरोडाशो भवति । स बन्धुः शुनासीर्य्यस्य यं पूर्व्वमवोचाम ॥ ५ ॥ अथ व्वायव्व्यं पयो भवति । पयो ह वै प्प्रजा जाता ऽअभिसञ्जानते विजिग्यानं मा प्प्रजाः श्रियै यशसेऽन्नाद्यायाऽभिसञ्जानान्ता ऽइति तस्मात्पयो भवति ॥ ६ ॥ तद्यद्वायव्व्यं भवति । अयं व्वै व्वायुर्य्योऽयं पवत ऽएष वा ऽइदꣳ सर्व्वं प्रप्प्याययति यदिदं किञ्च व्वर्षति व्वृष्टादोषधयो जायन्त ऽओषधीर्ज्जग्ध्वाऽपः पीत्त्वा तत ऽएतदद्भ्योऽधि पयः सम्भवत्त्येष हि वा ऽएतज्जनयति तस्माद्वायव्व्यं भवति ॥ ७ ॥ अथ सौर्य्य ऽएक-

कपालः पुरोडाशो भवति । एष वै सूर्य्यो य ऽएष तपत्त्येष वा ऽइदꣳ सर्व्वमभिगोपायति साऽधुना त्वदसाऽधुना त्वदेष ऽइदꣳ सर्व्वं विदधाति साधौ त्वदसाधौ त्वदेष मा विजिग्यानं प्रीतः साऽधुना त्त्वदभिगोपायत्त्साधौ त्वद्विदधदिति तस्मात्सौर्य्य ऽएककपालः पुरोडाशो भवति ॥ ८ ॥ तस्याऽश्वः श्वेतो दक्षिणा । तदेतस्य रूपं क्रियते य ऽएष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य ऽएष तपति ॥ ९ ॥ स यत्रैव साकमेधैर्य्यजते । तच्छुनासीर्य्येण यजेत यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति तस्माद्यदैव कदा चैतेन यजेत ॥ १० ॥ तद्धैके । रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यददः पुरस्तात्फाल्गुन्यै पौर्णमास्या ऽउद्दृष्टं तच्छुनासीर्य्येण यजेत ॥ ११ ॥ अथ दीक्षेत । तं नाऽनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयात्पुनः प्प्रयोगरूप ऽइव ह स यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयात्तस्मादेनं नाऽनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयादिति नूत्त्सृजमानस्य ॥ १२ ॥ अथ पुनः प्प्रयुञ्जानस्य । पूर्व्वेद्युः फाल्गुन्न्यै पौर्णमास्यै शुनासीर्य्येण यजेताऽथ प्प्रातर्वैश्वदेवेनाऽथ पौर्णमासेनैतदु पुनः प्प्रयुञ्जानस्य ॥ १३ ॥ अथाऽतः । परिवर्त्तनस्यैव सर्व्वतोमुखो वा ऽअसावादित्त्य ऽएष वा ऽइदꣳ सर्व्वं निर्द्धयति यदिदं किं च शुष्यति तेनैष सर्व्वतोमुखस्तेनाऽन्नादः ॥ १४ ॥ सर्व्वतोमुखोऽयमग्निः । यतो ह्येव कुतश्चाऽग्नावभ्यादधति तत

ऽएव प्प्रदहति तेनैष सर्व्वतोमुखस्तेनाऽन्नादः ॥ १५ ॥ अथाऽयमन्यतोमुखः पुरुषः । स ऽएतत्सर्व्वतोमुखो भवति यत्परिवर्त्तयते स ऽएवमेवाऽन्नादो भवति यथैतावेतद्य ऽएवं विद्वान्परिवर्त्तयते तस्माद्वै परिवर्त्तयेत ॥ १६ ॥ तदुहोवाचाऽऽसुरिः । किन्नु तत्र मुखस्य यदपि सर्व्वाण्ण्येव लोमानि व्वपेत यद्वै त्रिः संवत्सरस्य यजते तेनैव सर्व्वतोमुखस्तेनाऽन्नादस्तस्मान्नाऽद्रियेत परिवर्त्तयितुमिति ॥ १७ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



तद्यदाहुः । साकमेधैर्व्वै देवा व्वृत्रमघ्नँस्तैर्व्वेव व्व्यजयन्त येयमेषां व्विजितिस्तामिति सर्व्वैर्हु त्वेव देवाश्चातुर्म्मास्यैर्व्वृत्रमघ्नन्सर्व्वैर्व्वेव व्व्यजयन्त येयमेषां व्विजितिस्ताम् ॥१॥ ते होचुः । केन राज्ञा केनाऽनीकेन योत्स्याम ऽइति स हाऽग्निरुवाच मया राज्ञा मयाऽनीकेनेति तेऽग्निना राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्प्राऽजयँस्तान्ब्रह्मणा च त्रय्या च विद्यया पर्य्यगृह्णन् ॥ २ ॥ ते होचुः । केनैव राज्ञा केनाऽनीकेन योत्स्याम ऽइति स ह व्वरुण ऽउवाच मया राज्ञा मयाऽनीकेनेति ते व्वरुणेनैव राज्ञा व्वरुणेनाऽनीकेनाऽपराँश्चतुरो मासः प्प्राऽजयँस्तान्ब्रह्मणा चैव त्रय्या च व्विद्यया पर्य्यगृह्णन् ॥ ३ ॥ ते होचुः । केनैव राज्ञा केनाऽनीकेन योत्स्याम ऽइति स हेन्द्र ऽउवाच मया राज्ञा मयाऽनीकेनेति त ऽइन्द्रेणैव राज्ञेन्द्रेणाऽनीकेनाऽपराँश्चतुरो

मासः प्राऽजयँस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्य्यगृह्णन् ॥ ४ ॥ स यद्वैश्वदेवेन यजते । अग्निनैवैतद्राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्रजयति *तत्त्र्येनी शलली भवति लोहः क्षुरः सा या त्र्येनी शलली सा त्रय्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्म लोहित ऽइव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्त्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ५ ॥ अथ यद्वरुणप्रघासैर्य्यजते । वरुणेनैवैतद्राज्ञा वरुणेनाऽनीकेनाऽपराँश्चतुरो मासः प्रजयति तत्त्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ६ ॥ अथ यत्साकमेधैर्य्यजते । इन्द्रेणैवैतद्राज्ञेन्द्रेणाऽनीकेनाऽपराँश्चतुरो मासः प्रजयति तत्त्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ७ ॥ स यद्वैश्वदेवेन यजते । अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यꣳ सलोकतां जयत्यथ यद्वरुणप्रघासैर्य्यजते वरुण ऽएव तर्हि भवति वरुणस्यैव सायुज्यꣳ सलोकतां जयत्यथ यत्साकमेधैर्य्यजत ऽइन्द्र ऽएव तर्हि भवतीन्द्रस्यैव सायुज्यꣳ सलोकतां जयति ॥ ८ ॥ स यस्मिन्नृत्तावमुं लोकमेति । स ऽएनमृतुः परस्मा

---

* त्रिषु स्थानेषु एतः–श्वेतवर्णः–यस्याः सा त्र्येनी शलली सेधाशलाकेत्यर्थः । एतशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' ( पा० सू० ४. १. ३९ ) इति ङीप् तकारस्य नादेशे एनीति । "त्र्येन्या शलल्येक्षुकाण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण निकेशान् वर्त्तयते वापयते श्मश्रूणि" आप० श्रौ० सू० ( ८. ४. १. ) ।

ऽऋतवे प्प्रयच्छति पर ऽउ परस्मा ऽऋतवे प्प्रयच्छति स परममेव स्त्थानं परमां गतिं गच्छति चातुर्म्मास्ययाजी तदाहुर्न्न चातुर्म्मास्ययाजिनमनु व्विन्दन्ति परमꣳ ह्येव खलु स स्त्थानं परमां गतिं गच्छतीति ॥ ९ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमप्रपाठकः ॥५॥ कण्डिकासंख्या १०४ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

इति एकपादिकानाम द्वितीयं* काण्डं समाप्तम् ॥ २ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ५४९ ॥

# अथाध्वरनाम तृतीयं काण्डम्

अस्मिन् काण्डे प्रतिपाद्यो विषयः—*सोमयागो दीक्षाभिषवान्तः ।

॥ ओ३म् ॥ देवयजनं जोषयन्ते स यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् यदन्यद्भूमेर्नाऽभिशयीताऽतो वै देवा दिवमुपोदक्रामन्देवान्वा ऽएष ऽउपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धाऽन्न्यद्भूमेरभिशयीताऽवरतर ऽइव हेष्ट्वा स्यात्तस्माद्यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् ॥ १ ॥ तद्वर्ष्म सत्समꣳ स्यात् । समꣳ सद्विभ्रꣳशि स्याद्विभ्रꣳशि सत्प्राक्प्रवणꣳ स्यात्प्राची हि देवानां दिगथो ऽउदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक् पितृणाꣳ स यद्दक्षिणाप्रवणꣳ स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥ २ ॥ न पुरस्ताद्देवयजनमात्रमतिरिच्येत । द्विषन्तꣳ हाऽस्य तद्भ्रातृव्यमभ्यतिरिच्यते कामꣳ ह दक्षिणतः स्यादेवमुत्तरत ऽएतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं

---

* सोमशब्दोऽत्र लताविशेषपरः न तु चन्द्रादिदेवतापरः, तस्य प्रकृते उपयोगाभावात् । तत्स्वरूपश्चेत्थम्—

"श्यामलाऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला ।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्" इत्यायुर्वेदे ।

पश्चात्परिशिष्यते क्षिप्प्रे हैवैनमुत्तरा देवयज्ज्योपनमतीति नु देवयजनस्य ॥ ३ ॥ तदु होवाच याज्ञवल्क्यः । वार्ष्णाय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवीत्सर्व्वा वा ऽइयं पृथिवी देवी देवयजनं यत्र वा ऽअस्यै क्व च यजुषैव परिगृह्य याजयेदिति ॥ ४ ॥ ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवाᳬसोऽनूचाना विद्वाᳬसो याजयन्ति सैवाऽह्वलैतन्नेदिष्ठतमामिव मन्न्यामह ऽइति ॥५॥ †तच्छालां वा विमितं वा ‡प्प्राचीनवᳬशं मिन्न्वन्ति । प्प्राची हि देवानां दिक् पुरस्ताद्वै देवाः प्प्रत्यञ्चो मनुष्यानुपाऽऽवृत्तास्तस्मात्तेभ्यः प्प्राङ् तिष्ठन् जुहोति ॥ ६ ॥ तस्मादु ह न प्प्रतीचीनशिराः शयीत । नेद्देवानभिप्प्रसार्य्य शया ऽइति या दक्षिणा दिक् सा पितॄणां या प्प्रतीची सा सर्प्पाणां यतो देवा ऽउच्चक्रमुः सैषाऽहीना योदीची दिक् सा मनुष्याणां तस्मान्न्मानुष ऽउदीचीनवᳬशामेव ‡‡शालां वा विमितं वा मिन्न्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्प्राचीनवᳬशा नाऽदीक्षितस्य ॥ ७ ॥ तां वा ऽएतां परिश्रयन्ति । नेदभिवर्षादिति न्न्वेव वर्षा देवान्न्वा ऽएषऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवति तिर ऽइव वै देवा मनुष्येभ्यस्तिर ऽइवैतद्यत्परिश्रितं तस्मात्परिश्रयन्ति ॥ ८ ॥ तन्न सर्व्व ऽइवाऽभिप्प्रपद्येत । ब्राह्मणो

* 'नेदिष्ठमाम्' इति 'ग-च' पुस्तकयोः ।
† 'तच्छालो' इत्युक्तपुस्तकयोरेव ।
‡ 'क' पुस्तके 'प्राचीनᳬवशाम्' इति ।
‡‡ "विंशत्यरत्निः शाला स्यात्तदर्द्धेन तु विस्तृता" ।
"विमितं चतुरस्रं स्याद्दशारत्निप्रमाणतः" इति कातीयपरिशिष्टे ॥

वैव राजन्न्यो वा वैश्यो वा ते हि यज्ञियाः ॥ ९ ॥ स वै न सर्व्वेणेव संवदेत । देवान्न्वा ऽएष ऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाः सर्व्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्न्येन वा वैश्येन वा ते हि यज्ञियास्तस्माद्यद्येनꣳ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्त्येष ऽउ तत्र दीक्षितस्योपचारः ॥ १० ॥ अथाऽरणी पाणौ कृत्वा । शालामद्ध्यवस्यति स पूर्व्वार्द्ध्यꣳ स्थूणाराजमभिपद्यैतद्यजुरा- 'हेदमगन्म देवयजनं पृथिव्व्या यत्र देवासो ऽअजुषन्त विश्व' ऽइति तदस्य विश्वैश्च देवैर्ज्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना यदहाऽस्य तेऽक्षिब्भ्यामीक्षन्ते ब्राह्मणाः शुश्रुवाꣳसस्तदहाऽस्य तैर्ज्जुष्टं भवति ॥ ११ ॥ यद्वाऽऽह । यत्र देवासो ऽअजुषन्त विश्व ऽइति तदस्य विश्वैर्द्देवैर्ज्जुष्टं भव'त्यृक्सामाब्भ्याꣳ सन्तरन्तो यजुर्ब्भिरि'त्यृक्सामाब्भ्यां वै यजुर्ब्भिर्य्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्त्येवैतदाह 'रायस्पोषेण समिषा मदेमे'ति भूमा वै रायस्पोषः श्रीर्व्वै भूमाऽऽशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्य्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) शु० सं० अ० ४ क० १ । (२) शु० सं० अ० ४ क० १ । (३) शु० सं० अ० ४ क० १ ।

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयाद्यद्वा सम्पद्येत व्रतछं ह्येवाऽस्याऽतोऽशनं भवति यद्यु नाऽशिशिषेदुपि कामं नाऽश्नीयात् ॥ १ ॥* अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधति तन्नापित ऽउपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्तते-ऽस्ति वै पुरुषस्याऽमेध्यं यत्राऽस्याऽपो नोपतिष्ठन्ते केशश्मश्रौ च वा ऽअस्य नखेषु चाऽऽपो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा †दीक्षा ऽइति ॥ २ ॥ तद्धैके । सर्व्वं ऽएव वपन्ते सर्व्वं ऽएव मेध्या भूत्वा दीक्षिष्यामह ऽइति तदु तथा न कुर्य्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत ॥ ३ ॥ स वै नखान्येवाऽग्रे निकृन्तते । दक्षिणस्येवाऽग्रे सव्व्यस्य वा ऽअग्रे मानुषेऽथैवं देवत्राऽङ्गुष्ठयोरेवाऽग्रे कनिष्ठिकयोर्वा-ऽग्रे मानुषेऽथैवं देवत्रा ॥ ४ ॥ स दक्षिणमेवाऽग्रे ‡गोदानं वितारयति । सव्व्यं वा ऽअग्रे मानुषेऽथैवं देवत्रा ॥ ५ ॥ स दक्षिणमेवाऽग्रे गोदानमभ्युनत्ति । 'इमा ऽआपः शमु मे सन्तु देवीरि'ति स यदाऽऽहेमा ऽआपः शमु मे सन्तु देवीरिति वज्रो वा ऽआपो वज्रो हि वा ऽआपस्तस्माद्येनैता यन्ति

* अत्र शतम् १४०० ॥

† सोमयागे प्रवृत्तस्य यजमानस्य यमनियमादिपरिग्रहरूपः संस्कारो दीक्षाशब्देनोच्यते । तत्कर्तृसंस्कारार्था इष्टिः दीक्षणीया शब्दवाच्येति ।

‡ गोदानं नाम कर्णस्योपरि प्रदेशः, स्वपद्भिर्भुवि पृथिव्यां दीयत इति तदर्थः ।

(१) शु० सं० अ० ४ क० १ ।

निम्म्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्द्दहन्ति तत् तदेतमेवैत द्वज्ञ्रᳩ शमयति तथो हैनमेष व्वज्ञ्रᳩ शान्तो न हिनस्ति तस्मादाहेमा ऽआपᳩ शमु मे सन्तु देवीरिति[1] ॥ ६ ॥ अथ दर्भतरुणकमन्तर्द्दधाति । 'ओषधे त्रायस्वे'ति[2] व्वज्ञ्रो वै क्षुरस्तथो हैनमेष व्वज्ञ्रᳩ क्षुरो न हिनस्त्यथ क्षुरेणाऽभि-निदधाति 'स्वधिते मैनᳩ हिᳩसीरि'ति[3] व्वज्ञ्रो वै क्षुर-स्तथो हैनमेष व्वज्ञ्रᳩ क्षुरो न हिनस्ति ॥ ७ ॥ प्रच्छिद्योद-पात्रे प्प्राऽस्यति । तूष्णीमेवोत्तरं गोदानमब्भ्युनक्ति तूष्णीं दर्भतरुणकमन्तर्द्दधाति तूष्णीं क्षुरेणाऽभिनिधाय प्प्रच्छि-द्योदपात्रे प्प्राऽस्यति ॥ ८ ॥ अथ नापिताय क्षुरं प्रय-च्छति । स केशश्मश्रु व्वपति स यदा केशश्मश्रु व्वपति ॥ ९ ॥ अथ स्नाति । अमेद्ध्यो वै पुरुषो यदनृतं व्वदति तेन पूतिरन्तरतो मेद्ध्या वा ऽआपो मेद्ध्यो भूत्त्वा दीक्षा ऽइति पवित्रं वा ऽआपः पवित्रपूतो दीक्षा ऽइति तस्माद्वै स्नाति ॥ १० ॥ स स्नाति । 'आपो ऽअस्मान्मातरᳩ शुन्धयन्त्वि'[4]त्येतद्धयाह शुन्धयन्त्विति 'घृतेन नो घृतप्प्वᳩ पुनन्त्वि'[5]ति तद्वै सुपूतं यं घृतेन पुनँस्तस्मादाह घृतेन नो घृतप्प्वᳩ पुनन्त्विति 'व्विश्वᳩ हि रिप्प्रं प्रवहन्ति देवीरि'[6]ति यद्वै व्विश्वᳩ सर्व्वं तद्यदमेद्ध्यᳩ रिप्प्रं तत्सर्व्वᳪ ह्यस्मादमेद्ध्यं प्रवहन्ति तस्मादाह व्विश्वᳩ हि रिप्प्रं प्रवहन्ति देवीरिति ॥ ११ ॥

(१) शु० सं० अ० ४ क० १। (२) शु० सं० अ० ४ क० १। (३) शु० सं० अ० ४ क० १। (४) शु० सं० अ० ४ क० २। (५) शु० सं० अ० ४ क० २। (६) शु० सं० अ० ४ क० २।

अथ प्राङिवोदङ्ङुत्क्रामति । 'उदिदाभ्यः[1] शुचिरा पूत ऽएमी'त्युद्याभ्यः शुचिः पूत ऽएति ॥ १२ ॥ अथ वासः परिधत्ते । सर्वत्वायैव स्वामेवाऽस्मिन्नेतत्त्वचं दधाति या ह वा ऽइयं गोस्त्वक्पुरुषे हैषाऽग्र ऽआस ॥ १३ ॥ ते देवा ऽअब्रुवन् । गौर्वा ऽइदꣳ सर्वं बिभर्त्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यत ऽइति ॥ १४ ॥ तेऽवच्छाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते ॥ १५ ॥ अवच्छितो हि वै पुरुषः । तस्मादस्य यत्रैव क च कुशो वा यद्वा विकृन्तति तत ऽएव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास ऽएव तस्मान्नाऽन्यः पुरुषाद्वासो बिभर्त्येताꣳ ह्यस्मिँस्त्वचमदधुस्तस्मादु सुवासा ऽएव बुभूषेत्स्वया त्वचा समृद्ध्या ऽइति तस्मादप्यश्लीलꣳ सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति ॥ १६ ॥ नो हाऽन्ते गोर्नग्नः स्यात् । वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं म ऽआदास्यत ऽइति तस्मादु गावः सुवाससमुपैव निश्रयन्ते ॥ १७ ॥ तस्य वा ऽएतस्य वाससः । अग्नेः पर्य्यासो भवति वायोरनुच्छादो नीविः पितॄणाꣳ सर्प्पाणां प्रघातो विश्वेषां देवानां तन्तव ऽआरोका नक्षत्राणामेवꣳ हि वा ऽएतत्सर्वे देवा ऽअन्वायत्तास्तस्माद्दीक्षितवसनं भवति ॥ १८ ॥ तद्वाऽअहतꣳ स्यात् । अयातयामतायै तद्वै निष्पेष्टवै ब्रूयाद्यदेवा

(१) शु० सं० अ० ४ क० २ ।

ऽस्याऽत्राऽमेद्ध्या कृणत्ति वा व्वयति वा तदस्य मेद्ध्यमसदिति यद्यु ऽअहतथ्ठ स्यादद्भिरब्भ्युक्षेन्मेद्ध्यमसदित्यथो यदिदꣳ स्नातवस्त्रं निहितमपल्पूलनकृतं भवति तेनो हाऽपि दीक्षेत ॥ १९ ॥ तत्परिधत्ते । 'दीक्षातपसोस्तनूरसी[1]त्यदीक्षितस्य वा ऽअस्यैषाऽग्रे तनूर्ब्भवत्यथाऽत्र दीक्षातपसोस्तस्मादाह दीक्षातपसोस्तनूरसीति 'तां त्वा[2] शिवाꣳ शग्मां परिदध'-ऽइति तां त्वा शिवाꣳ साध्वीं परिदध ऽइत्त्येवैतदाह 'भद्रं[3] व्वर्ण्णं पुष्यन्नि'ति पापं व्वा ऽएषोऽग्रे व्वर्ण्णं पुष्यति यमसुमदीक्षितोऽथाऽत्र भद्रन्तस्मादाह भद्रं व्वर्ण्णं पुष्यन्निति ॥२०॥ अथैनꣳ शालां प्रपादयति । स धेन्वै चाऽनडुहश्च नाऽश्नीयाद्धेन्वनडुहौ वा ऽइदꣳ सर्व्वं विभृतस्ते देवा ऽअब्रुवन् धेन्वनडुहौ वा ऽइदꣳ सर्व्वं विभृतो हन्त यदन्न्येषां व्वयसां व्वीर्य्यं तद्धेन्न्वनडुहयोर्द्दधामेति स यदन्न्येषां व्वयसां व्वीर्य्यमासीत्तद्धेन्न्वनडुहयोरदधुस्तस्माद्धेनुश्चैवाऽनड्वाँश्च भूयिष्ठं *भुङ्क्तस्तद्धैतत्सर्व्वाश्यमिव यो धेन्न्वनडुहयोरश्नीयादन्तगतिरिव तꣳ हाऽद्भुतमभिजनितोर्ज्जायायै गब्भं निरवधीदिति पापमकदिति पापी कीर्त्तिस्तस्माद्धेन्न्वनडुहयोर्न्नाऽश्नीयात्तदु होवाच याज्ञवल्क्योऽश्नाम्म्येवाऽहमꣳसलं चेद्भवतीति ॥ २१ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(१) शु० सं० अ० ४ क० २। (२) शु० सं० अ० ४ क० २ (३) शु० सं० अ० ४ क० २।

* 'ख' पुस्तके 'भुक्तस्तत्' इत्येव पाठो लभ्यते।

अपः प्प्रणीय । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपत्त्यग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्त्यग्निर्वै यज्ञस्याऽवरार्द्धो विष्णुः परार्द्धस्तत्त्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा ऽइति तस्मादाग्नावैष्णव ऽएकादशकपालः पुरोडाशो भवति ॥१॥ तद्धैके । आदित्त्येभ्यश्चरुं निर्वपन्ति तदस्ति पर्य्युदितमिवाष्टौ पुत्रासो ऽअदितेर्य्ये जातास्तन्न्वस्परि । देवां २ ॥ ऽउप प्प्रैत्त्सप्तभिः परा मार्त्ताण्डमास्यदि'ति ॥ २ ॥ अष्टौह वै पुत्रा ऽअदितेः । याँस्त्वेतद्देवा ऽआदित्त्या ऽइत्त्याचक्षते सप्त हैव तेऽविकृतष्ठ हाऽष्टमं जनयाञ्चकार मार्त्ताण्डछ् सन्देघो हैवाऽऽस यावानेवोर्द्ध्वस्तावाँस्तिर्य्यङ् पुरुषसम्मित ऽइत्त्यु हैक ऽआहुः ॥ ३ ॥ त ऽउ हैत ऽऊचुः । देवा ऽआदित्त्या यदस्मानन्न्वजनिमा तदमुयेव भूद्धन्तेमं विकरवामेति तं विचक्रुर्य्यथाऽयं पुरुषो विकृतस्तस्य यानि माꣳसानि सङ्कृत्त्य सन्न्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति यमु ह तद्विचक्रुः स विवस्वानादित्त्यस्तस्येमाः प्प्रजाः ॥ ४ ॥ स होवाच । राध्नवान्न्मे स प्प्रजायां य ऽएतमादित्त्येभ्यश्चरुं निर्वपादिति राध्नोति हैव य ऽएतमादित्त्येभ्यश्चरुं निर्वपत्त्ययं त्त्वेवाऽग्नावैष्णवः प्प्रज्ञातः ॥ ५ ॥ तस्य सप्तदश सामिधेन्न्यो भवन्ति । उपाꣳशु देवते यजति पञ्च प्प्रयाजा भवन्ति त्रयोऽनुयाजाः संय्याजयन्ति पत्त्नीः सर्वत्त्वायैव

( १ ) ऋ० सं० ( १०।७२।८। )

समिष्टयजुरेव न जुहोति नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य सꣳस्थाया ऽअन्तं गच्छानीत्यन्तो हि यज्ञस्य समिष्टयजुः ॥ ६ ॥ अथाऽग्रेण शालां तिष्ठन्नभ्यङ्क्ते । अरुर्वै पुरुषोऽवच्छितोऽनरुरेवैतद्भवति यदभ्यङ्क्ते गवि वै पुरुषस्य त्वग्गोर्वा ऽएतन्नवनीतं भवति स्वयैवैनमेतत्त्वचा समर्द्धयति तस्माद्वा ऽअभ्यङ्क्ते ॥ ७ ॥ तद्वै नवनीतं भवति । घृतं वै देवानां फाण्टं मनुष्याणामथैतन्नाऽऽहैव घृतं नो फाण्टꣳ स्यादेव घृतꣳ स्यात्फाण्टमयातयामतायै तदेनमयातयाम्नैवाऽयातयामानं करोति ॥ ८ ॥ तमभ्यनक्ति । शीर्षतोऽग्र ऽआपादाभ्यामनुलोमं 'महीनां पयोऽसी'[1]ति मह्य ऽइति ह वा ऽएतासामेकं नाम यद्गवां तासां वा ऽएतत्पयो भवति तस्मादाह महीनां पयोऽसीति 'वर्चोदा[2] ऽअसि वर्चो मे देही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ ९ ॥ अथाऽक्ष्यावाऽनक्ति । अरुर्वै पुरुषस्याऽक्षि प्रशाक्रममेति ह स्माऽऽह याज्ञवल्क्यो दुरक्ष ऽइव हाऽऽस पूयो हैवाऽस्य दूषीका ते ऽएवैतदनरुष्करोति यदक्ष्यावाऽनक्ति ॥ १० ॥ यत्र वै देवाः । असुररक्षसानि जघ्नुस्तच्छुष्णो दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश स ऽएष कनीनकः कुमारक ऽइव परिभासते तस्मा ऽएवैतद्यज्ञमुपप्रयन्त्सर्वतोऽश्मपुरां परिदधात्यश्मा ह्याञ्जनम् ॥ ११ ॥ त्रैककुदं भवति । यत्र वा ऽइन्द्रो वृत्रमहँस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति चक्षुष्येवैतच्च-

(१) शु० सं० अ० ४ क० ३ । (२) शु० सं० अ० ४ क० ३ ।

क्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात्समानी ह्येवाऽञ्जनस्य बन्धुता ॥१२॥ शरेषीकयाऽनक्ति । वज्रो वै शरो विरक्षस्तायै सतूला भवत्यमूलं वा ऽइदमुभयतः परिच्छिन्नꣳ रक्षो ऽन्तरिक्षमनुचरति यथाऽयं पुरुषोऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्यत्सतूला भवति विरक्षस्तायै ॥ १३ ॥ स दक्षिणमेवाऽग्र ऽआनक्ति । सव्यं वा ऽअग्रे मानुषेऽथैवं देवत्रा ॥ १४ ॥ स ऽआनक्ति । 'वृत्रस्याऽसि कनीनक'[1]ऽइति वृत्रस्य ह्येष कनीनकश्चक्षुर्दा[2] ऽअसि चक्षुर्म्मे देही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १५ ॥ स दक्षिणꣳ सकृद्यजुषाऽनक्ति । सकृत्तूष्णीमथोत्तरꣳ सकृद्यजुषाऽनक्ति द्विस्तूष्णीं तदुत्तरमेवैतदुत्तरावत्करोति ॥ १६ ॥ तद्यत्पञ्च कृत्व ऽआनक्ति । संवत्सरसंम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वऽआनक्ति ॥ १७ ॥ अथैनं दर्भपवित्रेण पावयति । अमेद्ध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेद्ध्या वै दर्भा मेद्ध्यो भूत्वा दीक्षा ऽइति पवित्रं वै दर्भाः पवित्रपूतो दीक्षा ऽइति तस्मादेनं दर्भपवित्रेण पावयति ॥ १८ ॥ तद्वा ऽएकꣳ स्यात् । एको ह्येवाऽयं पवते तदेतस्यैव रूपेण तस्मादेकꣳ स्यात् ॥ १९ ॥ अथो ऽअपि त्रीणि स्युः । एको ह्येवाऽयं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राण ऽउदानो व्यान ऽइति तदेतस्यैवाऽनुमात्रां

(१) शु० सं० अ० ४ क० ३ । (२) शु० सं० अ० ४ क० ३ ।

तस्मात्त्रीणि स्युः ॥ २० ॥ अथो ऽअपि सप्त स्युः । सप्त वा ऽइमे शीर्षन्न्प्राणास्तस्मात्सप्त स्युस्त्रिः सप्तान्न्येव स्युरेकविंशतिरेषैव सम्पत् ॥ २१ ॥ तद्वै सप्तभिः सप्तभिः पावयति । 'चित्पतिर्म्मा पुनात्त्वि'ति प्प्रजापतिर्वै चित्पतिः प्प्रजापतिर्म्मा पुनात्त्वित्त्येवैतदाह 'वाक्पतिर्म्मा पुनात्त्वि'ति प्प्रजापतिर्वै वाक्पतिः प्प्रजापतिर्म्मा पुनात्त्वित्त्येवैतदाह 'देवो मा सविता पुनात्त्वि'ति तद्वै सुपूतं यं देवः सविता पुनात्तस्मादाह देवो मा सविता पुनात्त्वि'त्यच्छिद्द्रेण पवित्रेणे'ति यो वा ऽअयं पवत ऽएषोऽच्छिद्द्रं पवित्रमेतेनैतदाह 'सूर्य्यस्य रश्मिभिरि'त्येते वै पवितारो यत्सूर्य्यस्य रश्मयस्तस्मादाह सूर्य्यस्य रश्मिभिरिति ॥ २२ ॥ 'तस्य ते पवित्रपत' ऽइति । पवित्रपतिर्हि भवति 'पवित्रपूतस्ये'ति पवित्रपूतो हि भवति 'यत्कामः पुने तच्छकेयमि'ति यज्ञस्योदृचं गच्छानीत्त्येवैतदाह ॥ २३ ॥ अथाऽऽशिषामारम्भं वाचयति । 'आ वो देवास ऽईमहे वामं प्रयत्त्यद्ध्वरे । आ वो देवास ऽआशिषो यज्ञियासो हवामह' ऽइति तदस्मै स्वाः सतीरृत्त्विज ऽआशिष ऽआशासते ॥ २४ ॥ अथाऽङ्गुलीर्न्न्यचति । 'स्वाहा यज्ञं मनस' ऽइति द्वे 'स्वाहोरोरन्तरिक्षादि'ति द्वे 'स्वाहा द्यावापृथिवीभ्यामि'ति द्वे 'स्वाहा वातादारभ' ऽइति मुष्टीकरोति न वै यज्ञः

(१) शु० सं० अ० ४ क० ४। (२) शु० सं० अ० ४ क० ४। (३) शु० सं० अ० ४ क० ४। (४) शु० सं० अ० ४ क० ४। (५) शु० सं० अ० ४ क० ४। (६) शु० सं० अ० ४ क० ४। (७) शु० सं० अ० ४ क० ४। (८) शु० सं० अ० ४ क० ५। (९) शु० सं० अ० ४ क० ६। (१०) शु० सं० अ० ४ क० ६। (११) शु० सं० अ० ४ क० ६। (१२) शु० सं० अ० ४ क० ६।

प्रत्यक्षमिवाऽऽरभे यथाऽयं दण्डो वा वासो वा परोऽक्षं वै देवाः परोऽक्षं यज्ञः ॥ २५ ॥ स यदाह । स्वाहा यज्ञं मनस ऽइति तन्मनस ऽआरभते स्वाहोरोरन्तरिक्षादिति तदन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यामारभते ययोरिदꣳ सर्वमधि स्वाहा वातादारभ ऽइति वातो वै यज्ञस्तद्यज्ञं प्रत्यक्षमारभते ॥ २६ ॥ अथ यत्स्वाहा—स्वाहेति करोति । यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रो ऽएव वाचं यच्छति वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते ॥ २७ ॥ अथैनꣳ शालां प्रपादयति । स जघनेनाऽऽहवनीयमेत्यग्रेण गार्हपत्यꣳ सोऽस्य सञ्चरो भवत्या सुत्यायै तद्यदस्यैष सञ्चरो भवत्या सुत्याया-ऽअग्निर्वै योनिर्यज्ञस्य गर्भो दीक्षितोऽन्तरेण वै योनिं गर्भः सञ्चरति स यत्स तत्रैजति त्वत्परि त्वदावर्त्तते तस्मादिमे गर्भा ऽएजन्ति त्वत्परि त्वदावर्त्तन्ते तस्मादस्यैष सञ्चरो भवत्या सुत्यायै ॥ २८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



सर्वाणि ह वै दीक्षाया यजूꣳष्यौद्ग्रभणानि । उद्-गृभ्णीते वा ऽएषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षत ऽएतैरेव तद्यजुर्भिरुद्गृभ्णीते तस्मादाहुः सर्वाणि दीक्षाया यजूꣳष्यौद्ग्रभणानीति तत ऽएतान्न्यवाऽन्तरा माऽऽचक्षत-ऽऔद्ग्रभणानीत्याहुतयो ह्येता ऽआहुतिर्हि यज्ञः परोऽक्षं

वै यजुर्जपत्यथैष प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि ॥ १ ॥ ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजूꣳषीत्याचक्षते सम्पद एव कामाय चतुर्थꣳ हूयतेऽथ यत्पञ्चमꣳ स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तज्जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥ २ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ ३ ॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं वा ऽएष यज्ञꣳ सम्भरति यदेतानि जुहोति ॥ ४ ॥ तानि वै पञ्च जुहोति । संवत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति ॥ ५ ॥ अथाऽतो होमस्यैव । 'आकूत्यै प्रयुजेऽग्नये स्वाहे'त्या वा ऽअग्रे कुवते यजेयेति तद्यदेवाऽत्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥ ६ ॥ 'मेधायै मनसेऽग्नये स्वाहे'ति । मेधया वै मनसाऽभिगच्छति यजेयेति तद्यदेवाऽत्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥ ७ ॥ 'दीक्षायै तपसेऽग्नये स्वाहे'ति । अन्वेवैतदुच्यते नेत्तु हूयते ॥ ८ ॥ 'सरस्वत्यै पूष्णेऽग्नये स्वाहे'ति । वाग्वै सर-

(१) शु० सं० अ० ४ क० ७। (२) शु० सं० अ० ४ क० ७। (३) शु० सं० अ० ४ क० ७। (४) शु० सं० अ० ४ क० ७।

स्वती वाग्यज्ञः पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तद्यद्देवाऽत्र यज्ञस्य तद्देवैतत्सम्भृत्याऽऽत्मन्कुरुते ॥ ९ ॥ तदाहुः । अनद्धेवैता ऽआहुतयो हूयन्तेऽप्रतिष्ठिता ऽअदेवकास्तत्र नेन्द्रो न सोमो नाऽग्निरिति ॥ १० ॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । नाऽत ऽएकञ्चनाऽग्निर्वा ऽअद्धेवाऽग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता ऽअद्धेव तेन प्रतिष्ठितास्तस्मादु सर्वास्वेवाऽग्नये स्वाहेति जुहोति तत ऽएतान्याधीतयजूꣳषीत्याचक्षते ॥ ११ ॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । आत्मना वाऽअग्र ऽआकुवते यजेयेति तमात्मन ऽएव प्रयुङ्क्ते यत्तनुते ते ऽअस्यैते ऽआत्मन्देवते ऽआधीते भवत ऽआकूतिश्च प्रयुक् च ॥ १२ ॥ मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाऽभिगच्छति यजेयेति ते ऽअस्यैते ऽआत्मन्देवतेऽआधीते भवतो मेधा च मनश्च ॥ १३ ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती वाग्यज्ञः साऽस्यैषाऽऽत्मन्देवताऽऽधीता भवति वाक्पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तेऽस्यैत ऽआत्मन्पशवऽआधीता भवन्ति तद्यदस्यैता ऽआत्मन्देवता ऽआधीता भवन्ति तस्मादाधीतयजूꣳषि नाम ॥ १४ ॥ अथ चतुर्थीं जुहोति । 'आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी ऽउरोऽअन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहे'त्येषा ह नेदीयो यज्ञस्याऽपाꣳ हि कीर्त्तयत्यापो हि यज्ञो द्यावापृथिवी ऽउरो-

( १ ) शु० सं० अ० ४ क० ७ ।

३४

ऽअन्तरिक्षेति लोकानाᳲहि कीर्त्तयति बृहस्प्पतये हविषा विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म्म यज्ञ ऽएतेनो हैषा नेदीयो यज्ञस्य ॥१५॥ अथ यां पञ्चमीᳲस्रुचा जुहोति । सा हैव प्प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति व्वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥ १६ ॥ अथ यद् ध्रुवायामाज्ज्यं परिशिष्टं भवति । तज्जुह्वामानयति त्रिः स्रुवेणाऽज्यविलापन्या ऽअधि जुह्वां गृह्णाति यत्तृतीयं गृह्णाति तत्स्रुवमभिपूरयति ॥ १७ ॥ स जुहोति । 'व्विश्वो देवस्य नेतुर्म्मर्त्तो व्वुरीत सख्यम् । व्विश्वो राय ऽइषुद्ध्यति द्युम्नं व्वृणीत पुष्यसे स्वाहे'ति ॥ १८ ॥ सैषा देवताभिः पङ्क्तिर्ब्भवति । व्विश्वो देवस्येति वैश्वदेवं नेतुरिति सावित्रं मर्त्तो व्वुरीतेति मैत्रं द्युम्नं व्वृणीतेति बार्हस्पत्त्यं द्युम्नᳲहि बृहस्पतिः पुष्यस ऽइति पौष्णᳲ ॥ १९ ॥ सैषा देवताभिः पङ्क्तिर्ब्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्त्सरस्यैतमेवैतया-ऽऽप्प्नोति यद्देवताभिः पङ्क्तिर्ब्भवति ॥ २० ॥ तां व्वा-ऽअनुष्टुभा जुहोति । व्वाग्वा ऽअनुष्टुब्वाग्यज्ञस्तद्यज्ञं प्रत्त्यक्ष-माप्प्नोति ॥ २१ ॥ तदाहुः । एतामेवैकां जुहुयाद्यस्म्मै कामा-येतरा हूयन्त ऽएतयैव तं काममाप्प्नोतीति तां वै यद्येकां जुहुयात्पूर्ण्णां जुहुयात्सर्व्वं वै पूर्ण्णᳲसर्व्वमेवैनयैतदाप्प्नोत्यथ यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति तां पूर्ण्णां जुहोत्यन्वै-वैतदुच्च्यते सर्व्वास्त्वेव हूयन्ते ॥ २२ ॥ तां व्वा ऽअनुष्टुभा जुहोति । सैषाऽनुष्टुप्सत्त्येकत्रिᳲशदक्षरा भवति दश

(१) शु० सं० अ० ४ क० ८ ।

पाण्ण्या ऽअङ्गुलयो दश पाद्या दश प्प्राणा ऽआत्मैकत्रिꣳशो यस्मिन्नेते प्प्राणाः प्प्रतिष्ठिता ऽएतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसम्मितो यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैनयैतदाप्प्नोति यदनुष्टुभैकत्रिꣳशदक्षरया जुहोति ॥ २३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



दक्षिणेनाऽऽहवनीयं प्राचीनग्रीवे कृष्णाजिने ऽउपस्तृणाति । तयोरेनमधि दीक्षयति यदिद्वे भवतस्तदनयोर्ल्लोकयोरूपं तदेनमनयोर्ल्लोकयोरधि दीक्षयति ॥ १ ॥ सम्बद्धान्ते भवतःसंबद्धान्ताविवहीमौ लोकौ तद्वैसमुते पश्चाद्भवतस्तदिमावेव लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति ॥२॥ यद्यु ऽएकं भवति । तदेषां लोकानाꣳ रूपं तदेनमेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि तान्यन्तरिक्षस्य रूपं तदेनमेषु लोकेष्वधि दीक्षयति ॥ ३ ॥ अन्तकमु तर्हि पश्चात्प्रत्यस्येत् । तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधि दीक्षयति ॥४॥ अथ जघनेन कृष्णाजिने पश्चात् प्राङ् *जान्वाक्न ऽउपविशति। स यत्र शुक्लानां च

* जान्वाक्नः सङ्कुचितजानुक इत्यर्थः ।

कृष्णानां च सन्धिर्ब्भवति तदेवमभिमृश्य जप[1]त्यृक्सामयोः शिल्पे स्त्थ, ऽइति यद्वै प्प्रतिरूपं तच्छिल्पमृचां च साम्म्नां च प्प्रतिरूपे स्त्थ ऽइत्त्येवैतदाह ॥५॥ 'ते वा[2]मारभ' ऽइति। गर्ब्भो वा ऽएष भवति यो दीक्षते स छन्दाᳫंसि प्प्रविशति तस्मान्न्यक्नाङ्गुलिरिव भवति न्न्यक्नाङ्गुलय ऽइव हि गर्ब्भाः ॥ ६ ॥ स यदाह । ते वामारभ ऽइति ते वाम्प्रविशामीत्त्येवैतदाह 'ते मा[3] पातमास्य यज्ञस्योदृच' ऽइति ते मा गोपायतमास्य यज्ञस्य सᳫंस्थाया ऽइत्त्येवैतदाह ॥ ७ ॥ अथ दक्षिणेन जानुनाऽऽरोहति । 'शर्म्मासि शर्[4]म्म मे यच्छे'ति चर्म्म वा ऽएतत्कृष्णस्य तदस्य तन्मानुषᳫं शर्म्म देवत्रा तस्मादाह शर्म्मासि शर्म्म मे यच्छेति 'नम[5]स्ते ऽअस्तु मा मा हिᳫंसीरि'ति श्रेयाᳫंसं व्वा ऽएष ऽउपाऽधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्मा ऽएवैतद्यज्ञाय निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्ते ऽअस्तु मा मा हिᳫंसीरिति ॥ ८ ॥ स वै जघनार्द्धे ऽइवैवाऽग्र ऽआसीत। अथ यदग्र ऽएव मद्ध्य ऽउपविशेद्य ऽएनं तत्राऽनुव्व्याहरेद्द्रप्स्यति वा प्प्र वा पतिष्यतीति तथा हैव स्यात्तस्माज्जघनार्द्धे ऽइवैवाऽग्र ऽआसीत ॥ ९ ॥ अथ मेखलां परिहरते । अङ्गिरसो ह वै दीक्षितानबल्यमविन्दत्ते नाऽन्न्यद्व्रतादशनमवाऽकल्पयँस्त ऽएतामूर्ज्जमपश्यन्त्समाप्तिं तां मद्ध्यत ऽआत्मन ऽऊर्ज्जमदधत समाप्तिं तया समाप्नु-

(१) शु० सं० अ० ४ क० १। (२) शु० सं० अ० ४ क० १। (३) शु० सं० अ० ४ क० १। (४) शु० सं० अ० ४ क० १। (५) शु० सं० अ० ४ क० १।

वँस्तथो ऽएवैष ऽएतां मद्धचत ऽआत्मन ऽऊर्ज्जं धत्ते समाप्तिं तया समाप्नोति ॥ १० ॥ सा वै शाणी भवति । मृद्व्य-सदिति न्न्वेव शाणी यत्र वै प्प्रजापतिरजायत गब्भों भूत्त्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्बमासीत्ते शणास्तस्मात्ते पूतयो व्वान्ति यद्वस्य जराय्वासीत्तद्दीक्षितवसनमन्तरं वा ऽउल्बं जरायुणो भवति तस्मादेषाऽन्तरा व्वाससो भवति यथैवाऽतः प्प्रजापतिरजायत गब्भों भूत्त्वैतस्माद्यज्ञादेवमेवै-षोऽतो जायते गब्भों भूत्त्वैतस्माद्यज्ञात् ॥ ११ ॥ सा वै त्रिवृद्भवति । त्रिवृद्धचन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥ १२॥ मुञ्जवल्शेनाऽन्न्वस्ता भवति । व्वज्ज्रो वै शरो व्विरक्षस्तायै स्तुकासर्गंᳬ सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्न्या रज्जवो मानुषी स्याद्यद्वपसलवि सृष्टा स्यात्पितृदेवत्या स्यात्तस्मा-त्स्तुकासर्गंᳬ सृष्टा भवति ॥ १३ ॥ तां परिहरते । 'ऊर्ग्ग-स्याङ्गिरसी'त्यङ्गिरसो ह्येतामूर्ज्जमपश्य'न्नूर्ण्णम्म्रदा[२] ऽऊर्ज्जं मयि धेही'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १४ ॥ अथ-नीविमुद्गूहते । 'सोमस्य[३] नीविरसी'त्यदीक्षितस्य वा ऽअस्यैषाऽग्रे नीविब्भवत्यथाऽत्र दीक्षितस्य सोमस्य तस्मा-दाह सोमस्य नीविरसीति ॥ १५ ॥ अथ प्प्रोर्ण्णुते । गब्भों वा ऽएष भवति यो दीक्षते प्प्राऽऽवृता वै गब्भ्र्मा ऽउल्बेनेव जरायुणेव तस्माद्वै प्प्रोर्ण्णुते ॥१६॥ स प्प्रोर्ण्णुते । 'व्विष्णो[४]ः

(१) शु० सं० अ० ४ क० १० । (२) शु० सं० अ० ४ क० १० । (३) शु० सं० अ० ४ क० १० । (४) शु० सं० अ० ४ क० १० ।

शर्म्माऽसि शर्म्म यजमानस्ये'त्युभयं वा ऽएषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्ब्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्म्माऽसि शर्म्म यजमानस्येति ॥ १७ ॥ अथ कृष्णविषाणाᳬ सिचि बध्नीते। देवाश्च वा ऽअसुराश्चोभये प्प्राजापत्याः प्प्रजापतेः पितुर्द्दायमुपेयुर्म्मन ऽएव देवा ऽउपायन्वाचमसुरा यज्ञमेव तद्देवा ऽउपायन्वाचमसुरा ऽअमूमेव देवा ऽउपायन्निमामसुराः ॥ १८ ॥ ते देवा यज्ञमब्रुवन्। योषा वा ऽइयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्त्वेति स्वयं वा हैवैक्षत योषा वा ऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपाऽऽमन्त्रयत सा हाऽस्मा ऽआरकादिवैवाऽग्र ऽआसूयत्तस्मादु स्त्री पुᳬसोपमन्त्रिताऽऽरकादिवैवाऽग्रेऽसूयति स होवाचाऽऽरकादिव वै म ऽआसूयीदिति ॥ १९ ॥ ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्त्वेति तामुपाऽऽमन्त्रयत सा हाऽस्मै निपलाशमिवोवाद तस्मादु स्त्री पुᳬसोपमन्त्रिता निपलाशमिवैव वदति स होवाच निपलाशमिव वै मेऽवादीदिति ॥ २० ॥ ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्त्वेति तामुपाऽऽमन्त्रयत सा हैनं जुहुवे तस्मादु स्त्री पुमाᳬसᳬ ह्वयन्त ऽएवोत्तमᳬ स होवाचाऽऽह्वत वै मेति ॥ २१ ॥ ते देवा ऽईक्षाञ्चक्रिरे। योषा वा ऽइयं वाग्यदेनं न युवितेहैव मा तिष्ठन्तमब्भ्येहीति ब्रूहि तां तु न ऽआगतां प्रति प्प्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमब्भ्येयाय तस्मादु स्त्री पुमाᳬसᳬ सᳬस्कृते

तिष्ठन्तमभ्यैति ताᳬं हैभ्य ऽआगतां प्रति प्रोवाचेयं वा-ऽआगादिति ॥ २२ ॥ तां देवाः। असुरेभ्योऽन्तरायँस्ताᳬं-स्वीकृत्याऽग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानाᳬं स यामेवाऽमूमनुष्टुभा जुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत तेऽसुरा ऽआत्तवचसो हेऽलवो हेऽलव ऽइति वदन्तः पराबभूवुः ॥ २३ ॥ तत्रैतामपि वाचमूदुः। उपजिज्ञास्याᳬं स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा वा वागेव-मेवैष द्विषताᳬं सपत्नानामादत्ते वाचन्तेऽस्याऽऽत्तवचसः पराभवन्ति य ऽएवमेतद्वेद ॥ २४ ॥ सोऽयं यज्ञो वाचम-भिदध्यौ। मिथुन्न्येनया स्यामितिं ताᳬं सम्बभूव ॥ २५ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे। महद्वा ऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाऽभिभवेदिति स-ऽइन्द्र ऽएव गर्भो भूत्वैतन्मिथुनं प्रविवेश ॥ २६ ॥ स ह संवत्सरे जायमान ऽईक्षाञ्चक्रे। महावीर्य्या वा ऽइयं योनिर्या मामदीधरत यद्वै मेतो महदेवाऽभ्वं नाऽनुप्रजा-येत यन्मा तन्नाऽभिभवेदिति ॥ २७ ॥ तां प्रतिपरामृश्या-ऽऽवेष्ट्याऽच्छिनत्। तां यज्ञस्य शीर्षन्प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं यो सा योनिः सा कृष्णविषाणाऽथ यदेनामिन्द्र ऽआवेष्ट्याऽऽच्छिनत्तस्मादा-वेष्टितेव स यथैवाऽत ऽइन्द्रोऽजायत गर्भो भूत्वैतस्मा-न्मिथुनादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथु-नात् ॥ २८ ॥ तां वा ऽउत्तानामिव बध्नाति। उत्तानेव वै योनिर्गर्भं बिभर्त्यथ दक्षिणां भ्रुवमुपर्युपरि ललाट-

मुपस्पृश'तीन्द्रस्य योनिरसी'तीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन्प्रविशत्त्यतो वा जायमानो जायते तस्मादाहेन्द्रस्य योनिरसीति ॥ २९ ॥* अथोल्लिखति । 'सुसस्याः कृषीस्कृधी'ति यज्ञमेवैतज्जनयति यदा वै सुषमं भवत्त्यथाऽलं यज्ञाय भवति यदो दुःषमं भवति न तर्ह्यात्मने च नाऽलं भवति तद्यज्ञमेवैतज्जनयति ॥ ३० ॥ अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वा ऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदुपास्यन्म्रियेत्ततो दीक्षितः पामनो भवितोर्दीक्षितं वा ऽअनु रेताᳫंसि ततो रेताᳫंसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा वा ऽएतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नाऽन्न्येन कृष्णविषाणायाः ॥३१॥ अथाऽस्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै ॥३२॥ औदुम्बरो भवति। अन्नं वा ऽऊर्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्याऽवरुद्ध्यै तस्मादौदुम्बरो भवति ॥३३॥ मुखसम्मितो भवति । एतावद्वै वीर्य्यᳪ स यावदेव वीर्य्यं तावाँस्तद्भवति यन्मुखसम्मितः ॥ ३४ ॥ तमुच्छ्रयति । 'उच्छ्रयस्व वनस्पत ऽऊर्द्ध्वो मा पाह्यᳪ हस ऽआस्य यज्ञस्योदृच' ऽइत्त्यूर्द्ध्वो मा गोपायाऽस्य यज्ञस्य सᳫंस्थाया ऽइत्त्येवैतदाह ॥ ३५ ॥ अत्र हैके । अङ्गुलीश्च न्न्यचन्ति वाचं च यच्छन्त्यतो हि

* अत्र शतम् १५०० ॥

( १ ) शु० सं० अ० ४ क० १० । ( २ ) शु० सं० अ० ४ क० १० । ( ३ ) शु० सं० अ० ४ क० १० ।

किञ्च न जपिष्यन्भवतीति ब्रुवन्तस्तदु तथा न कुर्य्याद्यथा पराश्वं धावन्तमनुलिप्सेत तं नाऽनुलभेतैवꣳ ह स यज्ञं नाऽनुलभते तस्मादमुत्रैवाऽङ्गुलीर्न्न्यचेदमुत्र वाचं यच्छेत् ॥ ३६ ॥ अथ यद्दीक्षितः । ऋचं वा यजुर्वा साम वाऽभिव्व्याहरत्यभिस्स्थिरमभिस्स्थिरमेवैतद्यज्ञमारभते तस्मादमुत्रैवाऽङ्गुलीर्न्न्यचेदमुत्र वाचं यच्छेत् ॥ ३७ ॥ अथ यद्वाचं यच्छति । वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्तेऽथ यद्वाचंयमो व्व्याहरति तस्मादु हैष विसृष्टो यज्ञः पराङ्ङावर्त्तते तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्प्रायश्चित्तिः ॥ ३८ ॥ अथैकऽउद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मणऽइति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्त्ययं महावीर्य्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्त्व ऽआह त्रिवृद्धि यज्ञः ॥ ३९ ॥ अथ यद् ब्राह्मण ऽइत्याह । अनद्धेव वा ऽअस्याऽतः पुरा जानं भवतीदꣳ ह्याहू रक्षाꣳसि योषितमनु सचन्ते तदुत रक्षाꣳस्येव रेत ऽआदधतीत्यथाऽत्राऽद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मणऽइत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न्न सवनकृतꣳ हन्यादेनस्वी हैव सवनकृतेति ॥ ४० ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १२४ ॥

व्वाचं यच्छति । स व्वाचंयम ऽआस्त ऽआस्तमयात्त- द्यद्वाचं यच्छति ॥ १ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्य्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैर- नभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्त्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो- ऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ २ ॥ तद्वा- ऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं व्वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते व्वाग्वै यज्ञः ॥ ३ ॥ तामस्तमिते व्वाचं व्विसृजते । संव्वत्सरो वै प्प्रजापतिः प्प्रजापतिर्य्यज्ञोऽहोरात्रे वै संव्वत्सर ऽएते ह्येनं परिप्प्लवमाने कुरुतः सोऽहं न दीक्षिष्ट स रात्रिं प्राप्त्स यावानेव यज्ञो यावत्त्यस्य मात्रा तावन्तमेवैतदाप्त्वा व्वाचं व्विसृजते ॥ ४ ॥ तद्धैके । नक्षत्रं दृष्ट्वा व्वाचं व्विसर्ज्जयन्त्यत्रा- ऽनुष्टुग्याऽस्तमितो भवतीति व्वदन्तस्तदु तथा न कुर्य्याद्यद्ध ते स्युर्य्यन्मेघः स्यात्तस्माद्यत्रैवाऽनुष्टुग्याऽस्तमितं मन्न्येत तदेव व्वाचं व्विसर्ज्जयेत् ॥ ५ ॥ अनेनो हैके व्वाचं व्विसर्ज्जय- न्ति । 'भूर्भुवः स्वरि'ति यज्ञमाप्प्याययाऽभो यज्ञꣳ सन्दधम- ऽइति व्वदन्तस्तदु तथा न कुर्य्यान्न ह स यज्ञमाप्प्याययति न सन्दधाति य ऽएतेन व्वाचं व्विसर्ज्जयति ॥ ६ ॥ अनेनैव व्वाचं व्विसर्ज्जयेत् । 'व्रतं कृणुत व्रतं कृणुताऽग्निर्ब्रह्माऽग्नि- र्य्यज्ञो व्वनस्पतिर्य्यज्ञिय' ऽइत्त्येष ह्यस्याऽत्र यज्ञो भवत्त्ये- तद्धविर्य्यथा पुराऽग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञꣳ सम्भृत्य यज्ञे

(१) शु० सं० अ० ३६ क० ३ । (२) शु० सं अ० ४ क० ११ ।

यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्तनोति सन्ततꣳ ह्येवा-ऽस्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्त्व ऽआह त्रिवृद्धि यज्ञः ॥ ७ ॥ अथाऽग्निमभ्यावृत्त्य व्वाचं व्विसृजते। न ह स यज्ञमाप्प्याययति न सन्दधाति योऽतोऽन्न्येन व्वाचं व्विसृजते स प्प्रथमं व्व्याहरन्त्सत्त्यं व्वाचोऽभिव्व्याहरति ॥ ८ ॥ अग्निर्ब्रह्मेति। अग्निर्ह्येव ब्रह्माऽग्निर्य्यज्ञ ऽइत्त्यग्निर्ह्येव यज्ञो व्वनस्पतिर्य्यज्ञिय ऽइति व्वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्न्यद्व्वनस्पतयो न स्युस्तस्मादाह व्वनस्पतिर्य्यज्ञिय ऽइति ॥ ९ ॥ अथाऽस्मै व्रतꣳ श्रपयन्ति। देवान्न्वा ऽएष उपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवति श्रृतं व्वै देवानाꣳ हविर्न्नाऽश्रृतं तस्माच्छ्रपयन्ति तदेष ऽएव व्रतयति नाऽग्नौ जुहोति तद्यदेष ऽएव व्रतयति नाऽग्नौ जुहोति ॥१०॥ यज्ञेन वै देवाः। इमां जितिं जिग्युर्य्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्त्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्त्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ ११ ॥ तद्वा ऽऋषीणामनुश्रुतमास। ते यज्ञꣳ समभरन्न्यथाऽयं यज्ञः सम्भृत ऽएष वा ऽअत्र यज्ञो भवति यो दीक्षत ऽएष ह्येनं तनुत ऽएष ऽएनं जनयति तद्यदेवाऽत्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत्पुनराप्प्याययति यदेष ऽएव व्रतयति नाऽग्नौ जुहोति न ह्याऽऽप्प्याययेद्यदग्नौ जुहुयाज्जुहृदु हैव मन्न्येत नाऽजुहृत् ॥ १२ ॥ इमे वै प्प्राणाः। मनोजाता मनोयुजो दक्षक्रतवो व्वागेवाऽग्निः प्प्राणोदानौ

मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा ऽएतासु हैवाऽस्यैतद्देवतासु हुतं भवति ॥ १३ ॥ तद्धैके । प्रथमे व्रत ऽउभौ व्रीहियवावावपन्त्युभाभ्याᳪं रसाभ्यां यदेवाऽत्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तत्पुनराप्याययाम ऽइति वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवाऽतः कामयेत तस्य व्रतं कुर्य्यादेतदु ह्येवाऽस्यैता ऽउभौ व्रीहियवावन्वारब्धौ भवत ऽइति तदु तथा न कुर्य्यान्न ह स यज्ञमाप्याययति न सन्दधाति य ऽउभौ व्रीहियवावावपति तस्मादन्यतरमेवाऽऽवपेद्व्रीहिं वा ऽअस्यैता ऽउभौ व्रीहियवौ भवतः स यदेवाऽस्यैतौ हविर्भवतस्तदेवाऽस्यैतावान्वारब्धौ भवतो यद्यु व्रतदुघा न दुहीत यस्यैवाऽतः कामयेत तस्य व्रतं कुर्य्यात् ॥ १४ ॥ तद्धैके । प्रथमे व्रते सर्वौषधᳪं सर्वसुरभ्यावपन्ति यदि दीक्षितमार्त्तिर्विन्देद्येनैवाऽतः कामयेत तेन भिषज्येद्यथा व्रतेन भिषज्येदिति तदु तथा न कुर्य्यान्मानुषᳪं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति यदि दीक्षितमार्त्तिर्विन्देद्येनैवाऽतः कामयेत तेन भिषज्येत्स माप्तिर्ह्येव पुण्या ॥१५॥ अथाऽस्मै व्रतं प्रयच्छति । अतिनीय मानुषं कालᳪं सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्णे व्याकृत्या ऽएव दैवं चैवैतन्मानुषं च व्याकरोति ॥ १६ ॥ अथाऽस्मै व्रतं प्रदास्यन्नप ऽउपस्पर्शयति । 'दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसᳪं सुतीर्त्था नो ऽअसद्वश' ऽइति मानुषाय वा ऽएष पुराऽशनायाऽव-

(१) शु० सं० अ० ४ क० ११ ।

नेनिक्तेऽथाऽत्र दैव्यै धिये तस्मादाह दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुतीर्त्था नो ऽअसद्वश ऽइति स यावत्क्रियच्च व्रतं व्रतयिष्यन्नप ऽउपस्पृशेदेतेनैवोपस्पृशेत् ॥ १७ ॥ अथ व्रतं व्रतयति । 'ये[2] देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहे'ति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ १८ ॥ अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते । 'श्वात्रा[3]ः पीता भवत यूयमापो ऽअस्माकमन्तरुदरे सुशेवाः । ता ऽअस्मभ्यमयक्ष्मा ऽअनमीवा ऽअनागसः स्वदन्तु देवीरमृता ऽऋतावृध' ऽइति देवान्वा ऽएष ऽउपाऽऽवर्त्तते यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै देवानाꣳ हविरथैतद्व्रतप्रदो मिथ्याकरोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत यूयमापो ऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्मा ऽअनमीवा ऽअनागसः स्वदन्तु देवीरमृता ऽऋतावृध ऽइति स यावत्क्रियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् ॥ १९ ॥ अथ यत्र मेक्ष्यन्भवति । तत्कृष्णविषाणया लोष्टं वा किञ्चिद्वोपह'न्तीयं ते[4] यज्ञिया तनूरि'तीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या

(१) शु० सं० अ० ४ क० ११। (२) शु० सं० अ० ४ क० १२। (३) शु० सं० अ० ४ क० १२। (४) शु० सं० अ० ४ क० १३।

तस्या ऽएतदुद्गृह्णैव यज्ञियां तनूमथाऽयज्ञियꣳ शरीरमभिमेह'त्यपो[1] मुञ्चामि न प्रजामि'त्युभयं वा ऽअत ऽएत्याऽऽपश्च रेतश्च स ऽएतदप ऽएव मुञ्चति न प्रजा'मꣳहोमुचꣳ स्वाहा कृता' ऽइत्यꣳहस ऽइव ह्येता मुञ्चन्ति यदुदुरे गृष्टितं भवति तस्मादाहाऽꣳहोमुच ऽइति स्वाहा कृताꣳ 'पृथिवी माऽऽविशते'त्या'हुतयो भूत्वा शान्ताꣳ पृथिवीमाविशतेत्येवैतदाह ॥ २० ॥ अथ पुनर्लोष्टं न्यस्यति। 'पृथिव्या सम्भवे'तीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या ऽएतदुद्धृह्यैव यज्ञियां तनूमथाऽयज्ञियꣳ शरीरमभ्यमिक्षत्तामेवाऽस्यामेतत्पुनरूर्द्ध्वज्ञियां तनूं दधाति तस्मादाह पृथिव्या सम्भवेति ॥ २१ ॥ अथाऽग्नये परिदाय स्वपिति। देवान्न्वा ऽएष ऽउपा ऽवर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाꣳ स्वपन्त्यनवरुद्धो वा ऽएतस्याऽस्वप्नो भवत्यग्निर्वै देवानां व्रतपतिस्तस्मा ऽएवैतत्परिदाय स्वपि'त्यग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमही'त्यग्ने त्वं जागृहि वयꣳ स्वप्स्याम ऽइत्येवैतदाह 'रक्षा णो ऽअप्रयुच्छन्नि'ति गोपाय नोऽप्रमत्त ऽइत्येवैतदाह 'प्रबुधे नꣳ पुनस्कृधी'ति यथेतꣳ सुप्त्वा स्वस्ति प्रबुद्ध्यामहा ऽएवं नꣳ कुर्वित्येवैतदाह ॥ २२ ॥ अथ यत्र सुप्त्वा पुनर्नाऽवद्रास्यन्भवति। तद्वाचयति पुनर्म्मनꣳ पुनरायुर्म्म ऽआगन्पुनꣳ प्राणꣳ पुनरात्मा म ऽआगन्पुनश्चक्षुꣳ

(१) शु० सं० अ० ४ क० १३। (२) शु० सं० अ० ४ क० १३। (३) शु० सं० अ० ४ क० १३। (४) शु० सं० अ० ४ क० १३। (५) शु० सं० अ० ४ क० १४। (६) शु० सं० अ० ४ क० १४। (७) शु० सं० अ० ४ क० १४।

पुनः श्रोत्रं म ऽआगन्निति सर्वे ह वा ऽएते स्वपतोऽपक्रामन्ति प्प्राण ऽएव न तैरेवैतत्सुप्त्वा पुनः सङ्गच्छते तस्मादाह 'पुनर्म्मनः[1] पुनरायुर्म्म ऽआगन्पुनः प्प्राणः पुनरात्मा म ऽआगन्पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन्। वैश्वानरो ऽअदब्धस्तनूपा ऽअग्निर्न्नः पातु दुरितादवद्यादि'ति तद्य-देवाऽत्र स्वप्नेन वा येन वा मिथ्याकर्म्म तस्मान्नः सर्वस्मा-दग्निर्ग्गोपायत्विरत्येवैतदाह तस्मादाह वैश्वानरो ऽअदब्धस्त-नूपा ऽअग्निर्न्नः पातु दुरितादवद्यादिति ॥ २३ ॥ अथ यद्दीक्षितः। अव्रत्यं वा व्याहरति क्रुद्ध्यति वा तन्मिम-थ्याकरोति व्रतं प्रमीणात्यक्रोधो ह्येव दीक्षितस्याऽग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति 'त्वमग्ने[2] व्रतपा ऽअसि देव ऽआ मर्त्त्येष्वा। त्वं यज्ञेष्वीड्य' ऽइति तस्यो हैषा प्प्रायश्चित्तिस्तथो हाऽस्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपा ऽअसि देव ऽआ मर्त्त्येष्वा। त्वं यज्ञेष्वीड्य ऽइति ॥२४॥ अथ यद्दीक्षितायाऽभिहरन्ति। तस्मिन्नवाचयति 'रास्वेयत्[3]सोमा भूयो भरे'ति सोमो ह वा ऽअस्मा ऽएतद्युते यद्दीक्षितायाऽभिहरन्ति स यदाह रास्वे-यत्सोमेति रास्व न ऽइयत्सोमेत्त्येवैतदाहा भूयो भरेत्त्या नो भूयो हरेत्त्येवैतदाह 'देवो[4] नः सविता वसोर्द्दाता वस्वदादि'ति तथो हाऽस्मा ऽएतत्सवितृप्प्रसूतमेव दानाय भवति ॥ २५ ॥ पुराऽस्तमयादाह। दीक्षित वाचं यच्छेति

(१) शु० सं० अ० ४ क० १५। (२) शु० सं० अ० ४ क० १६। (३) शु० सं० अ० ४ क० १६। (४) शु० सं० अ० ४ क० १६।

तामस्तमिते व्वाचं व्विसृजते पुरोदयादाह दीक्षित व्वाचं यच्छेति तामुदिते व्वाचं व्विसृजते सन्तत्या ऽएवाऽऽहरेवैतद्रात्र्या सन्तनोत्त्यहा रात्रिम् ॥ २६ ॥ नैनमन्न्यत्र चरन्तमभ्यस्तमियात् । न स्वपन्तमभ्युदियात्स यदेनमन्न्यत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदियादह्न ऽएनं तदन्तरियान्नाऽत्र प्प्रायश्चित्तिरस्ति प्प्रातिगुप्प्यमेवैतस्मान्न पुराऽवभृथादपोऽभ्यवेयान्नैनमभिवर्षेदनवक्लृप्तᳪ ह तद्यत्पुराऽवभृथादपोऽभ्यवेयाद्यद्वैनमभिवर्षेदथ परिह्वालं व्वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताम् ॥ २७ ॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यᳪ स्यादिति ते यज्ञस्य रसं धीत्त्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्त्वा तिरोऽभवन्नथयदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ २८ ॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञᳪ सममभरन्न्यथाऽयं यज्ञः सम्भृत ऽएवं व्वा ऽएष यज्ञᳪ सम्भरति यो दीक्षते व्वाग्वै यज्ञस्तद्यदेवाऽत्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत्पुनराप्प्याययति यत्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृतां न हाऽऽप्प्याययेद्यत्प्रसृतां मानुषीं व्वाचं व्वदेत्तस्मात्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताᳪ ॥ २९ ॥ स वै धीक्षते । व्वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि व्वाग्धीक्षितो ह वै नामैतद्यद्दीक्षित ऽइति ॥ ३० ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



आदित्यं चरुं प्रायणीयं निर्वपति । देवा ह वा ऽअस्यां यज्ञं तन्वाना ऽइमां यज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयाञ्चकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तद्ध ह यज्ञं न प्प्रजज्ञुः ॥ १ ॥ ते होचुः । यस्व-स्यामेव यज्ञमतप्स्महि कथं नु नोऽमुहत्कथं न प्प्रजानीम ऽइति ॥ २ ॥ ते होचुः । अस्यामेव यज्ञं तन्वाना ऽइमां यज्ञादन्तरगाम सा न ऽइयमेव यज्ञममूमुहदिमामेवोपधावा-मेति ॥ ३ ॥ ते होचुः । यन्नु त्वय्येव यज्ञमतप्स्महि कथं नु नोऽमुहत्कथं न प्प्रजानीम ऽइति ॥ ४ ॥ सा होवाच । मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात सा वोऽहमेव यज्ञममूमुहं भागं नु मे कल्पयताऽथ यज्ञं द्रक्ष्यथाऽथ प्प्रज्ञास्यथेति ॥ ५ ॥ तथेति देवा ऽअब्रुवन् । तवैव प्प्राय-णीयस्तवोदयनीय ऽइति तस्मादेष ऽआदित्य ऽएव प्प्राय-णीयो भवत्यादित्य ऽउदयनीय ऽइयछ्ह ह्येवाऽदितिस्ततो यज्ञमपश्यँस्तमतन्वत ॥ ६ ॥ स यदादित्यं चरुं प्रायणीयं निर्वपति । यज्ञस्यैव दृष्ट्यै यज्ञं दृष्ट्वा क्रीणानि तं तनवा-ऽइति तस्मादादित्यं चरुं प्रायणीयं निर्वपति तद्वै निरुप्तछ हविरासीदनिष्टा देवता ॥ ७ ॥ अथैभ्यः पथ्या स्वस्तिः प्प्राऽरोचत । तामयजन्वाग्वै पथ्या स्वस्तिर्वाग्यज्ञस्तद्य-ज्ञमपश्यँस्तमतन्वत ॥ ८ ॥ अथैभ्योऽग्निः प्प्राऽरोचत । तमयजन्त्स यदाग्नेयं यज्ञस्याऽऽसीत्तदपश्यन्न्यद्वै शुष्कं यज्ञस्य तदाग्नेयं तदपश्यँस्तदतन्वत ॥ ९ ॥ अथैभ्यः सोमः प्प्राऽरोचत । तमयजन्त्स यत्सौम्यं यज्ञस्याऽऽसी-

त्तदपश्यन्न्यद्वा ऽआर्द्रं यज्ञस्य तत्सौम्म्यं तदपश्यँस्तदतन्न्वत ॥ १० ॥ अथैब्भ्यः सविता प्प्राऽरोचत । तमयजन्न्पशवो वै सविता पशवो यज्ञस्तद्यजमपश्यँस्तमतन्न्वताऽथ यस्यै देवतायै हविर्न्निरुप्तमासीत्तामयजन् ॥ ११ ॥ ता वा ऽएताः। पञ्च देवता यजति यो वै स यज्ञो मुग्ध ऽआसीत्पाङ्क्तो वै स ऽआसीत्तमेताभिः पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १२ ॥ ऋतवो मुग्धा ऽआसन्न्पञ्च । तानेताभिरेव पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १३ ॥ दिशो मुग्धा ऽआसन्न्पञ्च । ताऽएताभिरेव पञ्चभिर्द्देवताभिः प्प्राऽजानन् ॥ १४ ॥ उदीचीमेव दिशम् । पत्थ्यया स्वस्त्या प्प्राऽजानँस्तस्मादत्रोत्तरा हि वाग्वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीचीछं ह्येतया दिशं प्राऽजानन्नुदीची ह्येतस्यै दिक् ॥ १५ ॥ प्राचीमेव दिशम् । अग्निना प्प्राऽजानँस्तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्त्योपाऽऽसते प्प्राचीछं ह्येतेन दिशं प्राऽजानन्न्प्राची ह्येतस्य दिक् ॥ १६ ॥ दक्षिणामेव दिशछं । सोमेन प्प्राऽजानँस्तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः पितृदेवत्त्यः सोम ऽइति दक्षिणाछं ह्येतेन दिशं प्प्राऽजानन्दक्षिणा ह्येतस्य दिक् ॥ १७ ॥ प्रतीचीमेव दिशछं । सवित्रा प्प्राऽजानन्नेष वै सविता य ऽएष तपति तस्मादेष प्प्रत्यङ्ङेति प्प्रतीचीछं ह्येतेन दिशं प्प्राऽजानन्न्प्रतीची ह्येतस्य दिक् ॥ १८ ॥ ऊर्द्ध्वामेव दिशम् । अदित्त्या प्प्राऽजानन्नियं वा ऽअदितिस्तस्मादस्यामूर्द्ध्वा ऽओषधयो जायन्त ऽऊर्द्ध्वा वनस्पतय ऽऊर्द्ध्वाछं ह्येतया

दिशं प्राऽजानन्नूर्द्ध्वा ह्येतस्यै दिक् ॥ १९ ॥ शिरो वै यज्ञस्याऽऽतिथ्यम् । बाहू प्प्रायणीयोदयनीयावभितो वै शिरो बाहू भवतस्तस्मादभित ऽआतिथ्यमेते हविषी भवतः प्प्रायणीयश्चोदनीयश्च ॥ २० ॥ तदाहुः । यदेव प्प्रायणीये क्रियेत तदुदयनीये क्रियेत यदेव प्प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति तदपोद्धृत्य निदधाति ताᳬं स्थालीᳬं *सक्षामकर्षां प्रमृज्य †मेक्षणं निदधाति य ऽएव प्प्रायणीयस्यर्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो भवन्ति तद्यदेतत्समानं यज्ञे क्रियते तेन बाहू सदृशौ तेन सरूपौ ॥ २१ ॥ तदु तथा न कुर्य्यात् । काममेवैतद्बर्हिरनुप्प्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्य ऽएव प्प्रायणीयस्यार्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो भवन्ति यद्यु ते विप्प्रेताः स्युरप्प्यन्न्य ऽएव स्युः स यद्वै समानीर्द्देवता यजति समानानि हवीᳬंषि भवन्ति तेनैव बाहू सदृशौ तेन सरूपौ ॥ २२ ॥ स वै पञ्च प्प्रायणीये देवता यजति । पञ्चोदयनीये तस्मात्पञ्चेत्थादङ्गुलयः पञ्चेत्थात्तच्छुँर्व्वन्तं भवति न पत्नीः सँय्याजयन्ति पूर्व्वार्द्धं वा ऽअन्न्वात्मानो बाहू पूर्व्वार्द्धमेवैतद्यज्ञस्याऽभिसंस्करोति तस्माच्छुँर्व्वन्तं भवति न पत्नीः सँय्याजयन्ति ॥ २३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



* 'सक्षामकर्षाम्' अग्निसंयोगेनाऽन्तरीषद्दग्धश्चरुः क्षामः तस्य कर्षः लोपस्तत्सहितामित्यर्थः।

† प्रादेशमात्रं हविरवदानसाधनं चरुनिष्पादनसाधनं च काष्ठखण्डं मेक्षणमित्युच्यते । कर्मप्रदीपे तु—"इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं चाऽङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्" इति । (२. ५. १४)

दिवि वै सोम ऽआसीत्। अथेह देवास्ते देवा ऽअकामयन्ता नः सोमो गच्छेत्तेनाऽऽगतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीञ्च कद्रूं च तद्धिष्ण्यानां ब्राह्मणे व्व्याख्यायते सौपर्णीकाद्रवं यथा तद्बास ॥ १ ॥ तेभ्यो गायत्री सोममच्छाऽऽपतत्। तस्या ऽआहरन्त्यै गन्धर्वो विश्वावसुः पर्य्यमुष्णात्ते देवा ऽअविदुः प्प्रच्युतो वै परस्तात्सोमोऽथ नो नाऽऽगच्छति गन्धर्वा वै पर्य्यमोषिषुरिति ॥ २ ॥ ते होचुः। योषित्कामा वै गन्धर्वा व्वाचमेवैभ्यः प्प्रहिणवाम सा नः सह सोमेनाऽऽगमिष्यतीति तेभ्यो व्वाचं प्राहिण्वन्त्सैनान्त्सह सोमेनाऽगच्छत् ॥ ३ ॥ ते गन्धर्वा ऽअन्न्वागत्याऽब्रुवन्। सोमो युष्माकं व्वागेवाऽस्माकमिति तथेति देवा ऽअब्रुवन्निहो *चेदागान्मैनामभीषहेव नैष्ट व्विह्वयामहा ऽइति तां व्व्यह्वयन्त ॥ ४ ॥ तस्यै गन्धर्वाः। व्वेदानेव प्प्रोचिर ऽइति वै व्वयं व्विद्मेति व्वयं व्विद्मेति ॥५॥ अथ देवाः। व्वीणामेव सृष्ट्वा व्वादयन्तो निगायन्तो निषेदुरिति वै ते व्वयं गास्याम ऽइति त्त्वा प्प्रमोदयिष्यामह ऽइति सा देवानुपाऽऽववर्त्त सा वै सा तन्मोघमुपाऽऽववर्त्त या स्तुवद्भ्यः शङ्सद्भ्यो नृत्तं गीतमुपाऽऽववर्त्त तस्मादप्येतर्हिमोघसंहिताऽएवयोषाएवंह्विवागुपाऽऽवर्त्तत तामु ह्यन्या ऽअनु योषास्तस्माद्य ऽएव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा ऽइव ॥ ६ ॥ तद्वा ऽएतदुभयं देवेष्वासीत्। सोमश्च व्वाक्च स यत्सोमं क्रीणात्यागत्या

* 'वेदागात्' इति 'ख' पुस्तके पाठः।

ऽएवाऽऽगतेन यजा ऽइत्त्यनाऽऽगतेन ह वै स सोमेन यजते योऽक्रीतेन यजते ॥ ७ ॥ अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वां चतुष्कृत्त्वो विगृह्णाति बर्हिषा हिरण्यं प्रबद्ध्याऽवधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यं चोभयꣳ ह्यग्निरेतसꣳ* ॥८॥ स हिरण्यमवदधाति । 'एषा[1] ते शुक्र तनूरेतद्वर्च्चः' ऽइति वर्च्चो वा ऽएतद्यद्धिरण्यं 'तया[2] सम्भव भ्राजं गच्छे'ति स यदाह तया सम्भवेति तया सम्पृच्च्यस्वेत्त्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्त्येवैतदाह ॥ ९ ॥ तां यथैवाऽदो देवाः । प्राऽहिण्वन्त्सोममच्छैवमेवैनामेष ऽएतत्प्रहिणोति सोममच्छ वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥ १० ॥ स जुहोति । 'जूर[3]सीत्त्ये'तद्ध वा ऽअस्या ऽएकं नाम यज्जूरसीति 'धृता[4] मनसे'ति मनसा वा ऽइयं वाग्धृता मनो वा ऽइदं पुरस्ताद्वाच ऽइत्त्थं वद मैतद्वादीरित्त्य†लग्लमिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११ ॥ 'जुष्टा[5] विष्णव' ऽइति । जुष्टा सोमायेत्त्येवैतदाह यमच्छेम ऽइति 'तस्या[6]स्ते सत्त्यसवसः प्रसव' ऽइति सत्त्यप्रसवा न ऽएधि सोमं नोऽच्छेहीत्त्येवैतदाह

(१) शु० सं० अ० ४ क० १७। (२) शु० सं० अ० ४ क० १७। (३) शु० सं० अ० ४ क० १७। (४) शु० सं० अ० ४ क० १७। (५) शु० सं० अ० ४ क० १७। (६) शु० सं० अ० ४ क० १८।

* 'रेतसम्' इति 'ख' पुस्तके दृश्यते।

† 'अलग्लमिव' इत्यत्र 'अलम्नमिव' इति भाष्यकारसम्मतः। मूलपुस्तके तु 'अलग्लमिव' इत्येव लभ्यते।

'तन्वो यन्त्रमशीय स्वाहे'ति स ह वै तन्वो यन्त्रमश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्त्येवैतदाह ॥ १२ ॥ अथ हिरण्यमपोद्धरति । तन्नमनुष्येषु हिरण्यं करोति स यत्सहिरण्यं जुहुयात्पराग्ु हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्यमभिगम्म्येत ॥१३॥ सोऽपोद्धरति । 'शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसी'ति कृत्स्नेन पयसा हुत्वा यदेवैतत्तदाह शुक्रमसीति शुक्रꣳ ह्येतच्चन्द्रमसीति चन्द्रꣳ ह्येतदमृतमसीत्यमृतꣳ ह्येतद्वैश्वदेवमसीति वैश्वदेवꣳ ह्येतत्प्रमुच्च्य तृणं बर्हिष्यपि सृजति सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥ अथाऽपरं चतुर्ग्गृहीतमाज्यं गृहीत्त्वा । अन्वारभस्व यजमानेत्याहाऽपोर्ण्णुवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहितामेवैनामेतत्सतीं प्राऽऽहैषीद्वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्याऽप्रैषीत्प्रीतया सोमं क्रीणानीति ॥ १५ ॥ अथोपनिष्क्रम्म्याऽभिमन्त्रयते । 'चिदसि मनासी'ति चित्तं वा ऽइदं मनो वागनुवदति 'धीरसि दक्षिणे'ति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति दक्षिणा ह्येषा 'क्षत्रियाऽसि यज्ञियासी'ति क्षत्रिया ह्येषा यज्ञिया ह्येषा 'ऽदितिरस्युभयतः शीर्ष्णी'ति स यदेनया समानꣳ सद्विपर्य्यासं वदति यदपरं तत्पूर्वं करोति यत्पूर्वं तदपरं तेनोभयतः शीर्ष्णी तस्मादाहाऽदि-

(१) शु० सं० अ० ४ क० १८। (२) शु० सं० अ० ४ क० १८। (३) शु० सं० अ० ४ क० १९। (४) शु० सं० अ० ४ क० १९। (५) शु० सं० अ० ४ क० १९। (६) शु० सं० अ० ४ क० १९।

तिरस्युभयतः शीर्ष्णीति ॥ १६ ॥ '[1]सा नः सुप्राची
सुप्रतीच्येधी'ति । सुप्राची न ऽएधि सोमं नोऽच्छेही-
त्येवैतदाह सुप्रतीची न ऽएधि सोमेन नः सह पुनरेहीत्ये-
वैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥१७॥
'[2]मित्रस्त्वा पदि बध्नीतामि'ति । वरुण्या वा ऽएषा यद्रज्जुः
सा यद्रज्ज्वाऽभिहिता स्याद्वरुण्यास्याद्यद्वनभिहिता स्याद्-
यतेव स्यादेतद्वा ऽअवरुण्यं यन्मैत्रः सा यथा रज्ज्वाऽभि-
हिता यतैवमस्यै तद्भवति यदाह मित्रस्त्वा पदि बध्नी-
तामिति ॥ १८ ॥ 'पूषाऽध्वनः[3]स्पात्वि'ति । इयं वै पृथिवी
पूषा यस्य वा ऽइयमध्वङ्गोप्त्री भवति तस्य न का चन
ह्वला भवति तस्मादाह पूषाध्वनस्पात्विति ॥१९॥ 'इन्द्राया[4]ऽ-
ध्यक्षाये'ति । स्वध्यक्षाऽसदित्येवैतदाह यदाहेन्द्रायाऽध्यक्षा-
ये'त्यनु त्वा[5] माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु
सखा सयूथ्य' ऽइति सा यत्ते जन्म तेन नोऽनुमता सोम-
मच्छेहीत्येवैतदाह 'सा[6] देवि देवमच्छेही'ति देवी ह्येषा
देवमच्छैति यद्वाक्सोमं तस्मादाह सा देवि देवमच्छेही'ती-
न्द्राय[7] सोममि'तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय
सोममिति 'रुद्रस्त्वा[8]ऽऽवर्त्तयत्वि'त्यप्रणाशायैतदाह रुद्रः
हि नाऽति पशवः 'स्वस्ति[9] सोमसखा पुनरेही'ति स्वस्ति
नः सोमेन सह पुनरेहीत्येवैतदाह ॥ २० ॥ तां यथैवाऽदो

(१) शु० सं० अ० ४ क० १९ । (२) शु० सं० अ० ४ क० १९ । (३) शु० सं० अ० ४ क० १९ । (४) शु० सं० अ० ४ क० १९ । (५) शु० सं० अ० ४ क० २० । (६) शु० सं० अ० ४ क० २० । (७) शु० सं० अ० ४ क० २० । (८) शु० सं० अ० ४ क० २० । (९) शु० सं० अ० ४ क० २० ।

देवाः । प्राऽहिण्वन्त्सोममच्छ सैनान्त्सह सोमेनाऽऽगच्छ-देवमेवैनामेष ऽएतत्प्रहिणोति सोममच्छ सैनङ्ः स ह सोमेनाऽऽगच्छति ॥२१॥ तां रुषथैवाऽदो देवाः । व्व्यह्वयन्त गन्धर्व्वैः सा देवानुपाऽऽवर्त्ततैवमेवैनामेतद्यजमानो व्विह्वयते सा यजमानमुपाऽऽवर्त्तते तामुदीचीमत्त्याकुर्व्वन्त्युदीची हि मनुष्याणां दिक्सो ऽएव यजमानस्य तस्मादुदीचीम-त्त्याकुर्व्वन्ति ॥ २२ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



सप्तपदान्यनु निक्रामति । व्वृङ्क्त ऽएवैनामेतत्तस्मा-त्सप्तपदान्यनु निक्रामति यत्र वै व्वाचः प्रजातानि च्छन्दाᳬसि सप्तपदा वै तेषां पराद्ध्या शक्करी तामेवैतत्पर-स्तादर्व्वाचीं वृङ्क्ते तस्मात्सप्तपदान्यनु निक्रामति ॥ १ ॥ स वै व्वाच ऽएव रूपेणाऽनु निक्रामति । 'व्वस्व्यस्यदिति-रस्यादित्त्याऽसि रुद्राऽसि चन्द्राऽसी'ति व्वस्वी ह्येषाऽदितिर्ह्येषा-ऽऽदित्त्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा 'बृहस्पतिष्ट्वा सुम्म्ने रम्म्णात्त्वि'ति ब्रह्म वै बृहस्पतिर्बृहस्पतिष्ट्वा साऽधुनाऽऽव-र्त्तयत्त्वित्त्येवैतदाह 'रुद्रो व्वसुभिराचक' ऽइत्त्यप्प्रणाशायैतदाह रुद्रङ्ः हि नाऽति पशवः ॥ २ ॥ अथ सप्तमं पदं पर्य्युप-विशन्ति । स हिरण्ण्यं पदे निधाय जुहोति न वा ऽअनश्वावा-

(१) शु॰ सं॰ अ॰ ४ क॰ २१ । (२) शु॰ सं॰ अ॰ ४ क॰ २१ । (३) शु॰ सं॰ अ॰ ४ क॰ २१ ।

हुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हाऽस्यैषाऽग्निमत्त्येवाऽऽहुतिर्हुता भवति वज्रो वा ऽआज्यं वज्रेणैवैतदाज्येन स्पृणुते ताछ्ठ स्पृत्वा स्वीकुरुते ॥ ३ ॥ स जुहोति । 'अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मी'तीयं वै पृथिव्व्यदितिरस्यै हि मूर्द्धं जुहोति देवयजने पृथिव्व्या' ऽइति देवयजने हि पृथिव्व्यै जुहो'तीडायास्पदमसि घृतवत्स्वाहे'ति गौर्वा ऽइडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्ध्येतदभिहुतं भवति ॥ ४ ॥ अथ स्फ्यमादाय परिलिखति । वज्रो वै स्फ्यो वज्रेणैवैतत्परिलिखति त्रिष्कृत्वः परिलिखति त्रिवृतैवैतद्वज्रेण समन्तं परिगृह्णात्त्यनतिक्रमाय ॥ ५ ॥ स परिलिखति । 'अस्मे रमस्वे'ति यजमाने रमस्वेत्त्येवैतदाहाऽथ समुल्लिख्य पदछ्ठ स्थाल्याछं संवपत्त्य'स्मे ते बन्धुरि'ति यजमाने ते बन्धुरित्त्येवैतदाह ॥ ६ ॥ अथाऽप ऽउपनिनयति । यत्र वा ऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप ऽउपनिनयति ॥ ७ ॥ अथ यजमानाय पदं प्रयच्छति । 'त्वे राय' ऽइति पशवो वै रायस्त्वयि पशव ऽइत्त्येवैतदाह तद्यजमानः प्रतिगृह्णाति 'मे राय' ऽइति पशवो वै रायो मयि पशव ऽइत्त्येवैतदाह ॥ ८ ॥ अथाऽध्वर्युरात्मानमुपस्पृशति । 'मा वयछ्ठ रायस्पोषेण वि-

(१) शु० सं० अ० ४ क० २२। (२) शु० सं० अ० ४ क० २२। (३) शु० सं० अ० ४ क० २२। (४) शु० सं० अ० ४ क० २२। (५) शु० सं० अ० ४ क० २२। (६) शु० सं० अ० ४ क० २२। (७) शु० सं० अ० ४ क० २२। (८) शु० सं० अ० ४ क० २२।

यौष्मे'ति तथो हाऽद्धुरुर्युः पशुभ्य ऽआत्मानं नाऽन्तरेति ॥ ९ ॥ अथ पत्न्यै पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्रतिष्ठा तद् गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मात्पत्न्यै पदं प्रतिपराहरन्ति ॥ १० ॥ तां नेष्टा वाचयति । 'तोतो राय' ऽइत्यथैनाᳬं सोमक्रयण्या संख्यापयति व्वृषा वै सोमो योषा पत्न्येष वा ऽअत्र सोमो भवति यत्सोमक्रयणी मिथुनमेवैतत्प्रजननं क्रियते तस्मादेनाᳬ सोमक्रयण्या संख्यापयति ॥११॥ स संख्यापयति । 'समक्ख्ये[2] देव्व्या धिया सन्दक्षिणयोरुचक्षसा । मामऽआयुः प्प्रमोषीर्म्मो ऽअहं तव वीरं व्विदेय तव देवि सन्दृशी'त्याशिषमेवैतदाशास्ते पुत्रो वै वीरः पुत्रं विदेय तव सन्दृशीत्येवैतदाह ॥ १२ ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी यत्र वा ऽइन्द्राविष्णू त्रेधा सहस्रं व्व्यैरयेतां तदेकाऽत्यरिच्च्यत तां त्रेधा प्प्राऽजनयतां तस्माद्योऽप्प्येतर्हि त्रेधा सहस्रं व्व्याकुर्य्यादेकैवाऽतिरिच्च्येत ॥ १३ ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयण्यथ या रोहिणी सा व्वार्त्रघ्घ्नी यामिदᳬ राजा सङ्ग्रामं जित्त्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्त्या यामिदं पितृभ्यो घ्घ्नन्ति ॥ १४ ॥* ॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी स्याद्यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी व्वार्त्रघ्घ्नी स्याद्रोहिण्यै ह त्त्वेव श्येताक्ष्या-

( १ ) शु० सं० अ० ४ क० २२ । ( २ ) शु० सं० अ० ४ क० २३ ।

* अत्र शतम् १६०० ॥

ऽआशान्नेयात् ॥ १५ ॥ सा स्यादुप्प्रवीता । वाग्वा ऽएषा निदानेन यत्सोमक्रयण्ययातयाम्नी वा ऽइयं वागयातयाम्न्यप्प्रवीता तस्मा*दुप्प्रवीता स्यात्सा †स्यादवण्डाकूटाकाणाकर्णालक्षितासप्तशफा सा ‡ ह्येकरूपैकरूपा हीयं वाक् ॥१६॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पदं समुप्य पाणी ऽअवनेनिक्ते । तद्यत्पाणी ऽअवनेनिक्ते वज्रो वा ऽआज्यं रेतः सोमो नेद्वज्रेणाऽऽज्येन रेतः सोमं हिनसानीति तस्मात्पाणी ऽअवनेनिक्ते ॥ १ ॥ अथाऽस्याᳬ हिरण्यं बध्नीते । द्वयं वा ऽइदं न तृतीयमस्ति सत्यं चैवाऽनृतं च सत्यमेव देवा ऽअनृतं मनुष्याऽअग्निरेतसं वै हिरण्यं सत्येनाऽᳬशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा ऽअस्याᳬ हिरण्यं बध्नीते ॥२॥ अथ सम्प्रेष्यति । सोमोपनहनमाहर सोमपर्य्याणहनमाहरोष्णीषमाहरेति स यदेव शोभनन्तत्सोमोपनहनᳬ स्याद्वासो ह्यस्यैतद्भवति शोभनᳬ ह्येतस्य वासः स यो हैनं शोभनेनोपचरति शोभते हाऽथ य ऽआह यदेव किञ्चेति यद्धैव किञ्च भवति तस्माद्यदेव शोभनं तत्सोमोपनहनं स्याद्यदेव किञ्च सोमपर्य्याणहनम् ॥ ३ ॥ यद्युष्णीषं विन्देत् । उष्णीषः स्याद्यद्युष्णीषं न विन्देत्सोम-

---

* अप्रवीता अगृहीतगर्भेत्यर्थः ।

† अवण्डेति, वण्डा—वर्द्धिष्णु: तद्विपरीता, कूटा- एकश्रृङ्गी, काणा—प्रसिद्धा, कर्णा—छिन्नकर्णा, लक्षिता—तप्तायःशलाकया विहितेत्यर्थः ।

‡ एकरूपेति, एकरूपत्वं च उक्तदोषवर्जितत्वम्, सम्पूर्णावयवेत्यर्थः ।

पर्य्युपणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वाऽवकृन्तेदुष्णीषभाजनमद्ध्वर्य्युर्वा यजमानो वा *सोमोपनहनमादत्ते य ऽएव कश्च सोमपर्य्युपणहनम् ॥ ४ ॥ अथाऽग्रेण राजानं विचिन्न्वन्ति । तदुदकुम्भ ऽउपनिहितो भवति तद् ब्राह्मण ऽउपाऽऽस्ते तदभ्यायन्ति प्राञ्चः ॥ ५ ॥ तदायत्सु वाचयति । 'एष[1] ते गायत्रो भाग ऽइति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग ऽइति मे सोमाय ब्रूतादेष ते जागतो भागऽइति मे सोमाय ब्रूताच्छन्दोनामानाᳬं साम्राज्यं गच्छेति मे सोमाय ब्रूतादि'त्येकं वा ऽएष क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्याय च्छन्दसाᳬं साम्राज्याय घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतदाह च्छन्दसामेव त्वा राज्याय क्रीणामि च्छन्दसाᳬं साम्राज्याय न बधायेत्यथैत्य प्राङुपविशति ॥ ६ ॥ सोऽभिमृशति । 'ओ[2]स्माकोऽसी'ति स्वऽइव ह्यस्यैतद्भवति यदागतस्तस्मादाहाऽस्माकोऽसीति 'शुक्र[3]स्ते ग्रह्य' ऽइति शुक्रᳬ ह्यस्माद् ग्रहं ग्रहीष्यन्भवति 'विचि[4]तस्त्वा विचिन्न्वन्त्वि'ति सर्वत्त्वायैतदाह ॥ ७ ॥ अत्र हैके । तृणं वा काष्ठं वा विस्त्वाऽपास्यन्ति तदु तथा न कुर्य्यात्क्षत्रं वै सोमो विडन्न्या ऽओषधयोऽन्नं वै क्षत्रिस्य विट् स यथा ग्रसितमनुहायाऽऽच्छिद्य परास्येदेवं तत्तस्मादभ्येव मृशेद्विचितस्त्वा विचिन्न्वन्त्विति तद्य ऽएवाऽस्य

* 'ग–च' पुस्तकयोः 'सोमोपनहमा' इत्येव पाठो दृश्यते ।

( १ ) शु० सं० अ० ४ क०२४ । ( २ ) शु० सं० अ० ४ क० २४ । ( ३ ) शु० सं० अ० ४ क० २४ । (४) शु० सं० अ० ४ क० २४ ।

विचेतारस्त ऽएनं विचिन्वन्ति ॥ ८ ॥ अथ वासः । द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु *मात्रो यो चाऽप्यन्या मात्रा ॥ ९ ॥ सावित्र्या मिमीते । सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएष सवितृप्रसूत ऽएव क्रयाय भवति ॥ १० ॥ अतिच्छन्दसा मिमीते । एषा वै सर्वाणि च्छन्दाᳩसि यदतिच्छन्दास्तथो हाऽस्यैष सर्वैरेव छन्दोभिर्मितो भवति तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥ स मिमीते । 'अभि त्यन्देवᳯ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवᳯ रत्नधामभि प्रियं मतिं कविम् । ऊर्ध्वा यस्यामतिर्भा ऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरि'ति ॥ १२ ॥ एतया सर्वाभिः । एतया चतसृभिरेतया तिसृभिरेतया द्वाभ्यामेतयैकयैतयैवैकयैतया द्वाभ्यामेतया तिसृभिरेतया चतसृभिरेतया सर्वाभिः समस्याऽञ्जलिनाऽऽख्यावपति ॥१३॥ स वा ऽउदाचन्न्याचं मिमीते । स यदुदाचन्न्याचं मिमीतऽइमा ऽएवैतदङ्गुलीर्नानाजानाः करोति तस्मादिमा नाना जायन्तेऽथ यत्सह सर्वाभिर्मिमीते सᳩश्लिष्टा ऽइव हैवेमा जायेरँस्तस्माद्वा ऽउदाचन्न्याचं मिमीते ॥ १४ ॥ यद्वेवोदाचन्न्याचं मिमीते । इमा ऽएवैतन्नाना वीर्याः करोति तस्मादिमा नाना वीर्यास्तस्माद्वा ऽउदाचन्न्याचं मिमीते

* 'क' पुस्तके 'पात्रो' इति पाठः ।

(१) शु० सं० अ० ४ क० २५ ।

॥ १५ ॥ षड्वोद्वाचन्न्याचं मिमीते । विराजमेवैतदर्वाचीं च पराचीञ्च युनक्ति पराच्च्यह देवेभ्यो यज्ञं वहत्त्यर्वाची मनुष्यानवति तस्माद्वा ऽउद्वाचन्न्याचं मिमीते ॥ १६ ॥ अथ षड्दशकृत्त्वो मिमीते । दशाक्षरा वै विराड् वैराजः सोमस्तस्माद्दशकृत्त्वो मिमीते ॥ १७ ॥ अथ सोमोपनहनस्य समुत्पाठ्यर्ष्याऽन्तान् । उष्णीषेण विग्रथ्नाति 'प्प्रजाभ्यस्त्वे'[1]ति प्प्रजाभ्यो ह्येनं क्रीणाति स यदेवेदꣳ शिरश्छाऽछसौ चाऽन्तरोपेनितमिव तदेवाऽस्यैतत्करोति ॥ १८ ॥ अथ मद्ध्येऽङ्गुल्याकाशं करोति । 'प्प्रजास्त्वाऽनुप्प्राणन्त्वि'[2]ति तमयतीव वा ऽएनमेतत्समायच्छन्नप्प्राणमिव करोति तस्यैतदुत ऽएव मद्ध्यतः प्प्राणमुत्सृजति तं ततः प्प्राणन्तं प्रजाऽअनुप्प्राणन्ति तस्मादाह प्प्रजास्त्वाऽनुप्प्राणन्त्विति तꣳ सोमविक्रयिणे प्प्रयच्छत्यथाऽतः पणनस्यैव ॥ १९ ॥

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



स वै राजानं पणते । स यद्राजानं पणते तस्मादिदꣳ सक्रत्सर्वं पण्ण्यꣳ स ऽआह सोमविक्रयिन् क्रय्यस्ते सोमो राजा३ ऽइति क्रय्य ऽइत्त्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्त्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वा ऽअतः सोमो राजाऽर्हतीत्त्याह सोमविक्रयी भूयऽएवाऽतः सोमो राजाऽर्हति महाँस्त्वेव गोर्म्महिमेत्त्यद्ध्वर्य्युः ॥१॥

(१) शु० सं० अ० ४ क० २५। (२) शु० सं० अ० ४ क० २५।

गोर्वै प्प्रतिधुक् । तस्यै श्रृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या ऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या ऽआमिक्षा तस्यै व्वाजिनम् ॥ २ ॥ शफेन ते क्रीणानीति । भूयो वा ऽअतः सोमो राजाऽर्हतीत्याह सोम- सोमविक्रयी भूय ऽएवाऽतः सोमो राजाऽर्हति महाँस्त्वेव गोर्म्महिमेत्यद्ध्वर्य्युरेतान्येव दश व्वीर्य्याण्युदाख्यायाऽऽह पदा तेऽर्द्धेन ते गवा ते क्रीणामीति क्रीतः सोमो राजेत्याह सोमविक्रयी व्वयाᳪंसि प्प्रब्रूहीति ॥ ३ ॥ स आह । चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्न्या- ऽइति स यदर्व्वाक्पणन्ते परः सम्पादयन्ति तस्मादिदᳪ सकृत्सर्व्वं पण्ण्यमर्व्वाक्पणन्ते परः सम्पादयन्त्यथ यदद्ध्वर्य्युरेव गोर्व्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमोऽथैतदद्ध्वर्य्युर्ग्गां महयति तस्यै पश्य- न्वीर्य्याणि क्रीणादिति तस्मादद्ध्वर्य्युरेव गोर्व्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी ॥ ४ ॥ अथ यत्पञ्च कृत्वः पणते । संव्वत्सरसंम्मितो वै यज्ञः पञ्च वा ऽऋतवः संव्वत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वः पणते ॥ ५ ॥ अथ हिरण्ण्ये व्वाचयति । 'शुक्रं[1] त्वा शुक्रेण क्रीणामी'ति शुक्रᳪ ह्येतच्छुक्रेण क्रीणाति यत्सोमᳪ हिर- ण्ण्येन 'चन्द्रं[2] चन्द्रेणे'ति चन्द्रᳪ ह्येतच्चन्द्रेण क्रीणाति यत्सोमᳪ हिरण्ण्येना'ऽमृतममृतेने'[3]त्यमृतᳪ ह्येतदमृतेन क्री-

(१) शु० सं० अ० ४ क० २६ । (२) शु० सं० अ० ४ क० २६। (३) शु० सं० अ० ४ क० २६ ।

णाति यत्सोमꣳ हिरण्येन ॥ ६ ॥ अथ सोमविक्रयिणमभि प्प्रकम्पयति । 'सं᳘गमे ते गोरि'ति यजमाने ते गौरित्त्येवैतदाह तद्यजमानमभ्याहृत्त्य न्न्यस्य'त्त्यस्मे ते चन्द्राणी'ति स ऽआत्मन्न्येव व्वीर्य्यं धत्ते शरीरमेव सोमविक्रयी हरते तत्ततः सोमविक्रय्यादत्ते ॥ ७ ॥ अथाऽजायां प्रतीचीनमुख्यां व्वाचयति । 'तपसस्तनूरसी'ति तपसो ह वा ऽएषा प्प्रजापतेः सम्भूता यदजा तस्मादाह तपसस्तनूरसीति 'प्प्रजापतेर्व्वर्ण्ण' ऽइति सा यत्त्रिः संव्वत्सरस्य व्विजायते तेन प्प्रजापतेर्व्वर्ण्णः 'परमेणं पशुना क्रीयस' ऽइति सा यत्त्रिः संव्वत्सरस्य व्विजायते तेन परमः पशुः 'सहस्रपोषं पुषेयमि'त्त्याशिषमेवैतदाशास्ते भूमा वै सहस्रं भूमानं गच्छानीत्त्येवैतदाह ॥ ८ ॥ स वा ऽअनेनैवाऽजां प्रयच्छति । अनेन राजानमादत्त ऽआजा ह वै नामैषा यदजैतया ह्येनमन्तत ऽआजति तामेतत्परोऽक्षमजेत्त्याचक्षते ॥ ९ ॥ अथ राजानमादत्ते । 'मित्त्रो नँ ऽएहि सुमित्त्रध' ऽइति शिवो नः शान्त ऽएहीत्त्येवैतदाह तं यजमानस्य दक्षिण ऽऊरौ प्प्रत्त्युह्य व्वासो निदधा'तीन्द्रस्योरुमाविश दक्षिणमि'त्त्येष वा ऽअत्रेन्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरुमाविश दक्षिणमि'त्त्युशन्नुशन्तमि'ति प्प्रियः प्प्रियमित्त्येवैतदाह 'स्योनः स्योनमि'ति शिवः शिवमित्त्येवैतदाह ॥ १० ॥ अथ सोम-

(१) शु० सं० अ० ४ क० २६ । ( २ ) शु० सं० अ० ४ क० २६ । ( ३ ) शु० सं० अ० ४ क० २६ । ( ४ ) शु० सं० अ० ४ क० २६ । ( ५ ) शु० सं० अ० ४ क० २६ । ( ६ ) शु० सं० अ० ४ क० २६ । ( ७ ) शु० सं० अ० ४ क० २७ । ( ८ ) शु० सं० अ० ४ क० २७ (९) शु० सं० अ० ३६ क० २७ । (१०) शु० सं० अ० ४ क० २७ ।

क्रयणाननुदिशति। 'स्वानं भ्राजाऽङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्नि'ति धिष्ण्यानां वा ऽएते भाजनेनैतानि वै *धिष्ण्यानां नामानि तान्न्येवैभ्य ऽएतदुन्वदिक्षत् ॥ ११ ॥ अथाऽत्राऽपोर्ण्णुते । गर्ब्भो वा ऽएष भवति यो दीक्षते प्राऽऽवृता वै गर्ब्भा-ऽउल्बेनेव जरायुणेव तमत्राऽजीजनत तस्मादुपोर्ण्णुत ऽएष वा ऽअत्र गर्ब्भो भवति तस्मात्परिवृतो भवति परिवृता-ऽइव हि गर्ब्भा ऽउल्बेनेव जरायुणेव ॥ १२ ॥ अथ वाच-यति । 'परि माऽग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजे'-त्यासीनं वा ऽएनमेष ऽआगच्छति स ऽआगत ऽउत्तिष्ठति तन्मित्थ्याकरोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चि-त्तिस्तथो हाऽस्यैतन्न मित्थ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परिमाऽग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भजेति ॥ १३ ॥ अथ राजानमादायोत्तिष्ठति 'उदायुषा स्वायुषोदस्थाममृताँ२ ऽअन्वि'त्यमृतं वा ऽएषोऽनूत्ति-ष्ठति यः सोमं क्रीतं तस्मादाहोदायुषा स्वायुषोदस्थाम-मृताँ२ ऽअन्विति ॥ १४ ॥ अथ राजानमादायाऽऽरोह-णमभिप्रैति । 'प्रैति पन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वि'ति ॥ १५ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभया-

* धिष्ण्यः स्थण्डिलविशेषो यत्राऽग्निं संस्थाप्य होत्रादयः स्वानि स्वानि शस्त्राणि शंसन्ति । तथा च—"अग्नीनामाश्रय भूता मृदा निर्मिताः सप्त स्वल्पवेदिका धिष्ण्यान्युच्यन्ते"।

(१) शु० सं० अ० ४ क० २७। (२) शु० सं० अ० ४ क० २८। (३) शु० सं० अ० ४ क० २८। (४) शु० सं० अ० ४ क० २९।

ञ्चक्रुस्त ऽएतद्यजुः स्वस्त्ययनं ददृशुस्त ऽएतेन यजुषा नाष्ट्रा रक्षाᳩंस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथो ऽएवैष ऽएतेन यजुषा नाष्ट्रा रक्षाᳩंस्यपहत्यै तस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्प्रति पन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परिद्विषो व्वृणक्ति विन्दते व्वस्विति ॥ १६ ॥ तं वा ऽइति हरन्ति । अनसा परिवहन्ति महयन्त्येवैनमेतत्तस्माच्छीर्ष्णा बीजᳩं हरन्त्यनसोद्वहन्ति ॥ १७ ॥ अथ यदपामन्ते क्रीणाति । रसो वा ऽआपः सरसमेवैतत्क्रीणात्यथ यद्धिरण्यं भवति सशुक्रमेवैतत्क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत्क्रीणात्यथ यदजा भवति सतपसमेवैतत्क्रीणात्यथ यद्धेनुर्भवति साऽशिरमेवैतत्क्रीणात्यथ यन्मिथुनौ भवतः समिथुनमेवैतत्क्रीणाति तं वै दशभिरेव क्रीणीयान्नाऽदशभिर्दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयान्नाऽदशभिः ॥ १८ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥१२८॥



*नीडे कृष्णाजिनमास्तृणाति । 'अदित्यास्त्वगसी'[1]ति सोऽसावेव बन्धुरथैनमासादय'त्यदित्यै सद ऽआसीदे'[2]तीयं

* परितः प्रावृतः शकटमध्यदेशो नीडम्, तत्र कृष्णाजिनमास्तृणाति प्रसारयेदित्यर्थः ।
( १ ) शु० सं० अ० ४ क० ३० । ( २ ) शु० सं० अ० ४ क० ३० ।

वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहाऽदित्यै सद ऽआसीदेति ॥ १ ॥ अथैवमभिपद्य वाचयति । 'अस्तभ्नाद् द्यां व्वृषभो ऽअन्तरिक्षमि'ति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्त ऽएनमेतज्ज्यायाᳬसमेव वधाच्चक्रुर्य्यदाहाऽस्तभ्नाद् द्यां व्वृषभो ऽअन्तरिक्षमिति ॥२॥ 'अमिमीत व्वरिमाणं पृथिव्या' ऽइति । तदेनेनेमाँल्लोकानास्पृणोति तस्य हि न हन्ताऽस्ति न वधो येनेमे लोका ऽआस्पृतास्तस्मादाहाऽमिमीत व्वरिमाणं पृथिव्या ऽइति ॥३॥ 'आसीदद्विश्वा भुवनानि सम्म्राडि'ति । तदेनेनेदᳬ सर्व्वमास्पृणोति तस्य हि न हन्ताऽस्ति न वधो येनेदᳬ सर्व्वमास्पृतं तस्मादाहाऽऽसीदद्विश्वा भुवनानि सम्म्राडिति ॥ ४ ॥ 'विश्वेत्तानि व्वरुणस्य व्रतानी'ति । तदस्मा ऽइदᳬ सर्व्वमनुवर्त्म करोति यदिदं किञ्च न कश्चन प्प्रत्युद्यामिनं तस्मादाह विश्वेत्तानि व्वरुणस्य व्रतानीति ॥ ५ ॥ अथ सोमपर्य्याणहनेन पर्य्याणह्यति । नेदेनं नाष्ट्रा रक्षाᳬसि प्प्रमृशानिति गर्ब्भो वा ऽएष भवति तिर ऽइव वै गर्ब्भास्तिर ऽइवैतद्यत्पर्य्याणद्धं तिर ऽइव वै देवा मनुष्येभ्यस्तिर ऽइवैतद्यत्पर्य्याणद्धं तस्माद्वै पर्य्याणह्यति ॥ ६ ॥ स पर्य्याणह्यति । 'व्वनेषु व्व्यन्तरिक्षं ततान'ेति व्वनेषु हीदमन्तरिक्षं व्विततं व्वृक्षाग्रेषु 'व्वाजमर्व्वत्सु पय ऽउस्रियास्वि'ति व्वीर्य्यं वै व्वाजाः

(१) शु० सं० अ० ४ क० ३०। (२) शु० सं० अ० ४ क० ३०। (३) शु० सं० अ० ४ क० ३०। (४) शु० सं० अ० ४ क० ३०। (५) शु० सं० अ० ४ क० ३१। (६) शु० सं० अ० ४ क० ३१।

पुमाᳬंसोऽर्वन्तः पुᳫंस्वेवैतद्वीर्य्यं दधाति पय ऽउस्रियास्विति पयो हीदमुस्रियासु हितᳫं 'हृत्सु क्रतुं व्वरुणो व्विक्षवग्निमि'ति हृत्सु ह्ययं क्रतुर्म्मनोजवः प्प्रविष्टो व्विक्षवग्निमिति विक्षु ह्ययं प्रजास्वग्नि'र्न्दिवि सूर्य्यमदधात्सोममद्रावि'ति दिवि ह्यसौ सूर्य्यो हितः सोममद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्य्यमदधात्सोममद्राविति ॥ ७ ॥ अथ यदि द्वे कृष्णाजिने भवतः । तयोरन्न्यतरत्प्रत्यानह्यति *प्प्रतीनाहभाजनं यद्यु ऽएकं भवति कृष्णाजिनग्रीवा ऽएवाऽवकृत्त्य प्प्रत्यानह्यति प्प्रतीनाहभाजनᳫं 'सूर्य्यस्य चक्षुरारोहाऽग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे ब्भ्राजमानो व्विपश्चिते'ति सूर्य्यमेवैतत्पुरस्तात्करोति सूर्य्यः पुरस्तान्नाष्ट्रा रक्षाᳬंस्यपघ्नन्नेत्त्यथाऽभयेनाऽनाष्ट्रेण परिवहन्ति ॥८॥ उद्धते प्र ऽउग्ग्ये फलके भवतः । तदन्तरेण तिष्ठन्त्सुब्रह्मण्ण्यः प्प्राऽऽजति श्रेयान्न्वा ऽएषोऽब्भ्यारोहाद्भवति को ह्येतमर्हत्त्यब्भ्यारोढुं तस्मादन्तरेण तिष्ठन्न्प्राऽऽजति ॥ ९ ॥ पलाशशाखया प्प्राऽऽजति । यत्र वै गायत्री सोममच्छाऽपतत्तदस्याऽआहरन्त्या ऽअपादस्ताब्भ्यायत्त्य पर्ण्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्त्वा पर्ण्णोऽभवत्तस्मात्पर्ण्णो नाम तद्यदेवाऽत्र सोमस्य न्न्यक्तं तदिहाऽप्प्यसदिति तस्मात्पलाशशाखया प्प्राऽऽजति ॥ १० ॥ अथाऽनड्वाहावाजन्ति । तौ

(१) शु० सं० अ० ४ क० ३१। (२) शु० सं० अ० ४ क० ३१। (३) शु० सं० अ० ४ क० ३२।

* नद्धस्य पुरोदेशप्रसारितो ध्वजः प्रतिनाहः, तद्भाजनन्तत्स्थानीयं भवतीत्यर्थः (सा० भा०)। अत्राऽनसो वाससा वेष्टनमिति देवयाज्ञिकः।

यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान्भविष्यतीत्येतदु विज्ञानम् ॥ ११ ॥ अथ युनक्ति । 'उस्रावेतं धूर्षाहावि'त्युस्रौ हि भवतो धूर्षाहाविति धूर्वाहौ हि भवतो 'युज्येथामनश्रू' इति युज्येते ह्यनश्रू इत्यनार्त्ताविति त'दुर्वीरहणावि'त्यपापकृताविति तद् 'ब्रह्मचोदनावि'ति ब्रह्मचोदनौ हि भवतः 'स्वस्ति यजमानस्य गृहान्गच्छत'मिति यथैनावन्तरा नाष्ट्रा रक्षाᳬसि न हिᳬस्युरेवमेतदाह ॥ १२ ॥ अथ पश्चात्परिक्रम्य । अपालम्बमभिपद्याऽऽह सोमाय क्रीतायाऽनुब्रूहीति सोमाय पर्युह्यमाणायेति वातो यतरथा कामयेत ॥ १३ ॥ अथ वाचयति । 'भद्रो मेऽसि प्रच्यवस्व भुवस्पत' इति भद्रो ह्यस्यैष भवति तस्मान्नाऽन्यमाद्रियतेऽप्यस्य राजानः सभागा आगच्छन्ति पूर्वो राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्यवस्व भुवस्पतइति भुवनानाᳬ ह्येष पति'र्विश्वान्यभि धामानी'त्यङ्गानि वै विश्वानि धामान्यङ्गान्येवैतदभ्याह 'मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्नि'ति यथैनमन्तरा नाष्ट्रा रक्षाᳬसि न विन्देयुरेवमेतदाह ॥ १४ ॥ 'श्येनो भूत्वा परापते'ति । वय-

(१) शु० सं० अ० ४ क० ३३ । (२) शु० सं० अ० ४ क० ३३ । (३) शु० सं० अ० ४ क० ३३ । (४) शु० सं० अ० ४ क० ३३ । (५) शु० सं० अ० ४ क० ३३ । (६) शु० सं० अ० ४ क० ३४ । (७) शु० सं० अ० ४ क० ३४ । (८) शु० सं० क० ४ क० ३४ । (९) शु० सं० अ० ४ क० ३४ ।

ऽएवैनमेतद्भूतं प्रपातयति यद्वा ऽउग्रं तन्नाष्ट्रा रक्षाꣳसि नाऽन्ववयन्त्येतद्वै वयसामोजिष्ठं बलिष्ठं यच्छ्येनस्तमेवैतद्भूतं प्रपातयति यदाह श्येनो भूत्वा परापतेति ॥ १५ ॥ अथ शरीरमेवा*ऽन्ववहन्ति। 'यजमानस्य गृहान्गच्छ तन्नौ सꣳस्कृतमि'ति नाऽत्र तिरोहितमिवाऽस्ति ॥ १६ ॥ अथ †सुब्रह्मण्यामाह्वयति। यथा येभ्यः पक्ष्यन्त्स्यात्तान्ब्रूयादित्यहे वः पक्ताऽस्मीत्त्येवमेवैतद्देवेभ्यो यज्ञं निवेदयति 'सुब्रह्मण्योꣳ३म् सुब्रह्मण्योꣳ३मि'ति ब्रह्म हि देवान्प्रच्च्यावयति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ १७ ॥ 'इन्द्राऽऽगच्छे'ति। इन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राऽऽगच्छेति 'हरिवँ ऽआगच्छ मेधातिथिर्म्मेष वृषणश्वस्य मेने। गौरावस्कन्दिन्नहल्यायै जारे'ति तद्यान्येवाऽस्य चरणानि तैरेवैनमेतत्प्रमुमोदयिषति ॥ १८ ॥ 'कौशिक ब्राह्मण गौतम ब्रुवाणे'ति। शश्वद्धैतदारुणिनाऽधुनोपज्ञातं यद्गौतम ब्रुवाणेति स यदि कामयेत ब्रूयादेतद्यद्यु कामयेताऽपि नाऽऽद्रियेते'त्यहे सुत्यामि'ति यावदहे सुत्या भवति ॥ १९ ॥ 'देवाँ ब्रह्माण ऽआगच्छते'ति। तद्देवाँश्च ब्राह्मणाँश्चाऽहैतैर्ह्युत्रोभयैरर्त्थो भवति यद्देवैश्च ब्राह्मणैश्च ॥ २० ॥ अथ प्रातिप्रस्थाता। अग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठतेऽग्नीषोमौ वा ऽएतमन्तर्जम्भ ऽआदधाते यो दीक्षते

† सुब्रह्मण्यानामकेन ऋत्विजा यदिन्द्राद्यावाहनं क्रियते तत् सुब्रह्मण्याह्वानम्।

(१) शु० सं० अ० ४ क० ३६। (२) षड्विं० ब्रा० १. १. ३। (३) षड्विं० ब्रा० १. १. २। (४) षड्विं० ब्रा० १. १. २। (५) षड्विं० ब्रा० १. १. २। (६) ला० श्रौ० सू० १. ३। (७) ला० श्रौ० सू० १. ३।

ऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्वा ऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भ ऽआदधाते तत्पशुनाऽऽत्मानं निष्क्रीणीते ॥२१॥ तद्धैके। आहवनीयादुल्मुकमाहरन्त्ययमग्निरयꣳ सोमस्ताभ्यांꣳ सह सङ्गथां निष्क्रेष्यामह ऽइति वदन्तस्तदु तथा न कुर्य्याद्यत्र वा ऽएतौ क्व च तत्सहैव ॥ २२ ॥ स वै द्विरूपो भवति। द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारङ्गः स्यादित्याहुरेतद्ध्येनयो रूपतममिवेति यदि कृष्णसारङ्गं न विन्देदुथो ऽअपि लोहितसारङ्गः स्यात् ॥२३॥ तस्मिन्वाचयति। '[1]नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत। दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्य्याय शꣳसते'ति नम ऽएवाऽस्मा ऽएतत्करोति मित्रधेयमेवैनेनैतत्कुरुते ॥ २४ ॥ अथाऽक्षधुर्य्युरारोहणं विमुञ्चति। '[2]वरुणस्योत्तम्भनमसी'त्युपस्तम्भनेनोपस्तभ्नाति '[3]वरुणस्य स्कम्भसर्ज्जनी स्त्थ' ऽइति शम्म्ये ऽउद्‌ बृहति स यदाह वरुणस्य स्कम्भसर्ज्जनी स्त्थ ऽइति वरुण्यो ह्येष ऽएतर्हि भवति यत्सोमः क्रीतः ॥ २५ ॥ अथ चत्वारो राजाऽऽसन्दीमाददते। द्वौ वा ऽअस्म्मै मानुषाय राज्ञ ऽआददाते ऽअथैतां चत्वारो योऽस्य सक्त्सर्वस्येष्टे ॥२६॥ औदुम्बरी भवति। अन्नं वा ऊर्ग्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्याऽवरुद्ध्यै तस्मादौदुम्बरी भवति ॥२७॥ नाभिदघ्ना भवति। अत्र

(१) शु० सं० अ० ४ क० ३५। (२) शु० सं० अ० ४ क० ३६। (३) शु० सं० अ० ४ क० ३६।

वा ऽअन्नं प्रतितिष्ठत्यन्नꣳ सोमस्तस्मान्नाभिदघ्ना भवत्यत्रो ऽएव रेतस ऽआशयो रेतꣳ सोमस्तस्मादत्रदघ्ना भवति ॥ २८ ॥ तामभिमृशति । '[1]व्रुणस्य ऽऋतसदन्यसी'त्यथ कृष्णाजिनमास्तृणाति '[2]व्रुणस्य ऽऋतसदनमसी'त्यथैनमासादयति '[3]व्रुणस्य ऽऋतसदनमासीदे'ति स यदाह व्रुणस्य ऽऋतसदनमासीदेति व्रुणण्यो ह्येष ऽएतर्हि भवति ॥ २९ ॥ अथैनꣳ शालां प्रपादयति । स प्प्रपादयन्न्वाचयति 'र्या ते धामानि हविषा यजन्ति ता ते व्विश्वा परिभूरस्तु यज्ञम् । गयस्फानꣳ प्प्रतरणꣳ सुवीरोऽवीरहा प्प्रचरा सोम दुर्य्यानि'ति गृहा वै दुर्य्या गृहान्नꣳ शिवꣳ शान्तोऽपापकृत्प्रचरेत्त्येवैतदाह ॥ ३० ॥ अत्र हैके । उदपात्रमुपनिनयन्ति यथा राज्ञ ऽआगतायोदकमाहरेदेवमेतदिति व्वदन्तस्तदु तथा न कुर्य्यान्न्मानुषꣳ ह ते यज्ञे कुर्वन्ति व्व्यृद्धं व्वै तद्यज्ञस्य यन्न्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् ॥ ३१ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



शिरो वै यज्ञस्याऽऽतिथ्यं बाहू प्प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतस्तस्मादभित ऽआतिथ्यमेते हविषी भवतꣳ प्प्रायणीयश्चोदयनीयश्च ॥१॥ ऽअथ यस्मा-

(१) शु० सं० अ० ४ क० ३६ । (२) शु० सं० अ० ४ क० १९ । (३) शु० सं० अ० ४ क० ३६ ।

*दातिथ्यं नाम। अतिथिर्वा ऽएष ऽएतस्याऽऽगच्छति यत्सोमः क्रीतस्तस्मा ऽएतद्यथा राज्ञे वा ब्राह्मणाय वा †महोक्षं वा महाजं वा पचेत्तदु ह मानुषꣳ हविर्देवानामेवमस्मा ऽएतदातिथ्यं करोति ॥ २ ॥ तदाहुः । पूर्वोऽतीत्य गृह्णीयादिति यत्र वा ऽअर्हन्तमागतं नाऽपचायन्ति क्रुध्यति वै स तत्र तथा ह्यऽपचितो भवति ॥ ३ ॥ तद्वा ऽअन्यतरऽएव विमुक्तः स्यात् । अन्यतरोऽविमुक्तोऽथ गृह्णीयात्स यदन्यतरो विमुक्तस्तेनाऽऽगतो यद्वन्यतरोऽविमुक्तस्तेनाऽपचितः ॥ ४ ॥ तदु तथा न कुर्यात् । विमुच्यैव प्रपाद्य गृह्णीयाद्यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्मान्मानुषे यावन्न विमुञ्चते नैवाऽस्मै तावदुदकꣳ हरन्ति नाऽपचितिं कुर्वन्त्यनागतो हि स तावद्भवत्यथ यदैव विमुञ्चतेऽथाऽस्मा ऽउदकꣳ हरन्त्यथाऽपचितिं कुर्वन्ति तर्हि हि स ऽआगतो भवति तस्माद्विमुच्यैव प्रपाद्य गृह्णीयात् ॥ ५ ॥ स वै सन्त्वरमाण ऽइव गृह्णीयात् । तथा ह्यऽपचितो भवति तत्पत्न्यन्वारभते पर्युह्यमाणं वै यजमानोऽन्वारभतेऽथाऽत्र पत्न्युभयत ऽएवैतन्मिथुनेनाऽन्वारभेते यत्र वाऽअर्हन्नाऽऽगच्छति सर्वगृह्या ऽइव वै तत्र चेष्टन्ति तथा ह्यऽपचितो भवति ॥ ६ ॥ स वा ऽअन्येनैव ततो यजुषा

* 'आतिथ्यं निर्वपति वैष्णवं नवकपालम्' ( का० श्रौ० सू० ८. १. १. ) ।

† "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियाऽन्वासनं स्वादु भोजनं सूनृतं वचः" ( या० स्मृ० आचा० श्लो० १०९ ) ।

गृह्णीयात् । येनो चाऽन्न्यानि हवीᳬंष्येकं वा ऽएष भागं क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्ज्याय च्छन्दसाᳬं साम्म्राज्याय तस्य च्छन्दाᳬंस्यभितः * साचयानि यथा राज्ञो-ऽराजानो राजकृतः सूतग्रामण्ण्य ऽएवमस्य च्छन्दाᳬंस्य-भितः साचयानि ॥ ७ ॥ न वै तदवकल्पते । यच्छन्दोभ्य-ऽइति केवलं गृह्णीयाद्यत्र वा ऽअर्हते पचन्ति तदभितः साचयोऽन्न्वाभक्ता भवन्त्यराजानो राजकृतः सूतग्रामण्ण्य-स्तस्माद्यत्रैवैतस्मै गृह्णीयात्तदेव च्छन्दाᳬंस्यन्न्वाभजेत् ॥८॥ स गृह्णाति । '(१)अग्नेस्तनूरसि विष्णवे त्वे'त्यग्निर्वै गायत्री तद्गायत्रीमन्न्वाभजति ॥ ९ ॥ '(२)सोमस्य तनूरसि विष्णवे त्वे'ति । क्षत्रं वै सोमः क्षत्रं त्रिष्टुप्तत्त्रिष्टुभमन्न्वाभजति ॥ १० ॥ '(३)अतिथेरातित्थ्यमसि विष्णवे त्वे'ति । सोऽस्यो-द्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते च्छन्दोभ्यः ॥ ११ ॥ '(४)श्येनाय त्वा सोमभृते विष्णवे त्वे'ति । तद्गायत्री-मन्न्वाभजति सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहर-त्तेन सा श्येनः सोमभृत्तेनैवैनामेतद्वीर्य्येण द्वितीयमन्न्वा-भजति ॥ १२ ॥ '(५)अग्नये त्वा रायस्पोषदे विष्णवे त्वे'ति । पशवो वै रायस्पोषः पशवो जगती तज्जगतीमन्न्वाभजति ॥ १३ ॥ अथ यत्पञ्चकृत्त्वो गृह्णाति । संवत्त्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्त्सरस्य तं पञ्चभिराप्नोति

---

* अभितः साचयानीति, पुरः पश्चाच्च सहैवाऽऽगन्तारः प्रधानपुरुषा इत्यर्थः ।

(१) शु० सं० अ० ५ क० १। (२) शु० सं० अ०५ क० १। (३) शु० सं० अ० ५ क० १। (४) शु० सं० अ० ५ क० १। (५) शु० सं० अ० ५ क० १।

तस्मात्पञ्चकृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति ॥ १४ ॥ नवकपालः पुरोडाशो भवति । शिरो वै यज्ञस्याऽऽतिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्न्यन्न्वाह प्प्रणवो नवमः पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्धे ऽएष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति ॥१५॥* कार्ष्मर्य्यमयाः परिधयः । देवा ह वा ऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्य्यत्कार्ष्मर्य्यः शिरो वै यज्ञस्याऽऽतिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षाᳪसि हिनसन्निति तस्मात्कार्ष्मर्य्यमयाः परिधयो भवन्ति ॥१६॥ †आश्वबालः प्प्रस्तरः । यज्ञो ह देवेब्भ्योऽपचक्राम सोऽश्वो भूत्वा पराङावर्त्त तस्य देवा ऽअनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्प्य सार्द्धᳪ सन्न्यासुस्तत ऽएता ऽओषधयः समभवन्न्यदश्वबालाः शिरो वै यज्ञस्याऽऽतिथ्यं जघनार्द्धो वाला ऽउभयत ऽएवैतद्यज्ञं परिगृह्णाति यदाश्वबालः प्प्रस्तरो भवति ॥ १७ ॥ ‡ऐक्षव्व्यौ विधृती । ‡‡नेद्बर्हिश्च प्प्रस्तरश्च संलुबभ्याऽत ऽइत्त्यथोत्पूयाऽऽज्यᳪ सर्वाण्ण्येव चतुर्गृहीतान्न्याज्यानि गृह्णाति न ह्यत्राऽनुयाजा भवन्ति ॥१८॥ $आसाद्य हवीᳪष्य्यग्निं मन्थति । शिरो वै यज्ञस्याऽऽतिथ्यं जनयन्ति वा ऽएनमेतद्यन्न्मन्थन्ति शीर्षतो वा ऽअग्रे

---

* 'कार्ष्मर्यमयाः परिधयः' ( का० श्रौ० सू० ८. १. १० )।

† 'आश्वबालः प्रस्तरः' ( का० श्रौ० सू० ८. १. १० )।

‡ 'ऐक्षव्यौ विधृती बर्हिश्च' ( का० श्रौ० सू० ८. १. १० )।

‡‡ सर्वोऽप्यनुवाकः ( तै० सं० ६. २. १. ) अत्र द्रष्टव्यः ।

$ 'आसाद्याऽग्निमन्थनमाहोमात्करोति' ( का० श्रौ० सू० ८. १. १२ )।

जायमानो जायते शीर्षत ऽएवैतदग्रे यज्ञं जनयत्यग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्याऽऽतिथ्यꣳ शीर्षत ऽएवैतद्यज्ञꣳ सर्वाभिर्देवताभिꣳ समर्द्धयति तस्मादग्निं मन्थति ॥ १९ ॥ सोऽधिमन्थनꣳ शकलमादत्ते । '[1]अग्नेर्जनित्रमसी'त्यत्र ह्यग्निर्जायते तस्मादाहाऽग्नेर्जनित्रमसीति ॥ २० ॥ अथ दर्भतरुणके निदधाति । '[2]वृषणौ स्थ' ऽइति तद्यावेवेमौ * स्त्रियै साकञ्जावेतावेवैतौ ॥ २१ ॥ अथाऽधरारणिं निदधाति '[3]उर्वश्यसी'त्यथोत्तरारण्याज्यविलापनीमुपस्पृश'[4]त्यायुरसी'ति तामभिनिधाति '[5]पुरूरवा ऽअसी'त्युर्वशी वा ऽअप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेवमेवैष ऽएतस्मान्मिथुनाद्यज्ञं जनयत्यथाऽऽहाऽग्नये मथ्यमानायाऽनु ब्रूहीति ॥ २२ ॥ स मन्थति । '[6]गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा च्छन्दसा मन्थामि जागतेन त्वा च्छन्दसा मन्थामीति' तं वै छन्दोभिरेव मन्थति च्छन्दाꣳसि मथ्यमानाया ऽन्वाह च्छन्दाꣳस्येवैतद्यज्ञमन्वायातयति यथाऽमुमादित्यꣳ रश्मयो जातायाऽनुब्रूहीत्याह यदा जायते प्रह्रियमाणायेत्यनुप्रहरन् ॥ २३ ॥ सोऽनुप्रहरति । '[7]भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं

---

* स्त्रियै साकञ्जाविति, स्त्रियै—स्त्रियाः सकाशात्—साकञ्जौ सहजायमनाावित्यर्थः ।

(१) शु० सं० अ० ५ क० २ । (२) शु० सं० अ० ५ क० २ । (३) शु० सं० अ० ५ क० २ । (४) शु० सं० अ० ५ क० । (५) शु० सं० अ० ५ क० २ । (६) शु० सं० अ० ५ क० २ । (७) शु० सं० अ० ५ क० ३ ।

जातवेदसौ शिवौ भवतमद्यन' ऽइति शान्तिमेवाऽऽभ्यामेतद्वदति यथा नाऽन्न्योऽन्न्यछ हिꣳस्याताम् ॥ २४ ॥ अथ स्रुवेणोपहत्त्याऽऽज्यम् । अग्निमभिजुहो'त्यग्नावग्निश्चरति प्प्रविष्ट ऽऋषीणां पुत्त्रो ऽअभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्व्यछ सदमप्प्रयुच्छन्त्स्वाहे'त्याहुत्त्यैवाऽएतमजीजनत तमेतयाऽऽहुत्त्याऽप्प्रैषीत्तस्मादेवमभिजुहोति ॥ २५ ॥ तदिडान्तं भवति । नाऽनुयाजान्यजन्ति शिरो वै यज्ञस्याऽऽतित्थ्यं पूर्वार्द्धो वै शिरः पूर्वार्द्धमेवैतद्यज्ञस्याऽभि*सꣳस्करोति स यद्धाऽनुयाजान्यजेद्यथा शीर्षतः पर्य्याहृत्य पादौ प्प्रतिदद्ध्यादेवं तत्तस्मादिडान्तं भवति नाऽनुयाजान्यजन्ति ॥ २६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



आतित्थ्येन वै देवा ऽइष्ट्वा । तान्त्समदविन्दत्ते चतुर्द्धा व्व्यद्रवन्नन्न्योऽन्न्यस्य श्रिया ऽअतिष्ठमाना ऽअग्निर्वसुभिः सोमो रुद्रैर्वरुण ऽआदित्त्यैरिन्द्रो मरुद्भिर्बृहस्प्पतिर्विश्वैर्देवैरित्त्यु हैक ऽआहुरेते ह त्वेव ते विश्वे देवा ये ते चतुर्द्धा व्व्यद्रवँस्तान्न्विद्रुतानसुररक्षसान्न्यनु व्व्यवेयुः ॥ १ ॥ तेऽविदुः । पापीयाꣳसो वै भवामोऽसुररक्षसानि वै नोऽनुव्व्यवागुर्द्विषद्भ्यो वै रद्ध्यामो हन्त सञ्जानामहा ऽएकस्य श्रियै

* 'संस्करोति' इति 'क' पुस्तके ।

(१) शु० सं० अ० ५ क० ३ । (२) का० श्रौ० सू० ८. १. १३ । (३) शु० सं० अ० ५ क० ४ ।

तिष्ठामहा ऽइति त ऽइन्द्रस्य श्रिया ऽअतिष्ठन्त तस्मादाहु-रिन्द्रः सर्वा देवता ऽइन्द्रश्रेष्ठा देवा ऽइति ॥ २ ॥ तस्मादु ह न स्वा ऽऋतीयेरन् । य ऽएषां परस्तरामिव भवति स ऽएनाननु व्यवैति ते प्रियं द्विषतां कुर्वन्ति द्विषद्भ्यो रध्यन्ति तस्मान्नर्तीयेरन्त्स यो हैवं विद्वान्नर्ती-यतेऽप्रियं द्विषतां करोति न द्विषद्भ्यो रध्यति तस्मान्नर्ती-येत ॥ ३ ॥ ते होचुः । हन्तेदं तथा करवामहै यथा न ऽइदमा प्रादिवमेवा*ऽजर्यमसदिति ॥ ४ ॥† ॥ ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धं समवददिरे ते होचुरेतेन नः स नानाऽसदेतेन विष्वङ् यो न-ऽएतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्तुरेव शाक्वरस्येति ‡यो वा ऽअयं पवत ऽएष तनूनप्ता शाक्वरः सोऽयं प्रजाना-मुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ ॥५॥ तस्मादाहुः । मनो देवा मनुष्यस्याऽऽजानन्तीति मनसा सङ्कल्पयति तत्प्राणमपि पद्यते प्राणो वातं वातो देवेभ्य ऽआचष्टे यथा पुरुषस्य मनः ॥६॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । मनसा सङ्कल्पयति तद्वातमपि गच्छति । वातो देवेभ्य ऽआचष्टे यथा पुरुष ते मन ऽइति ॥ ७ ॥ ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धं समवददिरे ते होचुरेतेन नः स नाना-ऽसदेतेन विष्वङ् यो न ऽएतदतिक्रामादिति तद्देवा ऽअप्ये-

---

* "अजर्यं सङ्गतम्" पा० सू० ( ३. १. १०५ ) इत्यनेन निपात्यते ।

† अत्र शतम् १७०० ॥

‡ 'सो वा' इति 'ख' पुस्तके पाठः ।

तर्हि नाऽतिक्रामन्ति के हि स्युर्यदतिक्रामेयुरनृतꣳ हि वदेयुरेकꣳ ह वै देवा व्रतं चरन्ति सत्यमेव तस्मादेषां जित-*मनपजय्यं तस्माद्यश ऽएवꣳ ह वा ऽअस्य जितमनपजय्य-मेवं यशो भवति य ऽएवं विद्वान्त्सत्यं वदति तदेत†त्तानूनप्त्रं निदानेन ॥ ८ ॥ ते देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवदद्रिरेऽथैत ऽआज्यान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवद्यन्ते तस्मादु ह न सर्वेणेव समभ्यवेयान्नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्द्धꣳ समभ्यवायानिति येनो ह समभ्यवेयान्नाऽस्मै द्रुह्येदिदुꣳ ह्याहुर्न्न सतानूनप्त्रिणे द्रोग्धव्यमिति ॥ ९ ॥ अथाऽतो गृह्णात्येव । आ१पतये त्वा परिपतये गृह्णामी'ति यो वा-ऽयं पवत ऽएष ऽआ च पतति परि च पतत्येतस्मा ऽउ हि गृह्णाति तस्मादाहाऽऽपतये त्वा परिपतये गृह्णा-मीति ॥ १० ॥ 'त२नूनप्त्रे शाक्वराये'ति । यो वा ऽअयं पवत-ऽएष तनूनप्ता शाक्वर ऽएतस्मा ऽउ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्वरायेति ॥ ११ ॥ 'श३क्मन ऽओजिष्ठाये'ति । एष वै शक्मौजिष्ठ ऽएतस्मा ऽउ हि गृह्णाति तस्मादाह शक्मन ऽओजिष्ठायेति ॥ १२ ॥ अथाऽतः समवमृशन्त्येव । एतद्ध देवा भूयः समामिर ऽइत्थं नः सोऽमुथाऽसद्यो न-ऽएतदतिक्रामादिति तथो ऽएवैत ऽएतत्सममन्त ऽइत्थं

* "क्षय्यजय्यौ शक्यार्थे" ( पा० सू० ६. १. ८१ ) इति ।

† अध्वर्युप्रभृति-षोडशर्त्विजो यजमानश्च मिथो द्रोहशून्या भवन्त एकमत्या यज्ञकार्यं सम्पादयितुं आज्यस्पर्शनपूर्वकं यत् शपथं कुर्वन्ति, तदेव कर्म तानूनप्त्रमित्युच्यते ।

(१) शु० सं० अ० ५ क० ५। (२) शु० सं० अ० ५ क० ५। (३) शु० सं० अ० ५ क० ५।

नः सोऽमुथा सद्यो न ऽएतदतिक्रामादिति ॥ १३ ॥ ते समवमृशन्ति । 'अनाधृष्टमस्यनाधृष्यं देवानामोज' ऽइत्यनाधृष्टा हि देवा ऽआसन्ननाधृष्याः सह सन्तः समानं वदन्तः समानं दध्राणा देवानामोज ऽइति देवानां वै जुष्टास्तन्वः प्प्रियाणि धामा'न्न्यनभिशस्त्यभिशस्तिपाऽअनभिशस्तेन्न्यमि'ति सर्वांॳ हि देवा ऽअभिशस्तिं तीर्णा-'ऽअञ्जसा सत्त्यमुपगेषमि'ति सत्त्यं वदानि मेदमतिक्रमिषमित्त्येवैतदाह 'स्विते मा धा' ऽइति स्विते हि तद्देवा ऽआत्मानमदधत यत्सत्त्यमवदन्न्यत्सत्त्यमकुर्वँस्तस्मादाह स्विते मा धा ऽइति ॥ १४ ॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्प्रियाणि धामानि सार्द्धᳬ समवददिरे तदिन्द्रे सन्न्यदधतैष वाऽइन्द्रो य ऽएष तपति न ह वा ऽएषोऽग्रे तताप यथा हैवेदमन्न्यत्कृष्णमेवᳬ हैवाऽऽस तेनैवैतद्वीर्य्येण तपति तस्माद्यदि बहवो दीक्षेरन्न्गृहपतय ऽएव व्रतमभ्युत्सिच्चय प्प्रयच्छेयुः स हि तेषामिन्द्रभाजनं भवति यद्यु दक्षिणावता दीक्षेत यजमानायैव व्रतमभ्युत्सिच्चय प्प्रयच्छेयुरिदᳬ ह्याहुरिन्द्रो यजमान ऽइति ॥ १५ ॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्प्रियाणि धामानि सार्द्धᳬ समवददिरे तत्सार्द्धᳬ सञ्जग्घ्ने तत्सामाऽभवत्तस्मादाहुः सत्त्यᳬ साम देवजᳬ सामेति ॥ १६ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(१) शु० सं० अ० ५ क० ५। (२) शु० सं० अ० ५ क० ५। (३) शु० सं० अ० ५ क० ५। (४) शु० सं० अ० ५ क० ५।

[ अथाऽवान्तरदीक्षा ]

आतिथ्येन वै देवा ऽइष्ट्वा। तान्त्समदविन्दत्ते तानूनप्त्रैः समशाम्यँस्त ऽएतस्य प्प्रायश्चित्तिमैच्छन्न्यदुन्न्योऽन्न्यं पापमवदन्नाऽऽह पुराऽवभृथात्पुनर्दीक्षामवाऽकल्पयँस्त ऽएतामवान्तरां *दीक्षामपश्यन् ॥ १ ॥ तेऽग्निनैव त्त्वचं विपल्ल्याऽङ्गयन्त। तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपायँस्तद्यदवान्तरां दीक्षामुपायँस्तस्मादवान्तरदीक्षा सन्तरामङ्गुलीराश्चन्त सन्तरां मेखलां पर्य्यस्तामैवैनामेतत्सतीं पर्य्यास्यन्त तथो ऽएवैष ऽएतद्यदुतः प्प्राचीनमनृत्यं वा करोत्यनृत्यं वा वदति तस्यैवैतत्प्रायश्चित्तिं कुरुते ॥ २ ॥ सोऽग्निनैव त्त्वचं विपल्ल्यङ्गयते । तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरचते सन्तराम्मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यस्यते प्प्रजामु हैव तद्देवा ऽउपाऽऽयन् ॥३॥ तेऽग्निनैव त्त्वचं विपल्ल्याऽङ्गयन्त । अग्निर्वै मिथुनस्य कर्त्ता प्प्रजनयिता तत्प्रजामुपाऽऽयन्त्सन्तरामङ्गुलीराश्चन्त सन्तराम्मेखलान्तत्प्रजामारम्भमन्नकुर्वत तथो ऽएवैष ऽएतत्प्रजामेवोपैति ॥ ४ ॥ सोऽग्निनैव त्त्वचं विपल्ल्यङ्गयते । अग्निर्वै मिथुनस्य कर्त्ता प्प्रजनयिता तत्प्रजामुपैति सन्तरामङ्गुलीरचते सन्तराम्मेखलां तत्प्रजामारम्भन्कुरुते ॥ ५ ॥ देवानामु ह स्म दीक्षितानाम्। षट्ः समिद्धारो वा स्वाध्यायं वा †विसृज्ज्यते तद्ध ह स्मेतरस्यैवेतरद्ध रूपेणेतरस्येतरमसुररक्ष-

* तै० सं० ( ६. २. २. ७ ) द्रष्टव्यम् ।

† 'व्विसृजते' इति 'ग-च' पुस्तकयोः ।

सानि जिघाᳬंसन्ति ते ह पापं व्वदन्त ऽउपसमेयुरिति वै मां त्वमचिकीर्षीरिति मा जिघाᳬंसीरित्त्यग्निर्हैव तथा नाऽन्न्यमुवादाऽग्निं तथा नाऽन्न्यᳮ ॥ ६ ॥ ते होचुᳮ । अपीत्थं त्वामग्नेऽवादिषू३रिति नैवाऽहमन्न्यं न मामन्न्य ऽइति ॥ ७ ॥ तेऽविदुᳮ । अयं व्वै नो व्विरक्षस्तमोऽस्यैव रूपमसाम तेन रक्षाᳬंस्यतिमोक्ष्यामहे तेन स्वर्ग्गं लोकᳮ समश्नुविष्यामह ऽइति तेऽग्नेरेव रूपमभँवस्तेन रक्षाᳬंस्यत्त्यमुच्चयन्त तेन स्वर्ग्गं लोकᳮ समाश्नुवत तथो ऽएवैष ऽएतदग्नेरेव रूपं भवति तेन रक्षाᳬंस्यतिमुच्च्यते तेन स्वर्ग्गं लोकᳮ समश्नुते स वै समिधमेवाऽभ्यादधदवान्तरदीक्षामुपैति ॥ ८ ॥ स समिधमभ्यादधाति । * '[1]अग्ने व्रतपास्त्वे व्रतपा' ऽइत्त्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाऽग्ने व्रतपास्त्वे व्रतपाऽइति '[2]या तव तनूरियᳮ सा मयि यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतानी'ति तदग्निना त्वचं विपल्ल्यङ्गयते 'ऽनु मे[3] दीक्षां दीक्षापतिर्म्मन्न्यतामनु तपस्तपस्पतिरि'ति तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरचते सन्तराम्मेखलां पर्य्यस्तामेवैनामेतत्सतीं पर्य्यस्यते ॥ ९ ॥ अथैनमतो †मदन्तीभिरुपचरन्ति । तपो वा ऽअग्निस्तपो मदन्त्यस्तस्मादेनं मदन्तीभिरुपचरन्ति ॥ १० ॥ अथ ‡ मदन्तीरुपस्पृश्य ।

* का० श्रौ० सू० ८. २. ४ ।

† पत्नीयजमानयोः क्वतोश्च दृष्टाऽदृष्टकार्यार्थास्तप्ता आपो 'मदन्त्य' इत्युच्यन्ते । यत्स्पर्शोऽपि शुद्धिकरः, एतादृश आपो 'मदन्त्य' इति गोपीनाथः । ( सत्या० श्रौ० सू० ७. ३ )

‡ 'मदन्तीभिरुप' इति पाठः 'ग-च' पुस्तकयोः । ( का० श्रौ० सू० ८. २. ६ )

( १ ) शु० सं० अ० ५ क० ६ । ( २ ) शु० सं० अ० ५ क० ६ । ( ३ ) शु० सं० अ० ५ क० ६ ।

राजानमाप्प्याययन्ति तद्यन्न्मदन्तीरुपस्पृश्य राजानमाप्प्यायय़न्ति * वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाऽऽज्येन रेतः सोमꣳ हिनसामेति तस्मान्न्मदन्तीरुपस्पृश्य राजानमाप्प्यायय़न्ति ॥ ११ ॥ तदाहुः । यस्मा ऽएतदाप्प्यायनं क्रियत ऽआतित्थ्यꣳ सोमाय तमेवाऽग्र ऽआप्प्याययेयुरथाऽवान्तरदीक्षामथ तानूनप्त्राणीति तदु तथा न कुर्य्याद्यज्ञस्य वा ऽएवं कर्म्माऽत्र वा ऽएनान्त्समदविन्दत्ते सꣳशममेव पूर्व्वमुपायन्नथाऽवान्तरदीक्षामथाऽऽप्प्यायनम् ॥१२॥ तद्यदाप्प्यायय़न्ति । देवो वै सोमो दिवि हि सोमो व्वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोऽशानानामौषधिर्ज्जायत ऽइति ह स्माऽऽह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याऽभिषुण्वन्ति तां दीक्षोपसद्भिस्तानूनप्त्रैराप्प्यायनेन सोमं कुर्व्वन्तीति तथो ऽएवैनामेष ऽएतद्दीक्षोपसद्भिस्तानूनप्त्रैराप्प्यायनेन सोमं करोति ॥ १३ ॥ 'मधु सारघमि'ति वा ऽआहुः । यज्ञो ह वै मधु सारघमथैत ऽएव सरघो मधुकृतो यदृत्विजस्तद्यथा मधु मधुकृत ऽआप्प्यायय़ेयुरेवमेवैतद्यज्ञमाप्प्यायय़न्ति ॥ १४ ॥ †यज्ञेन वै देवाः । इमां जितिं जिग्युर्य्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्त्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्त्वा तिरो-

---

* आज्यस्य वज्ररूपत्वम् , ( तै० सं० ६. २. २. ४ ) अत्र द्रष्टव्यम् ।

( १ ) शु० सं० अ० १९ क० ९१ ।

† तै० सं० २. २. ८. इत्यत्र द्रष्टव्यम् ।

ऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम ॥ १५ ॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्न्यथाऽयं यज्ञꣳ सम्भृत ऽएवं व्वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते व्वाग्वै यज्ञस्तद्यदेवाऽत्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत्पुनराप्प्याययति ॥१६॥ ते वै षड् भूत्वाऽऽप्प्याययन्ति । षड्वा ऽऋतव ऽऋतव ऽएवैतद्भूत्वाऽऽप्प्याययन्ति ॥१७॥ त ऽआप्प्याययन्ति । 'अꣳशुरꣳशुष्टे देव सोमाऽऽप्प्यायतामि'ति तदस्याऽꣳशुमꣳशुमेवाऽऽप्प्यायय'न्तीन्द्रायैक धनविद्' ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेत्त्येकधनविद् ऽइति शतꣳ शतꣳ ह स्म वा ऽएष देवान्प्रत्त्येकैक ऽएवाꣳशुरेकधनानाप्प्यायते दश-दश 'वाऽऽतुभ्भ्यमिन्द्रꣳ प्प्यायतामात्त्वमिन्द्राय प्प्यायस्वे'तीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतदाप्प्याययत्त्यात्त्वमिन्द्राय प्प्यायस्वेति तदेतस्मिन्नाऽऽप्प्यायनं दधा'त्याप्प्यायऽयाऽस्मान्त्सखीन्त्सन्न्या मेधये'ति स यत्सनोति तत्तदाह यत्सन्न्येत्त्यथ यदनुब्रूते तदु तदाह यन्मेधयेति 'स्वस्ति ते देव सोम सुत्यामशीये'त्येका वाऽएतेषामाशीर्ब्भवत्यृत्विजां च यजमानस्य च यज्ञस्योदृचं गच्छेमेति यज्ञस्योदृचं गच्छानीत्त्येवैतदाह ॥१८॥ अथ प्प्रस्तरे निन्हुवते । *उत्तरत ऽउपचारो वै यज्ञोऽथैतद्दक्षिणे †वाऽन्न्वित्याप्प्याययन्त्यग्निर्वै यज्ञस्तद्यज्ञं पृष्ठतꣳ ‡कुर्वते तन्निमत्थ्या

(१) शु० सं० अ० ५ क० ७। (२) शु० सं० अ० ५ क० ७। (३) शु० सं० अ० ५ क० ७। (४) शु० सं० अ० ५ क० ७। (५) शु० सं० अ० ५ क० ७।

* 'उत्तरत उपचारो यज्ञः' का० श्रौ० सू० १. ८. २६ द्रष्टव्यम्।

† 'नाऽन्वि' इति 'ख' पुस्तके।

‡ 'कुर्वन्ति' इति 'ग-च' पुस्तकयोः।

कुर्वन्ति देवेभ्य ऽआवृश्चच्यन्ते यज्ञो वै प्प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्प्रायश्चित्तिस्तथो हैषामेतन्न मित्थ्याकृतं भवति न देवेभ्य ऽआवृश्चच्यन्ते तस्मात्प्रस्तरे निन्न्हुवते ॥१९॥ तदाहुः। अक्ते निन्न्हुवीरा३ननक्ता३ ऽइत्त्यनक्ते हैव निन्न्हुवीरन्ननुप्प्रहरणꣳ ह्येवाऽक्तस्य ॥२०॥ ते निन्न्हुवते । 'एष्टा रायः प्प्रेषे भगाय ऽऋतमृतवादिभ्य' ऽइति सत्त्यꣳ सत्त्यवादिभ्य ऽइत्त्येवैतदाह 'नमो द्यावापृथिवीभ्यामि'ति तदाभ्यां द्यावापृथिवीभ्यां निन्न्हुवते ययोरिदꣳ सर्वमधि ॥ २१ ॥ अथाऽऽह * समुल्लुप्प्य प्प्रस्तरम् । अग्नीन्न्मदन्त्यापा३ ऽइति मदन्तीत्त्यग्नीदाह ताभिरेहीत्त्युपर्युपर्य्यग्निमतिहरति स यन्नाऽनुप्प्रहरत्त्येतेन ह्यत ऽऊर्द्ध्वान्न्यहानि प्प्रचरिष्यन्न्भवत्त्यथ यदुपर्युपर्य्यग्निमतिहरति तदेवाऽस्याऽनुप्प्रहृतभाजनं भवति † तमग्नीधे प्प्रयच्छति तमग्नीन्निदधाति ॥ २२ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अथोपसदिष्टिः ]

‡ग्रीवा वै यज्ञस्योपसदः शिरः ‡‡प्प्रवर्ग्ग्यः। तस्माद्यदि $ प्रवर्ग्ग्यवान्न्भवति प्प्रवर्ग्ग्येण प्प्रचर्य्याऽथोपसद्भिः प्प्रचरन्ति

(१) शु० सं० अ० ५ क० ७। (२) शु० सं० अ० ५ क० ७ ।
* का० श्रौ० सू० ८. २. १०।
† का० श्रौ० सू० ८. २. १२.।
‡ ( ऐ० ब्रा० १. ५. ८ ) इत्यत्र आतित्थ्यस्य शिरस्त्वमुपसदां ग्रीवात्वम् ।
‡‡ का० श्रौ० सू० ८. २. १५।
$ का० श्रौ० सू० ८. २. १५। आश्वलायनोऽपि 'प्रथमयज्ञेनैके वसंम्' (४.८.१६) इति ।

तद् ग्रीवाः प्प्रतिदधति ॥ १ ॥ तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति । ता ऽअपराह्णे* याज्या या याज्यास्ता ऽअनुवाक्या-स्तद्व्यतिषजति तस्मादिमानि ग्रीवाणां पर्वाणि व्व्यति-षक्तानीमान्न्यस्थीनि ॥ २ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्रजापत्याः पस्पृधिरे ततोऽसुरा ऽएषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवाऽस्मिँल्लोके रजतामन्तरिक्षे हरिणीं दिवि ॥ ३ ॥ तद्वै देवा ऽअस्पृण्ण्वत । त ऽएताभिरुपसद्भि-रुपाऽऽसीदँस्तद्यदुपाऽऽसीदँस्तस्मादुपसदो नाम ते पुरः प्प्राऽभिन्दन्निमाँल्लोकान्न्प्राऽजयँस्तस्मादाहुरुपसदा पुरं जय-न्तीति यदुहोपाऽऽसते तेनेमां मानुषीं पुरं जयन्ति ॥ ४ ॥ एताभिर्वै देवा ऽउपसद्भिः । पुरः प्प्राऽभिन्दन्निमाँल्लो-कान्न्प्राऽजयँस्तथो ऽएवैष ऽएतन्नाऽऽहैवाऽस्मा ऽअस्मिँल्लोके कश्चन पुरः कुरुत ऽइमानेवैतल्लोकान्न्प्रभिनत्तीमाँल्लोकान्न्प्र-जयति तस्मादुपसद्भिर्यजते ॥ ५ ॥ ता वा ऽआज्यहविषो भवन्ति । व्वज्रो वा ऽआज्यमेतेन वै देवा व्वज्रेणाऽऽज्येन पुरः प्प्राऽभिन्दन्निमाँल्लोकान्न्प्राजयँस्तथो ऽएवैष ऽएतेन व्वज्रेणाऽऽज्येनेमाँल्लोकान्न्प्रभिनत्तीमाँल्लोकान्न्प्रजयति त-स्मादाज्यहविषो भवन्ति ॥ ६ ॥ स वा ऽअष्टौ कृत्वो जुह्वां गृह्णाति । चतुरुपभृत्यथो ऽइतरथाऽऽहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व ऽउपभृतीति ॥ ७ ॥ स वा ऽअष्टावेव

---

* 'अग्निर्वृत्राणि जङ्घनत्' 'य उग्र इव शर्यहाः' ऋ० सं० ६. १६. ३४, ४९ । 'त्वं सोमासि सत्पतिः, गयस्फानो अमीवहाः' ऋ० सं० १. ९१. ५, १२ । 'इदं विष्णुर्विचक्रमे, त्रीणि पदा विचक्रमे' ऋ० सं० १. २२. १७, १८ । इति त्रीणि युगलानि क्रमेणाऽग्नि-सोमविष्णूनां याज्यापुरोनुवाक्या भवन्ति ।

कृत्वो जुह्वां गृह्णाति । चतुरुपभृति तद्वज्रमभिभारं करोति तेन वज्रेणाऽभिभारेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति ॥ ८ ॥ अग्नीषोमौ वै देवानाꣳ सयुजौ । ताभ्याꣳ साकं गृह्णाति विष्णव ऽएकाकिनेऽन्यतरमेवाऽऽघारमाघारयति यꣳ स्रुवेण प्रतिक्रामति वा ऽउत्तरमाघारमाघार्ष्याऽभिजित्या ऽअभिजयानीति तस्मादन्यतरमेवाऽऽघारमाघारयति यꣳ स्रुवेण ॥ ९ ॥ अथाऽऽश्राव्य * न होतारं प्रवृणीते । सीद होतरित्येवाऽऽहोपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥ १० ॥ सऽआहाऽतिक्राम†न्नग्नयेऽनुब्रूहीति । आश्राव्याऽऽहाऽग्निं यजेति ‡ वषट्कृते जुहोति ॥ ११ ॥ अथाऽऽह सोमायाऽनुब्रूहीति। आश्राव्याऽऽह सोमं यजेति वषट्कृते जुहोति ॥१२॥ अथ यदुपभृत्याज्यं भवति। तत्समानयमान ऽआह‡‡ विष्णवेऽनुब्रूहीत्याश्राव्याऽऽह विष्णुं यजेति वषट्कृते जुहोति ॥ १३ ॥ स यत्समानत्र तिष्ठञ्जुहोति। न यथेदं प्रचरन्सञ्चरत्यभिजित्या ऽअभिजयानीत्यथ यदेता देवता यजति वज्रमेवैतत्सꣳस्करो$त्यग्निमनीकꣳ सोमꣳ शल्यं विष्णुं कुल्मलꣳ ॥ १४ ॥ संवत्सरो हि वज्रः । अग्निर्वाऽअहः सोमो रात्रिरथ यदन्तरेण तद्विष्णुरेतद्वै परिप्लवमानꣳ

* का० श्रौ० सू० ८. २. २९ ।

† का० श्रौ० सू० ८. २. ३० ।

‡ 'अर्धं हुत्वा सोमायेति' का० श्रौ० सू० ८. २. ३१ ।

‡‡ 'विष्णवे समानीयेति' का० श्रौ० सू० ८. २. ३१ ।

$ अग्निमित्यारभ्य विष्णुमित्यतः प्राक् ग्रन्थः ( १. ४. ८ ) ऐ० ब्रा० एवमेव । तै० सं० ६. २. ३. १ ।

संवत्सरं करोति ॥ १५ ॥ संवत्सरो वज्रः । एतेन वै देवाः संवत्सरेण वज्रेण पुरः प्राऽभिन्दन्निमाँल्लोकान्प्राऽजयँस्तथो ऽएवैष ऽएतेन संवत्सरेण वज्रेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादेता देवता यजति ॥ १६ ॥ स वै तिस्र ऽउपसद ऽउपेयात् । त्रयो वा ऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति *द्विरेकया प्रचरति द्विरेकया ॥ १७ ॥ †ताः षट् सम्पद्यन्ते । षड्वा ऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्द्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥ १८ ॥ यद्यु द्वादशोपसद ऽउपेयात् । द्वादश वै मासाः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥ १९ ॥ ताश्चतुर्विꣳशतिः सम्पद्यन्ते । चतुर्विꣳशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥ २० ॥ ‡स यत्सायम्प्रातः प्रचरति । तथा ह्येव सम्पत्सम्पद्यते स यत्पूर्वाह्णे प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युध्यन्ति तां जित्वा स्वाꣳ सतीं प्रपद्यन्ते ॥२१॥ स यत्प्रचरति । तद्युध्यत्यथ यत्सन्तिष्ठते तज्जयत्यथ यज्जुहोति स्वामेवैतत्सतीं प्रपद्यते ॥ २२ ॥ स जुहोति । ‡‡यया

* 'द्विरेकया चरति' का० श्रौ० ८. २. ३४ ।

† तै० सं० ६. २. ३. ३–४ द्रष्टव्यम् ।

‡ का० श्रौ० सू० ८. २. ३५ द्रष्टव्यम् ।

‡‡ का० श्रौ० सू० ८. २. ३६ । तै० सं० ६. २. ३. १–५ द्रष्टव्यम् ।

द्विरेकस्याऽन्हः प्प्रचरिष्यन्नभवति *'या ते ऽअग्नेऽयःशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। †उग्रं वचो ऽअपाऽवधीत्त्वेषं वचोऽअपावधीत्स्वाहे'त्त्येवङ्रूपा हि साऽऽसीदयस्मयी हि साऽऽसीत् ॥ २३ ॥ अथ जुहोति । यया द्विरेकस्याऽन्हः प्प्रचरिष्यन्नभवति 'या ते ‡ऽअग्ने रजःशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। उग्रं वचो ऽअपाऽवधीत्त्वेषं वचो ऽअपावधीत्स्वाहे'त्त्येवङ्रूपा हि साऽऽसीद्रजता हि साऽऽसीत् ॥ २४ ॥ अथ जुहोति । यया द्विरेकस्याऽन्हः प्प्रचरिष्यन्नभवति 'या ते ऽअग्ने हरिशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। उग्रं वचोऽअपावधीत्त्वेषं वचो ऽअपावधीत्स्वाहे'त्त्येवङ्रूपा हि साऽऽसीद्धरिणी हि साऽऽसीद्यद्यु द्वादशोपसद ऽउपेयाच्चतुरहमेकया प्प्रचरेच्चतुरहमेकया ॥ २५ ॥ अथाऽतो व्व्रतोपसदामेव । पर ऽउर्व्वीर्व्वा ऽअन्न्या ऽउपसदः परोऽह्वीरन्न्याः स यासामेकं प्रथमाहं दोग्ध्यथ द्वावथ ‡‡ त्रींस्ताः पर ऽउर्व्वीरथ यासां त्रीन्प्रथमाहं दोग्ध्यथ द्वावथैकं ताः परोऽह्वीरुर्व्या वै परोऽह्वीस्ताः पर ऽउर्व्वीरुर्व्याः पर ऽउर्व्वीस्ताः

(१) शु० सं० अ० ५ क० ८। (२) शु० सं० अ० ५ क० ८। (३) शु० सं० अ० ५ क० ८।

* 'उपसदं जुहोति स्रुवेण या ते इति' का० श्रौ० सू० ८. २. ३३।

† 'यथा असुरैः पराजिता देवा अन्नपाने अलभमानाः क्षुत्पिपासाभ्यां वयं पीडिता इति यदूचुस्तद् उग्रं वचः। 'तथा किं वा वीरहत्यादि महापातकमस्माभिः कृतमिति क्लिश्नन्तो यद्वाक्यं सन्तापहेतुत्वेन दीप्तमूचुस्तत् त्वेषं वचः' तथा च—"अशनायापिपासे ह वा उग्रं वच एनश्च वै वीरहत्यं च त्वेषं वचः" तै० सं० १. २. ११। इति।

‡ का० श्रौ० सू० ८. २. ३६।

‡‡ का० श्रौ० सू० ८. २. ३७।

परोऽह्वीः ॥ २६ ॥ तपसा वै लोकं जयन्ति । तदस्यैतत्परः पर ऽएव वरीयस्तपो भवति परः-परः श्रेयाꣳसं लोकं जयति वसीयानु हैवाऽस्मिँल्लोके भवति य ऽएवं विद्वान्परोऽह्वीरुपसद ऽउपैति तस्मादु परोऽह्वीरेवोपसद ऽउपेयाद्यद्यु द्वादशोपसद ऽउपेयात्त्रीँश्चतुरहं *दोहयेद् द्वौ चतुरहमेकं चतुरहम् ॥ २७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥१२१॥

[ महावेदिमानम् ]

तद्य ऽएष पूर्वार्द्ध्यो वर्षिष्ठ स्थूणाराजो भवति । तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमाँस्तच्छङ्कुं निहन्ति †सोऽन्तःपातः ॥ १ ॥ तस्मान्मध्यमाच्छङ्कोः । दक्षिणा पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥ २ ॥ तस्मान्मध्यमाच्छङ्कोः । उदङ् पञ्चदश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥ तस्मान्मध्यमाच्छङ्कोः । प्राङ् षट्त्रिꣳशतं विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्द्धः ॥ ४ ॥ तस्मान्मध्यमाच्छङ्कोः । दक्षिणा द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं नि-

* का० श्रौ० ८. ३. १–२ । तै० सं० ६. २. ३. ५–१४ द्रष्टव्यम् ।

† 'पूर्वार्ध्यात्स्तम्भात् पुरस्तात् त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः' का० श्रौ० सू० ८. ३. ७ । इत्यारभ्य ८-१२ द्रष्टव्यम् ।

हन्ति स दक्षिणोऽद्धसः ॥ ५ ॥ तस्मान्मद्ध्यमाच्छङ्कोः । उदङ् द्वादश विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति स ऽउत्तरोऽद्धस ऽएषा मात्रा वेदेः ॥ ६ ॥ अथ यत्त्रिꣳशद्विक्रमा पश्चाद्भवति । त्रिꣳशदक्षरा वै विराड्विराजा वै देवाऽअस्मिँल्लोके प्प्रत्त्यतिष्ठँस्तथो ऽएवैष ऽएतद्विराजैवाऽस्मिँल्लोके प्प्रतितिष्ठति ॥ ७ ॥ अथो ऽअपि त्रयस्त्रिꣳशत्स्युः । त्रयस्त्रिꣳशदक्षरा वै विराट् तद्विराजैवाऽस्मिँल्लोके प्प्रतितिष्ठति ॥ ८ ॥ अथ यत्षट्त्रिꣳशद्विक्रमा प्प्राची भवति । षट्त्रिꣳशदक्षरा वै बृहती बृहत्त्या वै देवाः स्वर्ग्गं लोकꣳ समाश्नुवत तथो ऽएवैष ऽएतद्बृहत्त्यैव स्वर्ग्गं लोकꣳ समश्नुते सोऽस्य दिव्व्याऽऽहवनीयो भवति ॥ ९ ॥ अथ यच्चतुर्विंꣳशतिविक्रमा पुरस्ताद्भवति । चतुर्विंꣳशत्त्यक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्धं ऽएष यज्ञस्य तस्माच्चतुर्विंꣳशतिविक्रमा पुरस्ताद्भवत्त्येषा मात्रा वेदेः ॥ १० ॥ अथ यत्पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशꣳसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्प्रजननादिमाः प्प्रजाः प्प्रजायन्ते ॥ ११ ॥ नासिका ह वाऽएषा यज्ञस्य यदुत्तरवेदिः । अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्न्नाम ॥ १२ ॥ द्वय्यो ह वा ऽइदमग्रे प्प्रजाऽआसुः । आदित्त्याश्चैवाऽङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञꣳ समभरँस्ते यज्ञꣳ सम्भृत्त्योचुरग्निमिमां नः श्वः सुत्त्यामादित्त्येब्भ्यः प्प्रब्रूह्यनेन नो यज्ञेन याजयतेति ॥१३॥

ते हाऽऽदित्या ऽऊचुः । उपजानीत यथाऽस्मानेवाऽङ्गिरसो
जयान्न वयमङ्गिरस ऽइति ॥ १४ ॥ ते होचुः । वा ऽअन्न्येन
यज्ञादपक्रमणमस्त्यन्तरामेव सुत्त्यां ध्रियामहा ऽइति ते
यज्ञꣳ सञ्जह्रुस्ते यज्ञꣳ सम्भृत्त्योचुः श्वःसुत्त्यां वै त्त्वमस्म-
ब्भ्यमग्ने प्प्राऽवोचोऽथ वयमद्य सुत्त्यामेव तुब्भ्यं प्रब्रूमोऽङ्गि-
रोब्भ्यश्च तेषां नस्त्वꣳ होताऽसीति ॥ १५ ॥ तेऽन्न्यमेव
प्प्रति प्प्रजिग्घ्युः । अङ्गिरसोऽच्छ ते हाऽप्प्यङ्गिरसोऽग्नये-
ऽन्वागत्त्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्प्रत्त्यादृथा-
ऽइति ॥ १६ ॥ स होवाच । अनिन्द्या वै माऽवृषत सोऽनि-
न्द्यैर्वृतो नाऽशकमपक्रमितुमिति तस्मादु हाऽनिन्द्यस्य
व्वृतो नाऽपक्रामेत्त ऽएतेन सद्यः क्रियाऽङ्गिरस ऽआदित्त्या-
नयाजयन्त्स सद्यःक्रीः ॥ १७ ॥ तेब्भ्यो व्वाचं दक्षिणा-
मानयन्। तां न प्प्रत्त्यगृह्णन्न्हास्यामहे यदि प्प्रतिग्रहीष्याम-
ऽइति तदु तद्यज्ञस्य कर्म्म न व्व्यमुच्च्यत यद्दाक्षिणमा-
सीत् ॥ १८ ॥ अथैब्भ्यः सूर्य्यं दक्षिणामानयन् । तं प्रत्त्य-
गृह्णँस्तस्मादु ह स्माऽऽहुरङ्गिरसो वयं वा ऽआर्त्विजीनाः
स्मो वयं दक्षिणीया ऽअपि वा ऽअस्माभिरेष प्प्रतिगृहीतो
य ऽएष तपतीति तस्मात्सद्यः क्रियो*ऽश्वः श्वेतो दक्षिणा
॥ १९ ॥ तस्य† रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते
य ऽएष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः

* "यः कश्चाऽध्वानमश्नुवीताऽश्वः स वचनीयः स्यात्"
"अश्वः कस्मात् अश्नुतेऽध्वानं महाशनो भवतीति वा" इति यास्कोक्तेः ।

† 'स्वर्णनिर्मितं फलकाकारमाभरणविशेषं 'रुक्मम्' इत्युच्यते' ।

स्यात्तस्य रुक्मꣳ पुरस्ताद् भवति तदेतस्य रूपं क्रियते य ऽएष तपति ॥ २० ॥ तेभ्यो ह वाक्चुक्रोध । केन मदेष श्रेयाꣳबन्धुना३केना३ यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोभयाऽनन्तरेण देवासुरान्त्सँस्थत्तान्त्सिꣳही भूत्वाऽऽददाना चचार तामुपैव देवा ऽअमन्त्रयन्तोपाऽसुरा ऽअग्निरेव देवानां दूत ऽआस सहरक्षाऽइत्यसुररक्षसमसुराणाꣳ ॥ २१ ॥ सा देवानुपाऽवर्त्स्यन्त्युवाच । यद्व ऽउपावर्त्तेय किं मे ततः स्यादिति पूर्वामेव त्वाऽग्नेराहुतिः प्प्राप्स्यसीत्यथ हैषा देवानुवाच यां मया काञ्चाऽऽशिषमाशासिष्यध्वे सा वः सर्वा समर्द्धिष्यतऽइति सैवं देवानुपाऽऽववर्त्त ॥ २२ ॥ स यद्धार्यमाणेऽग्नौ । उत्तरवेदिं व्व्याघारयति यदेवैनामदो देवा ऽअब्रुवन्पूर्वां त्वाऽग्नेराहुतिः प्प्राप्स्यतीति तदेवैनामेतत्पूर्वामग्नेराहुतिः प्प्राप्नोति व्वाग्घ्येषा निदानेनाऽथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्वत्त्वाय व्वाग्घि यज्ञो व्वागु ह्येषा ॥ २३ ॥ तां व्वै युगशम्म्येन व्विमिमीते । युगेन यत्र हरन्ति शम्म्यया यतो हरन्ति युगशम्म्येन वै योग्ग्यं युञ्जन्ति सा यद्देवाऽदः सिꣳही भूत्वा शान्तेवाऽऽचरत्तदेवैनामेतद्यज्ञे युनक्ति ॥२४॥ तस्मान्निवृत्तदक्षिणां न प्प्रतिगृह्णीयात् । सिꣳही हैनं भूत्वा क्षिणोति नो हाऽमा कुर्वीत सिꣳही हैवैनं भूत्वा क्षिणोति नो हाऽन्यस्मै दद्याद्यज्ञं तदन्यत्राऽत्मनः कुर्वीत तस्माद्योऽस्याऽपि पाप ऽइव समानबन्धुः स्यात्तस्मा ऽएनां दद्यात्स यद्ददाति तदेनꣳ सिꣳही भूत्वा न क्षिणोति

यदु समानबन्धवे ददाति तदु नाऽन्यत्राऽऽत्मनः कुरुत
ऽएषो निवृत्तदक्षिणायै प्रतिष्ठा ॥ २५ ॥ *अथ शम्म्या
ञ्च स्फ्यञ्चाऽऽदत्ते । तद्य ऽएष पूर्वार्द्ध्यः उत्तरार्द्ध्यः शङ्कु-
र्भवति तस्मात्प्रत्यङ् प्रक्रामति त्रीन्विक्रमाँस्तच्चात्वालं
परिलिखति सा† चात्वालस्य मात्रा नाऽत्रमात्राऽस्ति यत्रैव
स्वयं मनसा मन्येताऽग्रेणोत्करं तच्चात्वालं परिलिखेत्
॥ २६ ॥ स वेद्यन्तात् । उदीचीꣳ शम्म्यां निदधाति स
परिलिखति '[1]तप्तायनी मे ऽसी'तीमामेवैतदाहाऽस्याꣳ
हि तप्त ऽएति ॥ २७ ॥ अथ पुरस्तात् । उदीचीꣳ शम्म्यां
निदधाति स परिलिखति '[2]वित्तायनी मेऽसी'तीमामेवैत-
दाहाऽस्याꣳ हि विविदान ऽएति ॥२८॥ अथाऽनु वेद्यन्तम् ।
प्राचीꣳ शम्म्यां निदधाति स परिलिख'[3]त्यवतान्मा नाथि-
तादि'तीमामेवैतदाह यत्र नाऽथैतन्माऽवतादिति ॥ २९ ॥
अथोत्तरतः । प्राचीꣳ शम्म्यां निदधाति स परिलिख-
'[4]त्यवतान्मा व्यथितादि'ती मामेवैतदाह यत्र व्यथैतन्मा-
ऽवतादिति ॥ ३० ॥ अथ हरति । यत्र हरति तदग्नी
दुपसीदति स वा ऽग्नीनामेव नामानि गृह्णन्हरति यान्वा-
ऽअमून्देवा ऽअग्रेऽग्नीन् होत्राय प्राऽवृणत ते प्राऽधन्वँस्त-

* 'द्वात्रिंसदङ्गुलप्रमाणां सगर्त्तां वारणीं शम्याम्' का० श्रौ० सू० वृ० ( ५. ३. २० )।
'गदया समानाकारो व्यायामार्धपरिमितः काष्ठविशेषः शम्या' तै० सं० १. १. ६।
'गदया सदृशी बाहुपरिमिता शम्या' तै० ब्रा० ३. २. ६।

† 'उत्तरवेदि निचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते'।

(१) शु० सं० अ० ५ क० ९। (२) शु० सं० अ० ५ क० ९। (३) शु० सं० अ० ५ क० ९। (४) शु० सं० अ० ५ क० ९।

ऽइमा ऽएव पृथिवीरूपाऽसर्प्पन्निमामहैव द्वे ऽअस्याः परे तेनैवैतन्निदानेन हरति ॥ ३१ ॥ स प्रहरति । 'विदेदग्नि-र्नभो नामाऽग्ने ऽअङ्गिर ऽआयुना नाम्नेही'ति स यत्प्राऽधन्वँस्तदायुर्दधाति तत्समीरयति 'यो ऽस्यां पृथिव्यामसी'ति योऽस्यां पृथिव्यामसीति हत्त्वा निदधाति 'यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वाऽऽदध' ऽइति यत्तेऽनाधृष्टꣳ रक्षोभिर्न्नाम यज्ञियं तेन त्वाऽऽदध ऽइत्येवैतदाहा'ऽनु त्वा देववीतय' ऽइति चतुर्थꣳ हरति देवेभ्यस्त्वा जुष्टाꣳ हरामीत्येवैतदाह तां वै चतुःस्त्रक्तेश्चात्वालाद्धरति चतस्रो वै दिशः सर्वाभ्य ऽएवैनामेतद्दिग्भ्यो हरति ॥ ३२ ॥ अथा*ऽनुव्यूहति । 'सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्वे'ति सा यदेवाऽदः सिꣳही भूत्त्वाऽशान्तेवाऽचरत्तदेवैनामेतदाह सिꣳह्यसीति सपत्नसाहीति त्वया वयꣳ सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वा ऽउत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥ ३३ ॥ तां वै युगमात्रीं वा सर्वतः करोति । यजमानस्य वा दशदश पदानि दशाक्षरा वै विराड्वाग्वै विराड्वाग्यज्ञो मध्ये नाभिकामिव करोति समानत्राऽऽसीनो व्याघारयाणीति ॥ ३४ ॥ तामद्भिरभ्युक्षति । सा यदेवाऽदः सिꣳही भूत्त्वाऽशान्ते वाऽऽचरच्छान्तिरापस्तामद्भिः शमयति योषा

(१) शु० सं० अ० ५ क० ९। (२) शु० सं० अ० ५ क० ९। (३) शु० सं० अ० ५ क० ९। (४) शु० सं० अ० ५ क० ९। (५) शु० सं० अ० ५ क० १०।

* का० श्रौ० सू० ५. ३. ३२।

वा ऽउत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति तस्मादद्भिरभ्युक्षति ॥ ३५ ॥ सोऽभ्युक्षति । '(१) सिꣳहीरसि सपत्नसाही देवेभ्यः शुन्धस्वे'त्यथ सिकताभिरनुविकरत्यलङ्कारो न्वेव सिकता भ्राजन्त ऽइव हि सिकता ऽअग्नेर्वा ऽएतद्वैश्वानरस्य भस्म यत्सिकता ऽअग्निं वा ऽअस्यामाधास्यन्भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनु विकिरति सोऽनु विकिरति '(२) सिꣳहीरसि सपत्नसाही देवेभ्यः शुम्भस्वे'त्यथैनां छादयति सा *च्छन्नैताꣳ रात्रिं वसति ॥ ३६ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अथाऽग्निप्रणयनादि ]

†इध्ममभ्यादधति । उपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुवञ्च स्रुचश्च सम्मार्ष्ट्यथोत्पूयाऽऽज्यं पञ्चगृहीतं गृह्णीते यदा प्रदीप्त ऽइध्मो भवति ॥१॥ अथोद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाऽऽहाऽग्नये प्रह्रियमाणायाऽनुब्रूह्येकस्फ्ययाऽनूदेहीत्यनूदैति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोरुर्ध्व ऽएष वेदेर्जघनार्द्धे भवति तद्यद्देवाऽत्राऽन्तःपातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति ॥ २ ॥ तद्धैके । ओत्तरवेदेरनूदायन्ति तदु तथा न कुर्य्याद्देवैतस्मान्मध्यमाच्छङ्कोरनूदेयात्त ऽआयन्त्यागच्छ-

( १ ) शु० सं० अ० ५ क० १० । ( २ ) शु० सं० अ० ५ क० १० ।
* का० श्रौ० सू० ५. ४. १ ।
† का० श्रौ० सू० ५. ४. २ ।

न्त्युत्तरवेदिम् ॥ ३ ॥ *प्रोक्षणीरद्ध्वर्युरादत्ते । स पुरस्तादेवाऽग्रे †प्प्रोक्षत्त्युदङ् तिष्ठ'न्निन्द्रघोषस्त्वा व्वसुभिः पुरस्तात्पात्वि'तीन्द्रघोषस्त्वा व्वसुभिः पुरस्ताद्गोपायत्वित्त्येवैतदाह ॥ ४ ॥ अथ पश्चात्प्रोक्षति । 'प्रचेतास्त्वा रुद्रैः पश्चात्पात्वि'ति प्प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्त्येवैतदाह ॥ ५ ॥ अथ दक्षिणतः प्प्रोक्षति । 'मनोजवास्त्वा पितृभिर्द्दक्षिणतः पात्वि'ति मनोजवास्त्वा पितृभिर्द्दक्षिणतो गोपायत्त्वित्त्येवैतदाह ॥ ६ ॥ ‡ अथोत्तरतः प्प्रोक्षति । 'विश्वकर्म्मा त्वाऽदित्त्यैरुत्तरतः पात्वि'ति विश्वकर्म्मा त्वाऽदित्त्यैरुत्तरतो गोपायत्वित्त्येवैतदाह ॥ ७ ॥ अथ याः प्प्रोक्षण्ण्यः पिरिशिष्यन्ते । तद्ये ऽएते पूर्वे स्त्रक्ती तयोर्र्या दक्षिणा तान्न्यन्तेन बहिर्वेदि निनय'तीदमहं तन्तं व्वार्वहिर्द्धा यज्ञान्निः स्त्रजामी'ति सा यदेवाऽदः सिक्ता ही भूत्त्वाऽशान्ते वाऽचरत्तामेवाऽस्या ऽएतच्छुचं बहिर्द्धा यज्ञान्निः स्त्रजति यदि नाऽभिचरेद्यद्यु ऽअभिचरेदादिशेदिदमहं तन्तं व्वारमुमभि निःस्त्रजामीति तमेतया शुचा विद्ध्यति स शोचन्नेवाऽमुं लोकमेति ॥ ८ ॥ स यद्धारर्षमाणेऽग्नौ । उत्तरवेदिं व्व्याघारयति यदेवैनामदो देवाऽअब्रुवन्न्पूर्वां त्वाऽग्नेराहुतिः प्प्राप्स्यतीति तदेवैनामेतत्पू-

* अत्र शतम् १८०० ॥

† का० श्रौ० सू० ५. ४. ९–१० ।

‡ का० का० श्रौ० सू० ५. ४. ११ ।

(१) शु० सं० अ० ५ क० ११ । (२) शु० सं० अ० ५ क० ११ । (३) शु० सं० अ० ५ क० ११ । (४) शु० सं० अ० ५ क० ११ । (५) शु० सं० अ० ५ क० ११ ।

र्व्वामग्नेराहुतिं प्प्राप्नोति यद्वेषा देवानब्रवीद्यां मया काञ्चा-ऽऽशिषमाशासिष्यद्ध्वे सा वः सर्व्वा समर्द्धिष्यत ऽइति तामेनयाऽत्रर्त्त्विजो यजमानायाऽऽशिषमाशासते साऽस्म्मै सर्व्वा समृद्ध्यते ॥ ९ ॥ तद्वा ऽएतदुकं कुर्व्वन्द्वयं करोति । यदुत्तरवेदिं व्याघारयत्यथ यैषां मध्येऽनाभिकेव भवति तस्यै ये पूर्व्वे स्रक्ती तयोर्य्या दक्षिणा ॥ १० ॥ तस्यामाघा-यति । 'सिᳬंहीरसि स्वाहे'त्यथाऽपरयोरुत्तरस्याᳬं 'सिᳬंही-स्याऽऽदित्यवनिः स्वाहे'त्यथाऽपरयोर्द्दक्षिणस्याᳬं 'सिᳬं-हीरसि ब्रह्मवनिः क्षत्रवनिः स्वाहे'ति बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाऽऽशास्त ऽउभे व्वीर्य्ये ॥ ११ ॥ अथ *पूर्व्व-योरुत्तरस्याᳬं । 'सिᳬंहीरसि सुप्रजावनी रायस्पोषवनिः स्वाहे'ति तत्प्रजामाशास्ते यदाह सुप्रजावनिरिति रायस्पो-षवनिरिति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते ॥ १२ ॥ अथ मद्ध्य ऽआघारयति । 'सिᳬंहीरस्यावह देवान्यजमानाय स्वाहे'ति तद्देवान्यजमानायाऽऽवहयत्यथ स्रुचमुद्यच्छति 'भूतेभ्यस्त्वेति' प्प्रजा वै भूतानि प्प्रजाभ्यस्त्वेत्ये वै तदाह ॥ १३ ॥ अथ †परिधीन्परिदधाति । 'ध्रुवोऽसि पृथिवीं दृᳬं-हे'ति मध्यमं 'ध्रुवक्षिदस्यन्तरिक्षं दृᳬंहे'ति दक्षिण'मच्च्यु-

(१) शु० सं० अ० ५ क० १२ । (२) शु० सं० अ० ५ क० १२ । (३) शु० सं० अ० ५ क० १२ । (४) शु० सं० अ० ५ क० १२ । (५) शु० सं० अ० ५ क० १२ । (६) शु० सं० अ० ५ क० १२ । (७) शु० सं० अ० ५ क० १३ । (८) शु० सं० अ० ५ क० १३ ।

* का० श्रौ० सू० ५. ४. १२–१३ ।

† का० श्रौ० सू० ५. ४. १४ ।

तंक्षिदसि दिवं दृꣳहे'त्युत्तर'मग्नेः पुरीषमसी'ति * सम्भारानुपनिवपति तद्यत्सम्भारा भवन्त्यग्नेरेव सर्वत्त्वाय ॥ १४ ॥ शरीरꣳ हैवाऽस्य । पीतुदारु तद्यत्पैतु दारवाः परिधयो भवन्ति शरीरेणै वैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १५ ॥ माꣳसꣳ हैवाऽस्य गुल्गुलु । तद्यद् गुल्गुलु भवति माꣳसेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १६ ॥ गन्धोहैवाऽस्य सुगन्धितेजनम् । तद्यत्सुगन्धितेजनं भवति गन्धेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १७ ॥ अथ यद्वृष्णेस्तुका भवति । वृष्णे वै विषाणे ऽअन्तरेणाऽग्निरेकाꣳ रात्रिमुवास तद्यदेवाऽत्राऽग्नेर्न्यक्तं तदिहाऽप्यसदिति तस्माद्वृष्णेस्तुका भवति तस्माद्या शीर्ष्णो नेदिष्ठꣳ स्यात्तामाच्छिद्याऽऽहरेद्यद्यु तां न विन्देदपि यामेव काञ्चाऽऽहरेत्तद्यत्परिधयो भवन्ति गुप्त्या ऽएव दूर ऽइव ह्येनमुत्तरे परिधयऽआगच्छन्ति ॥१८॥ (A)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सदोहविर्धाननिर्माणादि ]

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत ऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो

(१) शु० सं० अ० ५ क० १३ । (२) शु० सं० अ० ५ क० १३ ।

* का० श्रौ० सू० ५. ४. १५ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

कपि० सं० ३९. ३. ४; का० सं० २५. ६; मै० सं० ३. ८. ५; तै० सं० ६. २. ८; काण्व० शत० ४. ५. २ ।

यज्ञः ॥ १ ॥ शिर ऽएवाऽस्य हविर्द्धानम् । वैष्णवं देवतयाऽथ यदस्मिन्त्सोमो भवति हविर्वै देवानाᳫं सोमस्तस्माद्धविर्द्धानं नाम ॥ २ ॥ [ काण्डस्यार्धम् ॥ ४३० ॥ ] मुखमेवाऽस्याऽऽहवनीयः । स यदा हवनीये जुहोति यथा मुख ऽआसिञ्चेदेवं तत् ॥ ३ ॥ स्तुप ऽएवाऽस्य यूपः । बाहू ऽएवाऽस्याऽऽग्नीध्रीयश्च मार्जालीयश्च ॥ ४ ॥ उदरमेवाऽस्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाऽश्नन्त्युदर ऽएवेदᳫं सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा ऽअसीदँस्तस्मात्सदो नाम त ऽउ ऽएवाऽस्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥ ५ ॥ अथ यावेतौ जघनेनाऽग्नी । पादावेवाऽस्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ ६ ॥ *उभयतोद्वारᳫं हविर्द्धानं भवति । उभयतोद्वारᳫं सदस्तस्मादयं पुरुष ऽआन्तᳫं सन्तृण्णः प्प्रणिक्ते हविर्द्धाने † ऽउपतिष्ठते ॥ ७ ॥ ते समववर्त्तयन्ति । दक्षिणेनैव दक्षिणमुत्तरेणोत्तरं यद्वर्षीयस्तद्दक्षिणᳫं स्यात् ॥ ८ ॥ ‡ तयोः समववृत्तयोः । छदिरधि निदधति यदि छदिर्न्न विन्देयुश्छदिः सम्मितां ‡‡वा भित्तिं प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायीभ्यां छदिः पश्चादधि निदधति छदिः सम्मितां वा भित्तिम् ॥ ९ ॥ अथ पुनः प्प्रपद्य । $ चतुर्ग्गृहीतमाज्यं गृहीत्वा सावित्रं

* पृष्ठ्यामुभयतो द्वार्ये ( ८. ५. २५ ) का० श्रौ० सू० ।
† 'उपतिष्ठेते' इति 'क' पुस्तके ।
‡ का० श्रौ० सू० ८. ३. २०–२४ ।
‡‡ 'वा भित्तिं' इत्यत्र 'वा' इति पदम् 'क. ख. ग' पुस्तकेषु नास्ति ।
$ का० श्रौ० सू० ८. ३. २५ ।

प्रसवाय जुहोति सविता वै देवानां प्रसविता $सवितृप्प्रसूताय यज्ञं तनवामहा ऽइति तस्मात्सावित्रं जुहोति॥१०॥ स जुहोति। 'युञ्जते मन ऽउत युञ्जते धिय'ऽइति मनसा च वै वाचा च यज्ञं तन्वते स यदाह युञ्जते मन ऽइति तन्म्मनो युनक्त्युत युञ्जते धिय ऽइति तद्वाचं युनक्ति धिया–धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्प्रकामोद्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते ॥ ११ ॥ 'विप्प्रा विप्प्रस्य बृहतो विपश्चित' ऽइति। ये वै ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते विप्प्रास्तानेवैतदभ्याह बृहतो विपश्चित ऽइति यज्ञो वै बृहद्विपश्चिद्यज्ञमेवैतदभ्याह 'वि होत्रा दधे वयुना विदेक ऽइदि'ति वि हि होत्रा दधते यज्ञं तन्वाना 'मही देवस्य सवितुः परिष्टुतिः स्वाहे'ति तत्सावित्रं प्रसवाय जुहोति॥१२॥ [ अर्धप्रपाठकः ॥६६॥ ] अथाऽपरं चतुर्ग्गृहीतमाज्यं गृहीत्वा। उपनिष्क्रामति दक्षिणया द्वारा पत्नीं * निष्क्रामयन्ति स दक्षिणस्य †हविर्द्धानस्य दक्षिणायां वर्त्तन्याꣳ हिरण्यं निधाय जुहो'तीदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे स्वाहे'ति सꣳस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपाऽनक्ति 'देवश्रुतौ देवेष्वाघोषतमि'ति प्प्रयच्छति प्प्रातिप्प्रस्थात्रे स्रुचं चा-

(१) शु० सं० अ० ५ क० १४। (२) शु० सं० अ० ५ कं० १४। (३) शु० सं० अ० ५ क० १४। (४) शु० सं० अ० ५ क० १४। (५) शु० सं० अ० ५ क० १५। (६) शु० सं० अ० ५ क० १६।

$ 'क' पुस्तके 'सवितृप्रसूता' इति।

* 'निष्क्रमयन्ति' इति 'क' पुस्तके।

† का० श्रौ० सू० ८. ३. २७।

ऽऽज्यविलापनीश्च पर्युक्षाणयन्ति पत्नीमुभौ जघनेनाऽग्नी ॥१३॥ चतुर्गृहीतमाज्यं गृहीत्वा । प्रतिप्रस्थातोत्तरस्य हविर्द्धानस्य दक्षिणायां वर्त्तन्याᳬं हिरण्यं निधाय जुहो'ती-[1]रांवती धेनुमती हि भूतᳬ सूयवसिनी मनवे दशस्या । व्व्यस्कभ्ना रोदसी विष्णवेते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहे'ति सᳬस्रवं पत्न्यै पाणावानयति * साक्षस्य सन्तापमुपाऽनक्ति 'दे[2]वश्रुतौ देवेष्वाघोषतमि'ति तद्यदेवं जुहोति ॥ १४ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुर रक्षसेभ्य-ऽआसङ्गाद्विभयाञ्चक्रुर्वज्रो वा ऽआज्यन्त ऽएतेन व्वज्रेणाऽऽज्येन दक्षिणतो नाष्ट्रा रक्षाᳬस्यवाऽघ्नँस्तथैषां नियानं नाऽन्ववायँस्तथो ऽएवैष ऽएतेन व्वज्रेणाऽऽज्येन दक्षिणतो नाष्ट्रा रक्षाᳬस्यवहन्ति तथाऽस्य नियानं नाऽन्ववयन्ति तद्यद्वैष्णवीभ्यामृग्भ्यां जुहोति व्वैष्णवᳬ हि हविर्द्धानम् ॥ १५ ॥ अथ यत्पत्न्यक्षस्य सन्तापमुपाऽनक्ति । प्प्रजननमेवैतत्क्रियते यदा वै स्त्रियै च पुᳬसश्च सन्तप्यतेऽथ रेतः सिच्यते तत्ततः प्प्रजायते परागुपाऽनक्ति पराग्घ्येव रेतः सिच्यतेऽथाऽऽह हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति ॥ १६ ॥ अथ †वाचयति । 'प्प्रा[3]ची प्प्रेतमद्ध्वरं कल्पयन्ती' ऽइत्यद्ध्वरो वै यज्ञः प्प्राची प्प्रेतं यज्ञं कल्पयन्तीऽइत्ये वै तदा'होर्द्ध्वं[4] यज्ञं नयतं मा जिह्वरतमि'त्यूर्द्ध्वमिमं

(१) शु० सं० अ० ५ क० १६ । (२) शु० सं० अ० ५ क० १७ । (३) शु० सं० अ० ५ क० १७ । (४) शु० सं० अ० ५ क० १७ ।

* का० श्रौ० सू० ८. ३. २८–३ ।

† का० श्रौ० सू० ८. ४. १–३ ।

यज्ञं देवलोकं नयतमित्त्येवैतदाह मा जिह्वरतमिति तदेतस्मा ऽअह्वलामाशास्ते समुद्रगृह्येव प्प्रवर्त्तयेयुर्य्यथा नोत्त्सर्ज्जेतामसुर्य्या वा ऽएषा वाग्याक्षे नेदिहाऽसुर्य्या वाग्वदादिति यद्युत्त्सर्ज्जेताम् ॥ १७ ॥ एतद्वाचयेत् । * '[1]स्वं गोष्ठमावदतं देवी दुर्य्ये ऽआयुर्म्मा निर्व्वादिष्टं प्रजां मा निर्व्वादिष्टमि'ति तस्यो हैषा प्प्रायश्चित्तिः ॥ १८ ॥ तदाहुः । उत्तरवेदेः प्प्रत्त्यङ् प्रक्रामेत्त्रीन्न्विक्रमाँस्तद्धविर्द्धाने स्त्थापयेत्त्सा हविर्द्धानयोर्म्मात्रेति नाऽत्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्न्येत नाहैव सत्राऽऽत्त्यन्तिके नोदूरे तत्त्स्थापयेत् ॥ १९ ॥ ते ऽअभिमन्त्रयते । '[2]अत्र रमेथां वृष्मन्न्पृथिव्व्या' ऽइति वृष्मं ह्येतत्त्पृथिव्व्यै भवति दिवि ह्यस्याऽऽहवनीयो भवति नब्भ्यस्त्थे करोति तद्धि क्षेमस्य रूपम् ॥ २० ॥ अथोत्तरेण पर्य्येत्त्याऽद्धर्य्युः । दक्षिणं †हविर्द्धानमुपस्तब्भ्नाति '[3]विष्णोर्न्नु कं व्वीर्य्याणि प्प्रवोचं यः पार्त्थिवानि विममे रजाꣳसि । यो ऽअस्कभायदुत्तरः सधस्त्थं विचक्रमाणस्त्रेधोरुगायो व्विष्णवेत्त्वे'ति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे ॥ २१ ॥ ‡अथ प्प्रतिप्प्रस्त्थाता । उत्तरं हविर्द्धानमुपस्तब्भ्नाति '[4]दिवो वा विष्णऽउतवा पृथिव्व्या महो वा विष्ण ऽउरोरन्तरिक्षात् । उभा

* का० श्रौ० सू० ८. ४. ४–५ ।
† का० श्रौ० सू० ८. ४. ६–७ ।
‡ का० श्रौ० सू० ८. ४. ८ ।

( १ ) शु० सं० अ० ५ क० १७ । ( २ ) शु० सं० अ० ५ क० १७ । ( ३ ) शु० सं० अ० ५ क० १८ । ( ४ ) शु० सं० अ० ५ क० १९ ।

हि हस्ता वसुना पृणस्वा प्प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्त्वे'ति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे तद्यद्वैष्णवैर्यजुर्भिरुपचरन्ति वैष्णवꣳ हि हविर्द्धानम् ॥२२॥ अथ * मध्यमं छदिरुपस्पृश्य वाचयति । 'प्रतद्विष्णुस्तवते वीर्य्येण मृगो न भीमꣳ कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वे'तीदꣳ हैं वाऽस्यै तच्छीर्षकपालं यदिदमुपरिष्टादधीव ह्येतत्क्षियन्त्यन्यानि शीर्षकपालानि तस्मादाहाऽधिक्षियन्तीति ॥ २३ ॥ अथ † रराट्यामुपस्पृश्य वाचयति । 'विष्णो रराटमसी'ति ललाटꣳ हैवाऽस्यै तदथोच्छ्रुष्या ऽउपस्पृश्य वाचयति 'विष्णोः श्नप्त्रे स्त्थ' ऽइति सृक्के हैवाऽस्यैते ऽअथ यदिदं पश्चाच्छदिर्भवतीदꣳ हैवाऽस्यै तच्छीर्षकपालं यदिदं पश्चात् ॥ २४ ॥ अथ लस्पूजन्या स्पन्द्यया प्प्रसीव्यति । 'विष्णोः स्यूरसी'त्यथ ग्रन्थिं करोति 'विष्णोर्द्ध्रुवोऽसी'ति नेदव्यवपद्याता ऽइति तं प्रकृते कर्म्मन्निवृष्यति तथोहाऽद्धर्य्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशति वैष्णवमसीति वैष्णवꣳ हि हविर्द्धानम् ॥ २५ ॥ (B)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



* का० श्रौ० सू० ८. ४. १३ ।

† का० श्रौ० सू० ८. ४. १३–२३ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा—
का० श० ६. २. ९; मै० सं० ३. ८. ७; काठ० सं० २५. ८; कपि० सं० ४. १ ।

(१) शु० सं० अ० ५ क० २० । (२) शु० सं० अ० ५ २१ । (३) शु० सं० अ० ५ क० २१ । (४) शु० सं० अ० ५ क० २१ ।

[ *उपरवनिर्माणम् ]

द्वयं व्वा ऽअब्भ्युपरवाः† खायन्ते । शिरो वै यज्ञस्य हविर्द्धानं तद्य ऽइमे शीर्षँश्चत्त्वारः कूपा ऽइमावह द्वाविमौ द्वौ तानेवै तत्करोति तस्मादुपरवान्न्खनति ॥ १ ॥ देवाश्च्च वा ऽअसुराश्च्च । उभये प्प्राजापत्याः पस्प्पृधिरे । ततोऽसुरा ऽएषु लोकेषु कृत्त्यां वलगान्निचख्नुरुतैवश्चिद्देवानभिभवेमेति ॥ २ ॥ तद्वै देवा ऽअस्प्पृण्णवत । त ऽएतैः ‡कृत्त्यां वलगानुद्खनन्न्यदा वै कृत्त्यामुत्खनन्त्यथ सालसा मोघा भवति तथो ऽएवैष ऽएतद्यद्यस्मा ऽअत्र कश्चिद्द्विषन् ब्भ्रातृव्व्यः कृत्त्यां वलगान्निखनति ताने वैतदुत्किरति तस्मादुपरवान्खनति स दक्षिणस्य हविर्द्धानस्याऽधोऽधः प्र ऽउगं खनति ॥ ३ ॥ $सोऽब्भ्रिमादत्ते । 'देवस्य[1] त्वा सवितुः प्प्रसवेऽश्विनो र्बाहुब्भ्यां पूष्णो हस्ताब्भ्यामाददे नार्य्यसी'ति समान ऽएतस्य यजुषो बन्धुर्य्योषा वा ऽएषा यदब्भ्रिस्तस्मादाह नार्य्यसीति ॥ ४ ॥ तान्न्प्रादेशमात्रं व्विना परिलिखति । 'इदम्[2]महः रक्षसां ग्रीवा ऽअपि कृन्ता-

* उपरवा नाम कूपकाः, तेषामुपरि अधिषवणफलके निधीयेते तयोरुपरि अधिषवणचर्म, तत्र सोमोऽभिपूयते, तस्मिन्ग्रावभिर्हन्यमाने वादित्रोदरवत् सुषिरास्ते कूपा गम्भीरमुपरवन्तीत्युपरवा इत्यभिधीयन्ते इति याज्ञिकदेवः ।

† 'ख्यायन्ते' इति 'च' पुस्तके ।

‡ कृत्यामिति, पराजयं प्राप्य पलायमानैरसुरैः इन्द्रादिवधार्थमभिचाररूपेण भूमौ निखाता अस्थि-केश-नखादिपदार्थाः कृत्याविशेषाः वलगाः । वलगो वृणोतेः, इति यास्कः । ( ६. २.)

$ का० श्रौ० सू० ८. ४. १६ ।

( १ ) शु० सं० अ० ५ क० २२ । ( २ ) शु० सं० अ० ५ क० २२ ।

मी'ति व्वज्रो वा ऽअभ्रिर्व्वज्रेणैवैतन्नाष्ट्राणाᳬ रक्षसां ग्रीवा ऽअपि कृन्तति ॥ ५ ॥ तद्यावेतौ पूर्वौ । तयोर्द्दक्षिणमेवाऽग्रे परिलिखेदथाऽपरयोरुत्तरमथाऽपरयोर्द्दक्षिणमथ पूर्वयोरुत्तरम् ॥ ६ ॥ अथो ऽइतरथाऽऽहुः । अपरयोरेवाऽग्र ऽउत्तरं परिलिखेदथ पूर्वयोर्द्दक्षिणमथाऽपरयोर्द्दक्षिणमथ पूर्वयोरुत्तरमित्यथो ऽअपि समीच ऽएव परिलिखेदेतन्न्वेवोत्तमं परिलिखेद्य ऽएष पूर्वयोरुत्तरो भवति ॥ ७ ॥ तान्न्यथाऽपरिलिखितमेव यथापूर्वं खनति । 'बृहन्नसि बृहद्ग्रवा' ऽइत्त्युपस्तौत्त्येवैनानेतन्न्महयत्त्येव यदाह बृहन्नसि बृहद्ग्रवा ऽइति 'बृहतीमिन्द्राय व्वाचं व्वदे'तीन्द्रो वै यज्ञस्य देवता व्वैष्णवᳯ हविर्द्धानं तत्सैन्द्रं करोति तस्मादाह बृहतीमिन्द्राय व्वाचं व्वदेति ॥ ८ ॥* 'रक्षोहणं व्वलगहनमि'ति । रक्षसाᳬ ह्येते व्वलगानां व्वधाय खायन्ते 'व्वैष्णवीमि'ति व्वैष्णवी हि हविर्द्धाने व्वाक् ॥९॥ तान्न्यथाखातमेवोत्किरति । 'इदमहं तं व्वलगमुत्किरामि यम्मे निष्ट्यो यममात्त्यो निचखाने'ति निष्ट्यो वा वा ऽअमात्त्यो वा कृत्त्यां वलगान्निखनति तानेवैतदुत्किरति ॥१०॥ 'इदमहं तं व्वलगमुत्किरामि । यम्मे समानो यमसमानो निचखाने'ति समानो वा वा ऽअसमानो वा कृत्त्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥ ११ ॥

* का० श्रौ० सू० ८. ५. १–८ ।

(१) शु० सं० अ० ५ क० २२ । (२) शु० सं० अ० ५ क० २२ । (३) शु० सं० अ० ५ क० २२ । (४) शु० सं० अ० ५ क० २३ । (५) शु० सं० अ० ५ क० २३ । (६) शु० सं० अ० ५ क० २३ ।

'इदमहं तं वलगमुत्किरामि । यम्मे सबन्धुर्य्यमसबन्धुर्न्निचखाने'ति सबन्धुर्वा वा ऽअसबन्धुर्वा कृत्यां वलगान्निखनति तानेवैतदुत्किरति ॥ १२ ॥ 'इदमहं तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखाने'ति सजातो वा वा ऽअसजातो वा कृत्यां वलगान्निखनति तानेवैतदुत्किर'त्युत्कृत्यां किरामी'त्यन्तत ऽउद्वपति तत्कृत्यामुत्किरति ॥ १३ ॥ तान्वाहुमात्रान्खनेत् । अन्तो वा ऽएषोऽन्तेनैवैतत्कृत्यां मोहयति तानक्षणया सन्तृन्दन्ति यद्यक्षणया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः सन्तृण्णाः ॥ १४ ॥ तान्यथा खातमेवाऽवमर्शयति । * 'स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्य मित्रहे'त्याशीरे वैषैतस्य कर्म्मण ऽआशिषमेवैतदाशास्ते ॥ १५ ॥ अथाऽध्वर्युश्च यजमानश्च सम्मृशेते । पूर्वयोर्दक्षिणेऽध्वर्युर्भवत्यपरयोरुत्तरे यजमानः सोऽध्वर्युः पृच्छति यजमान किमत्रेति भद्रमित्याह तन्नौ सहेत्युपांश्वध्वर्युः ॥ १६ ॥ अथाऽपरयोर्दक्षिणेऽध्वर्युर्भवति । पूर्वयोरुत्तरे यजमानः स यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमित्याह तन्म ऽइति यजमानस्तद्यदेवं सम्मृशेते प्राणानेवैतत्सयुजः कुरुतस्तस्मादिमे प्राणाः परः संविदेऽथ यत्पृष्टो भद्रमिति प्रत्याह कल्याणमेवैतन्मानुष्यै वाचो वदति तस्मात्पृष्टो

---

* का० श्रौ० सू० ८. ५. १३ ।

( १ ) शु० सं० अ० ५ क० २३ । ( २ ) शु० सं० अ० ५ क० २३ । ( ३ ) शु० सं० अ० ५ क० २३ । ( ४ ) शु० सं० अ० ५ क० २४ ।

भद्रमिति प्रत्त्याहाऽथ प्प्रोक्षत्त्येको वै प्प्रोक्षणस्य बन्धुर्मेद्ध्यानेवैतत्करोति ॥ १७ ॥ स प्प्रोक्षति । 'रक्षो[1]हणो वो वलगहन' ऽइति रक्षोहणो ह्येते वलगहनो ह्येते 'प्प्रोक्षा[2]मि वैष्णवानि'ति वैष्णवा ह्येते ॥ १८ ॥ अथ याः प्प्रोक्षण्ण्यः परिशिष्यन्ते । ता ऽअवटेष्ववनयति तद्या ऽइमाः प्प्राणेष्वापस्ता ऽएवैतद्दधाति तस्मादेषु प्प्राणेष्विमा ऽआपः ॥ १९ ॥ सोऽवनयति 'रक्षो[3]हणो वो वलगहनोऽवनयामि वैष्णवानि'त्त्यथ बर्हीᳬषि प्प्राचीनाग्राणि चोदीचीनाग्राणि चाऽवस्तृणाति तद्यानीमानी प्प्राणेषु लोमानि तान्न्येवै तद्दधाति तस्मादेषु प्प्राणेष्विमानि लोमानि ॥ २० ॥ सोऽवस्तृणाति । 'रक्षो[4]हणो वो वलगहनोऽवस्तृणामि वैष्णवानि'त्त्यथ बर्हीᳬषि तनूनीवोपरिष्टात्प्रच्छादयति केशा हैवाऽस्यैते ॥ २१ ॥ अथाऽधिषवणे* फलके ऽउपदधाति । 'र[5]क्षोहणौ वां वलगहना ऽउपदधामि वैष्णवी' ऽइति हनू हैवाऽस्यै ते ऽअथ पर्य्यूहति 'र[6]क्षोहणौ वां वलगहनौ पर्य्यूहामि वैष्णवी' ऽइति दृढ़हत्त्येवैने ऽएतदशिथिले करोति ॥ २२ ॥ अथाऽधिषवणं परिकृत्तं भवति । सर्व्वरोहितं जिह्वा हैवाऽस्यैषा तद्यत्सर्व्वरोहितं भवति लोहिनीव हीयं जिह्वा तन्निदधाति 'वैष्ण[7]वमसी'ति वैष्णवᳬ

(१) शु० सं० अ० ५ क० २५। (२) शु० सं० अ० ५ क० २५। (३) शु० सं० अ० ५ क० २५। (४) शु० सं० अ० ५ क० २५। (५) शु० सं० अ० ५ क० २५। (६) शु० सं० अ० ५ क० २५। (७) शु० सं० अ० ५ क० २५।

* का० श्रौ० सू० ८. ५. २२-३३। ययोः फलकयोरुपरि सोमोऽभिषूयते ते द्वे अधिषवणफलके इत्यर्थः।

ह्येतत् ॥ २३ ॥ अथ ग्राव्ण उपाऽवहरति । दन्ता हैवाऽस्य ग्रावाणस्तद्यद् ग्रावभिरभिषुण्वन्ति यथा दद्भिः प्प्सायादेवं तत्तान्निदधाति 'वैष्णवा स्थे'ति वैष्णवा ह्येत ऽएतदु यज्ञस्य शिरः *सᳪस्कृतम् ॥ २४ ॥(c)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ सदस्यौदुम्बरीनिखननम् ]

†उदरमेवाऽस्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाऽश्नन्त्युदर ऽएवैदᳪ सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा ऽअसीदँस्तस्मात्सदो नाम त ऽउ ऽएवाऽस्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्त्यैन्द्रं देवतया ॥१॥ तन्मद्ध्यऽऔदुम्बरीं मिनोति । अन्नं वा ऽऊर्ग्गुदुम्बर ऽउदरमेवाऽस्य सदस्तन्मद्ध्यतोऽन्नाद्यं दधाति तस्मान्मद्ध्य ऽऔदुम्बरीं मिनोति ॥२॥ अथ य ऽएष मध्यमः शङ्कुर्भवति । वेदेर्ज्जघनार्द्धं तस्मात्प्राङ् प्रकामति षड्विक्रमान्दक्षिणा सप्तममपक्रामति सम्पदः कामाय तदवटं परिलिखति ॥ ३ ॥ सोऽभ्रिमादत्ते । 'देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्भ्यां पूष्णो हस्ताभ्भ्यामाददे नार्य्यसी'ति समान ऽएतस्य यजुषो

* 'क' पुस्तके 'संस्कृतम्' इति ।

( C ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—
काण्वश० ४. ५. ४; का० सं० २५. ९; तै० सं० ६. २. १०-११; ।

† का० श्रौ० स० ८. ६. १-६ ।

( १ ) शु० सं० अ० ५ क० २५ । ( २ ) शु० सं० अ० ५ क० २६ ।

बन्धुरुर्य्योषो वा ऽएषा यदभिस्तस्मादाह नार्ष्वसीति ॥ ४ ॥ अथाऽवटं परिलिखति। 'इदमहꣳ रक्षसां ग्रीवा ऽअपि कृन्तामी'ति वज्रो वा ऽअभिर्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा ऽअपिकृन्तति ॥ ५ ॥ अथ खनति। प्राञ्चमुत्करमुत्किरति यजमानेन सम्मायौदुम्बरीं परिवासयति तामग्रेण प्राचीं निदधात्येतावन्मात्राणि बर्हीꣳष्युपरिष्टादधि निदधाति ॥ ६ ॥ अथ यवमत्यः प्रोक्षण्यो भवन्ति। आपो ह वा ऽओषधीनाꣳ रसस्तस्माद्योषधयः 'केवल्यः खादिता न धिन्वन्त्योषधय ऽउ हाऽपाꣳ रसस्तस्मादापः पीताः केवल्यो न धिन्वन्ति यदैवोभय्यः सꣳसृष्टा भवन्त्यथैव धिन्वन्ति तर्हि हि सरसा भवन्ति सरसाभिः प्रोक्षाणीति ॥७॥ देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः पस्पृधिरे ततो देवेभ्यः सर्वा ऽएवौषधय ऽईयुर्य्यवा हैवैभ्यो नेयुः ॥ ८ ॥ तद्वै देवा ऽअस्पृण्वत। त ऽएतैः सर्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम ॥ ९ ॥ ते होचुः। हन्त यः सर्वासामोषधीनाꣳ रसस्तं यवेषु दधामेति स यः सर्वासामोषधीनाꣳ रस ऽआसीत्तं यवेष्वदधुस्तस्माद्यत्राऽन्या ऽओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्त ऽएवꣳ ह्येषु रसमदधुस्तथो ऽएवैष ऽएतैः सर्वाः सपत्नानामोषधीर्युते तस्माद्यवमत्यः प्रोक्षण्यो भवन्ति ॥ १० ॥ स * यवानावपति। 'यवोऽसि यव-

* का० श्रौ० सू० ६. २. १५।

(१) शु० सं० अ० अ० ५ क० २६। (२) शु० सं० अ० ५ क० २६।

याऽस्मद्द्वेषो यवयाऽरातीरि'ति नाऽत्र तिरोहित मिवाऽस्त्यथ प्प्रोक्षत्त्येको वै प्प्रोक्षणस्य बन्धुम्मेंद्ध्यामेवैतत्करोति ॥ ११ ॥ स *प्प्रोक्षति। 'दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्व्यै त्वे'तीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्त्येषु लोकेषूर्ज्जꣳ रसन्दधाति ॥ १२ ॥ अथ याः प्प्रोक्षण्ण्यः †परिशिष्यन्ते। ता ऽअवटे ऽवनयति 'शुन्धन्ताँल्लोकाः पितृषदना' ऽइति पितृदेवत्त्यो वै कूपः खातस्तमेवैतन्मेद्ध्यं करोति ॥ १३ ॥ ‡अथ बर्हीꣳषि। प्प्राचीनाग्राणि चोदीचीनाग्राणि चाऽवस्तृणाति 'पितृषदनमसी'ति पितृदेवत्त्यं वा ऽअस्या ऽएतद्भवति यन्निखातꣳ सा यथा निखातौषधिषु मिता स्यादेवमेतास्वोषधिषु मिता भवति ॥ १४ ॥ ‡‡तामुच्छ्रयति। 'उद्दिवꣳ स्तभानाऽन्तरिक्षं पृण दृꣳहस्व पृथिव्व्यामि'तीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्त्येषु लोकेषूर्ज्जꣳ रसं दधाति ॥ १५ ॥ $ अथ मिनोति। 'द्युतानस्त्वा मारुतो मिनोत्वि'ति यो वा ऽअयं पवत ऽएष द्युतानो मारुतस्तदेनामेतेन मिनोति 'मित्रावरुणौ ध्रुवेण धर्म्मणे'ति ॥ प्प्राणोदानौ वै

* का० श्रौ० सू० ६. २. १६।
† का० श्रौ० सू० ६. २. १७।
‡ का० श्रौ० सू० ६. २. १८।
‡‡ का० श्रौ० सू० ८. ५. २९।
$ का० श्रौ० सू० ८. ५. ३०।
|| का० श्रौ० सू० ६. ३. ९–१०।

(१) शु० सं० अ० ५ क० २६। (२) शु० सं० १० अ० ५ क० २६। (३) शु० सं० अ० ५ क० २६। (४) शु० सं० अ० ५ क० २७। (५) शु० सं० अ० ५ क० २७। (६) शु० सं० अ० ५ क० २७।

मित्रावरुणौ तदेनां प्राणोदानाभ्यां मिनोति ॥ १६ ॥ *अथ पर्य्यूहति । 'ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामी'ति बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाऽऽशास्त ऽउभे वीर्य्ये रायस्पोषवनीति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते ॥ १७ ॥ अथ †पर्य्यूषति । 'ब्रह्म दृꣳह क्षत्रं दृꣳहाऽऽयुर्द्दृꣳह प्रजां दृꣳहे'त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदाशास्ते समम्भूमि पर्य्यूषणं करोति गर्त्तस्य वा ऽउपरि भूम्म्यथैवं देवत्रा तथा ह्याऽगर्त्तमिद्भवति ॥ १८ ॥ अथाऽप ‡ऽउपनिनयति । यत्र वा ऽअस्यै खनन्तः क्रूरी कुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप ऽउपनिनयति ॥ १९ ॥ ‡‡अथैवमभिपद्य वाचयति । 'ध्रुवाऽसि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादि'ति 'पशुभिरि'ति वैवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ २० ॥ अथ स्रुवेणोपहत्याऽऽज्यम् । $विष्टपमभि जुहोति 'घृतेन द्यावापृथिवी पूर्य्येथामि'ति तदिमे द्यावापृथिवी ऽऊर्ज्जा रसेन भाजयत्यनयोरूर्ज्जꣳ रसं दधाति ते रसवत्या ऽउपजीवनीये ऽइमाः प्रजा ऽउप-

---

* का० श्रौ० सू० ६. ३. ११ ।

† ऐ० ब्रा० ४. २. ४. द्रष्टव्यम् ।

‡ का० श्रौ० सू० ६. ३. १२ ।

‡‡ का० श्रौ० सू० ८. ५. ३१ ।

$ का० श्रौ० सू० ८. ५. ३२ । विष्टपं–विशाखम् 'अभि' विष्टपस्याऽग्रभागस्येत्यर्थः ।

(१) शु० सं० अ० ५ क० २७ । (२) शु० सं० अ० ५ क० २७ । (३) शु० सं० अ० ५ क० २८ । (४) शु० सं० अ० ५ क० २८ । (५) शु०सं० अ० ५ क० २८ ।

जीवन्ति ॥ २१ ॥ * अथ छदिरधि निदधाति । 'इन्द्रस्य च्छदिरसी'त्यैन्द्रꣳ हि सदो 'विश्वजनस्य च्छाये'ति विश्वगोत्रा ह्यस्मिन्ब्राह्मणा ऽआसते तदुभयतश्छदिषी ऽउपदधात्युत्तरतस्त्रीणि परस्त्रीणि तानि † नव भवन्ति त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नव भवन्ति ॥ २२ ॥ तदुदीचीनवꣳशꣳ ‡ सदो भवति । प्राचीनवꣳशꣳ हविर्द्धानमेतद्वै देवानां निष्केवल्यं यद्धविर्द्धानं तस्मात्तत्रनाऽश्नन्ति न भक्षयन्ति निष्केवल्यꣳ ह्येतद्देवानाꣳ स यो ह तत्राऽश्नीयाद्वा भक्षयेद्वा मूर्द्धा हाऽस्य विपतेदथैते मिश्रे यदाग्नीध्रश्च सदश्च तस्मात्तयोरश्नन्ति तस्माद्भक्षयन्ति मिश्रे ह्येते ऽउदीची वै मनुष्याणां दिक्तस्मादुदीचीनवꣳशꣳ सदो भवति ॥ २३ ॥ ‡‡ तत्परिश्रयन्ति । 'परित्त्वा गिर्वणो गिरऽइमा भवन्तु विश्वतः । व्वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय' ऽइतीन्द्रो वै गिर्वा विशो गिरो विशैवैतत्क्षत्रं परिबृꣳहति तदिदं क्षत्रमुभयतो विशा $ परिबृढम् ॥ २४ ॥ अथ लस्पूजन्या स्पन्द्यया प्प्रसीव्व्यति । 'इन्द्रस्य स्यूरसी'त्यथ ग्रन्थिं करोती'न्द्रस्य ध्रुवोऽसीति नेद्व्यवपद्याताऽइतितम्प्रकृते

(१) शु० सं० अ० ५ क० २८। (२) शु० सं० अ० ५ क० २८। (३) शु० सं० अ० ५ क० २९। (४) शु० सं० अ० ५ क० ३०। (५) शु० सं० अ० ५ क० ३०।

* का० श्रौ० सू० ८. ६. ७।

† ब्रा० ता० ( ३. १. ) अत्र नवत्वसम्पादनात्।

‡ यागेऽस्मिन् सदोऽभिधानो मण्डपोऽष्टादशारत्निदीर्घो नवारत्निविस्तृतो दीर्घचतुरस्र उदग्वंशो (का० श्रौ० सू० ८. ६. १-६) विहितः, तत्रापि उदीचीत्वेन व्यवहर्तव्या। मण्डपस्याऽस्य दैर्घ्ये विस्तारे चाऽन्येऽपि कल्पाः सन्ति ते तत एवाऽवगन्तव्या। ( शु० सू० १. २१. २२ )

‡‡ का० श्रौ० सू० ८. ६. ९-१०।

$ 'ख' पुस्तके 'परिवृढꣳ' इति।

कर्म्मंद्विष्यति तथो हाऽद्ध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृश 'त्यैन्द्रमसी'त्यैन्द्रं हि सदः ॥२५॥ अथ * हविर्द्धानयोः । जघनार्द्धं समन्वीक्ष्योत्तरेणाऽऽग्नीध्रं मिनोति तस्याऽर्द्धमन्तर्वेदि स्यादर्द्धं बहिर्वेद्यथो ऽअपि भूयोऽर्द्धादन्तर्वेदि स्यात्कनीयो बहिर्वेद्यथो ऽअपि सर्व्वमेवाऽन्तर्वेदि स्यात्तन्निष्ठितमभिमृशति † 'वैश्वदेवमसी'ति द्वयेनैतद्वैश्वदेवं यदस्मिन्नपूर्वेद्युर्विश्वे देवा ‡ वसतीवरीषूपवसन्ति तेन वैश्वदेवम् ॥ २६ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्विभयाञ्चक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तान्त्सदसो जिग्युस्तेषामेतान्धिष्ण्यानुद्वापयाञ्चक्रुर्य ऽएतेऽन्तः सदसः ॥२७॥ सर्व्वे ह स्म वा ऽएते पुरा ज्ज्वलन्ति । यथाऽयमाहवनीयो यथा गार्हपत्यो यथाऽऽग्नीध्रीयस्तद्यतऽएनानुद्वापयँस्तत ऽएवैतन्न ज्ज्वलन्ति तानाग्नीध्रमभिसःरुरुधुस्तानप्यर्द्धमाग्नीध्रस्य जिग्युस्ततो विश्वेदेवा ऽअमृतत्त्वमपाऽजयँस्तस्माद्वैश्वदेवम् ॥ २८ ॥ तान्देवाः प्प्रतिसमैन्धत । यथा प्प्रत्त्यवस्येत्तस्मादेनान्त्सवने सवन ऽएव प्प्रतिसमिन्धते तस्माद्यः समृद्धः स ऽआग्नीध्रं कुर्य्याद्यो वै ज्ञातोऽनूचानः स समृद्धस्तस्मादग्नीधे प्प्रथमाय दक्षिणां नयन्त्यतो हि विश्वे देवा ऽअमृतत्त्वमपाऽजयँस्तस्माद्यं दीक्षितानामबल्ल्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्तदुनार्त्तं

* का० श्रौ० सू० ८. ६. १० ।

† का० श्रौ० सू० ८. ६. ११ ।

‡ सोमाभिषवार्था आपो 'वसतीवर्यं' इत्युच्यन्ते ।

( १ ) शु० सं० अ० ५ क० ३० । ( २ ) शु० सं० अ० ५ क० ३० ।

तन्नाऽरिष्यतीति तद्यदतो विश्वे देवा ऽअमृतत्वमपाऽजयँस्त-स्माद्वैश्वदेवम् ॥ २९ ॥(A)

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिकासंख्या ॥ १३२ ॥



[ धिष्ण्यनिवापादि ]

विजामानोहैवाऽस्य धिष्ण्याः । इमे समञ्चा ये वै समञ्चास्ते विजामान ऽएत ऽउहैवाऽस्यैत ऽआत्मनः ॥ १ ॥ दिवि वै सोम ऽआसीत् । अथेह देवास्ते देवा ऽअकाम-यन्ता नः सोमो गच्छेत्तेनाऽऽगतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीञ्च कद्रूञ्च वागेव सुपर्णीयं कद्रू-स्ताभ्यार्थं समदञ्चक्रुः ॥ २ ॥ ते हर्त्तीयमाने ऽऊचतुः । यतरा नौ दवीयः परापश्यादात्मानं नौ सा जयादिति तथेति सा ह कद्रूरुवाच परेक्षस्वेति ॥ ३ ॥ सा ह सुपर्ण्यु-वाच । अस्य सलिलस्य पारेऽश्वः श्वेतस्स्थाणौ सेवते तमहं पश्यामीति तमेव त्वं पश्यसीति तद्ध हीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति ॥ ४ ॥ सा यत्सुपर्ण्युवाच । अस्य सलिलस्य पार ऽइति वेदिर्वै सलिलं वेदिमेव सा तदुवाचाऽश्वः श्वेतस्स्थाणौ

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—
तै० सं० ६. २. १०; का० श० ४. ६. १; मै० सं० ३. ८. ९; ।

सेवत ऽइत्त्यग्निर्वा ऽअश्वः श्वेतो यूप स्त्थाणुरथ यत्त्कद्रूरुवाच तस्य वालो न्न्यषञ्जि तमसुं वातो धूनोति तमहं पश्यामीति रशना हैव सा ॥ ५ ॥ सा ह सुपर्ण्युवाच । एहीदं पताव वेदितुं यतरा नौ जयतीति सा ह कद्रूरुवाच त्वमेव पत त्वं वै न ऽआख्यास्यसि यतरा नौ जयतीति ॥ ६ ॥ सा ह सुपर्णी पपात। तद्ध तथैवाऽऽस यथा कद्रूरुवाच तामागताम‍भ्युवाद त्वमजैषी३रहा३मिति त्वमिति होवाचैतद्व्याख्यानः सौपर्णीकाद्रवमिति ॥ ७ ॥ सा ह कद्रूरुवाच । आत्त्मानं वै त्वाऽजैषं दिव्व्यसौ सोमस्तं देवेभ्य ऽआहर तेन देवेभ्य ऽआत्त्मानं निष्क्रीणीष्वेति तथेति सा छन्दाᳬसि सस्त्रजे सा गायत्री दिवः सोममाहरत् ॥ ८ ॥ हिरण्मयोर्ह कुश्योरन्तरवहित ऽआस। ते ह स्म क्षुरपवी निमेषं निमेषमभिसन्धत्तो दीक्षातपसौ हैव ते ऽआसतुस्तमेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या ऽइमा होत्राः ॥ ९ ॥ तयोरन्न्यतरां कुशीमाचिच्छेद । तान्देवेभ्यः प्प्रददौ सा दीक्षा तया देवा ऽअदीक्षन्त ॥ १० ॥ अथ द्वितीयां कुशीमाचिच्छेद । तान्देवेभ्यः प्प्रददौ तत्तपस्तया देवास्तप ऽउपाऽयन्नुपसदस्तपो ह्युपसदः ॥ ११ ॥ खदिरेण ह सोममाचखाद । तस्मात् खदिरो यदेनेनाऽखिदत्तस्मात्खादिरो यूपो भवति खादिर स्फ्योऽच्छावाकस्य हैनं गोपनायां जहार सोऽच्छावाकोऽहीयत ॥ १२ ॥ तमिन्द्राग्नी ऽअनु समतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः ॥ १३ ॥ तस्माद्दी-

क्षिता राजानं गोपायन्ति । नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह ॥१४॥ तस्माद् ब्रह्मचारिण ऽआचार्य्यं गोपायन्ति। गृहान्पशून्नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह तेनैतेन सुपर्ण्णी देवेभ्य ऽआत्मानं निरक्रीणीत तस्मादाहुः पुण्यलोक ऽईजान ऽइति ॥ १५ ॥ ऋणꣳ ह वै पुरुषो जायमान ऽएव । मृत्योरात्मना जायते स यद्यजते यथैव तत्सुपर्ण्णी देवेभ्य ऽआत्मानं निरक्रीणीतैवमेवैष ऽएतन्मृत्यो रात्मानं निष्क्रीणीते ॥ १६ ॥ तेन देवा ऽअयजन्त । तमेते गन्धर्व्वाः सोमरक्षा ऽअन्वाजग्मुस्तेऽन्वागत्याऽब्रुवन्ननु नो यज्ञ ऽआभजत मा नो यज्ञादन्तर्ग्गातास्त्वेव नोऽपि यज्ञेभाग ऽइति॥१७॥ ते होचुः। किं नस्ततः स्यादिति यथैवाऽस्याऽमुत्र गोप्तारोऽभूमैव मेवाऽस्याऽपीह गोप्तारो भविष्याम ऽइति ॥ १८ ॥ तथेति देवा ऽअब्रुवन् । सोमक्रयणा व ऽइति तानेभ्य ऽएतत्सोमक्रयणाननुदिशत्यथैनानब्रुवँस्तृतीयसवने वो घृत्याहुतिः प्राप्स्यति न सौम्याऽपहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नाऽर्हथेति सैनानेषा तृतीयसवन ऽएव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्द्धिष्ण्यान्व्याघारयति ॥ १९ ॥ अथ यदग्नौ होष्यन्ति । तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यद्वः सोमं बिभ्रतऽउपर्य्युपरि चरिष्यन्ति तद्वोऽविष्यतीति स यदेनान्त्सोमं बिभ्रत ऽउपर्य्युपरि चरन्ति तदेनानवति तस्माद्धूर्य्युः

समया धिष्ण्यान्नाऽतीयादध्वर्युर्हि सोमं बिभर्त्ति तमेते व्यात्तेन प्प्रत्यासते स ऽएतेषां व्यात्तमापद्येत तमग्निर्वा- ऽभिदुहेद्यो वाऽयं देवः पशूनामीष्टे स वा हैनमभिमन्न्येत तस्माद्यद्यध्वर्योः शालायामर्त्थः स्यादुत्तरेणैवाऽग्नीध्रीयः सञ्चरेत् ॥ २० ॥ तेवा ऽएते । सोमस्यैव गुप्त्यै न्न्युप्प्यन्त- ऽआहवनीयः पुरस्तान्मार्ज्जालीयो *दक्षिणत ऽआग्नीध्रीय- ऽउत्तरतोऽथ ये सदसि ते पश्चात् ॥ २१ ॥ तेषां वा- ऽअर्द्धानुपकिरन्ति । अर्द्धाननुदिशन्त्येत ऽउहै वैतद्दध्रिरे- ऽर्द्धान्न ऽउपकिरन्त्वर्द्धाननुदिशन्तु तथा यस्माल्लोकादागताः स्मो दिवस्तथा तँल्लोकं प्रतिप्प्रज्ञास्यामस्तथा न जिह्मा- ऽएष्याम ऽइति ॥२२॥ स यानुपकिरन्ति । तेनाऽस्मिँल्लोके प्प्रत्यक्षं भवन्त्यथ याननुदिशन्ति तेनाऽमुष्मिँल्लोके प्प्रत्यक्षं भवन्ति ॥ २३ ॥ ते वै †द्विनामानो भवन्ति । एत ऽउहै वै तद्दध्रिरे न वा ऽएभिर्न्नामभिरराद्ध्स्म येषां नः सोमम- पाऽहार्षुर्हन्त द्वितीयानि नामानि करवामहा ऽइति ते द्वितीयानि नामान्न्यकुर्वत तैरराध्नुवन्न्यानपहृतसोमपीथा- न्त्सतोऽथ यज्ञ ऽआभजस्तँस्माद्द् द्विनामानस्तस्माद्ब्राह्मणोऽ- नृध्यमाने द्वितीयं नाम कुर्वीत राध्नोति हैव य ऽएवं विद्वान्द्वि- तीयं नाम कुरुते ॥२४॥ स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यत्सदसि भक्षयन्ति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्त्यथ यद्धविर्द्धानयोर्न्नाराशंः

* का० श्रौ० सू० ७. १. ६ ।

† का० श्रौ० सू० ८. ६. २१-२३ ।

साः सीदन्ति तत्पितृषु जुहोति तस्मात्पितरः सन्ति ॥२५॥ या वै प्प्रजा यज्ञेऽनन्न्वाभक्ताः । पराभूता वै ता ऽएवमेवैतद्या ऽइमाः प्प्रजा ऽअपरा भूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु व्वयाᳬंस्योषधयो व्वनस्प्पतयो यदिदं किञ्चैवमु तत्सर्व्वᳬं य्यज्ञ ऽआभक्तं ते ह स्मैत ऽउभये देवमनुष्याः पितरः सम्पिबन्ते सैषा सम्पाते ह स्म दृश्यमाना ऽएव पुरा सम्पिबन्त ऽउतैतर्ह्यदृश्यमानाः ॥ २६ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ वैसर्जनहोमः ]

सर्व्वं व्वा ऽएषोऽभि दीक्षते । यो दीक्षते यज्ञᳬं ह्यभि दीक्षते यज्ञᳬं ह्येवेदᳬं सर्व्वमनु तं य्यज्ञᳬं सम्भृत्त्य यमिममभि दीक्षते सर्व्वमिदं व्विसृजते ॥ १ ॥ यद्वैसर्ज्जिनानि जुहोति । स यदिदᳬं सर्व्वं व्विसृजते तस्माद्वैसर्ज्जिनानि नाम तस्माद्यो-*ऽपिव्रतः स्यात्सोऽन्न्वारभेत यद्यु ऽअन्न्यत्र चरेन्ना-ऽऽद्रियेत यद्वै जुहोति तदेवेदᳬं सर्व्वं व्विसृजते ॥ २ ॥ यद्वेव वैसर्ज्जिनानि जुहोति । यज्ञो वै व्विष्णुः स देवेब्भ्य ऽइमां व्विक्रान्तिं व्विचक्रमे यैषामियं व्विक्रान्तिरिदमेव प्प्रथमेन पदेन पस्पाराऽथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्व्वेवैष-

(B) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा—

तै० सं० ६. ३. १; मै० सं० ३. ८. १०; का० श० ४. ६. २; ।

* 'अपिव्रताश्चाऽन्वारभन्ते यजमानम्' का० श्रौ० सू० ८. ६. ३४; 'स अपिव्रतान् ह्वयध्व-मिति सम्प्रेष्यति' आप० श्रौ० सू० ११. १६. १२; ।

ऽएतस्म्मै व्विष्णुर्य्यज्ञो व्विक्रान्तिं व्विक्रमते यज्जुहोति तस्मा-द्वैसर्ज्जिनानि जुहोति ॥ ३ ॥ *सोऽपराह्णे व्वेदिᳬ स्तीर्त्वा । अर्द्धव्रतं प्रदाय सम्प्रपद्यन्त ऽइध्ममभ्याद्धत्त्युपयमनीरुप-कल्पयन्त्याज्यमधिश्रयति स्रुचः सम्म्मार्ष्ट्युपस्त्थे राजानं यजमानः कुरुतेऽथ सोमक्क्रयण्यै पदं जघनेन गार्हपत्त्यं परिकिरति पदा वै प्प्रतितिष्ठति प्प्रतिष्ठित्या ऽएव ॥ ४ ॥ तद्धैके । चतुर्द्धा कुर्वन्ति यत्राऽऽहवनीयमुद्धरन्ति तासूपय-मनीषु चतुर्ब्भागमक्षं चतुर्ब्भागेणोपाऽञ्जन्त्येतासूपयमनीषु चतुर्ब्भागं जघनेन गार्हपत्त्यं चतुर्ब्भागं परिकिरति ॥ ५ ॥ तदु तथा न कुर्य्यात् । सार्द्धमेव परिकिरेज्जघनेन गार्हपत्त्यमथोत्त्पूयाऽऽज्यं चतुर्ग्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं † पृषदाज्यं 'ज्योतिरसि व्विश्वरूपं व्विश्वेषां देवानाᳬ समिदि'ति वैश्वदेवᳬहि पृषदाज्यं धार-यन्ति स्रुचो यदा प्प्रदीप्त ऽइध्मो भवति ॥ ६ ॥ ‡ अथ जुहोति । त्वᳬ सोम[2] तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य ऽउरु यन्तासि व्वरूथᳬ स्वाहे'ति तदेतेनैवाऽस्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठत्येतेनेमं लोकᳬ स्पृणुते ॥ ७ ॥ अथाऽऽप्तवे ‡‡ द्वितीयामाहुतिं जुहोति । 'जुषाणो[3] ऽअप्तुरा-

* का० श्रौ० सू० ८. ६. २०-३१ ।

† का० श्रौ० सू० ८. ७. १ ।

‡ का० श्रौ० सू० ८. ७. २ ।

‡‡ का० श्रौ० सू० ८. ७. ३,४ ।

(१) शु० सं० अ० ५ क० १२ । (२) शु० सं० अ० ५ क० १२ । (३) शु० सं० अ० ५ क० १२ ।

ज्यस्य वेतु स्वाहे'त्येष ऽउ हैवैतदुवाच रक्षोभ्यो वै बिभेमि यथा माऽन्तरा नाष्ट्रा रक्षाᳬसि न हिनसन्नेवं मा कनीयाᳬसमेव बधात्कृत्वाऽतिनयत स्तोकमेव स्तोको ह्यसुरिति तमेतत्कनीयाᳬसमेव वधात्कृत्वाऽत्यनयन्त्स्तोकमेव स्तोको ह्यसू रक्षोभ्यो भीषा तस्मादसवे द्वितीयामाहुतिं जुहोति ॥ ८ ॥ उद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाऽऽहाऽग्नये * प्रह्रियमाणायाऽनुब्रूहि सोमाय प्रणीयमानायेति वाऽग्नये प्रह्रियमाणायाऽनुब्रूहीति त्वेव ब्रूयात् ॥ ९ ॥ आददते † ग्रावणः । द्रोणकलशं वायव्यानीध्मं ‡काष्मर्य्यमयान्परिधीनाश्वबालं प्रस्तरमैक्षव्यौ विधृती तद्बर्हिरुपसन्नद्धं भवति वपाश्रपण्यौ रशने ऽअरणीऽअधिमन्थनः शकलो वृषणौ तत्समादाय प्राञ्च ऽआयन्ति स ऽएष ऽऊर्द्ध्वो यज्ञ ऽएति ॥१०॥ तदायत्सु ‡‡ वाचयति। 'अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेम'त्यग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाᳬस्यपघ्नन्नेत्यथाऽभयेनाऽनाष्ट्रेण हरन्ति त ऽआयन्त्यागच्छन्त्याग्नीध्रं तमाग्नीध्रे निदधाति ॥११॥ स $ निहिते जुहोति।

---

* का० श्रौ० सू० ८. ७. ३–६ ।

† का० श्रौ० सू० ८. ७. ५ । द्रोणकलशः सोमाधारभूतः प्रभूतपात्रविशेषः, यस्योपरि धाराग्रहा गृह्यन्ते ।

‡ का० श्रौ० सू० ८. १. १२ ।

‡‡ का० श्रौ० सू० ८. ७. ६ ।

( १ ) शु० सं० अ० ५ क० ३६ ।

$ का० श्रौ० सू० ८. ७. ९ ।

'अयं नो ऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुर ऽएतु प्रभिन्दन्। अयं वाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहे'ति तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतँल्लोकꣳ स्पृणुते ॥१२॥ तदेव निदधाति ग्राव्णः। द्रोणकलशं वायव्यान्यथेतरमादायाऽऽयन्ति तदुत्तरेणाऽऽहवनीयमुपसादयन्ति ॥१३॥ प्रोक्षणीरध्वर्युरादत्ते। स ऽइध्ममेवाऽग्रे प्रोक्षत्यथ वेदिमथाऽस्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रꣳस्य ग्रन्थिमाश्वबालः प्रस्तर ऽउपसन्नद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तरमेकवृद्बर्हिः स्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्यमयान्परिधीन्परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ ॥ १४ ॥ * अथ जुहोति। 'उरु[२] विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र-प्रयज्ञपतिं तिर स्वाहे'ति तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठत्येतेनैतँल्लोकꣳ स्पृणुते यदेतया जुहोति ॥ १५ ॥ यद्वेव वैष्णव्यर्चा जुहोति। कनीयाꣳसं वा ऽएनमेतद्दधात्कृत्वाऽत्यनैषुस्तोकमेव स्तोको ह्यतुस्तमेतदुभयं प्राप्य य ऽएवैष तं करोति यज्ञमेव यज्ञो हि विष्णुस्तस्माद्वैष्णव्यर्चा जुहोति ॥ १६ ॥ अथाऽऽसाद्य स्रुचः। अप ऽउपस्पृश्य राजानं प्रपादयति तद्यदासाद्य स्रुचोऽप ऽउपस्पृश्य राजानं प्रपादयति वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाऽऽज्येन

* का० श्रौ० सू० ८. ७. १४।

(१) शु० सं० अ० ५ क० ३७। (२) शु० सं० अ० ५ क० ३८।

रेतः सोमꣳ हिनसानीति तस्मादासाद्य स्रुचोऽप ऽउपस्पृश्य राजानं प्रपादयति ॥ १७ ॥ स दक्षिणस्य हविर्द्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति 'देव[1] सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्नि'ति तदेनं देवायैव सवित्रे परिददाति गुप्त्यै ॥ १८ ॥ * अथाऽनुसृज्योपतिष्ठते । 'एतत्त्वं[2] देव सोम देवो देवाँ२ ऽउपागा ऽइदमहम्मनुष्यान्त्सह रायस्पोषेणे'त्यग्नीषोमौ वाऽएतमन्तर्ज्जम्भ ऽआदधाते यो दीक्षत ऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्वाऽएष देवानां भवति यो दीक्षते तदेनमन्तर्ज्जम्भ ऽआदधाते तत्प्रत्यक्षꣳ सोमान्निर्म्मुच्यते यदाहैतत्त्वं देव सोम देवो देवाँ२ ऽउपागा ऽइदमहम्मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह ॥ १९ ॥ † अथोपनिष्क्रामति । 'स्वाहा[3] निर्व्वरुणस्य पाशान्मुच्य' ऽइति वरुणपाशे वा ऽएषोऽन्तर्भवति योऽन्यस्याऽसँस्तत्प्रत्यक्षं वरुणपाशान्निर्म्मुच्यते यदाह स्वाहा निर्व्वरुणस्य पाशान्मुच्यऽइति ॥२०॥ अथेत्याहवनीये समिधमभ्यादधाति । 'अग्ने[4] व्रतपास्त्वे व्रतपा' ऽइत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाऽग्ने व्रतपास्त्वे व्रतपा ऽइति 'या[5] तव तनूर्म्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि । यथायथं नौ व्रतपते

* का० श्रौ० सू० ८. ७. १७।

† का० श्रौ० सू० ८. ७. १८।

(१) शु० सं० अ० ५ क० ३९। (२) शु० सं० अ० ५ क० ३९। (३) शु० सं० अ० ५ क० ३९। (४) शु० सं० अ० ५ क० ४०। (५) शु० सं० अ० ५ क० ४०।

व्रतान्न्यनु मे दीक्षां दीक्षापतिरमꣳस्ताऽनुतपस्तपस्पति-रि'ति तत्प्रत्यक्षमग्नेर्न्निर्म्मुच्च्यते स स्वेन सताऽऽत्मना यजते तस्मादस्याऽत्राऽश्नन्ति मानुषो हि भवति तस्माद-स्याऽत्र नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा ना-ऽश्नन्ति यथा *हविषोऽहुतस्य नाऽश्नीयादेवं तत्तस्माद्दीक्षि-तस्य नाऽश्नीयादथाऽत्राऽङ्गुलीर्व्विसृजते ॥ २१ ॥ (c)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अथाऽग्नीषोमीयपशुप्रयोगः ]

( तत्र यूपच्छेदनम् )

यूपं व्रक्ष्यन्न्वैष्णव्व्यर्चा जुहोति । वैष्णवो हि यूप-स्तस्माद्वैष्णव्व्यर्चा जुहोति ॥ १ ॥ यद्वेव वैष्णव्व्या जुहोति यज्ञो वै विष्णुर्य्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्ण-व्व्यर्चा जुहोति ॥ २ ॥ स यदि स्रुचा जुहोति । † चतु-र्गृहीतमाज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणैवोपहत्त्य जुहो'त्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृत-योने पिब प्प्र-प्प्रयज्ञपतिं तिर स्वाहे'ति ॥ ३ ॥ यदाज्यं परिशिष्टं भवति । तदादत्ते यत्तक्ष्णः शस्त्रं भवति तत्त-क्ष्णादत्ते त ऽआयन्ति स यं यूपं जोषयन्ते ॥ ४ ॥ तमेवम-

* ऐ० ब्रा० २. १. ३. द्रष्टव्यम् ।

(c) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा—

कपि० सं० ४०. ६; शां० ब्रा० ९. १; का० श० ४. ६. ३; क० सं० २६. २; मै० सं० ३. ९. १; ऐ० ब्रा० १. २८; ।

† का० श्रौ० सू० ६. १. ४ ।

( १ ) शु० सं० अ० ५ क० ४१ ।

भिमृश्य जपति। पश्चाद्धैव प्प्राङ् तिष्ठन्न * भिमन्त्रयते 'ऽत्यं-न्न्यॉं२ ऽअगान्नान्न्यॉं२ ऽउपागामि'त्त्यति ह्यन्न्यानेति ना-ऽन्न्यानुपैति तस्मादाहाऽत्त्यन्न्यॉं२ ऽअगान्नान्न्यॉं२ ऽउपा-गामिति ॥ ५ ॥ 'अर्व्वाक् त्त्वा परेब्भ्योऽविदं परोऽवरेब्भ्य'-ऽइति। अर्व्वाग्घ्येनं परेब्भ्यो व्वृश्चति य ऽएतस्मात्पराञ्चो भवन्ति परोऽवरेब्भ्य ऽइति परो ह्येनमवरेब्भ्यो व्वृश्चति य-ऽएतस्मादर्व्वाञ्चो भवन्ति तस्मादाहाऽर्व्वाक्त्वा परेब्भ्योऽविदं परोऽवरेब्भ्य ऽइति ॥ ६ ॥ 'तन्त्वा जुषामहे देव व्वनस्प्पते देवयज्ज्याया' ऽइति। तद्यथा बहूनां मद्ध्यात्त्साधवे कर्म्मणे जुषेत स रातमनास्तस्मै कर्म्मणे स्यादेवमेवैनमेतद्बहूनां मद्ध्यात्त्साधवे कर्म्मणे जुषते स रातमना व्वृश्चनाय भवति ॥ ७ ॥ 'देवास्त्वा देवयज्ज्यायै जुषन्तामि'ति। तद्वै समृद्धं यं देवाः साधवे कर्म्मणे जुषान्तै तस्मादाह देवास्त्वा देवयज्ज्यायै जुषन्तामिति ॥ ८ ॥ अथ †स्रुवेणोपस्प्पृशति। व्विष्णवे त्त्वेति व्वैष्णवो हि यूपो यज्ञो वै व्विष्णुर्य्यज्ञाय ह्येनं व्वृश्चति तस्म्मादाह व्विष्णवे त्त्वेति ॥ ९ ॥ अथ दर्ब्भतरुणकमन्तर्द्दधाति। 'ओषधे त्त्रायस्वे'ति व्वज्ज्रो वै परशुस्तथो हैनमेष व्वज्ज्रः परशुर्न्न हिनस्त्यथ परशुना प्प्रहरति 'स्वधिते मैनꣳ हिꣳसीरि'ति

* का० श्रौ० सू० ६. १. ७।

† का० श्रौ० सू० ६. १. ६।

( १ ) शु० सं० अ० ५ क० ४२। ( २ ) शु० सं० अ० ५ क० ४२। ( ३ ) शु० सं० अ० ५ क० ४२। ( ४ ) शु० सं० अ० ५ क० ४२। ( ५ ) शु० सं० अ० ५ क० ४२। ( ६ ) शु० सं० अ० ५ क० ४२।

वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न्न हिनस्ति ॥१०॥ स यं प्रथमᳫं * शकलमपच्छिनत्ति । तमादत्ते तं वाऽअनक्षस्तम्भं व्वृश्चेदुत हैनमनसा वहन्ति तथाऽनो न प्प्रतिबाधते ॥ ११ ॥ तं प्राञ्चं पातयेत् । प्राची हि देवानां दिगथो ऽउदञ्चमुदीची हि मनुष्याणां दिगथो प्प्रत्यञ्चं दक्षिणायै त्त्वेवैनं दिशः परिबिबाधिषेतैषा वै दिक् पितृणां तस्मादेनं दक्षिणायै दिशः परिबिबाधिषेत ॥ १२ ॥ तं प्रच्च्यवमानमनुमन्त्रयते । '[1]द्याम्मा लेखीरन्तरिक्षम्मा हिᳫंसीः पृथिव्व्या सम्भवे'ति वज्रो वा ऽएष भवति यं यूपाय व्वृश्चन्ति तस्माद्वज्ज्रात्प्रच्च्यवमानादिमे लोकाः सᳫंरेजन्ते तदेभ्य ऽएवैनमेतल्लोकेभ्यः शमयति तथेमाँल्लोकाञ्छान्तो न हिनस्ति ॥ १३ ॥ स यदाह । द्याम्मा लेखीरिति दिवं मा हिᳫंसीरित्त्येवैतदाहाऽन्तरिक्षं मा हिᳫंसीरिति नाऽत्र तिरोहितमिवाऽस्ति पृथिव्व्यासम्भवेति पृथिव्व्या सञ्ज्ञानीष्वेत्त्येवैतदाह'[2]ऽयᳫं हि त्त्वां स्वधितिस्तेतिजानः प्प्रणिनाय महते सौभगाये'त्त्येष ह्येनᳫं स्वधितिस्तेजमानः प्प्रणयति ॥ १४ ॥ अथाऽऽव्व्रश्चनमभिजुहोति । नेदतो नाष्ट्रा रक्षाᳫंस्यनूत्तिष्ठानिति वज्रो वा ऽआज्ज्यं तद्वज्ज्रेणैवैतन्नाष्ट्रा रक्षाᳫंस्यवबाधते तथाऽतो नाष्ट्रा रक्षाᳫंसि नाऽनूत्तिष्ठन्त्यथो रेतो वा ऽआज्ज्यं तद्वनस्प्पतिष्वेवैतद्रेतो दधाति

* का० श्रौ० सू० ६. १. १३–२० ।

(१) शु० सं० अ० ५ क० ४३ । (२) शु० सं० अ० ५ क० ४३ ।

तस्माद्रेतस ऽआव्रश्चनाद्वनस्पतयो ऽनु प्रजायन्ते ॥१५॥ स जुहोति । 'अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेमे'ति नाऽत्र तिरोहितमिवाऽस्ति ॥१६॥ तं परिवासयति । स यावन्तमेवाऽग्रे परिवासयेत्तावान्त्स्यात् ॥१७॥ [ अर्धप्रपाठकः ॥६४॥ ] *पञ्चाऽरत्निं परिवासयेत् । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्य तस्मात्पञ्चाऽरत्निं परिवासयेत् ॥१८॥ षडरत्निं परिवासयेत् । षड्वा ऽऋतवः संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्मात्षडरत्निं परिवासयेत् ॥ १९ ॥ अष्टारत्निं परिवासयेत् । अष्टाक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्धं ऽएष यज्ञस्य तस्मादष्टारत्निं परिवासयेत् ॥ २० ॥ नवारत्निं परिवासयेत् । त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नवारत्निं परिवासयेत् ॥ २१ ॥ एकादशारत्निं परिवासयेत् । एकादक्षारा वै त्रिष्टुब्वज्रस्त्रिष्टुब्वज्रो † यूपस्तस्मादेकादशारत्निं परिवासयेत् ॥२२॥ द्वादशारत्निं परिवासयेत् । द्वादश वै मासाः संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्माद् द्वादशारत्निं परिवासयेत् ॥ २३ ॥ त्रयोदशारत्निं परिवासयेत् । त्रयोदश वै मासाः संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्मात्त्रयोदशारत्निं परिवासयेत् ॥ २४ ॥ पञ्चदशारत्निं परिवासयेत् । पञ्चदशो वै वज्रो वज्रो यूपस्तस्मात्पञ्चदशारत्निं परिवासयेत्

(१) शु० सं० अ० ५ क० ४३ ।

* का० श्रौ० सू० ६. १. २७ ।

† का० श्रौ० सू० ६. १. २९–३२ ।

॥ २५ ॥ सप्तदशारत्निर्वाजपेययूपः । अपरिमित ऽएव स्यादपरिमितेन वा ऽएतेन वज्रेण देवा ऽअपरिमितमजयँस्तथो ऽएवैष ऽएतेन वज्रेणाऽपरिमितेनैवाऽपरिमितं जयति तस्मादपरिमित ऽएव स्यात् ॥ २६ ॥ स * वाऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध ऽएष यज्ञस्य तस्मादष्टाश्रिर्भवति ॥ २७ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥ (p)

इति षष्ठोऽध्यायः ॥ ६ ॥



[ यूपोच्छ्रयणादि ]

† अभ्रिमादत्ते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसी'ति समान ऽएतस्य यजुषो बन्धुर्योषो वा ऽएषा यदभ्रिस्तस्मादाह नार्यसीति ॥ १ ॥ अथाऽवटं परिलिखति 'इदमहꣳ रक्षसां ग्रीवा ऽअपि कृन्तामी'ति वज्रो वा ऽभ्रिर्वज्रेणै वैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा ऽअपिकृन्तति ॥ २ ॥ ‡ अथ खनति । प्राञ्चमुत्करमुत्किरत्युपरेण सम्मायाऽवटं खनति

---

* का० श्रौ० सू० ६. १. २६-२८ ।

( p ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

का० श० ४. ६. ४; का० सं० २६. ३. ४; कपि० सं० ४१. २; तै० सं० ६. ३ ३; मै० सं० ३. ९. २; ऐ० ब्रा० २. १; शां० ब्रा० १०. १।

† का० श्रौ० सू० ६. २. ८।

‡ का० श्रौ० सू० ६. २. ९–१४।

(१) शु० सं० अ० ६ क० १। (२) शु० सं० अ० ६ क० १।

तदुग्रेण प्प्राञ्चं यूपं निदधात्येतावन्मात्राणि बर्ह्हींᳵष्युपरिष्टादधि निदधाति तदेवोपरिष्टाद्यूपशकलमधि निदधाति पुरस्तात्पार्श्वतश्चषालमुपनिदधात्त्यथ यवमत्त्यः प्प्रोक्षण्ण्यो भवन्ति सोऽसावेव बन्धुः ॥ ३ ॥ स *यवानावपति । 'यवोऽसि यवयाऽस्मद्द्वेषो यवयाऽरातीरि'ति नाऽत्र तिरोहितमिवाऽस्त्यथ प्प्रोक्षत्त्येको वै प्प्रोक्षणस्य बन्धुर्म्मेद्ध्यमेवैतत्करोति ॥ ४ ॥ स प्प्रोक्षति । 'दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वे'ति वज्रो वै यूप ऽएषां लोकानामभिगुप्त्याऽएषां त्वा लोकानामभिगुप्त्यै प्प्रोक्षामीत्त्येवैतदाह ॥ ५ ॥ अथ याः †प्प्रोक्षण्ण्यः परिशिष्यन्ते । ता ऽअवटेऽवनयति 'शुन्धन्ताँल्लोकाः पितृषदना' ऽइति पितृदेवत्त्यो वै कूपः खातस्तमेवैतन्मेद्ध्यं करोति ॥ ६ ॥ अथ बर्ह्हींᳵषि । प्राचीनाग्राणि चोदीचीनाग्राणि चाऽवस्तृणाति 'पितृषदनमसी'ति पितृदेवत्त्यं वा ऽअस्यैतद्भवति यन्निखातः स यथा निखातऽओषधीषु मितः स्यादेवमेतास्वोषधिषु मितो भवति ॥ ७ ॥ अथ ‡यूपशकलं प्राऽस्यति । तेजो ह वा ऽएतद्वनस्प्पतीनां यद्बाह्याशकलस्तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्त्यथ शुष्यन्ति तेजो ह्येषामेतत्तद्यद्यूपशकलं प्राऽस्यति

* का० श्रौ० सू० ६. २. १५।

† का० श्रौ० सू० ६. २. १६, १७।

‡ का० श्रौ० सू० ६. २. १९।

(१) शु० सं० अ० ६ क० १। (२) शु० सं० अ० ६ क० १। (३) शु० सं० अ० ६ क० १। (४) शु० सं० अ० ६ क० १।

सतेजसं मिनवानीति तद्यदेष ऽएव भवति नाऽन्य-ऽएष हि यजुष्कृतो मेध्यस्तस्माद्यूपशकलं प्राऽस्यति ॥ ८ ॥
* स प्राऽस्यति । 'अग्रेणीरसि स्वावेश ऽउन्नेतॄणामि'ति पुरस्ताद्वा ऽअस्मादेषोऽपच्छिद्यते तस्मादाहाऽग्रेणीरसि स्वावेश ऽउन्नेतॄणामि'त्येतस्य वित्तादधि त्वा स्थास्यती'त्यधि ह्येनं तिष्ठति तस्मादाहैतस्य वित्तादधि त्वा स्थास्यतीति ॥ ९ ॥ अथ † स्रुवेणोपहत्याऽऽज्यम् । अवटमभिजुहोति नेदधस्तान्नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानिति वज्रो वा ऽआज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षाꣳस्यपबाधते तथाऽधस्तान्नाष्ट्रा रक्षाꣳसि नोपोत्तिष्ठन्त्यथ पुरस्तात्परीत्योदङ्ङासीनो यूप-मनक्ति स ऽआह यूपायाऽऽज्यमानायाऽनुब्रूहीति ॥ १० ॥
‡ सोऽनक्ति । 'देवस्त्वा सविता मध्वाऽनक्त्वि'ति सविता वै देवानां प्रसविता यजमानो वा ऽएष निदानेन यद्यूपꣳ सर्वं वा ऽइदं मधु यदिदं किञ्च तदेनमनेन सर्वेण सꣳस्पर्श-यति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वाऽनक्त्विति ॥ ११ ॥ अथ चषालमुभयतः प्रत्यज्य प्रतिमुञ्चति। 'सुपिप्पलाभ्यस्त्वौषधीभ्य' ऽइति पिप्पलꣳ ह्येवाऽस्यैतद्यन्मध्ये सङ्गृहीतमिव भवति तिर्य्यग्वा-ऽइदं वृक्षे पिप्पलमाहतꣳ स यदेवेदꣳ सम्बन्धनं चाऽन्त-

---

* का० श्रौ० सू० ६. २. १९।
† का० श्रौ० स० ६. २. २०–२१।
‡ का० श्रौ० सू० ६. ३. २–४।

(१) शु० सं० अ० ६. क० २। (२) शु० सं० अ० ६. क० २। (३) शु० सं० अ० ६. क० २। (४) शु० सं० अ० ६, क० २।

रोपेनितमिव तदेवैतत्करोति तस्मान्मध्ये सङ्गृहीतमिव भवति ॥ १२ ॥ *आऽन्तमग्निष्ठामनक्ति । यजमानो वाऽअग्निष्ठा रस ऽआज्यꣳ रसेनैवैतद्यजमानमनक्ति तस्मादान्तमग्निष्ठामनक्त्यथ परिव्ययणं प्रतिसमन्तं परिमृशत्यथाऽऽहोच्छ्रीयमाणायाऽनुब्रूहीति ॥ १३ ॥ †स ऽउच्छ्रयति । 'द्याम[1]ग्रेणाऽस्पृक्ष ऽआन्तरिक्षं मध्येनाऽप्राः पृथिवीमुपरेणादृꣳहीरि'ति वज्रो वै यूप ऽएषां लोकानामभिजित्यै तेन वज्रेणेमाँल्लोकान्त्स्पृणुत ऽएभ्यो लोकेभ्यः सपत्नान्निर्भजति ॥ १४ ॥ अथ मिनोति । 'या ते धामा[2]न्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा ऽअयासः । अत्राऽह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरी'त्येतया त्रिष्टुभा मिनोति वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मात्त्रिष्टुभा मिनोति ॥ १५ ॥ सम्प्रत्यग्निमग्निष्ठां मिनोति । यजमानो वा ऽग्निष्ठाऽग्निरु वै यज्ञः स यदग्नेरग्निष्ठाꣳ ह्वलयेद्ध्वलेद्ध यज्ञाद्यजमानस्तस्मात्सम्प्रत्यग्निमग्निष्ठां मिनोत्यथ पर्यूहत्यथ पर्यृषत्यथाऽऽप ऽउपनिनयति ॥ १६ ॥ अथैवमभिपद्य वाचयति । 'विष्णोः[3] कर्म्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखे'ति वज्रं वा ऽएष प्राऽहार्षीद्यो यूपमुदशिश्रियद्विष्णोर्विजितिं पश्यतेत्येवैतदाह

---

* का० श्रौ० सू० ६. ३. ५; अग्निसमीपे तिष्ठतीत्यग्निष्ठा=अग्निरभिमुखीभूता प्रत्यासन्ना यूपस्याऽश्रिरित्यर्थः ।

† का० श्रौ० सू० ६. ३. ६-११ ।

(१) शु० सं० अ० ६. क० २ । (२) शु० सं० अ० ६. क० ३ । (३) शु० सं० अ० ६. क० ४ ।

यदाह विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेतीन्द्रो वै यज्ञस्य देवता वैष्णवो यूपस्तꣳ सेन्द्रं करोति तस्मादाहेन्द्रस्य युज्यः सखेति ॥ १७ ॥ अथ *चषालमुदीक्षते । '[1]तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमि'ति वज्रं वा ऽएष प्राऽहार्षीद्यो यूपमुदशिश्रियत्तां विष्णोर्विजितिं पश्यतेत्येवैतदाह यदाह तद्विष्णोः परमम्पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमिति ॥ १८ ॥ अथ †परिव्ययति । अनग्नतायै न्वेव परिव्ययति तस्मादत्रेव परिव्ययत्यत्रेव हीदं वासो भवत्यन्नाद्यमेवाऽस्मिन्नेतद्दधात्यत्रेव हीदमन्नं प्रतितिष्ठति तस्मादत्रेव परिव्ययति ॥ १९ ॥ त्रिवृता परिव्ययति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृता परिव्ययति ॥ २० ॥ स परिव्ययति । 'परिवीरसि[2] परित्त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणामि'ति तद्यजमानयाऽऽशिषमाशास्ते यदाह परीमं यजमानꣳ रायो मनुष्याणामिति ॥ २१ ॥ ‡अथ यूपशकलमवगूहति । 'दिवः[3] सूनुरसी'ति प्रजा हैवाऽस्यैषा तस्माद्यदि यूपैकादशिनी स्यात्स्वꣳ

* का० श्रौ० सू० ६. ३. १२ ।

† का० श्रौ० सू० ६. ३. १३ ।

‡ का० श्रौ० सू० ६. ३. १५ ।

(१) शु० सं० अ० ६. क० ५ । (२) शु० सं० अ० ६. क० ६ । (३) शु० सं० अ० ६. क० ६ ।

स्वमेवाऽवगूहेदविपर्य्यासं तस्य *हैषा मुग्धाऽनुव्रता प्रजा जायतेऽथ यो विपर्य्यासमवगूहति न स्वᳮ स्वं तस्य हैषा मुग्धाऽननुव्रता प्रजा जायते तस्मादु स्वᳮ स्वमेवाऽवगूहेद-विपर्य्यासᳲ ॥ २२ ॥ स्वर्ग्गस्यो हैष लोकस्य समारोहणᳲ क्रियते । यद्यूपशकल ऽइयᳲ रशना रशनायै यूपशकलो यूपशकलाच्चषालं चषालात्स्वर्ग्गं लोकᳲ समश्नुते ॥ २३ ॥ अथ † यस्मात्स्वरुर्न्नाम । एतस्माद्वा ऽएषोऽपच्छिद्यते तस्यै-तत् स्वमेवाऽरुर्ब्भवति तस्मात्स्वरुर्न्नाम ॥ २४ ॥ तस्य यन्नि-खातम् । तेन पितृलोकं जयत्यथ यदूर्द्ध्वं निखातादारशनायै तेन मनुष्यलोकं जयत्यथ यदूर्द्ध्वᳲ रशनाया ऽआचषाला-त्तेन ‡ देवलोकं जयत्यथ यदूर्द्ध्वं चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वा साद्ध्या ऽइति देवास्तेन तेषां लोकं जयति ‡‡ सलोको ह वै साद्ध्यैर्द्देवैर्ब्भवति य ऽएवमेतद्वेद ॥२५॥ तं वै पूर्वार्द्धे मिनोति । वज्रो वै यूपो वज्रो दण्डᳲ पूर्वार्द्धं वै दण्डस्याऽभिपद्य प्रहरति पूर्वार्द्ध ऽएष यज्ञस्य तस्मात्पूर्वार्द्धे मिनोति ॥ २६ ॥ यज्ञेन वै देवाᳲ । इमां जितिं जिग्युर्य्यै-षामियं जितिस्ते होचुᳲ कथं न ऽइदं मनुष्यैरनब्भ्यारोह्यᳮ

---

* 'ख' पुस्तके 'हैषा मुग्ध्वाऽनु' इति ।

† ऐ० ब्रा० ( २. १. ३ ) 'तमेतं स्वरुमपश्यन्' इति । 'स्वरुणा पशुमनक्ति' तै० सं० ( ५. ५. ७. १ ) इति । आप० श्रौ० सूत्रे 'स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशूंस्त्रायेथामिति शिरसि न वा स्वधितिना स्वरुणैव । ( ७. १४. ११. १२ ) 'यूपच्छेदन-समये यः प्रथमः शकलः परापतति स स्वरुरित्युच्यते' ।

‡ तै० सं० ६. ३. ४. २१, २२; द्रष्टव्यम् ।

‡‡ 'ग-च' पुस्तकयोः 'सलोको वै' इति ।

स्यादिति ते यज्ञस्य रसं धीत्त्वा यथा मधु मधुकृतो निर्द्धयेयु र्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनाऽयोपयँस्तस्माद्यूपो नाम पुरस्ताद्वै प्रज्ञा पुरस्तान्नमनोजवस्तस्मात्पूर्वार्द्धे मिनोति ॥ २७ ॥ स वा ऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्धे ऽएष यज्ञस्य तस्मादष्टाश्रिर्भवति ॥ २८ ॥ तद्ध ह स्मैतं देवाऽअनुप्रहरन्ति । यथेदमप्प्येतर्ह्येकेऽनुप्रहरन्तीति देवाऽअकुर्वन्निति ततो रक्षाᳪसि यज्ञमनूदपिबन्त ॥ २९ ॥ ते देवा ऽअद्ध्वर्युमब्रुवन् । यूपशकलमेव जुहुधि तदु हैष स्वगाकृतो भविष्यति तथो रक्षाᳪसि यज्ञं नाऽनूत्पास्यन्तेऽयं वै वज्र ऽउद्यत ऽइति ॥ ३० ॥ सोऽद्ध्वर्युः । यूपशकलमेवाऽजुहोत्तदु हैष स्वगाकृत ऽआसीत्तथो रक्षाᳪसि यज्ञं नाऽनूदपिबन्ताऽयं वै वज्र ऽउद्यत ऽइति ॥ ३१ ॥ तथोऽएवैष ऽएतत् । यूपशकलमेव जुहोति तदु हैष स्वगाकृतो भवति तथो रक्षाᳪसि यज्ञं नाऽनूत्पिबन्तेऽयं वै वज्र ऽउद्यत ऽइति स जुहोति 'दिवं[1] ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनाऽऽपृण स्वाहे'ति ॥ ३२ ॥ (A)

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



( १ ) शु० सं० अ० ६ क० २१ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—
का० श० ४. ७. १; मै० सं० ३. ९. ३; का० सं० २६. ५; कपिष्ठ० सं० ४१. ३ ।

[ यूपैकादशिनी ]

यावती वै वेदिस्तावती पृथिवी । वज्रा वै यूपास्तदिमामेवैतत्पृथिवीमेतैर्वज्रैः स्पृणुतेऽस्यै सपत्नान्निर्भजति * तस्माद्यूपैकादशिनी भवति द्वादश ऽउपशयो भवति वितष्टस्तं दक्षिणत ऽउपनिदधाति तद्यद् द्वादश ऽउपशयो भवति ॥ १ ॥ † देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तद्य ऽएत ऽउच्छ्रिता यथेषुरस्ता तया वै स्तृणुते वा न वा स्तृणुते यथा दण्डः प्रहृतस्तेन वै स्तृणुते वा न वा स्तृणुतेऽथ य ऽएष द्वादशऽउपशयो भवति यथेषुरायतानस्ता यथोद्यतमप्रहृतमेवमेष वज्र ऽउद्यतो दक्षिणतो नाष्ट्राणाᳬ रक्षसामपहत्यै तस्माद् द्वादश ऽउपशयो भवति ॥ २ ॥ ‡तं निदधाति । 'एष ते पृथिव्यां लोक ऽआरण्यस्ते पशुरि'ति पशुश्च वै यूपश्च तदस्मा ऽआरण्यमेव पशूनामनुदिशति तेनो ऽएष पशुमान्भवति तद् द्वयं यूपैकादशिन्यै सम्मयनमाहुः श्वःसुत्यायै ह न्वेवैके सम्मिन्वन्ति प्रकुब्रतायै चैव श्वःसुत्यायै यूपं मिन्वन्तीत्यु च ॥ ३ ॥ तदु तथा न कुर्यात् । अग्निष्ठमेवोच्छ्रयेदिदं वै यूपमुच्छ्रित्याऽद्धर्युरापरिव्ययणान्नान्वर्जत्यपरिवीता वा ऽएत ऽएताᳬ रात्रिं वसन्ति सा न्वेव परिचक्षा पशवे वै यूपमुच्छ्रयन्ति प्रातर्वै पशूनालभन्ते

* का० श्रौ० सू० ८. ८. ६-१० ।
† अत्र शतम् २००० ।
‡ का० श्रौ० सू० ८. ८. २३ ।
( १ ) शु० सं० अ० ६ क० ६ ।

तस्मादु प्रातरेवोच्छ्रयेत् ॥४॥ स य ऽउत्तरोऽग्निष्ठात्स्यात् । तमेवाऽग्र ऽउच्छ्रयेदथ दक्षिणमथोत्तरं दक्षिणार्द्ध्यमुत्तमं तथो दीची भवति ॥ ५ ॥ अथो ऽइतरथाऽऽहुः । दक्षिणमेवाऽग्रेऽग्निष्ठादुच्छ्रयेदथोत्तरमथ दक्षिणमुत्तरार्द्ध्यमुत्तमं तथो हाऽस्योदगेव कर्म्मानुऽसन्तिष्ठत ऽइति ॥ ६ ॥ स यो * वर्षिष्ठः स दक्षिणार्द्ध्यः स्यात् । अथ ह्रसीयानथ ह्रसीयानुत्तरार्द्ध्यो ह्रसिष्ठस्तथोदीची भवति ॥७॥ अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति । सर्वत्वाय न्वेव पत्नीयूप ऽउच्छ्रीयते तत्त्वाष्ट्रं पशुमालभते त्वष्टा वै सिक्तः रेतो विकरोति तदेष ऽएवैतत्सिक्तः रेतो विकरोति मुष्करो भवत्येष वै प्रजनयिता यन्मुष्करस्तस्मान्मुष्करो भवति तन्न सꣳस्थापयेत्पर्य्यग्निकृतमेवोत्सृजेत्स यत्सꣳस्थापयेत्प्रजायै हाऽन्तमियात्तत्प्रजामुत्सृजति तस्मान्न सꣳस्थापयेत्पर्य्यग्निकृतमेवोत्सृजेत् ॥ ८ ॥ (B)

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ † पशूपाकरणादि ]

पशुश्च वै यूपश्च ।नवा ऽऋते यूपात्पशुमालभन्ते कदा चन तद्यत्तथा न ह वा ऽएतस्मा ऽअग्रे पशवश्चक्षमिरे

---

* का॰ श्रौ॰ सू॰ ८. ८. १९–२२ ।

(B) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा—
का॰ श॰ ४. ७. २; तै॰ सं॰ ६. ६. ४ ।

† तृणेन पशोरुपस्पर्शनमुपाकरणम् ।
'उपावर्त्तध्वम्' इत्ययं प्रैष उपाकरणशब्देनोच्यते' इति देवयाज्ञिकः । आप॰ श्रौ॰ सूत्रेऽपि उपाकरणप्रकारः सुव्यक्तः ( ७. १४. २–४ ) ।

यदन्नमभविष्यन्न्यथेदमन्नं भूत यथा हैवाऽयं द्विपात्पुरुष-ऽउच्छ्रित ऽएवꣳ हैव द्विपाद ऽउच्छ्रिताश्चेरुः ॥ १ ॥ ततो देवा ऽएतं वज्रं ददृशुः । यद्यूपं तमुच्छिश्रियुस्तस्मा-द्भीषा प्राऽव्लीयन्त ततश्चतुष्पादा ऽअभवँस्ततोऽन्नमभ-वन्न्यथेदमन्नम्भूता ऽएतस्म्मै हि वा ऽएतेऽतिष्ठन्त तस्माद्यूप-ऽएव पशुमालभन्ते नर्त्ते यूपात्कदाचन ॥ २ ॥ *अथोपा-कृत्य पशुम् । अग्निं मथित्त्वा नियुनक्ति तद्यत्तथा न ह वा ऽएतस्मा ऽअग्ने पशवश्चक्षमिरे यद्धविरभविष्यन्न्यथैना-ऽनिदꣳ हविर्भूतानग्नौ जुह्वति तान्देवा ऽउपनिरुरुधुस्त-ऽउपनिरुद्धा नोपाऽवेयुः ॥ ३ ॥ ते होचुः । न वा ऽइमेऽस्य यामं विदुर्यदग्नौ हविर्जुह्वति नैतां प्रतिष्ठामुपरुद्ध्यैव पशूनग्निं मथित्त्वाऽग्नावग्निं जुहवाम ते वेदिष्यन्त्येष वै किल हविषो याम ऽएषा प्प्रतिष्ठाऽग्नौ वै किल हविर्जुह्वतीति ततो-ऽभ्यवैष्यन्ति ततो रातमनस ऽआलम्भाय भविष्यन्तीति ॥४॥ त ऽउपरुद्ध्यैव पशून् । अग्निं मथित्त्वाऽग्नावग्निमजुहवुस्ते-ऽविदुरेष वै किल हविषो याम ऽएषा प्प्रतिष्ठाऽग्नौ वै किल हविर्जुह्वतीति ततोऽभ्यवायँस्ततो रातमनस ऽआलम्भा-याऽभवन् ॥ ५ ॥ तथो ऽएवैष ऽएतत् । उपरुद्ध्यैव पशुमग्निं मथित्त्वाऽग्नावग्निं जुहोति स वेदैष वै किल हविषो याम ऽएषा प्प्रतिष्ठाऽग्नौ वै किल हविर्जुह्वतीति ततोऽभ्य-वैति ततो रातमना ऽआलम्भाय भवति तस्मादुपाकृत्य पशुमग्निं मथित्त्वा नियुनक्ति ॥ ६ ॥ तदाहुः । नोपाकुर्य्या-

* का० श्रौ० सू० ८. ७. २५;

न्नाऽग्निं मन्थेद्यशनामेवाऽऽदायाऽञ्जसोपपरेत्त्याऽभिधाय नियुञ्ज्यादिति तदु तथा न कुर्य्याद्यथा धर्म्मं तिरश्चथा चिकीर्षेदेवं तत्तस्मादेतद्देवाऽनुपरीयात् ॥ ७ ॥ *अथ तृणमादायोपाकरोति । द्वितीयवान्निरुणधा ऽइति द्वितीयवान्हि वीर्य्यवान् ॥ ८ ॥ स तृणमादत्ते । 'उपा[१]ऽऽवीरसी'त्युप हि द्वितीयोऽवति तस्मादाहोपाऽऽवीरसी'त्युप देवान्[२]दैवीर्विशः प्प्राऽगुरि'ति दैव्यो वा ऽएता विशो यत्पशवोऽस्तिथषत देवेभ्य ऽइत्त्येवैतदाह यदाहोपदेवान्दैवीर्विशः प्प्रागुरिति ॥ ९ ॥ 'उ[३]शिजो वन्हितमानि'ति । विद्वाꣳसो हि देवास्तस्मादाहोशिजो वन्हितमानिति ॥ १० ॥ 'दे[४]व त्वष्टर्व्वसु रमे'ति । त्वष्टा वै पशूनामीष्टे पशवो वसु तानेतद्देवा ऽअतिष्ठमानाँस्त्वष्टारमब्रुवन्नुपनिमदेति यदाह देव त्वष्टर्व्वसु रमेति ॥ ११ ॥ 'ह[५]व्व्या ते स्वदन्तामि'ति । यदा वा ऽएत ऽएतस्म्माऽअद्रियन्त यद्धविरभविष्यँस्तस्मादाह हव्व्या ते स्वदन्तामिति ॥ १२ ॥ 'रे[६]वती रमद्ध्वमि'ति । रेवन्तो हि पशवस्तस्मादाह रेवतीरमद्ध्वमिति 'बृ[७]हस्प्पते धारया वसूनी'ति ब्रह्म वै बृहस्प्पतिः पशवो वसु तानेतद्देवा ऽअतिष्ठमानान्ब्रह्मणैव परस्तात्पर्य्यदधुस्तन्नाऽत्त्यायँस्तथो ऽएवैनानेषऽएतद् ब्रह्मणैव परस्तात्परिदधाति तन्नाऽतियन्ति तस्मादाह

---

* का० श्रौ० सू० ६. ३. १७ ।

(१) शु० सं० अ० ६ क० ७ । (२) शु० सं० अ० ६ क० ७ । (३) शु० सं० अ० ६ क० ७ । (४) शु० सं० अ० ६ क० ७ । (५) शु० सं० अ० ६ क० ७ । (६) शु० सं० अ० ६ क० ८ । (७) शु० सं० अ० ६ क० ८ ।

बृहस्प्पते धारया व्वसूनीति पाशं कृत्त्वा प्प्रतिमुञ्चत्त्यथाऽतो नियोजनस्यैव ॥ १३ ॥(C)

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥ ५ ॥
कण्डिकासंख्या ॥ १२७ ॥

[ पशोर्नियोजनप्रोक्षणादि ]

*पाशं कृत्त्वा प्प्रतिमुञ्चति । 'ऋतस्य[1] त्त्वा देवहविः पाशेन प्प्रतिमुञ्चामी'ति व्वरुण्ण्या वा ऽएषा यद्रज्जुस्तदेनमेतदृतस्यैव पाशेन प्प्रतिमुञ्चति तथो हैनमेषा व्वरुण्ण्या रज्जुर्न्न हिनस्ति ॥ १ ॥ 'धर्षा मानुष' ऽइति । न वा ऽएतमग्ग्रे मनुष्योऽधृष्ण्णोत्त्स †यद्देवर्त्तस्य पाशेनैतद्देवहविः प्प्रतिमुञ्चत्त्यथैनं मनुष्यो धृष्णोति तस्मादाह धर्षा मानुष ऽइति ॥२॥ अथ ‡नियुनक्ति । 'देवस्य[3] त्त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्यां पूष्णो हस्ताब्भ्यामग्नीषोमाब्भ्यां जुष्टं नियुनज्मी'ति तद्यथैवाऽदो देवतायै हविर्ग्गृह्णन्नादिशत्त्येवमेवैतद्देवताब्भ्यामादिशत्त्यथ प्प्रोक्षत्त्येको वै प्प्रोक्षणस्य बन्धुर्म्मेध्य-

(C) एतद् ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

का० श० ४. ७. ३; कठ० सं० २६. ६; कपि० सं० ४१. ४; ऐ० ब्रा० २. २; मै० सं० ३. ९; शां० ब्रा० १०. २; तै० सं० ६. ३. ५।

* का० श्रौ० सू० ६. ३. २४।

† 'यदैवर्त्तस्य' इति पाठः 'क' पुस्तके।

‡ का० श्रौ० सू० ६. ३. २५–२७; पशौ देवताविकल्पोऽत्र ( ६. ३. २६. ) द्रष्टव्यः।

( १ ) शु० सं० अ० ६ क० ८। ( २ ) शु० सं० अ० ६ क० ८। ( ३ ) शु० सं० अ० ६ क० ९।

मेवैतत्करोति ॥ ३ ॥ स प्प्रोक्षति । 'अद्भ्यस्त्वौषधीभ्य' ऽइति तद्यत ऽएव सम्भवति तत ऽएवैतन्मेध्यं करोतीदᳬं हि यदा वर्षत्यथौषधयो जायन्त ऽओषधीर्ज्जग्ध्वाऽपः पीत्त्वा तत ऽएष रसः सम्भवति रसाद्रेतो रेतसः पशवस्त-द्यत ऽएव सम्भवति यतश्च जायते तत ऽएवैतन्मेध्यं करोति ॥ ४ ॥ 'अनु त्वा माता मन्यतामनुपिते'ति । स हि मातुश्चाऽधि पितुश्च जायते तद्यत ऽएव जायते तत-ऽएवैतन्मेध्यं करो'त्यनु भ्राता सगर्भ्योऽनुसखा सयूथ्य'-ऽइति स यत्ते जन्म तेन त्वाऽनुमतमारभ ऽइत्त्येवैतदाहा-ऽग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामी'ति तद्याभ्यां देवता-भ्यामारभते ताभ्यां मेध्यं करोति ॥ ५ ॥ *अथोपगृह्णाति । 'अपां पेरुरसी'ति तदेनमन्तरतो मेध्यं करोत्त्यथाऽधस्तादु-पोक्ष'त्यापो देवीः स्वदन्तु स्वात्तञ्चित्सद्देवहवि'रिति तदेनᳬं सर्वतो मेध्यं करोति ॥ ६ ॥ †अथाऽऽहाऽग्नये समिध्यमाना-याऽनुब्रूहीति । स ऽउत्तरमाघारमाघारय्याऽसᳬंस्पर्शयन्त्स्रुचौ पर्य्येत्त्य जुह्वा पशुᳬं समनक्ति शिरो वै यज्ञस्योत्तर ऽआघार-ऽएष वा ऽअत्र यज्ञो भवति यत्पशुस्तद्यज्ञ ऽएवैतच्छिरः प्प्रतिदधाति तस्माज्जुह्वा पशुᳬं समनक्ति ॥७॥ स ललाटे समनक्ति । 'सं ते प्प्राणो वातेन गच्छतामि'ति 'समङ्गानि

---

* का० श्रौ० सू० ६. ३. २८-२९ ।

† का० श्रौ० सू० ६. ४. १,२ ।

( १ ) शु० सं० अ० ६ क० ९ । ( २ ) शु० सं० अ० ६ क० ९ । ( ३ ) शु० सं० अ० ६ क० ९ । ( ४ ) शु० सं० अ० ६ क० ९ । ( ५ ) शु० सं० अ० ६ क० १० । ( ६ ) शु० सं० अ० ६ क० १० । ( ७ ) शु० सं० अ० ६ क० १० । ( ८ ) शु० सं० अ० ६. क० १० ।

यजत्रैरि'त्यᳪसयोः 'सᳪंयज्ञपतिराशिषे'ति श्रोण्योः स यस्मै कामाय पशुमालभन्ते तत्प्राप्नुहीत्येवैतदाह ॥ ८ ॥ इदं वै पशोः संज्ञप्यमानस्य । प्राणो वातमपि पद्यते तत्प्राप्नुहि यत्ते प्राणो वातमपि पद्याता ऽइत्येवैतदाह समङ्गानि यजत्रैरित्यङ्गैर्वा ऽअस्य यजन्ते तत्प्राप्नुहि यत्तेऽङ्गैर्यजान्ता ऽइत्येवैतदाह संयज्ञपतिराशिषेति यजमानाय वा ऽएते नाऽऽशिषमाशासते तत्प्राप्नुहि यत्त्वया यजमानायाऽऽशिषमाशासान्ता ऽइत्येवैतदाह सादयति स्रुचावथ प्रवरायाऽऽश्रावयति सोऽसावेव बन्धुः ॥ ९ ॥ अथ द्वितीयमाश्रावयति । द्वौ ह्यत्र होतारौ भवतः स मैत्रावरुणायाऽहैवाऽऽश्रावयति यजमानं त्वेव प्रवृणीते'ऽग्निर्ह दैवीनां विशां पुर ऽएते'त्यग्निर्हि देवतानां मुखं तस्मादाहाऽग्निर्ह दैवीनां विशां पुर ऽएतेत्ययं यजमानो मनुष्याणामिति तᳪ हि सोऽन्ववर्द्धो भवति यस्मिन्नर्द्धे यजते तस्मादाहाऽयं यजमानो मनुष्याणामि'ति 'तयोरस्थूरि गार्हपत्यं दीदयच्छतᳪ हिमाद्वायू' ऽइति तयोरनार्त्तानि गार्हपत्यानि शतं वर्षाणि सन्त्वित्येवैतदाह ॥ १० ॥ 'राधाᳪंसीत्सम्पृञ्चानाऽवसम्पृञ्चानौ तन्व' ऽइति । राधाᳪंस्येव सम्पृञ्चाथां माऽपि तनूरित्येवैतदाह तौ ह यत्तनूरपि सम्पृञ्चीयातां प्राऽग्निर्यजमानं दहेत्स यदग्नौ जुहोति तदेषोऽग्नये प्रयच्छत्यथ यामेवाऽत्रर्त्विजो यजमानायाऽऽशिषमाशासते तामस्मै

(१) शु० सं० अ० ६. क० १० । (२) का० श्रौ० सू० ६. ४. ,३ । (३) का० श्रौ० सू० ६. ४. ३ । (४) का० श्रौ० सू० ६. ४. ३ ।

सर्वामग्निः समर्द्धयति तद्राधाथंस्येव सम्पृश्चाते नाऽपि तनूस्तस्मादाह राधाथंसीत्त्सम्पृश्चानाऽव सम्पृश्चानौ तन्न्वऽइति ॥ ११ ॥ (D)

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



## [ अथ * पशुसंज्ञपनम् ]

( तत्रोपवेशनादि-विधिः )

तद्यत्रैतत्प्रव्वृतो होता होतृषदन ऽउपविशति । तदुपविश्य प्प्रसौति प्प्रसूतोऽद्ध्वर्युः † स्त्रुचावादत्ते ॥ १ ॥ अथा‡ऽऽप्प्रीभिश्चरन्ति । तद्यदाप्प्रीभिश्चरन्ति सर्व्वेणेव वा ऽएष मनसा सर्व्वेणेवाऽऽत्मना यज्ञꣳ सम्भरति सञ्जिहीर्षति यो दीक्षते तस्य रिरिचान ऽइवाऽऽत्मा भवति तमेताभिराप्प्रीभिराप्प्याययन्ति तद्यदाप्प्याययन्ति तस्म्माद्वाप्प्रियो नाम तस्मादाप्प्रीभिश्चरन्ति ॥ २ ॥ ते वा ऽएतऽएकादश प्प्रयाजा भवन्ति । दश वा ऽइमे पुरुषे प्प्राणा ऽआत्मैकादशो यस्मिन्नेते प्प्राणाः प्प्रतिष्ठिता ऽएतावान्न्वै

---

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

का० श० ४. ७. ४; कठ० सं० २६. ८; मै० सं० ३. ९. ६; तै० सं० ६. ३. ६, ७; कपि० सं० ४१. ६. ७; ।

* 'यागीयपशोः शस्त्रघातादिकं विना मुखबन्धनेन श्वासं निरोध्य यत्प्राणैर्वियोजनं तत्पशुसंज्ञपनमित्युच्यते' ।

† का० श्रौ० सू० ३. २. १७ ।

‡ निरु० ८. २. १–७, आप्रियःकस्मात् ? आप्नोतेः प्रीणातेर्वा आप्रीभिराप्रीणाति इति च ब्राह्मणम् ।

पुरुषस्तदस्य सर्व्वमात्मानमाप्प्यायन्ति तस्मादेकादश प्प्रयाजा भवन्ति ॥ ३ ॥ स ऽआश्राव्व्याऽऽह । समिधः प्प्रेष्येति प्रेष्य प्रेष्येति चतुर्त्थे-चतुर्त्थे प्प्रयाजे समानयमानो दशभिः प्प्रयाजैश्चरति दश प्प्रयाजानिष्ट्वाऽऽह शासमाहरेत्त्यसिं व्वै शास ऽइत्त्याचक्षते ॥ ४ ॥ अथ यूपशकलमादत्ते । तावग्रे जुह्वा अक्त्वा *पशोर्ल्ललाटमुपस्पृशति 'घृतेनाक्तौ पशूँस्त्रायेथामि'ति व्वज्ज्रो व्वै यूपशकलो व्वज्ज्रः शासो व्वज्ज्र ऽआज्ज्यं तमेवैतत्कृत्स्नं व्वज्ज्रः सम्भृत्य तमस्याऽभिगोप्तारं करोति नेदेनं नाष्ट्रा रक्षाᳫंसि हिनसन्निति पुनर्य्यूपशकलमवगूहत्त्येषा ते प्प्रज्ञाताऽश्रिरस्त्वित्त्याह शासं प्रयच्छन्त्सादयति स्रुचौ ॥ ५ ॥ †अथाऽऽह पर्य्यग्नये ऽनुब्रूहीति । उल्मुकमादायाऽग्नीत्पर्य्यग्निं करोति तद्यत्पर्य्यग्निं करोत्त्यच्छिद्रमेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षाᳫंसि प्प्रमृशानित्त्यग्निर्हि रक्षसामपहन्ता तस्मात्पर्य्यग्निं करोति तद्यत्रैनᳫं श्रपयन्ति तदभि परिहरति ॥ ६ ॥ तदाहुः । पुनरेतदुल्मुकᳫं हरेदथाऽत्रान्यमेवाऽग्निं निर्म्मथ्य तस्मिन्नेनᳫं श्रपयेयुराहवनीयो व्वा ऽएष न व्वा ऽएष तस्म्मै यदस्मिन्नश्रृतᳫं श्रपयेयुस्तस्म्मै व्वा ऽएष यदस्मिञ्छृतं जुहुयुरिति ॥ ७ ॥ तदु तथा न कुर्य्यात् । यथा व्वै ग्रसितमेवमस्यैतद्भवति यदेनेन पर्य्यग्निं करोति स यथा ग्रसितमनुह्रायाऽऽच्छिद्य तदन्न्यस्म्मै प्प्रयच्छेदेवं तत्तस्मादे-

* का० श्रौ० सू० ६. ४. १०–१२।

(१) शु० सं० अ० ६ क० ११।

† का० श्रौ० सू० ६. ५. १,२।

तस्यैवोल्मुकस्याऽङ्गारान्निमृद्य तस्मिन्नेनथं श्रपयेयुः ॥ ८ ॥ अथोल्मुकमादायाऽग्नीत्पुरस्तात्प्रतिपद्यते । अग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाथंस्यपघ्नन्नेत्यथाऽभयेनाऽनाष्ट्रेण पशुं नयन्ति तं वपाश्रपणीभ्यां प्रतिप्रस्थाताऽन्वारभते प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानः ॥ ९ ॥ तदाहुः । नैष यजमानेनाऽन्वारभ्यो मृत्यवे ह्येतं नयन्ति तस्मान्नाऽन्वारभेतेति तदन्वेवाऽऽरभेत न वा ऽएतं मृत्यवे नयन्ति यं यज्ञाय नयन्ति तस्मादन्वेवाऽऽरभेत यज्ञादु हैवाऽत्मानमन्तरियाद्यन्नाऽन्वारभेत तस्मादन्वेवाऽऽरभेत तत्परोऽक्षमन्वारब्धं भवति वपाश्रपणीभ्यां प्रतिप्रस्थाता प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमान ऽएतदु परोऽक्षमन्वारब्धं भवति ॥१०॥ अथ स्तीर्णायै वेदेः । द्वे तृणेऽअध्वर्युरादत्ते स ऽआश्राव्याऽऽहोपप्रेष्य होतर्हव्या देवेभ्य ऽइत्येतदु वैश्वदेवं पशौ ॥ ११ ॥ *अथ वाचयति । 'रेवति यजमान' ऽइति वाग्वै रेवती सा यद्वाग्बहु वदति तेन वाग्रेवती 'प्रियं धा ऽआविश'ेत्यनार्त्तिमाविशेत्येवैतदा-'होरोरन्तरिक्षात्सजूर्देवेन वातेने'त्यन्तरिक्षं वा ऽअनु-रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथाऽयं पुरुषोऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्वातेनैनः संविदानाऽन्तरिक्षाद्गोपायेत्येवैतदाह यदाहोरोरन्तरिक्षात्सजू-

* का० श्रौ० सू० ६. ५. १० ।

( १ ) शु० सं० अ० ६ क० ११ । ( २ ) शु० सं० अ० ६ क० ११ । ( ३ ) शु० सं० अ० ६ क० ११ ।

देवेन व्रातेनेति ॥ १२ ॥ 'अस्य[1] हविषस्त्मना यजे'ति ।
वाचमेवैतदाहाऽनार्त्तस्याऽस्य हविष ऽआत्मना यजेति
'समस्य[2] तन्न्वा भवे'ति वाचमेवैतदाहाऽनार्त्तस्याऽस्य हविष-
स्तन्न्वा सम्भवेति ॥ १३ ॥ तद्यत्रैनं विशासन्ति । † तत्पुर-
स्तात्तृणमुपाऽस्यति 'वर्षो[3] वर्षीयसि यज्ञे यज्ञपतिं धा' ऽइति
बर्हिरेवाऽस्मा ऽएतत्स्तृणात्यस्कन्नꣳ हविरसदिति तद्यदेवा-
ऽस्याऽत्र विशस्यमानस्य किञ्चित्स्कन्दति तदेतस्मिन्प्रति-
तिष्ठति तथा नाऽमुया भवति ॥ १४ ॥ अथ पुनरेत्या-
ऽऽहवनीयमभ्यावृत्याऽऽसते । नेदस्य संज्ञप्यमानस्या-
ऽध्यक्षा ऽअसामेति तस्य न कूटेन प्रघ्नन्ति मानुषꣳ
हि तन्नो ऽएव पश्चात्कर्णं पितृदेवत्यꣳ हि तदपि गृह्य
वैव $ मुखं तमयन्ति वेष्कं वा कुर्वन्ति तन्नाऽऽह जहि
मारयेति मानुषꣳ हि तत्संज्ञपयाऽन्ववगन्निति तद्धि देवत्रा
स यदाहाऽन्ववगन्नित्येतर्हि ह्येष देवाननुगच्छति तस्मादाहा-
ऽन्ववगन्निति ॥ १५ ॥ तद्यत्रैनं निविध्यन्ति । तत्पुरा
संज्ञपनाज्जुहोति 'स्वाहा[4] देवेभ्य' ऽइत्यथ यदा प्राऽऽह
संज्ञप्तः पशुरित्यथ जुहोति 'देवेभ्यः[5] स्वाहे'ति पुरस्तात्स्वा-
हाकृतयो वा ऽअन्ये देवा ऽउपरिष्टात्स्वाहाकृतयोऽन्ये
तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्रीताः स्वर्गँल्लोक-

† का० श्रौ० सू० ६. ५. १४–१५ ।

$ का० श्रौ० सू० ६. ५. १७–२३ ।

( १ ) शु० सं० अ० ६ क० ११ । ( २ ) शु० सं० अ० ६ क० ११ । ( ३ ) शु० सं० अ० ६ क० ११ । ( ४ ) शु० सं० अ० ६ क० ११ । ( ५ ) शु० सं० अ० ६ क० ११ ।

मभिवहन्ति ते वा ऽएते परिपशव्ये ऽइत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेताऽपि नाऽऽद्रियेत ॥१६॥ (A)

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अथाऽग्नीषोमीयवपायागः ]

यदा प्राऽऽह संज्ञप्तः पशुरिति । अथाऽध्वर्युराह नेष्टः पत्नीमुदानयेत्युदानयति नेष्टा पत्नीं पात्रेजनं बिभ्रतीम् ॥ १ ॥ *तां वाचयति । '[1]नमस्त ऽआताने'ति यज्ञो वा ऽआतानो यज्ञः हि तन्वते तेन यज्ञ ऽआतानो जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन्भवति तस्मा ऽएवैतद्यज्ञाय निह्नुते तथो हैनामेष यज्ञो न हिनस्ति तस्मादाह नमस्त ऽआतानेति ॥ २ ॥ '[2]अनर्वा प्रेही'ति । असपत्नेन प्रेहीत्येवैतदाह '[3]घृतस्य कुल्या ऽउप ऽऋतस्य पथ्या ऽअन्वि'ति साधूपेत्येवैतदाह '[4]देवीरापः शुद्धा वोढ्वः सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्मे'त्यप ऽएवैतत्पावयति ॥३॥ अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति । तद्यदद्भिः प्राणानुपस्पृशति। जीवं वै देवानाः हविरमृतममृतानामथै-

(A) एतद् ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा—

का० श० ४. ८. १; मै० सं० ३. ९. ७, ८; कपि० सं० ४१. ७; काठ० सं० १६. ९; तै० सं० ६. ३. ८।

* का० श्रौ० सू० ६. ६. १।

(१) शु० सं० अ० ६ क० १२। (२) शु० सं० अ० ६ क० १२। (३) शु० सं० अ० ६ क० १२। (४) शु० सं० अ० ६ क० १३।

तत्पशुं घ्नन्ति यत्संज्ञपयन्ति यद्विशासत्यापो वै प्राणास्तदस्मिन्नेतान्प्राणान्दधाति तथैतज्जीवमेव देवानाᳫं हविर्भवत्यमृतममृतानाम् ॥ ४ ॥ अथ यत्पत्न्युपस्पृशति । योषा वै पत्नी योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषायै प्रजनयति तस्मात्पत्न्युपस्पृशति ॥ ५ ॥ *सोपस्पृशति । 'वाचं ते शुन्धामी'ति मुखं 'प्राणं ते शुन्धामी'ति नासिके 'चक्षुस्ते शुन्धामी'त्यक्ष्यौ 'श्रोत्रं ते शुन्धामी'ति कर्णौ 'नाभिं ते शुन्धामी'ति योऽयमनिरुक्तः प्राणो 'मेढ्रं ते शुन्धामी'ति वा 'पायुं ते शुन्धामी'ति योऽयं पश्चात्प्राणस्तत्प्राणान्दधाति तत्समीरयत्यथ सᳫंहृत्य पद'श्चरित्राँस्ते शुन्धामी'ति पद्भिर्वै प्रतितिष्ठति प्रतिष्ठित्या ऽएव तदेनं प्रतिष्ठापयति ॥ ६ ॥ अथ या ऽआपः † परिशिष्यन्ते । अर्द्धा वा यावत्यो वा ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतस्तत्प्राणाँश्चैवाऽस्मिँस्तत्तौ धत्तस्तच्चैनमतः समीरयतः ॥ ७ ॥ तद्यत्क्रूरीकुर्वन्ति । यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः सन्धत्तः ॥ ८ ॥ तावनुषिञ्चतः । 'मनस्त ऽआप्यायतां वाक्त ऽआप्यायतां प्राणस्त ऽआप्यायतां चक्षुस्त ऽआप्यायताᳫं

* का० श्रौ० सू० ६. ६. २,३ ।

† का० श्रौ० सू० ६. ६. ४-६ ।

( १ ) शु० सं० अ० ६ क० १४ । ( २ ) शु० सं० अ० ६ क० १४ । ( ३ ) शु० सं० अ० ६ क० १४ । ( ४ ) शु० सं० अ० ६ क० १४ । ( ५ ) शु० सं० अ० ६ क० १४ । ( ६ ) शु० सं० अ० ६ क० १४ । ( ७ ) शु० सं० अ० ६ क० १४ । ( ८ ) शु० सं० अ० ६ क० १४ । ( ९ ) शु० सं० अ० ६ क० १५ ।

श्रोत्रं त ऽआप्प्यायतामि'ति तत्प्राणान्धत्तस्तत्समीरयतो 'यत्ते क्रूरं यदास्थितं तत्त ऽआप्प्यायतां निष्ट्यायतामि'ति ॥ ९ ॥ तद्यत्क्रूरीकुर्व्वन्ति । यदास्थापयन्ति शान्तिरापस्त-दद्भिः शान्त्या शमयतस्तदद्भिः सन्धत्त'स्तत्ते शुद्ध्यत्वि'ति तन्मेध्यं कुरुतः 'शमहोभ्य' ऽइति जघनेन पशुं निनयतः ॥ १० ॥ तद्यत्क्रूरीकुर्व्वन्ति । यदास्थापयन्ति नेदेतदन्व-शान्तान्यहोरात्राण्ण्यसन्निति तस्माच्छमहोभ्य ऽइति जघनेन पशुं निनयतः ॥ ११ ॥ * अथोत्तानं पशुं पर्य्य-स्यन्ति । स तृणमन्तर्द्धा'त्योषधे त्रायस्वे'ति वज्जो वा-ऽअसिस्तथो हैनमेष वज्जोऽसिर्न्न हिनस्त्यथाऽसिनाऽभि निदधाति 'स्वधिते मैनꣳ हिꣳसीरि'ति वज्जो वा ऽअसिस्तथो हैनमेष वज्जोऽसिर्न्न हिनस्ति ॥१२॥ सा या प्रज्ञाताऽश्रिः । तयाऽभि निदधाति सा हि यजुष्कृता मेध्या † तद्यदग्रं तृणस्य तत्सव्ये पाणौ कुरुतेऽथ यद् बुध्नं तद्दक्षिणेना-ऽऽदत्ते ॥१३॥ स यत्राऽऽच्छ्यति । यत ऽएतल्लोहितमुत्पतति तदुभयतोऽनक्ति 'रक्षसां भागोऽसी'ति रक्षसाꣳ ह्येष भागो यदसृक् ॥१४॥ तदुपास्याऽभितिष्ठति । 'इदमहꣳ रक्षोऽभि-तिष्ठामीदमहꣳ रक्षोऽवबाध ऽइदमहꣳ रक्षोऽधमन्तमो नया मी'ति तद्यज्ञेनैवैतन्नाष्ट्रा रक्षाꣳस्यवबाधते तद्यदमूलमुभ-

(१) शु० सं० अ० ६ क० १५। (२) शु० सं० अ० ६ क० १५। (३) शु० सं० अ० ६ क० १५। (४) शु० सं० अ० ६ क० १५। (५) शु० सं० अ० ६ क० १५। (६) शु० सं० अ० ६ क० १६। (७) शु० सं० अ० ६ क० १६।

* का० श्रौ० सू० ६. ६. ७।

† का० श्रौ० सू० ६. ६. ८–१०।

यतः परिच्छिन्नं भवत्यमूलं व्वा ऽइदमुभयतः परिच्छिन्नः रक्षो ऽन्तरिक्षमनुचरति यथाऽयं पुरुषोऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तस्मादमूलमुभयतः परिच्छिन्नं भवति ॥ १५ ॥ अथ † व्वपामुत्खिदन्ति । तया व्वपाश्रपण्यौ प्प्रोर्णोति 'घृतेन[1] द्यावापृथिवी प्प्रोर्णुवाथामि'ति तदिमे द्यावापृथिवी ऽऊर्ज्जा रसेन भाजयत्यनयोरूर्ज्जः रसं दधाति ते रसवत्या ऽउपजीवनीये ऽइमाः प्प्रजा ऽउपजीवन्ति ॥ १६ ॥ कार्ष्मर्य्यमय्यौ व्वपाश्रपण्यौ भवतः । यत्र वै देवा-ऽअग्रे पशुमालेभिरे तदुदीचः कृष्यमाणस्याऽवाङ् मेधः पपात स ऽएष व्वनस्प्पतिरजायत तद्यत्कृष्यमाणस्याऽवाङ्-पतत्तस्मात्कार्ष्मर्य्यस्तेनैवैनमेतन्मेधेन समर्द्धयति कृत्स्नं-करोति तस्मात्कार्ष्मर्य्यमय्यौ व्वपाश्रपण्यौ भवतः ॥ १७ ॥ तां परिवासयति । तां पशुश्रपणे प्प्रतपति तथो हाऽस्या-ऽत्राऽपि श्रृता भवति पुनरुल्मुकमग्नीद्दादत्ते ते जघनेन चात्वालं यन्ति त ऽआयन्त्यागछन्त्याहवनीयः स ऽएतत्तृण-मद्ध्वर्य्युराहवनीये प्प्राऽस्यति 'व्वायो[2] व्वेस्तोकानामि'ति स्तोकानाथंऽ हैषा समित् ॥ १८ ॥ अथोत्तरतस्तिष्ठन्न्वपां प्रतपति । अत्येष्यन्न्वा ऽएषोऽग्निं भवति दक्षिणतः परीत्य श्रपयिष्यँस्तस्मा ऽएवैताम्निह्नुते तथो हैनमेषोऽतियन्त-मग्निर्न्न हिनस्ति तस्मादुत्तरतस्तिष्ठन्न्वपां प्रतपति ॥ १९ ॥ तामन्तरेण यूपञ्चाऽग्निं च हरन्ति । [illegible] न हरन्ति

† का० श्रौ० सू० ६. ६. [illegible] ।

(१) शु० सं० अ० ६ क० [illegible] ॥ (२) [illegible]

षेनाऽन्यानि हवीꣳषि हरन्ति नेदशृतया समया यज्ञं प्रसजामेति यदु बाह्येन न हरन्त्यग्रेण यूपं * बहिर्द्धा ह यज्ञात्कुर्युस्तस्मादन्तरेण यूपञ्चाऽग्निञ्च हरन्ति दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति ॥ २० ॥ अथ स्रुवेणोपहत्त्याऽऽज्यम् । अध्वर्युर्वपामभिजुहो'त्यग्निराज्यस्य वेतु स्वाहे'ति तथो हाऽस्यैते स्तोकाः शृताः स्वाहाकृता ऽआहुतयो भूत्वाऽग्निं प्राप्नुवन्ति ॥ २१ ॥ अथाऽऽह स्तोकेभ्योऽनुब्रूहीति । स ऽआग्नेयी स्तोकेभ्योऽन्वाह तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेतः प्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स ऽएतैस्तोकैरेतान्त्सोकान्वनुते त ऽएते स्तोका वर्षन्ति तस्मादाग्नेयी स्तोकेभ्योऽन्वाह यदा शृता भवति ॥ २२ ॥ अथाऽऽह प्रतिप्रस्थाता ‡ शृता प्रचरेति । स्रुचावदायाऽध्वर्युरतिक्रम्याऽऽश्राव्याऽऽह स्वाहाकृतिभ्यः प्रेष्येति वषट्कृते जुहोति ॥ २३ ॥ हुत्वा वपामेवाऽग्रेऽभिघारयति । अथ पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदाज्यमेवाऽग्रेऽभिघारयन्ति प्राणः पृषदाज्यमिति वदन्तस्तदु ह याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहारैवं कुर्वन्तं प्राणं वा ऽअयमन्तरगादध्वर्युः प्राण ऽएनङ्हाऽस्यतीति ॥ २४ ॥ स ह स्म बाहू ऽअन्ववेक्ष्याऽऽह । इमौ पलितौ बाहू क स्विद्ब्राह्मणस्य वचो बभूवेति न

* 'बहिर्द्धा यज्ञात्' इति इति 'ग-च' पुस्तकयोः ।

‡ का० श्रौ० सू० ६. ६. २२ ।

( १ ) शु० सं० अ० ६ क० १६ ।

तद्वाद्वियेतोत्तमो वा ऽएष प्प्रयाजो भवतीदं वै हविर्यज्ञ ऽउत्तमे प्प्रयाजे ध्रुवामेवाऽग्रेऽभिघारयति तस्यै हि प्प्रथमावाज्यभागौ होष्यन्भवति वपां वा ऽअत्र प्प्रथमाᳫं होष्यन्भवति तस्माद्वपामेवाऽग्रेऽभिघारयदथ पृषदाज्यमथ यत्पशुं नाऽभिघारयति नेदश्शृतमभिघारयाणीत्त्येतद्वाऽस्य सर्व्वः पशुरभिघारितो भवति यद्वपामभिघारयति तस्माद्वपामेवाऽग्रेऽभिघारयेदथ पृषदाज्यम्॥ २५॥ * अथाऽऽज्यमुपस्तृणीते। अथ हिरण्यशकलमवदधात्यथ वपामवद्यन्नाहाऽग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीत्यथ हिरण्यशकलमवदधात्यथोपरिष्टाद्द्विराज्यस्याऽभिघारयति ॥ २६ ॥ तद्यद्धिरण्यशकलावभितो भवतः। घ्नन्ति वा ऽएतत्पशुं यदग्नौ जुहत्त्यमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्प्रतितिष्ठति तथाऽत ऽउदेति तथा सञ्जीवति तस्माद्धिरण्यशकलावभितो भवत† ऽआश्राव्याऽऽहाऽग्नीषोमाभ्यां छागस्य वपां मेदः प्प्रेष्येति न प्प्रस्थितमित्याह प्प्रसुते प्प्रस्थितमिति वषट्कृते जुहोति ॥ २७ ॥ हुत्वा वपाᳫं समीच्च्यौ। ‡वपाश्रपण्यौ कृत्वाऽनुप्प्रास्यति 'स्वाहाकृते ऽऊर्ध्वनभसं मारुतं गच्छतामि'ति नेदिमे ऽअमुया सतो याभ्यां वपामशिश्रपामेति ॥ २८ ॥ तद्यद्वपया चरन्ति। यस्यै वै देवतायै पशुमालभन्ते तामेवैतद्देवतामेतेन मेधेन प्प्रीणाति

* का० श्रौ० सू० ६. ६. २२,२३।

† आश्राव्याहे 'न्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्ये'ति ( का० श्रौ० सू० ६. ७. २४।

‡ का० श्रौ० सू० ६. ६. २६।

(१) शु० सं० अ० ६. क० १६।

सैषा देवतैतेन मेधेन प्रीता शान्तोत्तराणि हवीᳬषि श्रप्यमाणान्न्युपरमति तस्माद्वपया चरन्ति ॥ २९ ॥ [ अर्धप्रपाठकः ॥५६॥ ] अथ चात्वाले मार्जयन्ते । क्रूरी वा ऽएतत्कुर्वन्ति यत्संज्ञपयन्ति यद्विशासति शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः सन्दधते तस्माच्चात्वाले मार्ज्जयन्ते ॥ ३० ॥ (B)

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पशुपुरोडाशयागः ]

यद्देवत्यः पशुर्भवति । तद्देवत्यं पुरोडाशमनुनिर्वपति तद्यत्पुरोडाशमनु निर्वपति सर्वेषां वा ऽएष पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधेन समर्द्धयति कृत्स्नं करोति तस्मात्पुरोडाशमनु निर्वपति ॥ १ ॥ अथ यद्वपया प्रचरर्षे । एतेन पुरोडाशेन प्रचरति मद्ध्यतो वा ऽइमां * वपामुत्खिदन्ति मद्ध्यत ऽएवैनमेतेन मेधेन समर्द्धयति कृत्स्नं करोति तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्त्येष न्वेवैतस्य बन्धुर्यत्र क्व चैष पशुं पुरोडाशोऽनु निरुप्यते ॥ २ ॥ †अथ पशुं विशास्ति । त्रिः प्रच्च्यावयतात्त्रिः प्रच्च्युतस्य हृदयमुत्तमं कुरुतादिति त्रिवृद्धि यज्ञः ॥ ३ ॥

(B) एतद्ब्राणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—
का० श० ४. ८. २; तै० सं० ६. ३. ९; मै० सं० ३. १० १।

* 'वपा नाम' पशोरामाशयस्योपरि तमाच्छाद्य वर्त्तमानोऽतिसूक्ष्मश्वेतवस्त्राकृतिरूपोऽङ्गविशेषः।

† का० श्रौ० सू० ६. ७. १।

* अथ शमितारꣳ सꣳशास्ति । यत्त्वा पृच्छाच्छृतꣳ † हविः शमिताऽरिति श्रृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ हीति ॥ ४ ॥ अथ जुह्वा पृषदाज्यस्योपहत्त्य । अद्ध्वर्य्युरुप निष्क्रम्म्य पृच्छति शृतꣳ हविः शमिताऽरिति शृतमित्याह तद्देवानामित्युपांꣳश्वद्ध्वर्य्युः ॥ ५ ॥ तद्यत्पृच्छति । श्रृतं वै देवानाꣳ हविर्न्नाऽश्रृतꣳ शमिता वै तद्वेद यदि श्रृतं वा भवत्यश्रृतं वा ॥ ६ ॥ तद्यत्पृच्छति । श्रृतेन प्प्रचराणीति तद्यद्यश्रृतं भवति श्रृतमेव देवानाꣳ हविर्ब्भवति श्रृतं यजमानस्याऽनेनाऽद्ध्वर्य्युर्ब्भवति शमितरि तदेनो भवति त्रिष्कृत्त्वः पृच्छति त्रिवृद्धि यज्ञोऽथ यदाह तद्देवानामिति तद्धि देवानां यच्छृतं तस्मादाह तद्देवानामिति ॥ ७ ॥ स हृदयमेवाग्रेऽभिघारयति । ‡ आत्मा वै मनो हृदयं प्राणः पृषदाज्यमात्मन्न्येवैतन्न्मनसि प्प्राणं दधाति तथैतज्जीवमेव देवानाꣳ हविर्ब्भवत्यमृतममृतानाꣳ ‡‡ ॥ ८ ॥ सोऽभिघारयति । 'सन्ते मनो मनसा सम्प्राणः प्प्राणेन गच्छताम्'इति न स्वाहाकरोति न ह्येषाऽऽहुतिरुद्वासयन्ति पशुम् ॥ ९ ॥

* का० श्रौ० सू० ६. ८. १, २ ।

† का० श्रौ० सू० ६. ८. ४–६ ।

‡ हृदयाभिघारणं प्रशंसति 'अत्मा वै मन' इत्यादिनेति–यदेतत् हृदयाख्यमन्नम् तत् तदेव मनः संज्ञकः 'आत्मा' खलु, "एतमन्नमयमात्मानमुपसङ्क्रामति, एतं प्राणमयमात्मानमुपसङ्क्रामति, एतं मनोमयमात्मानमुपसङ्क्रामति" ( तै० उ० २. ८ ) "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा" ( छा० उ० ३. १४. २ ) इत्यत्र आत्मत्वव्यवहारात् । अथवा मन औपाधिकः आत्मा, परिपूर्णस्य परमात्मनः परिच्छेदेन जीवभावः मनस उपाधित्वादिति दिक् ।

‡‡ 'अमृतानाम्' इति 'ख' पुस्तके ।

( १ ) शु० सं० अ० ६ क० १८ ।

तं जघनेन चात्त्वालमन्तरेण यूपञ्चाऽग्निञ्च हरन्ति । तद्यत्समया न हरन्ति येनाऽन्न्यानि हवीꣳषि हरन्ति शृतꣳ सन्तं नेदङ्गशो विकृत्तेन क्रूरीकृतेन समया यज्ञं प्रसजामेति यदु बाह्येन न हरन्त्यग्रेण यूपं बहिर्द्धा ह यज्ञा-त्कुर्युस्तस्मादन्तरेण यूपञ्चाऽग्निञ्च हरन्ति * दक्षिणतो निधाय प्प्रतिप्प्रस्त्थाताऽवद्यति प्प्लक्षशाखा ऽउत्तर बर्हि-र्भवन्ति ता ऽअद्ध्यवद्यति तद्यत्प्लक्षशाखा ऽउत्तरबर्हिर्भ-वन्ति ॥ १० ॥ यत्र वै देवाः ऽअग्रे पशुमालेभिरे । तं त्वष्टा शीर्षतोऽग्रेऽभ्युवामोतैवं चिन्नाऽऽलभेरन्निति त्वष्टुर्हि पशवः स ऽएष शीर्षन् मस्तिष्कोऽनूक्यश्च मज्जा तस्मात्स वान्त ऽइव त्वष्टा ह्येतमभ्युवमत्तस्मात्तं नाऽश्नीयात्त्वष्टुर्ह्ये-तदभिवान्तम् ॥ ११ ॥ तस्याऽवाङ् मेधः पपात । स ऽएष वनस्प्पतिरजायत तं देवाः प्प्राऽपश्यँस्तस्मात्प्रख्यः प्प्रख्यो ह वै नामैतद्यत्प्लक्ष ऽइति तेनैवैनमेतन्मेधेन समर्द्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखा ऽउत्तरबर्हिर्भवन्ति ॥ १२ ॥ † अथाऽऽज्य मुपस्तृणीते । जुह्वां चोपभृति च वसाहोम-हवन्न्यार्थꣳ समवत्तधान्न्यामथ हिरण्यशकलाववदधाति जुह्वां चोपभृति च ॥ १३ ॥ अथ मनोतायै हविषोऽनुवाच ऽआह । तद्यन्मनोतायै हविषोऽनुवाच ऽआह सर्वा ह वै देवताः पशुमालभ्यमानमुप सङ्गच्छन्ते मम नाम ग्रही-ष्यति मम नाम ग्रहीष्यतीति सर्वासाꣳ हि देवतानाꣳ

* का० श्रौ० सू० ६. ८. ७. ।

† का० श्रौ० सू० ६. ८. ८. ।

हविः पशुस्तासाꣳ सर्व्वासां देवतानां पशौ मनाꣳस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो ह्याऽमोघाय देवतानां मनाꣳस्युप सङ्गतानि भवन्ति तस्मान्मनोतायै हविषोऽनुवाच ऽआह ॥ १४ ॥ स हृदयस्यैवाऽग्रेऽवद्यति । तद्यन्मद्ध्यतः सतो हृदयस्याऽग्रेऽवद्यति प्प्राणो वै हृदयमतो ह्ययमूर्द्ध्वः प्प्राणः सञ्चरति प्प्राणो वै पशुर्य्यावद्ध्येव प्प्राणेन प्प्राणिति तावत्पशुरथ यदाऽस्मात्प्प्राणोऽपक्क्रामति दार्व्वेव तर्हि भूतोऽनर्त्थ्यः शेते ॥ १५ ॥ * हृदयमु वै पशुः । तदस्याऽऽत्मन ऽएवाऽग्रेऽवद्यति तस्माद्यदि किञ्चिदवदानꣳ हीयेत न तदाद्द्रियेत सर्व्वस्य हैवाऽस्य तत्पशोरवत्तं भवति यद्धृदयस्याऽग्रेऽवद्यति तस्मान्मद्ध्यतः सतो हृदयस्यैवाऽग्रेऽवद्यत्यथ यथापूर्व्वम् ॥ १६ ॥ अथ जिह्वायै । सा हीयं पूर्व्वार्द्धात्प्रतिष्ठत्यथ व्वक्षसस्तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्म्नोऽथ व्वृक्क्योः ॥ १७ ॥ गुदं त्रेधा करोति । स्थविमोपयड्भ्यो मध्यं जुह्वां द्वेधा कृत्वाऽवद्यत्यणिम त्र्यङ्गेष्वथैकचरायै श्रोणेरेतावन्नु जुह्वामवद्यति ॥ १८ ॥ अथोपभृति । त्र्यङ्ग्यस्य दोष्णो गुदं द्वेधा कृत्वाऽवद्यति त्र्यङ्ग्यायै श्रोणेरथ हिरण्यशकलाववदधात्यथोपरिष्टादाज्यस्याऽभिघारयति ॥ १९ ॥ † अथ व्वसाहोमं गृह्णाति । 'रेडसी'ति लेलयेव हि यूस्तस्मादाह रेडसीत्य-

* का० श्रौ० सू० ६. ७. ६,७ ।

† का० श्रौ० सू० ६. ८. ११; 'मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो 'वसा' इत्युच्यते' ।

( १ ) शु० सं० अ० ६ क० १८ ।

'न्निष्ट्वा श्रीणात्वि'त्यग्निर्ह्येतच्छ्रपयति तस्मादाहाऽग्निष्ट्वा श्रीणात्वि'त्यापस्त्वा समरिणन्नि'त्यापो ह्येतमङ्गेभ्यो रसᳪ सम्भरन्ति तस्मादाहाऽऽपस्त्वा समरिणन्निति ॥ २० ॥ 'वातस्य त्वा ध्राज्या' ऽइति । अन्तरिक्षं वा ऽअयमनुपवते योऽयं पवतेऽन्तरिक्षाय वै गृह्णाति तस्मादाह वातस्य त्वा ध्राज्या ऽइति ॥ २१ ॥ 'पूष्णो रᳪह्या' ऽइति । एष वै पूष्णोरᳪहिरेतस्मा ऽउ हि गृह्णाति तस्मादाह पूष्णो रᳪह्या- ऽइति ॥ २२ ॥ 'ऊष्मणो व्यथिषदि'ति । एष वा ऽऊष्मै- तस्मा ऽउ हि गृह्णाति तस्मादाहोष्मणो व्यथिषदित्यथो- परिष्टाद् द्विराज्यस्याऽभिघारयति ॥ २३ ॥ * अथ पार्श्वेन वाऽसिना वा प्रयौति । 'प्रयुतं द्वेष' ऽइति तन्नाष्ट्रा ऽएवैत- द्रक्षाᳪस्यतोऽपहन्ति ॥ २४ ॥ अथ † यद्यूष परिशिष्यते । तत्समवत्तधान्यामानयति तद्धृदयं प्राऽस्यति जिह्वां वक्ष- स्तनिममतस्ने वनिष्टुमथोपरिष्टाद् द्विराज्यस्याऽभिघारयति ॥ २५ ॥ तद्यद्धिरण्यशकलावभितो भवतः । घ्नन्तिवा- ऽएतत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति तथाऽत ऽउदेति तथा सञ्जीवति तस्माद्धि- रण्यशकलावभितो भवतः ॥२६॥ अथ यदक्षणयाऽवद्यति । सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च

---

* अत्र शतम् २१०० ॥

† 'यूष् शब्देन मांसेन सह पक्वं जलमुच्यते' ( तै० सं० सा० भा० १. ३. १० )

( १ ) शु० सं० अ० ६ क० १८ । ( २ ) शु० सं० अ० ६ क० १८ । ( ३ ) शु० सं० अ० ६ क० १८ । ( ४ ) शु० सं० अ० ६ क० १८ । (५) शु० सं० अ० ६ क० १८ । ( ६ ) शु० सं० अ० ६ क० १८ ।

दोष्णः सव्व्यायाश्च श्रोणेस्तस्मादयं पशुरक्षणया पद्दो हरत्यथ यत्सम्म्यगवद्येत्समीचो हैवाऽयं पशुः पद्दो हरेत्तस्मादक्ष्णयाऽवद्यत्यथ यन्न शीर्ष्णोऽवद्यति नाऽꣳसयोर्न्नाऽनूकस्य नाऽपरसक्थयोः ॥ २७ ॥ असुरा ह वा ऽअग्रे पशुमालेभिरे। तद्देवा भीषा नोपाऽवेयुस्तान्हेयं पृथिव्व्युवाच मैतदाद्दद्ध्वमहं व ऽएतस्याऽद्ध्यक्षा भविष्यामि यथा यथैतऽएतेन चरिष्यन्तीति ॥ २८ ॥ सा होवाच। अन्न्यतरामेवाऽऽहुतिमहौषुरन्न्यतरां पर्य्यशिषन्निति स यां पर्य्यशिꣳषँस्तानीमान्न्यवद्दानानि ततो देवाः स्विष्टकृते त्र्यङ्गाण्ण्युपाऽऽभजँस्तस्मात्त्र्यङ्गाण्ण्यथाऽसुरा ऽअवाद्यञ्छीर्ष्णोऽꣳसयोरनूकस्याऽपरसक्थयोस्तस्मात्तेषां नाऽवद्येद्यद्वेव त्वष्टाऽनूकमब्भ्युवमत्तस्मादनूकस्य नाऽवद्येदथाऽऽहाऽग्नीषोमाब्भ्यां * छागस्य हविषोऽनुब्रूहीत्याश्राव्व्याऽऽहाऽग्नीषोमाब्भ्यां छागस्य हविः प्प्रेष्येति न प्प्रस्थितमित्याह प्प्रसुते प्प्रस्थितमिति ॥२९॥ अन्तरेणाऽर्द्धर्च्चौ याज्यायै वसाहोमं जुहोति। इतो वा ऽअयमूर्द्ध्वो मेध ऽउत्थितो यमस्या ऽइमः रसं प्रजा ऽउपजीवन्त्यर्व्वाचीनं दिवो रसो वै वसाहोमो रसो मेधो रसेनैवैतद्रसं तीव्व्रीकरोति तस्मादयः रसोऽद्यमानो न क्षीयते ॥ ३० ॥तद्यदन्तरेण। अर्द्धर्च्चौ याज्यायै वसाहोमं जुहोतीयं व्वा ऽअर्द्धर्च्चोऽसौ द्यौरर्द्धर्च्चोऽन्तरा वै द्यावापृथिवी ऽअन्तरिक्षमन्तरिक्षाय वै जुहोति तस्मादन्त-

* का० श्रौ० सू० ६. ८. १३–१५।

रेणाऽर्द्धर्चौ यआज्यायै वसाहोमं जुहोति ॥३१॥ * स जुहोति। 'घृतं[1] घृतपावानः पिबत वसां वसापावानः पिबताऽन्तरिक्षस्य हविरसि स्वाहे'त्त्येतेन वैश्वदेवेन यजुषा जुहोति वैश्वदेवं वा ऽअन्तरिक्षं तद्यदेनेनेमाः प्प्रजाः प्प्राणन्त्यश्चो-† दनन्त्यश्चाऽन्तरिक्षमनुचरन्ति तेन वैश्वदेवं वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्ति ॥ ३२ ॥ अथ जुह्वा पृषदाज्यस्योपग्घ्नन्नाह । ‡ वनस्प्पतयेऽनुब्रूहीत्त्याश्रा-व्व्याऽऽह वनस्प्पतये प्प्रेष्येति वषट्कृते जुहोति तद्यद्वन-स्प्पतये जुहोत्त्येतमेवैतद्वज्ज्रं यूपं भागिनं करोति सोमो वै वनस्प्पतिः पशुमेवैतत्त्सोमं करोति तद्यदन्तरेणोभे-ऽआहुती जुहोति तथोभयं व्व्याप्प्नोति तस्मादन्तरेणोभे-ऽआहुती जुहोति ॥ ३३ ॥ अथ यान्न्युपभृत्त्यवदानानि भवन्ति। तानि समानयमान ऽआहाऽग्नये स्विष्टकृतेऽनुब्रूही-त्त्याश्राव्व्याऽऽहाऽग्नये स्विष्टकृते प्प्रेष्येति वषट्कृते जुहोति ॥ ३४ ॥ अथ यद्वसाहोमस्य परिशिष्यते । ‡‡ तेन दिशो व्व्याघारयति 'दिशः[2] प्प्रदिश ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहे'ति रसो वै वसाहोमः सर्वास्वेवैतद्दिक्षु रस-न्दधाति तस्मादयं दिशि-दिशि रसोऽभिगम्म्यते ॥ ३५ ॥ अथ पशुः सम्मृशति। एतर्हि सम्मर्शनस्य कालोऽथ यत्पुरा

---

*-का० श्रौ० सू० ६. ८. १६।

† 'उदानन्त्यः' इति 'ग-च' पुस्तकयोः।

‡ का० श्रौ० सू० ६. ८. १७।

‡‡ का० श्रौ० सू० ६. ८. १९, २०।

(१) शु० सं० अ० ६ क० १९। (२) शु० सं० अ० ६ क० १९।

सम्मृशति य ऽइम ऽउपतिष्ठन्ते ते विमथिष्यन्त ऽइति शङ्कमानो यद्यु विमाथान्न शङ्केताऽत्रैव सम्मृशेत् ॥ ३६ ॥

* 'ऐन्द्रः प्प्राणः । अङ्गे ऽअङ्गे निदीध्यदैन्द्र ऽउदानो ऽअङ्गेऽअङ्गे निधीत' ऽइति यदङ्गशो विकृत्तो भवति तत्प्राणोदानाभ्याᳬं सन्दधाति 'देव त्वष्टर्भूरि ते सᳬंसमेतु सलक्ष्मा यद्विषुरूपं भवाती'ति कृत्स्नवृतमेवैतत्करोति 'देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्वि'ति तद्यत्रैनमहौषीत्तदेनं कृत्स्नं कृत्वाऽनुसमस्यति सोऽस्यकृत्स्नोऽमुष्मिँल्लोक ऽआत्मा भवति ॥ ३७ ॥ (C)

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपयड्ढोमः ]

त्रीणि ह वै पशोरेकादशानि । एकादश प्प्रयाजाऽएकादशाऽनुयाजा ऽएकादशोपयजो दश पाण्या ऽअङ्गुलयो दश पाद्या दश प्प्राणाः प्प्राण ऽउदानो व्यान ऽइत्त्येतावान्वै पुरुषो यः पराद्ध्यः पशूनां यः सर्वेऽनुपशवः ॥ १ ॥ तदाहुः । किन्तद्यज्ञे क्रियते येन प्प्राणः सर्वेभ्योऽ-

* का० श्रौ० सू० ६. ९. १।

( १ ) शु० सं० अ० ६ क० २० । ( २ ) शु० सं० अ० ६ क० २० । ( ३ ) शु० सं० अ० ६. क० २० ।

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—

क्रा० श० ४. ८. ३; मै० सं० ३. १०. २, ३; तै० सं० १०, ११ ।

ङ्गेभ्यः शिव ऽइति ॥ २ ॥ यदेव गुदं त्रेधा करोति । प्राणो वै गुदः सोऽयं प्राङ्गाततस्तमयं प्राणोऽनुसञ्चरति ॥ ३ ॥ स यदेव गुदं त्रेधा करोति । तृतीयमुपयड्भ्यस्तृतीयं जुह्वां तृतीयमुपभृति तेन प्राणः सर्वेभ्योऽङ्गेभ्यः शिवः ॥ ४ ॥ स ह त्वेव पशुमालभेत । य ऽएनं मेधमुपनयेद्यदि कृशः स्याद्यदुदरुर्ध्वस्य मेदसः परिशिष्येत तद्गुदे न्यृषेत्प्राणो वै गुदः सोऽयं प्राङ्गाततस्तमयं प्राणोऽनुसञ्चरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदाऽस्मात्प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यः शेते ॥ ५ ॥ गुदो वै पशुः । मेदो वै मेधस्तदेनं मेधमुपनयति यद्यु ऽअहसलो भवति स्वयमुपेत ऽएव तर्हि मेधं भवति ॥ ६ ॥ अथ पृषदाज्यं गृह्णाति । द्वयं वा ऽइदं सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥ ७ ॥ तेनाऽनुयाजेषु चरति । पशवो वा ऽअनुयाजाः पयः पृषदाज्यं तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं प्राणो हि पृषदाज्यमन्नं हि पृषदाज्यमन्नं हि प्राणः ॥ ८ ॥ तेन पुरस्तादनुयाजेषु चरति । स योऽयं पुरस्तात्प्राणस्तमेवैतद्दधाति तेन पश्चादुपयजति स योऽयं पश्चात्प्राणस्तमेवैतद्दधाति ताविमा ऽउभयतः प्राणौ हितौ यश्चाऽयमुपरिष्टाद्यश्चाऽधस्तात् ॥ ९ ॥ तद्वा ऽएतदेको द्वाभ्यां वषट्करोति । अद्धर्युर्वे च यश्चैष ऽउपयजत्यथ यद्यजन्तमुपयजति तस्मादुपयजो नामाऽथ यदुपयजति प्रैवैतज्जनयति पश्चाद्ध्युपयजति पश्चाद्धि योषायै प्रजाः

प्प्रजायन्ते ॥ १० ॥ * स ऽउपयजति। 'समुद्रं गच्छ स्वाहे' त्यापो वै समुद्र ऽआपो रेतो रेत ऽएवैतत्सिञ्चति ॥ ११ ॥ 'अन्तरिक्षं गच्छ स्वाहे'ति। अन्तरिक्षं वा ऽअनुप्प्रजाः प्प्रजायन्तेऽन्तरिक्षमेवैतदनु प्प्रजनयति ॥ १२ ॥ 'देवं सवितारं गच्छ स्वाहे'ति। सविता वै देवानां प्रसविता सवितृप्प्रसूत ऽएवैतत्प्रजनयति ॥ १३ ॥ 'मित्रावरुणौ गच्छ स्वाहे'ति। प्राणोदानौ वै मित्रावरुणौ प्प्राणोदानावेवैतत्प्रजासु दधाति ॥ १४ ॥ 'अहोरात्रे गच्छ स्वाहे'ति। अहोरात्रे वा ऽअनुप्प्रजाः प्प्रजायन्तेऽहोरात्रे ऽएवैतदनु प्प्रजनयति ॥ १५ ॥ 'छन्दांᳪसि गच्छ स्वाहे'ति। सप्त वै छन्दाᳪसि सप्त ग्राम्म्याः पशवः सप्ताऽऽरण्यास्तानेवैतदुभयान्प्रजनयति ॥ १६ ॥ 'द्यावापृथिवी गच्छ स्वाहे'ति। प्रजापतिर्वै प्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्य्यगृह्णात्ता ऽइमा द्यावापृथिवीभ्यां परिगृहीतास्तथो ऽएवैष ऽएतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिगृह्णाति ॥१७॥ † अथाऽत्युपयजति। स यन्नाऽत्युपयजेद्यावत्यो हैवाऽग्रे प्प्रजाः सृष्टास्तावत्यो हैव स्युर्न्न

* 'प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रम्' (का० श्रौ० सू० ६. ९. १० )।

† "अत्युपयाजनामकाश्चत्वार उपयागाः सप्तकानामनन्तरमाधिक्येन यष्टव्याः" ( सा० भा० )।

(१) शु० सं० अ० ६ क० २१। (२) शु० सं० अ० ६ क० २१। (३) शु० सं० अ० ६ क० २१। (४) शु० सं० अ० ६ क० २१। (५) शु० सं० अ० ६ क० २१। (६) शु० सं० अ० ६ क० २१। (७) शु० सं० अ० ६ क० २१।

प्प्रजायेरन्नथ षदत्त्युपयजति प्प्रैवैतज्जनयति तस्मादिमाः प्प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ १८ ॥ (D)

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे षष्ठः प्रपाठकः ॥ ६ ॥
कण्डिकासंख्या ॥ ११२ ॥

सोऽत्त्युपयजति । 'षज्ञं[1] गच्छ स्वाहे'त्त्यापो वै षज्ञऽआपो रेतो रेत ऽएवैतत्त्सिञ्चति ॥ १ ॥ 'सोमं[2] गच्छ स्वाहे'ति । रेतो वै सोमो रेत ऽएवैतत्त्सिञ्चति ॥ २ ॥ 'दिव्व्यं[3] नभो गच्छ स्वाहे'ति । आपो वै दिव्व्यं नभ ऽआपो रेतो रेत ऽएवैतत्त्सिञ्चति ॥ ३ ॥ 'अग्निं * वैश्वानरं गच्छ स्वाहे'ति । इयं व्वै पृथिव्व्यग्निर्वैश्वानरः सेयं प्रतिष्ठेमामेवैतत्प्रतिष्ठामभिप्प्रजनयति ॥४॥ †अथ मुखं व्विमृष्टे । 'मनो[5] मे हार्द्दि षच्छे'ति तथो होपयष्टाऽऽत्मानं नाऽनुप्प्रव्वृणक्ति ॥ ५ ॥ ‡अथ जाघन्व्या पत्त्नीः संरुषाजयन्ति । जघनार्द्धो वै जाघनी जघनार्द्धाद्वै षोषायै प्प्रजाः प्प्रजायन्ते तत्प्रैवैतज्जनयति षज्जाघन्व्या पत्त्नीः संरुषाजयन्ति ॥ ६ ॥ अन्तरतो

(D) एतद् ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ४. ८; तै० सं० ६. ३. ११; ४. १. १; १. ३. १, ११; मै० सं० ३. १०७ ।

(१) शु० सं० अ० ६ क० २१ । (२) शु० सं० अ० ६. क० २१ । (३) शु० सं० अ० ६. क० २१ । (४) शु० सं० अ० ६. क० २१ । (५) शु० सं० अ० ६ क० २१ ।

* वैश्वानरः कस्मात् ? विश्वान्नरान्नयति, विश्व एनं नरा नयन्तीति वा, अपिवा विश्वानर एव स्यात्, प्रत्यृतः सर्वाणि भूतानि, तस्य वैश्वानरः ( निरु० ७. ६. २० ) ।

† का० श्रौ० सू० ६. ९. ११ ।

‡ का० श्रौ० सू० ६. ९. १३ ।

देवानां पत्नीभ्योऽवद्यति । अन्तरतो वै योषायै प्रजाः प्रजायन्त ऽउपरिष्टादग्नये गृहपतय ऽउपरिष्टाद्वै वृषा योषामधिद्रवति ॥ ७ ॥ *अथ हृदयशूलेनाऽवभृथं यन्ति । पशोर्ह वा ऽआलभ्यमानस्य हृदयः शुक्समभ्यवैति हृदयाद्धृदयशूलमथ यच्छृतस्य परितृन्दन्ति तदलङ्गुषं तस्मादु परितृद्यैव † शूलाकुर्यात्तत्रिः प्रच्च्युते पशौ हृदयं प्रवृह्योत्तमं प्रत्यवदधाति ॥ ८ ॥ अथ हृदयशूलं प्रयच्छति । तन्न पृथिव्यां परास्येन्नाऽप्सु स यत्पृथिव्यां परास्येदोषधीश्च वनस्पतीँश्चैषा शुक्प्रविशेद्यदप्सु परास्येदप ऽएषा शुक् प्रविशेत्तस्मान्न पृथिव्यां नाऽप्सु ॥ ९ ॥ अप ऽएवाऽभ्यवेत्य । ‡ यत्र शुष्कस्य चाऽऽर्द्रस्य च सन्धिः स्यात्तदुपगूहेद्यद्यु ऽअभ्यवायनाय ग्लायेदग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चाऽऽर्द्रस्य च संन्धिर्भवति तदुपगूहति 'मा[1]ऽपो मौषधीर्हिंसीरि'ति तथा नाऽपो नौषधीर्हिनस्ति 'धा[2]म्म्नो–धाम्म्नो राजँस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या ऽइति वरुणेति शपामहे ततो वरुण नो मुञ्चे'ति तदेनः सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्ण्यात्प्रमुञ्चति ॥ १० ॥ अथाऽभिमन्त्रयते । 'सुमित्रि[3]या न ऽआप ऽओषधयः सन्तु दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म'

* का० श्रौ० सू० ६. १०. १ ।

† 'शूलात्पाके' ( पा० सू० ५. ४. ६५ ) इति डाजन्तः ।

‡ का० श्रौ० सू० ६. १०. ३ ।

( १ ) शु० सं० अ० ६ क० २२ । ( २ ) शु० सं० अ० ६ क० २२ । ( ३ ) शु० सं० अ० ६ क० २३ ।

ऽइति यत्र वा ऽएतेन प्प्रचरन्त्यापश्च ह वा ऽअस्मात्ताव-दोषधयश्चाऽपक्रम्म्येव तिष्ठन्ति तदु ताभिर्म्मित्रधेयं कुरुते तथो हैनं ताः पुनः प्प्रविशन्त्येषो तत्र प्प्रायश्चित्तिः क्रियते स वै नाऽग्नीषोमीयस्य पशोः करोति नाऽऽग्नेयस्य वशाया-ऽएवाऽनूबन्ध्यायै ताथं हि सर्व्वोऽनु यज्ञः सन्तिष्ठत ऽएतदु हाऽस्या*ऽग्नीषोमीयस्य च पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद्वशायाश्चरन्ति ॥ ११ ॥ (E)

अष्टमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥



[ पश्वेकादशिनी ]

प्रजापतिर्व्वै प्प्रजाः ससृजानो रिरिचान ऽइवाऽमन्यत । तस्मात्पराच्च्यः प्प्रजा ऽआसुर्न्नाऽस्य प्प्रजाः श्रियेऽन्ना-द्याय तस्थिरे ॥ १ ॥ स †ऽऐक्षताऽरिक्ष्यहम् । ‡यस्मा ऽउ कामायाऽसृक्षि न मे स कामः समार्द्धि पराच्च्यो मत्प्रजा-ऽअभूवन्न मे प्प्रजाः श्रियेऽन्नाद्यायाऽस्थिषतेति ॥ २ ॥ स-ऽऐक्षत प्प्रजापतिः । कथं नु पुनरात्मानमाप्प्याययेयोप मा प्प्रजाः समावर्त्तेरँस्तिष्ठेरन्मे प्प्रजाः श्रियेऽन्नाद्यायेति ॥३॥ सोऽर्च्चञ्छ्राम्म्यँश्चचार प्प्रजाकामः । स ऽएतामेकादशि-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ४. ८. ४; तै० सं० ६. ४. ११; मै० सं० ३. १०. ७।

* 'अग्नीषोमीयस्य पशोः' इति पाठः 'ख' पुस्तके ।

† 'ऐक्ष्यत' इति 'च' पुस्तके ।

‡ 'अस्मा ऽउ' इति पाठः 'ग-च' पुस्तकयोः ।

नीमपश्यत्स ऽएकादशिन्न्येष्ट्वा प्प्रजापतिः पुनरात्मा-नमाप्प्याययतोपैनं प्प्रजाः समावर्त्तन्ताऽतिष्ठन्ताऽस्य प्प्रजाः श्रियेऽन्नाद्याय स व्वसीयानेवेष्ट्वाऽभवत् ॥ ४ ॥ तस्म्मै कमेकादशिन्न्या यजेत। एवꣳ हैव प्प्रजया पशु-भिराप्प्यायत ऽउपैनं प्रजाः समावर्त्तन्ते तिष्ठन्तेऽस्य प्प्रजाः श्रियेऽन्नाद्याय स व्वसीयानेवेष्ट्वा भवत्त्येतस्म्मै कमेकादशिन्न्या यजते ॥ ५ ॥ स ऽआग्नेयं प्रथमं पशु-मालभते। * अग्निर्वै देवतानां मुखं प्रजनयिता स प्प्रजा-पतिः स ऽउ ऽएव यजमानस्तस्मादाग्नेयो भवति ॥ ६ ॥ अथ सारस्वतम्। व्वाग्वै सरस्वती व्वाचैव तत्प्रजापतिः पुनरात्मानमाप्प्याययत व्वागेनमुपसमावर्त्तत व्वाचमनुका-मात्मनोऽकुरुत व्वाचो ऽएवैष ऽएतदाप्प्यायते व्वागेन-मुपसमावर्त्तते व्वाचमनुकामात्मनः कुरुते ॥ ७ ॥ अथ सौम्म्यम्। अन्नं वै सोमोऽन्नेनैव तत्प्रजापतिः पुनरात्मा-नमाप्प्याययताऽन्नमेनमुपसमावर्त्तताऽन्नमनुकमात्मनोऽकुरु-तान्नेनो ऽएवैष ऽएतदाप्प्यायतेऽन्नमेनमुपसमावर्त्ततेऽन्न-मनुकमात्मनः कुरुते ॥ ८ ॥ † तद्यत्सारस्वतमनु भवति। व्वाग्वै सरस्वत्त्यन्नꣳ सोमस्तस्माद्यो व्वाचा प्प्रसाम्म्यन्नादो हैव भवति ॥ ९ ॥ अथ पौष्णम्। पशवो वै पूषा पशुभि-रेव तत्प्रजापतिः पुनरात्मानमाप्प्याययत पशव ऽएनमुप-समावर्त्तन्त पशूननुकानात्मनोऽकुरुत पशुभिर्व्वैवैष ऽएतदा-

* 'अग्निर्वै देवानामवमः' ऐ० ब्रा० १. १. १; 'अग्निमुखा वै देवाः' इति ता० ब्रा० २५. १५. ४।

† का० श्रौ० सू० ८. ८. २५।

प्प्यायते पशव ऽएनमुपसमावर्त्तन्ते पशूननुकानात्मनः कुरुते ॥ १० ॥ अथ बार्हस्प्पत्त्यम् । ब्रह्म वै बृहस्प्पतिर्ब्रह्मणैवैतत्प्रजापतिः पुनरात्मानमाप्प्याययत ब्रह्मैनमुपसमावर्त्तत ब्रह्माऽनुकमात्मनोऽकुरुत ब्रह्मणो ऽएवैष ऽएतदाप्प्यायते ब्रह्मैनमुपसमावर्त्तते ब्रह्माऽनुकमात्मनः कुरुते ॥ ११ ॥ तद्यत्पौष्णमनु भवति । पशवो वै पूषा ब्रह्म बृहस्प्पतिस्तस्माद् ब्राह्मणः पशूनभिधृष्णुतमः पुराहिता ह्यस्य भवन्ति मुख ऽआहिता*स्तस्मादु तत्सर्वं दत्वाऽजिनवासी चरति ॥ १२ ॥ अथ† वैश्वदेवः । सर्वं वै विश्वे देवाः सर्वेणैव तत्प्रजापतिः पुनरात्मानमाप्प्याययत सर्व्वमेनमुपसमावर्त्तत सर्व्वमनुकमात्मनोऽकुरुत सर्व्वेणो ऽएवैष ऽएतदाप्प्यायते सर्व्वमेनमुपसमावर्त्तते सर्व्वमनुकमात्मनः कुरुते ॥ १३ ॥ तद्यद् बार्हस्प्पत्त्यमनु भवति । ब्रह्म वै बृहस्प्पतिः सर्व्वमिदं विश्वे देवा ऽअस्यैवैतत्सर्व्वस्य ब्रह्म मुखं करोति तस्मादस्य सर्व्वस्य ब्राह्मणो मुखम् ॥ १४ ॥ अथैन्द्रम् । इन्द्रियं वै वीर्य्यमिन्द्र ऽइन्द्रियेणैव तद्वीर्य्येण प्रजापतिः पुनरात्मानमाप्प्याययतेन्द्रियमेनं वीर्य्यमुपसमावर्त्ततेन्द्रियं वीर्य्यमनुकमात्मनोऽकुरुतेन्द्रियेणो ऽएवैष ऽएतद्वीर्य्येणाऽऽप्प्यायत ऽइन्द्रियमेनं वीर्य्यमुपसमावर्त्तत ऽइन्द्रियं वीर्य्यमनुकमात्मनः कुरुते ॥ १५ ॥ तद्यद्वैश्वदेवमनु भवति । क्षत्रं वाऽइन्द्रो विशो विश्वे देवा ऽअन्नाद्यमेवाऽस्मा ऽएतत्पुरस्तात्करोति ॥ १६ ॥ अथ मारुतम् । विशो वै मरुतो भूमो वै

* 'तस्मादुत सर्व्वम्' इति 'क' पुस्तके ।
† 'वैश्वदेवम्' इति 'ख' पुस्तके ।

विड् भूम्नैव तत्प्रजापतिः पुनरात्मानमाप्यायत भूमैनमुपसमावर्त्तत भूमानमनुकमात्मनोऽकुरुत भूम्नोऽएवैष ऽएतदाप्यायते भूमैनमुपसमावर्त्तते भूमानमनुकमात्मनः कुरुते ॥ १७ ॥ तद्यदैन्द्रमनु भवति । क्षत्रं वा ऽइन्द्रो विशो विश्वे देवा विशो वै मरुतो विशैवैतत्क्षत्रं परिवृढः इति तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥ १८ ॥ अथैन्द्राग्नम् । तेजो वा ऽअग्निरिन्द्रियं वीर्य्यमिन्द्रऽउभाभ्यामेव तद्वीर्य्याभ्यां प्रजापतिः पुनरात्मानमाप्यायतोभे ऽएनं वीर्य्ये ऽउपसमावर्त्तेतामुभे वीर्य्ये ऽअनुकेऽआत्मनोऽकुरुतोभाभ्याम्वेवैष ऽएतद्वीर्य्याभ्यामाप्यायतऽउभे ऽएनं वीर्य्ये ऽउपसमावर्त्तेते ऽउभे वीर्य्ये ऽअनुकेऽआत्मनः कुरुते ॥ १९ ॥ अथ *सावित्रः । सविता वै देवानां प्रसविता तथो हाऽस्मा ऽएते सवितृप्रसूताऽएव सर्वे कामाः समृद्ध्यन्ते ॥ २० ॥ अथ वारुणमन्ततऽआलभते । तदेनः सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥ २१ ॥ तस्माद्यदि † यूपैकादशिनी स्यात् । आग्नेयमेवाऽग्निष्ठे नियुञ्ज्यादथेतरान्व्युपनयेयुर्यथापूर्वम् ॥ २२ ॥ ‡ यद्यु पश्वेकादशिनी स्यात् । आग्नेयमेव यूपऽआलभेरन्नथेतरान्यथापूर्वम् ॥ २३ ॥ तान्यत्रोदीचो नयन्ति । आग्नेयमेव प्रथमं नयन्त्यथेतरान्यथापूर्वम् ॥२४॥

---

* 'सावित्रम्' इति पाठः 'ख' पुस्तके ।

† का० श्रौ० सू० ८. ८. २६ ।

‡ का० श्रौ० सू० ८. ८. २८ ।

ताऽन्यत्र निविद्ध्यन्ति । आग्नेयमेव प्प्रथमं दक्षिणार्द्धे निविद्ध्यन्त्यथेतरानुदीचोऽतिनीय यथापूर्वम् ॥ २५ ॥ तेषां यत्र वपाभिः प्प्रचरन्ति । आग्नेयस्यैव प्प्रथमस्य वपया प्प्रचरन्त्यथेतरेषां यथापूर्वम् ॥ २६ ॥ तैर्यत्र प्प्रचरन्ति । आग्नेयेनैव प्प्रथमेन प्प्रचरन्त्यथेतरैर्यथापूर्वम् ॥ २७ ॥ (A)

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ *वसतीवरीग्रहणविधिः ]

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वाऽपः प्प्रविवेश तेनैवैतद्रसेनाऽऽपः स्यन्दन्ते तमेवैतद्रसᳶ स्यन्दमानं मन्यन्ते ॥ १ ॥ स यद्वसतीवरीरच्छैति । तमेवैतद्रसमाहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद्वसतीवरीरच्छैति ॥ २ ॥ ता वै सर्वेषु सवनेषु विभजति । सर्वेष्वेवैतत्सवनेषु रसं दधाति सर्वाणि सवनानि रसवन्ति करोति तस्मात्सर्वेषु सवनेषु विभजति ॥ ३ ॥ ता वै स्यन्दमानानां गृह्णीयात् । ऐद्धि स यज्ञस्य रसस्तस्मात्स्यन्दमानानां गृह्णीयात् ॥ ४ ॥ गोपीथाय वा ऽएता गृह्यन्ते । सर्वं वा ऽइदमन्न्यदिलयति यदिदं किञ्चाऽपि योऽयं पवतेऽथैता ऽएव नेलयन्ति तस्मात्स्यन्दमानानां गृह्णीयात् ॥५॥

(A) एतद्व्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ४. ९. १; मै० सं० ४. ५. १, १; तै० सं० ६. ६. ५ ।

* "अभिषुतस्य सोमस्य वर्द्धनार्थं या आपः सोमरसेन सह संसृज्यन्ते ता वसतीवर्य उच्यन्ते" का० श्रौ० सू० वृ० ( ८. ९. ६ ) ।

* दिवा गृह्णीयात् । पश्यन्न्यज्ञस्य रसं गृह्णानीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति य ऽएष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्माद्दिवा गृह्णीयाद्दिवेव वा ऽएष तस्माद्देव दिवा गृह्णीयात् ॥ ६ ॥ एतद्ध वै विश्वे देवाः । यजमानस्य गृहानागच्छन्ति स यः पुराऽऽदित्यस्याऽस्तमयाद्वसतीवरीर्गृह्णाति यथा श्रेयस्याऽऽगमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्त ऽएतद्धविः प्रविशन्ति त ऽएतासु वसतीवरीषूपवसन्ति स ऽउपवसथः ॥ ७ ॥ स यस्या गृहीता ऽअभ्यस्तमियात् । तत्र प्रायश्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद् गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति यद्यु † ऽअनीजानः स्याद्यऽएनमीजान ऽउपाऽवसितो वा पर्य्यवसितो वा स्यात्तस्य निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥८॥ यद्यु ऽएतदुभयं न विन्देत् । उल्कुषीमेवाऽऽदायोपपरेयात्तामुपर्य्युपरि धारयन् गृह्णीयाद्धिरण्यं वोपर्य्युपरि धारयन् गृह्णीयात्तदेतस्य रूपं क्रियते य ऽएष तपति ॥ ९ ॥ ‡ अथाऽतो गृह्णात्येव । 'हविष्मतीरिमा ऽआप' ऽइति यज्ञस्य ह्यासु रसः प्राऽऽविशत्तस्मादाह हविष्मतीरिमा ऽआप ऽइति 'हविष्माँ३ ऽआविवासती'ति हविष्मान्ह्येना यजमान-

* का० श्रौ० सू० ८. ९. ६ ।

† का० श्रौ० सू० ८. ९. ७, ८; 'ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्' इति श्रुत्यन्तरम् ( तै० सं० ६. ४. २. ३ ) ।

‡ का० श्रौ० सू० ८. ९. ९ ।

( १ ) शु० सं० अ० ६ क० २३ । ( २ ) शु० सं० अ० ६ क० २३ ।

ऽआविवासति तस्मादाह हविष्माँ३ ऽआविवासतीति ॥१०॥ 'हविष्मान्देवो ऽअध्वर' ऽइति। अध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तꣳ हविष्मन्तं करोति तस्मादाह हविष्मान्देवो ऽअध्वर ऽइति ॥ ११ ॥ 'हविष्माँ३ ऽअस्तु सूर्य्य' ऽइति। एतस्मै वै गृह्णाति य ऽएष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह हविष्माँ३ ऽअस्तु सूर्य्य ऽइति ॥ १२ ॥ ता ऽआहृत्य जघनेन * गार्हपत्यꣳ सादयति। 'अग्नेर्वोऽपन्नगृहस्य सदसि सादयामी'त्यग्नेर्वोऽनार्त्तगृहस्य सदसि सादयामीत्येवैतदाहाऽथ यदाग्नीषोमीयꣳ पशुꣳ सन्तिष्ठतेऽथ परिहरति व्युत्क्रामतेत्याहाऽग्रेण हविर्द्धाने यजमान ऽआस्ते ताऽआदत्ते ॥ १३ ॥ स † दक्षिणेन निष्क्रामति। ता दक्षिणायाꣳ श्रोणौ सादयती'न्द्राग्न्योर्भागधेयी स्थे'ति विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीन्द्राग्नी हि विश्वे देवास्ताः पुनराहृत्याऽग्रेण पत्नीꣳ सादयति स जघनेन पत्नीं पर्य्येत्य ता ऽआदत्ते ॥ १४ ॥ ‡ स ऽउत्तरेण निष्क्रामति। ता ऽउत्तरायाꣳ श्रोणौ सादयति 'मित्रावरुणयोर्भागधेयी स्थे'ति नैवꣳ सादयेदतिरिक्तमेतन्नैवꣳ सम्पत्सम्पद्यतऽइन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवाऽनतिरिक्तं तथा

* का० श्रौ० सू० ८. ९. १०।
† का० श्रौ० सू० ८. ९. १६।
‡ का० श्रौ० सू० ८. ९. १९, २१।

(१) शु० सं० अ० ६ क० २३। (२) शु० सं० अ० ६ क० २३। (३) शु० सं० अ० ६ क० २४। (४) शु० सं० अ० ६ क० २४। (५) शु० अ० ६ क० २४।

सम्पत्सम्पद्यते ॥ १५ ॥ * गुप्त्यै वा ऽएताः परिह्रियन्ते । अग्निः पुरस्तादुथैताः समन्तं पल्यङ्ग्यन्ते नाष्ट्रा रक्षाथंसि स्यपघ्नत्त्यस्ता ऽआग्नीध्रे सादयति 'विश्वेषां देवानां भागधेयी स्थे'ति तदासु विश्वान्देवान्त्संवेशयत्त्येते वै वसतां वरं तस्माद्वसतीवर्य्यो नाम वसताथं ह वै वरं भवति य ऽएवमेतद्वेद ॥ १६ ॥ तानि वा ऽएतानि । सप्त यजूथंषि भवन्ति । चतुर्भिर्ग्गृह्णात्त्येकेन जघनेन गार्हपत्यः सादयत्त्येकेन परिहरत्त्येकेनाऽऽग्नीध्रे तानि सप्त यत्र वै वाचः प्प्रजातानि च्छन्दाथंसि सप्तपदा वै तेषां पराद्ध्यी शक्वर्य्येतामभिसम्पदं तस्मात्सप्त यजूथंषि भवन्ति ॥१७॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥ (B)



## [ अथ सवनीयपशुप्रयोगः ]

( तत्र सोमोपावहरणम्, सवनीयहविर्निर्वापादि )

† तान्त्सम्प्रबोधयन्ति । तेऽप ऽउपस्पृश्याऽऽग्नीध्रमुपसमायन्ति त ऽआज्यानि गृह्णते ‡ गृहीत्वाऽऽज्यान्न्यायन्त्यासाद्याऽऽज्यानि ॥ १ ॥ अथ राजानमुपाऽवहरति । इयं वै प्प्रतिष्ठा जनूरासां प्रजानामिमामेवैतत्प्रतिष्ठामभ्यु-

* का० श्रौ० सू० ८. ९. २३ ।

(B) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ४. ९. २; मै० सं० ४. ५. १, २; तै० सं० ६. ४. २ ।

† का० श्रौ० सू० ९. १. १ ।

‡ का० श्रौ० सू० ९. १. २–४ ।

( १ ) शु० सं० अ० ६ क० २४ । ( २ ) शु० सं० अ० ६ क० २४ ।

पाऽवहरति तमस्यै तनुते तमस्यै जनयति ॥ २ ॥ [ अर्धप्रपाठकः ॥ ५७ ॥ ] अन्तरेणेषे ऽउपाऽवहरति । यज्ञो वाऽअनस्तन्न्वेव यज्ञान्न बहिर्द्धा करोति ग्रावसु सम्मुखेष्वधि निद्धाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमेवैतद्विश्य-द्धूहति तद्यत्सम्मुखा भवन्ति विशमेवैतत्सम्मुखां क्षत्रिय-मभ्युविवादिनीं करोति तस्मात्सम्मुखा भवन्ति ॥ ३ ॥ * स ऽउपाऽवहरति । 'हृदे त्वा[1] मनसे त्वेति' यजमानस्यै-तत्कामायाऽऽह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्म्या यजते तस्मादाह हृदे त्वा मनसे त्वेति ॥ ४ ॥ 'दिवे त्वा[2] सूर्य्याय त्वे'ति । देवलोकाय त्वेत्येवैत-दाह यदाह दिवे त्वेति सूर्य्याय त्वेति देवेभ्यस्त्वेत्येवैतदा-'होर्द्ध्वमिमम[3]द्ध्वरं दिवि देवेषु होत्रा यच्छे'त्यद्ध्वरो वै यज्ञ-ऽऊर्द्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥ ५ ॥ 'सोम[4] राजन्विश्वास्त्वं प्रजा ऽउपाऽवरोहे'ति । तदेनमासां प्रजाना-माधिपत्याय राज्यायोपाऽवहरति ॥ ६ ॥ अथाऽनुसृज्यो-पतिष्ठते । विश्वास्त्वां प्रजा ऽउपाऽवरोहन्त्वित्ययथायथ-मिव वा ऽएतत्करोति यदाह विश्वास्त्वं प्रजा ऽउपावरोहेति क्षत्रं वै सोमस्तत्पापवस्यसं करोति तद्धेदमनु पापवस्यसं क्रियतेऽथाऽत्र यथायथं करोति यथापूर्वं यदाह 'विश्वा[5]-स्त्वां प्रजा ऽउपाऽवरोहन्त्वि'ति तदेनमाभिः प्प्रजाभिः

* का० श्रौ० सू० ९. १. ५-७।

(१) शु० सं० अ० ९ क० २५। (२) शु० सं० अ० ६ क० २५। (३) शु० सं० अ० ६ क० २५। (४) शु० सं० अ० ६ क० २६। (५) शु० सं० अ० ६ क० २६।

प्प्रत्त्यवरोहयति तस्मादु क्षत्त्रियमायन्तमिमाः प्प्रजा व्विशः प्प्रत्त्यवरोहन्ति तमधस्तादुपाऽऽसत ऽउपसन्नो होता प्प्रातरनुवाकमनुवक्ष्यन्न्भवति ॥ ७ ॥ अथ * समिधमब्भ्यादधदाह । देवेब्भ्यः प्प्रातर्य्यावब्भ्योऽनुब्रूहीति छन्दाᳬंसि वै देवाः प्प्रातर्य्यावाणश्छन्दाᳬंस्यनुयाजा देवेब्भ्यः प्प्रेष्य देवान्न्यजेति वा ऽअनुयाजैश्चरन्ति ॥ ८ ॥ तदु हैक ऽआहुः । देवेब्भ्योऽनुब्रूहीति तदु तथा न ब्रूयाच्छन्दाᳬंसि वै देवाः प्प्रातर्य्यावाणश्छन्दाᳬंस्यनुयाजा देवेब्भ्यः प्प्रेष्य देवान्न्यजेति वा ऽअनुयाजैश्चरन्ति तस्मादु ब्रूयाद्देवेब्भ्यः प्प्रातर्य्यावब्भ्योऽनुब्रूहीत्त्येव ॥ ९ ॥ अथ यत्त्समिधमब्भ्यादधाति । छन्दाᳬंस्येवैतत्त्समिन्धेऽथ यद्धोता प्प्रातरनुवाकमन्न्वाह च्छन्दाᳬंस्येवैतत्त्पुनराप्प्याययत्त्ययातयामानि करोति यातयामानि वै देवैश्छन्दाᳬंसि च्छन्दोभिर्हि देवाः स्वर्ग्गं लोकᳬं समाश्नुवत न वा ऽअत्र स्तुवते न शᳬंसन्ति तच्छन्दाᳬंस्येवैतत्त्पुनराप्प्याययत्त्ययातयामानि करोति तैरयातयामैर्य्यज्ञं तन्न्वते † तस्माद्धोता प्प्रातरनुवाकमन्न्वाह ॥ १० ॥ तदाहुः । कः प्प्रातरनुवाकस्य प्रतिगर ऽइति ‡ जाग्रद्धैवाऽद्ध्वर्य्युरुपाऽऽसीत स यन्निमिषति स हैवाऽस्य प्प्रतिगरस्तदु तथा न कुर्य्याद्यदि निद्रायादपि कामᳬं स्वप्प्यात्त्स

---

* का० श्रौ० सू० ९. १. १०. ११।

† का० श्रौ० सू० ९. १. १२।

‡ का० श्रौ० सू० ९. १. १३,१४।

यत्र होता प्प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्ग्गृहीतमाज्यं गृहीत्त्वा जुहोति ॥ ११ ॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्त्वाऽपः प्प्रविवेश तमदः पूर्वेद्युर्वसतीवरीभिराहरत्त्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्तमेवैतदच्छैति ॥ १२ ॥ * यद्वेवैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभि प्प्रस्तृणीते तमारुन्धे याब्भ्य ऽउ चैवैतां देवताब्भ्य ऽआहुतिं जुहोति ता ऽएवैतत्प्रीणाति ता ऽअस्म्मै तृप्ताः प्प्रीता ऽएतं यज्ञस्य रसः सन्नमन्ति ॥ १३ ॥ † स जुहोति । 'श्रृणोत्त्वग्निः[1] समिधा हवम्म' ऽइति श्रृणोतु म ऽइदमग्निरनु मे जानात्त्वित्त्येवैतदाह 'श्रृण्वन्त्वापो[2] धिषणाश्च देवीरि'ति श्रृण्वन्तु मऽइदमापोऽनु मे जानन्त्वित्त्येवैतदाह 'श्रोता[3] ग्रावाणो विदुषो न यज्ञमि'ति श्रृण्वन्तु म ऽइदं ग्रावाणोऽनु मे जानन्त्वित्त्येवैतदाह विदुषो न यज्ञमिति विद्वाꣳसो हि ग्रावाणः 'श्रृणोतु[4] देवः सविता हवम्मे स्वाहे'ति श्रृणोतु म ऽइदं देवः सविताऽनु मे जानात्त्वित्त्येवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्प्रसूत ऽएवैतद्यज्ञस्य रसमच्छैति ॥१४॥ ‡ अथाऽपरं चतुर्ग्गृहीतमाज्यं गृहीत्त्वा । उदङ् प्रयन्नाहाऽप ऽइष्य होतरित्त्यप ऽइच्छ होतरित्त्येवैतदाह तद्य-

* 'ख' पुस्तके 'यद्धेवैताम्' इति ।

† का० श्रौ० सू० ९. ३. १; अत्र शतम् २२०० ।

‡ का० श्रौ० सू० ९. ३. ३ ।

( १ ) शु० सं० अ० ६ क० २६ । ( २ ) शु० सं० अ० ६ क० २६ । ( ३ ) शु० सं० अ० ६ क० २६ । ( ४ ) शु० सं० अ० ६ क० २६ ।

दुतो होताऽन्वाहैतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमा-रुन्ध ऽएताऽनु चैवैतदनुतिष्ठते नेदेनानन्तरा नाष्ट्रारक्षाᳬसि हिनसन्निति ॥ १५ ॥ अथ * सम्प्रेष्यति । मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन ऽएताऽग्नी-ध्राच्चात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति सम्प्रैष ऽएवैषः ॥ १६ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाऽग्नीध्रं स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्यत्सह पत्नी-भिर्यन्ति ॥ १७ ॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वाऽपः प्रविवेश तमेते गन्धर्वाः सोमरक्षा जुगुपुः ॥ १८ ॥ ते ह देवा ऽऊचुः । इयमु ह्येवेह नाष्ट्रा यदिमे गन्धर्वाः कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रसमाहरेमेति ॥ १९ ॥ ते होचुः । योषित्कामा वै गन्धर्वाः सह पत्नी-भिरयाम ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्याम ऽइति ॥ २० ॥ ते सह पत्नीभि-रीयुः । ते पत्नीष्वेव गन्धर्वा जगृधुरथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाजह्रुः ॥ २१ ॥ तथो ऽएवैष ऽएतत् । सहैव पत्नीभिरेति ते पत्नीष्वेव गन्धर्वा गृध्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरति ॥ २२ ॥ सोऽपोऽभिजुहोति । एताᳬं ह वा ऽआहुतिᳬं हुतामेष यज्ञस्य रस ऽउपसमैति तां प्रत्युत्तिष्ठति तमेवैतदाविष्कृत्य गृह्णाति ॥ २३ ॥ † यद्वे-

* का० श्रौ सू० ९. ३. २ ।

† 'ख' पुस्तके 'यद्वैवैताम्' इति ।

वैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्धे तमपो याचति याऽभ्य ऽउ चैवैतां देवताऽभ्य ऽआहुतिं जुहोति ता ऽएवैतत्प्रीणाति ता ऽअस्मै तृप्ताः प्रीता ऽएतं यज्ञस्य रसꣳ सन्नमन्ति ॥ २४ ॥

* स जुहोति । 'देवीरापो[1] ऽअपान्नपादि'ति देव्यो ह्यापस्तस्मादाह देवीरापो ऽअपान्नपादिति 'यो वै[2] ऽऊर्म्मिर्हविष्य' ऽइति यो व ऽऊर्म्मिर्यज्ञिय ऽइत्येवैतदा'हेन्द्रियावा[3]न्मदिन्तम' ऽइति वीर्यवानित्येवैतदाह यदाहेन्द्रियावानिति मदिन्तम ऽइति स्वादिष्ठ ऽइत्येवैतदाह 'तन्देवेभ्यो[4] देवत्रा दत्ते'त्येतदेना ऽअयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति 'शुक्रपे[5]भ्य' ऽइति सत्यं वै शुक्रꣳ सत्यपेभ्य-ऽइत्येवैतदाह 'येषां[6] भाग स्थ स्वाहे'ति तेषा मु ह्येष भागः ॥ २५ ॥ अथ † मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति । 'कार्षिरसी'[7]ति यथा वा ऽअङ्गारोऽग्निना प्सातः स्यादेवमेषाऽऽहुतिरेतया देवतया प्साता भवति राजानं वा-ऽएताभिरद्भिरुपस्त्रक्ष्यन्भवति या ऽएता मैत्रावरुणचमसे वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाऽऽज्येन रेतः सोमꣳ हिनसानीति तस्माद्वा ऽअपप्लावयति ॥ २६ ॥

अथ गृह्णाति । 'समुद्रस्य[8] त्वाऽक्षित्या ऽउन्नयामी'त्यापो

* का० श्रौ० सू० ९. ३. ४।

† का० श्रौ० सू० ९. ३. ५–८।

(१) शु० सं० अ० ६ क० २७। (२) शु० सं० अ० ६ क० २७। (३) शु० सं० अ० ६ क० २७। (४) शु० सं० अ० ६ क० २७। (५) शु० सं० अ० ६ क० २७। (६) शु० सं० अ० ६ क० २८। (७) शु० सं० अ० ६ क० २८। (८) शु० सं० अ० ६ क० २८।

वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति तस्मादाप ऽएतावति भोगे भुज्यमाने न क्षीयन्ते तदन्वेकधनानुन्नयन्ति तदनु पात्रेजनान् ॥ २७ ॥ तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाऽक्रामत्तमेतद्देवाः प्रैषैरेव प्रैषमैच्छन्पुरोरुग्भिः प्राऽरोचयन्निविद्भिर्न्यवेदयँस्तस्मान्मैत्रावरुणचमसेन गृह्णाति ॥ २८ ॥ * त ऽआयन्ति । प्रत्युपतिष्ठतेऽग्नीच्चात्वाले वसतीवरीभिश्च होतृचमसेन च स ऽउपर्युपरि चात्वालꣳ सꣳस्पर्शयति वसतीवरीश्च मैत्रावरुण चमसञ्च 'समापो ऽअद्भिरग्मत समोषधीभिरोषधीरि'ति यश्चाऽसौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाऽद्याऽऽहृतस्तमेवैतदुभयꣳ सꣳ सृजति ॥२९॥ तद्धैके । ऐवमैत्रावरुणचमसे वसतीवरीर्न्नयन्त्या मैत्रावरुणचमसाद्वसतीवरीषु यश्चाऽसौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाऽद्याऽऽहृतस्तमेवैतदुभयꣳ सꣳसृजाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यद्वा ऽआधवनीये समवनयति तदेवैष ऽउभयो यज्ञस्य रसः सꣳसृज्यतेऽथ † होतृचमसे वसतीवरीर्गृह्णाति निग्राभ्याभ्यस्तद्यदुपर्युपरि चात्वालꣳ सꣳस्पर्शयत्यतो वै देवा दिवमुपोदक्रामँस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनु संख्यापयति ॥ ३० ॥ तऽआयन्ति । तꣳ होता ‡ पृच्छत्यध्वर्य्योऽवेरपा३ ऽइत्यविदोऽ-

---

* का० श्रौ० सू० ९. ३. ९ ।

† "होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः" ( का० श्रौ० सू० ९. ३. ११ ) ।

‡ का० श्रौ० सू० ९. ३. १२ ।

( १ ) शु० सं० अ० ६ क० २८ ।

पा३ ऽइत्येवैतदाह तं प्रत्याहोतेव नन्नमुरित्यविदमथो मेऽनद्धसतेत्येवैतदाह ॥३१॥ स यद्यग्निष्टोमः स्यात् । यदि *प्रचरण्याछ सर्वस्रवः परिशिष्टोऽलः होमाय स्यात्तं जुहुयाद् यद्यु नाऽलः होमाय स्यादपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति '[1]यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः । स यन्ता शश्वतीरिषः स्वाहे'त्याग्नेय्या जुहोत्यग्निर्वा ऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्त्तवत्या पुरुषसम्मितो वा ऽअग्निष्टोम ऽएवं जुहुयाद्यद्यग्निष्टोमः स्यात् ॥ ३२ ॥ यद्युक्थ्यः स्यात् । मध्यमं परिधिमुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतैरु हि तर्हि यज्ञः प्रतितिष्ठति यद्यु ऽअतिरात्रो वा षोडशी वा स्यान्नैव जुहुयान्न मध्यमं परिधिमुपस्पृशेत्समुद्यैव तूष्णीमेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून्व्यावर्त्तयति ॥ ३३ ॥ †अयुज्ञा—ऽअयुज्ञा ऽएकधना भवन्ति । त्रयो वा पञ्च वा पञ्च वा सप्त वा सप्त वा नव वा नव वैकादश वैकादश वा त्रयोदश वा ‡ त्रयोदश वा पञ्चदश वा द्वन्द्वमह मिथुनं प्रजननमथ य ऽएष ऽएकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते

* का० श्रौ० सू० ९. ३. १३–१५ ।

( १ ) शु० सं० अ० ६ क० २९ ।

† त्रिप्रभृति-पञ्चदशपर्यन्तं विषमसंख्याकान् एकधनाख्यान् कलशान् स्थापयेत् , 'एकं सोमरूपं धनं येषां ते एकधनाः' । अग्निष्टोमात्यग्निष्टोमयोस्त्रयः पञ्च वैकधनाः, उक्थ्ये पञ्च सप्त वा, षोडशिन्यां सप्त नव वा, वाजपेये नवैकादशवा, अतिरात्रे एकादश त्रयोदश वा, आप्तोर्यामे त्रयोदश पञ्चदश वेति संख्यावृद्धिरिति याज्ञिकदेवः । एकधनाश्च मृन्मया धातुमया वा, सोमवर्धनार्था आपः एकधनाः, तद्ग्रहणार्था घटाश्च एकधनशब्देनोच्यन्ते ( का० श्रौ० सू० वृ० ९. ३. २२ ) ।

‡ 'त्रयोदश' इति नास्ति 'च' पुस्तके ।

स वा ऽएषाᳬ सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषाᳬ सधनं तस्मादेकधना नाम ॥ ३४ ॥ (C)

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सोमाभिषवः ]

अथाऽधिषवणे *पर्युपविशन्ति। अथाऽस्याᳬ हिरण्यं बध्नीते द्वयं वा ऽइदं न तृतीयमस्ति सत्यं चैवाऽनृतं च सत्यमेव देवा ऽअनृतं मनुष्या ऽअग्निरेतसं वै हिरण्यꣳ सत्येनाऽᳬशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा ऽअस्याᳬ हिरण्यं बध्नीते ॥ १ ॥ अथ ग्रावाणमादत्ते। ते वा ऽएतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथाऽत उदेति तथा सञ्जीवति तस्मादश्ममया ग्रावाणो भवन्ति ॥२॥ † तमादत्ते। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे रावाऽसी'ति सविता वै देवानां प्रसविता तत्सवितृप्रसूत ऽएवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्यां पूष्णो हस्ताभ्यामिति

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ४. ९. ३; मै० सं० ४. ५. २; तै० सं० ६. ४, ३।

* "एकधनस्थान उभयशेषं विधायाऽधिषवणे पर्युपविशन्ति" ( का० श्रौ० सू० ९. ४. १।

† 'देवस्यत्वेत्यद्रिमादाय" का० श्रौ० सू० ( ९. ४. ४; अ )।

( १ ) शु० सं० अ० ६ क० ३०।

पूषा * भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वा ऽएष तस्य न मनुष्यो भर्त्ता तमेताभिर्द्देवताभिरादत्ते ॥ ३ ॥ 'आददे रावाऽसी'ति । यदा वा ऽएनमेतेनाऽभिषुण्वन्त्यथाऽऽहुतिर्ब्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्येतद्ध्येष द्वयᳬ रासत ऽआहुतीश्च दक्षिणाश्च तस्मादाह रावासीति ॥ ४ ॥ 'गभीरमिममद्ध्वरं कृधी'ति । अद्ध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदा'हेन्द्राय सुषूतममि'तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतममिति सुसुतममित्येवैतदाहो'त्तमेन पविने'त्येष वाऽउत्तमᳬ पविर्यत्सोमस्तस्मादाहोत्तमेन पविने'त्यूर्ज्जस्वन्तं मधुमन्तं पयस्वन्तमि'ति रसवन्तमित्येवैतदाह यदाहोर्ज्जस्वन्तं मधुमन्तं पयस्वन्तमिति ॥५॥ † अथ वाचं यच्छति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्ते होचुरुपाᳬशु यजाम वाचं ᳬयच्छामेति तऽउपाᳬश्वयजन्वाचमयच्छन् ॥ ६ ॥ अथ ‡ निग्राभ्याऽआहरति । तास्वेनं वाचयति 'निग्राभ्या स्थ देवश्रुतस्तर्प्पयत मा मनो मे तर्प्पयत वाचम्मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रम्मे तर्प्पयताऽऽत्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्प-

---

( १ ) शु० सं० अ० ६ क० ३०। ( २ ) शु० सं० अ० ६ क० ३०। ( ३ ) शु० सं० अ० ६ क० ३०। ( ४ ) शु० सं० अ० ६ क० ३०। ( ५ ) शु० सं० अ० ६ क० ३०।

* 'दुहेः कब् घश्च' इति ( पा० सू० ३. २. ७० ) कप् घकारश्च विधीयते।

† "वाचं यच्छति प्राग्घिङ्कारात्" ( का० श्रौ० सू० ९. ४. ४; आ )।

‡ का० श्रौ० सू० ९. ४. ६.।

( ६ ) शु० सं० अ० ६ क० ३०।

यत गणा मे मा वितृषन्नि'ति रसो वा ऽआपस्तास्वेवैतामाशि-
षमाशास्ते सर्वं च म ऽआत्मानं तर्प्पयत प्रजाम्मे तर्प्पयत
पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा वितृषन्निति
स य ऽएष ऽउपाꣳशुसवनः स विवस्वानादित्त्यो
निदानेन सोऽस्यैष व्व्यानः ॥ ७ ॥ तमभिमिमीते ।
घ्नन्ति वा ऽएनमेतद्यदभिषुण्ण्वन्ति तमेतेन घ्नन्ति तथाऽत-
ऽउदेति तथा सञ्जीवति यद्वेव मिमीते तस्म्मान्न्मात्रा मनु-
ष्येषु मात्रो यो चाऽप्प्यन्न्या मात्रा ॥ ८ ॥ *स मिमीते ।
'इन्द्राय त्वा वसुमते रुद्रवत' ऽइतीन्द्रो वै यज्ञस्य देवता
तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत ऽइति तदिन्द्रमेवाऽनु
वसूꣳश्च रुद्राꣳश्चाऽऽभज'तीन्द्राय त्वाऽऽदित्त्यवत' ऽइति तदि-
न्द्रमेवाऽन्न्वादित्त्यानाभज'तीन्द्राय त्वाऽभिमातिघ्न' ऽइति
सपत्नो वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्त्येवैतदाह
सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते देवेभ्यः
॥ ९ ॥ 'श्येनाय त्वा सोमभृत' ऽइति । तद्गायत्र्यै मिमीतेऽ-
ग्नये त्वा रायस्प्पोषद' ऽइत्त्यग्निर्वै गायत्री तद्' गायत्र्यै
मिमीते स यद्गायत्री श्येनो भूत्त्वा दिवः सोममाहरत्तेन
सा श्येनः सोमभृत्तेनैवाऽस्या ऽएतद्वीर्य्येण द्वितीयं मिमीते
॥१०॥ अथ यत्पञ्चकृत्त्वो मिमीते । संवत्त्सरसम्मितो वै यज्ञः
पञ्च वा ऽऋतवः संवत्त्सरस्य तं पञ्चभिराप्प्नोति तस्मात्पञ्च-

* का० श्रौ० सू० ९. ४. ७ ।

(१) शु० सं० अ० ६ क० ३१,३२ । (२) शु० सं० अ० ६ क० ३२ । (३) शु० सं० अ० ६ क० ३२ । (४) शु० सं० अ० ६ क० ३२ । (५) शु० सं० अ० ६ क० ३२ ।

कृत्वो मिमीते ॥ ११ ॥ * तमभिमृशति । 'यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनाऽस्मै यजमानायोरु राये कृध्यधि दात्रे वोच' ऽइति यत्र वा ऽएषोऽग्रे देवानाᳬं हविर्बभूव तद्धेक्षाञ्चक्रे मैव सर्वेणेवाऽऽत्मना देवानाᳬं हविर्भूवमिति स ऽएतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त ॥ १२ ॥ तद्वै देवा ऽअस्पृण्वत । तेऽस्यैतेनैवैतास्तनूराप्नुवन्त्स कृत्स्न ऽएव देवानाᳬं हविरभवत्तथो ऽएवाऽस्यैष ऽएतेनैवैतास्तनूराप्नोति स कृत्स्न ऽएव देवानाᳬं हविर्भवति तस्मादेवमभिमृशति ॥ १३ ॥ अथ निग्राभ्याभिरुपसृजति । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणाऽऽपः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किञ्चन † प्रतिधारयते ता ह स्वमेव वशञ्चेरुः कस्मै नु वयं तिष्ठेमहि याभिरस्माभिर्वृत्रो हत ऽइति सर्वं वा ऽइदमिन्द्राय तस्थानमास यदिदं किञ्चाऽपि योऽयं पवते ॥१४॥ स ऽइन्द्रोऽब्रवीत् । सर्वं वै म ऽइदं तस्थानं यदिदं किञ्च तिष्ठध्वमेव म ऽइति ता होचुः किं नस्ततः स्यादिति प्रथमभक्ष ऽएव वः सोमस्य राज्ञ ऽइति तथेति ता ऽअस्मा ऽअतिष्ठन्त तास्तस्थाना ऽउरसि न्यगृह्णीत तद्यदेना ऽउरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम ‡ तथैवैना ऽएतद्यजमान ऽउरसि निगृह्णीते स ऽआसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्रा-

* का० श्रौ० सू० ९. ४. ८ ।

( १ ) शु० सं० अ० ६ क० ३३ ।

† प्रतिधारयति' इति 'च' पुस्तके ।

‡ 'तथैवैता' इति 'ग-च' पुस्तकयोः ।

ब्भ्याभिरुपसृजति ॥ १५ ॥ *स ऽउपसृजति । 'श्वात्रा[१] स्त्थ व्वृत्रतुर' ऽइति शिवा ह्यापस्तस्मादाह श्वात्रा स्त्थेति व्वृत्रतुर ऽइति व्वृत्रꣳ ह्येता ऽअग्घ्नन्'न्नाधोगूर्त्ता[२] ऽअमृतस्य पत्त्नीरि'त्त्यमृता ह्याप 'स्ता[३] देवीर्देवत्त्रेमं यज्ञं नयते'ति नाऽत्र तिरोहितमिवाऽ'स्त्युपहूता[४] सोमस्य पिबते'ति तदुपहूता ऽएव प्प्रथमभक्षꣳ सोमस्य राज्ञो भक्षयन्ति ॥ १६ ॥ अथ †प्प्रहरिष्यन् । यं द्विष्यात्तं मनसा ध्यायेदमुष्मा ऽअहं प्रहरामि न तुभ्यमिति यो न्न्वेवेमं मानुषं ब्राह्मणꣳ हन्ति तं न्न्वेव परिचक्षतेऽथ किं य ऽएतं देवो हि सोमो ग्घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तमेतेन ग्घ्नन्ति तथाऽत ऽउदेति तथा सञ्जीवति तथाऽनेनस्यं भवति यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्तथो ऽअनेनस्यं भवति ॥ १७ ॥ ‡स प्प्रहरति । 'मा[५] भेर्म्मा संव्विक्था' ऽइति मा त्त्वं भैषीर्म्मा संव्विक्था ऽअमुष्मा ऽअहं प्रहरामि न तुभ्यमित्त्येवैतदा'होर्ज्जं[६] धत्त्स्वे'ति रसं धत्त्स्वेत्त्येवैतदाह 'धिषणे वीड्वी सती वीडयेथामूर्ज्जं दधाथामि'तीमे ऽएवैतत्फलके ऽआहुरित्त्युहैक ऽआहुः किन्नु तत्र योऽप्प्येते फलके भिन्द्यादिमे ह वै द्यावापृथिवी ऽएतस्माद्वज्ज्राद्युद्यतात्त्सꣳ रेजेते तदाभ्यामेवै-

(१) शु० सं० अ० ६ क० ३४। (२) शु० सं० अ० ६ क० ३४। (३) शु० सं० अ० ६ क० ३४। (४) शु० सं० अ० ६ क० ३४। (५) शु० सं० अ० ६ क० ३५ (६) शु० सं० अ० ६ क० ३५।

* का० श्रौ० सू० ९. ४. १०।

† का० श्रौ० सू० ९. ४. ११, १२।

‡ का० श्रौ० सू० ९. ४. १३।

नमेतद् द्यावापृथिवीभ्याᳪ शमयति तथेमे शान्तो न हिन-स्त्यूर्जं दधाथामिति रसन्दधाथामित्येवैतदाह 'पाप्मा हतो न सोम' ऽइति तदस्य सर्वं पाप्मानᳪ हन्ति ॥ १८ ॥ स वै *त्रिरभिषुणोति। त्रिः सम्भरति चतुर्न्निग्राभमुपैति तद्दश दशाक्षरा वै विराड्वैराजः सोमस्तस्माद्दशकृत्वः सम्पादयति ॥ १९ ॥ अथ यन्निग्राभमुपैति। यत्र वा ऽएषोऽग्रे देवानाᳪ हविर्बभूव तद्धेमा दिशोऽभिदध्यावाभिर्द्दिग्भिर्म्मिथुनेन प्प्रियेण धाम्म्ना सᳪस्पृशेयेति तमेतद्देवा ऽआभिर्द्दिग्भिर्म्मिथुनेन प्प्रियेण धाम्म्ना समस्पर्शयन्न्यन्निग्राभमुपायँस्तथो ऽएवैनमेष ऽएतदाभिर्द्दिग्भिर्म्मिथुनेन प्प्रियेण धाम्म्ना सᳪस्पर्शयति यन्निग्राभमुपैति ॥ २० ॥ †स ऽउपैति। 'प्राग[2]पागुदगधराक्सर्व्वतस्त्वा दिश ऽआधावन्त्वि'ति तदेनमाभिर्द्दिग्भिर्म्मिथुनेन प्प्रियेण धाम्म्ना सᳪस्पर्शय'त्यम्ब नि[3]ष्पर समरीर्व्विदामि'ति योषा वा ऽअम्बा योषा दिशस्तस्माद्दाहाऽम्ब निष्परेति समरीर्व्विदामिति प्प्रजा वा ऽअरीः सम्प्रजा जानतामित्येवैतदाह तस्म्माद्या ऽअपि व्विदूरमिव प्प्रजा भवन्ति समेव ता जानते तस्म्मादाह समरीर्व्विदामिति ॥ २१ ॥ अथ यस्मात्सोमो नाम। यत्र वा ऽएषोऽग्रे देवानाᳪ हविर्बभूव तद्धेक्षाञ्चक्रे मैव सर्व्वेणेवाऽऽत्मना देवानाᳪ

* का० श्रौ० सू० ९. ४. १४–१७।

† का० श्रौ० सू० ९. ४. १८।

(१) शु० सं० अ० ६ क० ३५। (२) शु० सं० अ० ६ क० ३६। (३) शु० सं० अ० ६ क० ३६।

हविर्भूवमिति तस्य या जुष्टतमा तनूरास तामप निदधे तद्वै देवा ऽअस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न ऽएतया हविरेधीति तान्दूर ऽइवोपप्राऽवृहत स्वा वै म ऽएषेति तस्मात्सोमो नाम ॥२२॥ अथ यस्माद्यज्ञो * नाम। घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यन् जायते तस्माद्यज्ञो † यञ्ज्ञो ह वै नामैतद्यद्यज्ञ ऽइति ॥ २३ ॥ तत्रैतामपि वाच-मुवाद । '(१)त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच' ऽइति मर्त्यो हैवैतद्ब्रवन्नुवाच त्वमेवेतो जनयिताऽसि नाऽन्यस्त्व-दिति ॥ २४ ॥ अथ निग्राभ्याभ्यो ग्रहान्विगृह्णते ‡। आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणाऽऽपः स्यन्दन्ते स्यन्दमानानां वै वसतीवरीर्गृह्णाति वसतीवरीभ्यो निग्राभ्या निग्रा-भ्याभ्यो ग्रहान्विगृह्णते तेनैवैतद्वीर्येण ग्रहान्विगृह्णते होतृचमसाद्योषा वा ऽऋग्घोता योषायै वा ऽइमाः प्रजाः

* "यज्ञः कस्मात् ? प्रख्यातं यजतिकर्मेति नैरुक्ताः, याच्यो भवतीति वा, यजुरुन्नो भवतीति वा, बहुकृष्णाजिन इत्यौपमन्यवः, यजूंष्येनं नयन्तीति वा" (निरु० ३. ४. २)

† स सोमः तायमानः सन् जायते, अतो यत् परम्पया आहुतिभावं गच्छन् जायते पुनः पुनः सवम्भति, अतो यज्ञायत इति यज्ञः । अतो वस्तुतो यज्ञ इति तस्य नाम, तद्यज्ञ इति परोक्षेण व्यवहरति । ( सा० भा० ९. ४. २३ ) 'यज्ञो' इति पदं नास्ति 'क–ग–च' पुस्तकेषु ।

‡ "अभिषवसमये सोमोपसर्गायोपयुक्ता आप 'निग्राभ्याः' इत्युच्यन्ते" ( श० ब्रा० सा० भा० ७. ५. २५ )

( १ ) ऋ० सं० अ० ६ क० ३७ ।

प्प्रजायन्ते तदेनमेतस्यै घोषाया ऽऋचो होतुः प्प्रजनयति तस्माद्धोतृचमसात् ॥ २५ ॥ (D)

## नवमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथ ब्राह्मणे सप्तमः प्रपाठकः ॥७॥ कण्डिकासंख्या ॥११४॥

## इति नवमोऽध्यायः ॥ ९ ॥

अध्वरनाम तृतीयं ‡ काण्डं समाप्तम् ॥ ३ ॥



‡ अस्मिन् काण्डे कण्डिकासंख्या ॥ ८५९ ॥

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ४. ९. ४; मै० सं० ४. ६. ४; तै० सं० ६. ४. ४।

# अथ ग्रहनामकं चतुर्थं काण्डम्* ॥

अस्मिन् काण्डे प्रतिपाद्या विषयाः— सवनत्रयगतं कर्म, षोडश्यादिसंस्था, द्वादशाहः, त्रिरात्राहीनदक्षिणा, सत्रधर्माः ।

[ उपांशुग्रहः, क्षुल्लकाभिषवश्च ]

॥ ॐ ॥ प्राणो ह वा ऽअस्योपाꣳशुः । व्यान ऽउपाꣳशुसवन ऽउदान ऽएवाऽन्तर्यामः ॥ १ ॥ अथ यस्मादुपाꣳशुर्न्नाम । अꣳशुर्वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणस्तद्यदस्यैष प्राणस्तस्मादुपाꣳशुर्न्नाम ॥ २ ॥ तं बहिष्पवित्राद् गृह्णाति । पराञ्चमेवाऽस्मिन्नेतत्प्राणन्दधाति सोऽस्याऽयं पराङेव प्राणो निर्र्दति तमꣳशुभिः पावयति पूतोऽसदिति षड्भिः पावयति षड्वा ऽऋतव ऽऋतुभिरेवैनमेतत्पावयति ॥३॥ तदाहुः । यदꣳशुभिरुपाꣳशुं पुनाति सर्व्वे सोमाः पवित्रपूता ऽअथ केनाऽस्याऽꣳशवः पूता भवन्तीति ॥ ४ ॥ † तानुप निवपति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति तदस्य स्वाहाकारेणैवाऽꣳशवः पूता भवन्ति सर्वं वा ऽएष ग्रहः सर्व्वेषाꣳ हि सवनानाꣳ रूपम् ॥ ५ ॥

---

* काण्वशतपथे काण्डमिदं पञ्चमतया परिणतम् ।

† 'यत्त इत्यात्तान्सोमे निदधाति' ( का० श्रौ० सू० ९. ४. २६ )

( १ ) शु० सं० अ० ७ क० २ । मन्त्रोऽयं ( तै० सं० ३. ३. ३. २ ) पठितः ।

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्ते होचुः सꣳस्थापयाम यज्ञं यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थित ऽएव नो यज्ञः स्यादिति ॥ ६ ॥ ते प्प्रातः सवन ऽएव । सर्वं ꣳयज्ञꣳ समस्थापयन्नेतस्म्मिन्नेव गृहे यजुष्ट्टः प्प्रथमे स्तोत्रे सामतः प्प्रथमे शस्त्र ऽऋक्कस्तेन सꣳस्थितेनैवाऽत ऽऊर्द्ध्वं यज्ञेनाऽऽचरन्त्स ऽएषोऽप्प्येतर्हि तथैव यज्ञः सन्तिष्ठत ऽएतस्मिन्नेव गृहे यजुष्ट्टः प्प्रथमे स्तोत्रे सामतः प्प्रथमे शस्त्रऽऋक्कस्तेन सꣳस्थितेनैवाऽत ऽऊर्द्ध्वं यज्ञेन चरति ॥ ७ ॥ * स वा ऽअष्टौकृत्त्वोऽभिषुणोति । अष्टाक्षरा वै गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेवैतत्क्रियते ॥ ८ ॥ † स गृह्णाति । '[1]वाचस्प्पतये पवस्वे'ति प्प्राणो वै वाचस्प्पतिः प्प्राण ऽएष गृहस्तस्म्मादाह वाचस्प्पतये पवस्वेति '[2]व्वृष्णोऽअꣳशुभ्यां गभस्तिपूत' ऽइति सोमाऽꣳशुभ्याꣳ ह्येनं पावयति तस्म्मादाह व्वृष्णो ऽअꣳशुभ्यामिति गभस्तिपूत ऽइति पाणी वै गभस्ती पाणिभ्याꣳ ह्येनं पावयति ॥ ९ ॥ अथैकादशकृत्त्वोऽभिषुणोति । एकादशाक्षरा वै त्रिष्टुप्प्त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिनमेवैतत्सवनं क्रियते ॥ १० ॥ स गृह्णाति । देवो दे[3]वेभ्यः पवस्वे'ति

* का० श्रौ० सू० ९. ४. १५ ।

† "उपांशुं च गृह्णाति 'वाचस्पतये देवो देवेभ्यो मधुमती'रिति" ( का० श्रौ० सू० ९. ४. २१ ) ।

( १ ) शु० सं० अ० ७ क० १ । ( २ ) शु० सं० अ० ७ क० १ । ( ३ ) शु० सं० अ० ७ क० १ ।

देवो ह्येष देवेभ्यः पवते 'येषां[1] भागोऽसी'ति तेषामु ह्येष भागः ॥ ११ ॥ अथ द्वादशकृत्त्वोऽभिषुणोति । द्वादशाक्षरा वै जगती जागतं तृतीयसवनं तृतीयसवनमेवैतत्क्रियते ॥ १२ ॥ स गृह्णाति । 'मधुमतीर्न[2] ऽइषस्कृधी'ति रसमेवाऽस्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्मादेष हतो न पूयत्यथ यज्जुहोति सꣳस्थापयत्येवैनमेतत् ॥ १३ ॥ * अष्टावष्टौकृत्त्वः । ब्रह्मवर्चसकामस्याऽभिषुणयादित्याहुरष्टाक्षरा वै गायत्री ब्रह्म गायत्री ब्रह्मवर्चसी हैव भवति ॥ १४ ॥ तच्चतुर्विंशतिं कृत्त्वोऽभिषुतं भवति । चतुर्विंशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति ॥ १५ ॥ † पञ्च—पञ्चकृत्त्वः । पशुकामस्याऽभिषुणुयादित्याहुः पाङ्क्ताः पशवः पशून्हैवाऽवरुन्धे पञ्च वा ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति सो ऽएषा मीमाꣳसैवेतरं त्वेव क्रियते ॥ १६ ॥ ‡ तं गृहीत्वा परिमार्ष्टि । नेद्व्यवश्च्योतदिति तन्न सादयति प्राणो ह्यस्यैष तस्मादयमसन्नः प्राणः सञ्चरति यदीत्वभिचरेदथैनꣳ सादये'दमुष्य त्वा प्राणꣳ सादयामी'ति तथाऽऽह तस्मिन्न पुनरस्ति यन्ना-

(१) शु० सं० अ० ७ क० १। (२) शु० सं० अ० ७ क० २।

* का० श्रौ० सू० ९. ४. १७।

† का० श्रौ० सू० ९. ४. १६।

‡ का० श्रौ० सू० ९. ४. २७-२८।

ऽनुसृजति तेनो ऽअद्ध्वर्य्युश्च यजमानश्च ज्योग्जीवतः ॥ १७ ॥ अथो ऽअप्प्येवैनं दद्ध्यात् । अमुष्य त्त्वा प्प्राणमपिदधामीति तथाऽऽह तस्मिन्न पुनरस्ति यन्न सादयति तेनो प्प्राणान्न लोभयति ॥ १८ ॥ स वा ऽअन्तरेव स'न्त्स्वाहे'ति करोति । देवा ह वै विभयाञ्चक्रुर्य्यद्वै नः पुरैवाऽस्य ग्रहस्य होमादसुररक्षसानीमं ग्रहं न हन्न्युरिति तमन्तरेव सन्तः स्वाहाकारेणाऽऽजुहवुस्तं हुतमेव सन्तमग्नावजुहवुस्तथो ऽएवैनमेष ऽएतदन्तरेव सन्त्स्वाहाकारेण जुहोति तं हुतमेव सन्तमग्नौ जुहोति ॥ १९ ॥ अथोप- * निष्क्रामति । 'उर्वन्तरिक्षमन्न्वेमी'त्त्यन्तरिक्षं वा ऽअनु रक्षश्चरत्त्यमूलमुभयतः परिच्छिन्नं यथाऽयं पुरुषोऽमूल- ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरत्त्येतद्वै यजुर्ब्रह्म रक्षोहा स ऽएतेन ब्रह्मणाऽन्तरिक्षमभयमनाष्ट्रं कुरुते ॥ २० ॥ अथ वरं व्वृणीते । बलवद्ध वै देवा ऽएतस्य ग्रहस्य होमं प्रेप्प्सन्ति तेऽस्म्मा ऽएतं वरं समर्द्धयन्ति क्षिप्प्रे न ऽइमं ग्रहं जुहवदिति तस्म्माद्वरं व्वृणीते ॥ २१ ॥ † स जुहोति । 'स्वाङ्कृतोऽसी'ति प्प्राणो वा ऽअस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातस्तस्म्मादाह स्वाङ्कृतोऽसीति 'व्विश्वेभ्य ऽइन्द्रियेभ्यो दिव्व्येभ्यः पार्थिवेभ्य' ऽइति सर्वाभ्यो ह्येष प्प्रजाभ्यः स्वयं जातो 'मनस्त्वाष्टु'ति प्प्रजापतिर्वै

* का० श्रौ० सू० ९. ४. ३० ।

† का० श्रौ० सू० ९. ४. ३३–३४ ।

(१) शु० सं० अ० ७ क० २ । (२) शु० सं० अ० ७ क० २ । (३) शु० सं० अ० ७ क० ३ । (४) शु० सं० अ० ७ क० ३ । (५) शु० सं० अ० ७ क० ३ ।

मनः प्रजापतिष्ट्वाऽश्नुतामित्त्येवैतदाह 'स्वाहा[१] त्वा सुभव सूर्य्याये'ति तदुवरथं स्वाहाकारं करोति परां देवताम् ॥ २२ ॥ अमुष्मिन्वा ऽएतमहौषीत् । य ऽएष तपति सर्वं वा ऽएष तदेनः सर्वस्यैव पराद्ध्यं करोत्त्यथ यदुवरां देवतां कुर्य्यात्परथं स्वाहाकारथं स्यादु हैवाऽमुष्मादादित्यात्परं तस्मादुवरथं स्वाहाकारं करोति परां देवताम् ॥२३॥ अथ हुत्त्वोर्द्ध्वं ग्रहमुन्माष्टि । पराञ्चमेवाऽस्मिन्नेतत्प्राणं दधात्यथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि । पराञ्चमेवाऽस्मिन्नेतत्प्राणं दधाति 'देवेभ्यस्[२]त्वा मरीचिपेभ्य' ऽइति ॥ २४ ॥ अमुष्मिन्वा ऽएतं मण्डलेऽहौषीत् । य ऽएष तपति तस्य ये रश्मयस्ते देवा मरीचिपास्तानेवैतत्प्रीणाति त ऽएनं देवाः प्रीताः स्वर्ग्गं लोकमभिवहन्ति ॥ २५ ॥ तस्य वा ऽएतस्य ग्रहस्य । नाऽनुवाक्याऽस्ति न याज्या तन्मन्त्रेण जुहोत्त्येतेनो हाऽस्यैषोऽनुवाक्यवान्भवत्त्येतेन याज्यवानथ यद्यभिचरेद्योऽस्याऽथंशुराश्लिष्टः स्याद्वाहोर्वोरसि वा वासिसि वा * तं जुहुया'द्[३]देवांथंशो यस्मै त्वेडे तत्सत्त्यमुपरिप्रुता भङ्गेन हतोऽसौ फडि'ति यथा ह वै हन्न्यमानानामपधावेदेवमेषोऽभिपूयमाणानाथं स्कन्दति तथा ह तस्य नैव धावन्नाऽपधावत्परिशिष्यते

(१) शु० सं० अ० ७ क० ३। (२) शु० सं० अ० ७ क० ३।

* "वास उरो बाहुषु श्लिष्टमंशुमभिचरन् जुहुयाद्देवांशविति" (का० श्रौ० सू० ९. ४. ३५)।

(३) शु० सं० अ० ७ क० ३।

यस्म्मा ऽएवं करोति * तꣳ सादयति 'प्प्राणाय त्त्वे'ति प्प्राणो ह्यस्यैषः ॥ २६ ॥ दक्षिणार्द्धे हैके सादयन्ति। एताꣳ ह्येष दिशमनु सञ्चरतीति तदु तथा न कुर्य्यादुत्तरार्द्ध-ऽएवैनꣳ सादयेन्नो ह्येतस्या ऽआहुतेः का चन पराऽस्ति तꣳ सादयति प्प्राणाय त्त्वेति प्प्राणो ह्यस्यैषः ॥ २७ ॥ † अथोपाꣳशुसवनमादत्ते। ते न दशाभिर्न्न पवित्त्रेणोप-स्प्पृशति यथा ह्यद्भिः प्प्रणिक्तमेवं तद्यद्यꣳशुराश्लिष्टः स्यात्पाणिनैव प्प्रच्छ्वꣳस्योदञ्चमुपनिपादयेद् 'व्व्यानाय त्त्वे'ति[२] व्व्यानो ह्यस्यैषः ॥ २८ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अन्तर्यामग्रहः ]

प्राणो ह वा ऽअस्योपाꣳशुः। व्व्यान ऽउपाꣳशुस-वन ऽउदान ऽएवाऽन्तर्य्यामः॥ १ ॥ अथ यस्म्मादन्तर्य्यामो नाम। यो वै प्प्राणः स ऽउदानः स व्व्यानस्तमेवाऽस्मि-न्नेतत्पराञ्चं प्राणं दधाति यदुपाꣳशुं गृह्णाति तमेवाऽस्मिन्ने-तत्प्रत्यञ्चमुदानं दधाति यदन्तर्य्यामं गृह्णाति सोऽस्या-ऽयमुदानोऽन्तरात्मन्न्यतस्तद्यदस्यैषोऽन्तरात्मन्न्यतो यद्वै-नेनेमाः प्प्रजा यतास्तस्म्मादन्तर्य्यामो नाम ॥ २ ॥ तमन्तः

* का० श्रौ० सू० ९. ४. ३७।

(१) शु० सं० अ० ७ क० ३।

† का० श्रौ० सू० ९. ४. ३८।

(२) शु० सं० अ० ७ क० ३।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. १; क० सं० २६. १; कपि० सं० ४१. ९; तै० सं० ६. ४. ५। मै० सं० ४. ५. ५।

पवित्राद्गृह्णाति। प्रत्यञ्चमेवाऽस्मिन्नेतदुदानं दधाति सोऽस्या-
ऽयमुदानोऽन्तरात्मन्निह त ऽएतेनो हाऽस्याऽप्युपाꣳशुरन्तः
पवित्राद्गृहीतो भवति समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ
प्राणोदानौ ह्येतेनो हैवाऽस्यैषोऽपीतरेषु ग्रहेष्वनाक्षिद्भवति
॥ ३ ॥ अथ यस्मात्सोमं पवित्रेण पावयति । यत्र वै सोमः
स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ तेन समꣳश-
शाम तस्मिन्पुनर्ददुष्यासैवाऽतिशिष्टमेनो यदीन्नूनं ब्रह्म-
ज्यानायाऽभिदध्यौ ॥ ४ ॥ तं देवाः पवित्रेणाऽपावयन् ।
स मेध्यः पूतो देवानाꣳ हविरभवत्तथो ऽएवैनमेष ऽएतत्प-
वित्रेण पावयति स मेध्यः पूतो देवानाꣳ हविर्भवति
॥ ५ ॥ तद्यदुपयामेन ग्रहा गृह्यन्ते । इयं वा ऽअदितिस्त-
स्या ऽअदः प्रायणीयꣳ ऽहविरसावादित्यश्चरुस्तद्वैतत्पुरेव
सुत्यायै सा हेयं देवेषु सुत्यायामपि त्वमीषेऽस्त्वेव मेऽपि
प्रसुते भाग ऽइति ॥ ६ ॥ ते ह देवा ऽऊचुः । व्यादि-
ष्टोऽयं देवताभ्यो यज्ञस्त्वयैव ग्रहा गृह्यन्तां देवताभ्यो
हूयन्तामिति तथेति सोऽस्या ऽएष प्रसुते भागः ॥ ७ ॥
तद्यदुपयामेन ग्रहा गृह्यन्ते । इयं वा ऽउपयाम ऽइयं वा-
ऽइदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्य-
ऽइतो वा ऽऊर्ध्वा देवा दिवि हि देवाः ॥ ८ ॥ तद्यदुप-
यामेन ग्रहा गृह्यन्ते । अनयैव तद्गृह्यन्तेऽथ यद्योनौ साद-
यतीयं वा ऽअस्य सर्वस्य योनिरस्यै वा ऽइमाः प्रजाः
प्रजाताः ॥ ९ ॥ तं वा ऽएतꣳ । रेतो भूतꣳ सोममृत्विजो
बिभ्रति यद्वा ऽअयोनौ रेतः सिच्यते प्र वै तन्मी-

यतेऽथ यद्योनौ सादुयत्त्यस्यामेव तत्त्सादयति ॥ १० ॥ प्राणोदानौ ह वा ऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्न्यतरं जुहोत्त्यनुदितेऽन्न्यतरं प्राणोदानयोर्व्यावृत्त्यै प्प्राणोदानावेवैतद्व्याकरोति तस्म्मादेतौ समानावेव सन्तौ नानेवाऽऽचक्षते प्प्राण ऽइति चोदान ऽइति च ॥ ११ ॥ अहोरात्रे ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्न्यतरं जुहोत्त्यनुदितेऽन्न्यतरमहोरात्रयोर्व्यावृत्त्या ऽअहोरात्रे ऽएवैतद्व्याकरोति ॥ १२ ॥ अहः सन्तमुपाᳬशुम् । तᳬ रात्रौ जुहोत्त्यहरेवैतद्रात्रौ दधाति तस्म्मादपि सुतमिश्रायामुपैव किञ्चिरूख्यायते ॥ १३ ॥ रात्रिᳬ सन्तमन्तर्य्यामम् । तमुदिते जुहोति रात्रिमेवैतदहन्दधाति तेनो हाऽसावादित्य ऽउद्यन्नेवेमाः प्प्रजा न प्प्रदहति तेनेमाः प्प्रजास्त्राताः ॥ १४ ॥ * अथाऽतो गृह्णात्त्येव । 'उपयामगृहीतोऽसी'[1]त्त्युक्त ऽउपयामस्य बन्धु'[2]रन्तर्ऽयच्छ मघवन्न्पाहि सोममि'तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्म्मादाह मघवन्निति पाहि सोममिति गोपाय सोममित्त्येवैतदा'हो[3]रुष्य राय ऽएषो यजस्वे'ति पशवो वै रायो गोपाय पशूनित्त्येवैतदाहेषो यजस्वेति प्प्रजा वाऽइषस्ता ऽएवैतद्यायजूकाः करोति ता ऽइमाः प्प्रजा यजमाना ऽअर्च्चन्त्यः श्राम्म्यन्त्यश्चरन्ति ॥ १५ ॥ 'अन्[4]तस्ते द्यावापृथिवी दधामि । 'अन्तर्द्दधाम्म्युर्व्वन्तरिक्षम् । सजू-

* "उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति" ( का० श्रौ० सू० ९. ६. १ )

(१) शु० सं० अ० ७ क० ४। (२) शु० सं० अ० ७ क० ४। (३) शु० सं० अ० ७ क० ४। (४) शु० सं० अ० ७ क० ५। (५) शु० सं० अ० ७ क० ५।

र्देवेभिरवरैः परैश्चे'ति तदेनं वैश्वदेवं करोति तद्यदेनेनेमाः प्रजाः प्राणत्यश्चोदनत्यश्चाऽन्तरिक्षमनुचरन्ति तेन वैश्वदेवो'ऽन्तर्यामे मघवन्मादयस्वे'तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्नित्यथयदन्तरन्तरितिगृह्णात्यन्तस्त्वारमन्दध ऽइत्येवैतदाह ॥ १६ ॥ तं गृहीत्वा * परिमार्ष्टि । नेद्व्यवश्च्योतदिति तं न सादयत्युदानो ह्यस्यैष तस्मादयमसन्न ऽउदानः सञ्चरति यदीत्वभिचरेदथैनꣳ सादयेदमुष्यत्वोदानꣳ सादयामीति ॥ १७ ॥ स यद्युपाꣳशुꣳ सादयेत् । अथैनꣳ सादयेद्यद्युपाꣳशुं न सादयेन्नैनꣳ सादयेद्यद्युपाꣳशुमपिदध्यादप्येनं दध्याद्यद्युपाꣳशुं नाऽपिदध्यान्नैनमपिदध्याद्यथोपाꣳशोः कर्म्म तथैतस्य समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ हि ॥ १८ ॥ † ताऽउ ह चरकाः । नानैव मन्त्राभ्यां जुह्वति प्राणोदानौ वाऽअस्यैतौ नानावीर्य्यौ प्राणोदानौ कुर्म्मऽइति वदन्तस्तदु तथा न कुर्य्यान्मोहयन्ति ह ते यजमानस्य प्राणोदानावपीद्वा ऽएनं तूष्णीं जुहुयात् ॥१९॥ स यद्वा ऽउपाꣳशुं मन्त्रेण जुहोति । तदेवाऽस्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ हि ॥ २० ॥ स येनैवोपाꣳशुं मन्त्रेण जुहोति ।

(१) शु० सं० अ० ७ क० ५।

* का० श्रौ० सू० ९. ६. ३ ।

† तै० सं० १. ४. २. ३; मै० सं० १. ३. ४; काठ० ४. १; संहितासु पृथगेव होममन्त्राः उक्ताः ।

तेनैवैतं मन्त्रेण जुहोति 'स्वाङ्कृतोऽसि विश्वेभ्य ऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्त्वा सुभव सूर्य्याये'त्युक्तो यजुषो बन्धुः ॥२१॥ अथ हुत्वाऽवाश्वं ग्रहमवमार्ष्टि । इदं वा ऽउपाथंशुः हुत्वोर्द्ध्वमुन्माष्टर्यथाऽत्राऽवाश्वमवमार्ष्टि प्प्रत्यश्चमेवाऽस्मिन्नेतदुदानं दधाति ॥ २२ ॥ अथ नीचा पाणिना । मध्यमे परिधौ प्प्रत्यगुपमार्ष्टीदं वा ऽउपाथंशुः हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्प्रागुपमाष्टर्यथाऽत्र नीचा पाणिना मध्यमे परिधौ प्प्रत्यगुपमार्ष्टि प्प्रत्यश्चमेवाऽस्मिन्नेतदुदानं दधाति 'देवेभ्यस्त्वा मरीचिपेभ्य' ऽइति सोऽसावेव बन्धुः ॥ २३ ॥ तं प्रत्याक्रम्म्य * सादयति । 'उदानाय[3] त्वे'त्युदानो ह्यस्यैष तानि वै सथंस्पृष्टानि सादयति प्प्राणोदानानेवैतत्सथंस्पर्शयति प्प्राणोदानान्त्सन्दधाति ॥ २४ ॥ तानि वा ऽअनिङ्ग्यमानानि शेरे । आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुनस्तृतीयसवने प्प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्प्रबुध्यन्ते तेऽनिशिताश्चराऽचरा यज्ञस्यैवैतद्विधामनु वय ऽइव ह वै यज्ञो विधीयते तस्योपाथंश्वन्तर्य्यामावेव पक्षावात्मोपाथंशुसवनः ॥ २५ ॥ तानि वा ऽअनिङ्ग्यमानानि शेरे । आ तृतीयसवनात्तायते यज्ञ ऽएति वै तद्यत्तायते तस्मादिमानि वयाथंसि विगृह्य पक्षावनायुवानानि पतन्ति

(१) शु० सं० अ० ७ क० ६ । (२) शु० सं० अ० ७ क० ६ ।
* का० श्रौ सू० ९. ६. ५ ।
(३) शु० सं० अ० ७ क० ६ ।

तानि पुनस्तृतीयसवने प्प्रयुज्यन्ते तस्म्मादिमानि व्वयाꣳसि समासं पक्षावायुवानानि पतन्ति यज्ञस्यैवैतद्वि-धामनु ॥ २६ ॥ * इयꣳ ह वा ऽउपाꣳशुः । प्राणो ह्युपाꣳ-शुरिमाꣳ ह्येव प्प्राणन्नभिप्प्राणित्त्यसावेवाऽन्तर्य्यामः ऽउदानो ह्यन्तर्य्यामोऽमुꣳ ह्येव लोकमुदनन्नभ्युदनित्त्यन्तरिक्षमेवो-पाꣳशुसवनो व्व्यानो ह्युपाꣳशुसवनोऽन्तरिक्षꣳ ह्येव व्व्यनन्नभिव्व्यनिति ॥ २७ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



## [ ऐन्द्रवायवग्रहः ]

व्वाग्घ वा ऽअस्यैन्द्रवायवः । एतन्न्वध्ध्यात्ममिन्द्रो ह यत्र व्वृत्राय व्वज्ज्रं प्रजहार सोऽबलीयान्मन्न्यमानो ना-ऽस्तृषीतीव बिभ्भ्यन्निलयाञ्चक्रे तदेवाऽपि देवा ऽअपन्न्यलय-न्त ॥ १ ॥ ते ह देवा ऽऊचुः । न वै हतं व्वृत्रं व्विद्म न जीवꣳ हन्त न ऽएको व्वेत्तु यदि हतो वा व्वृत्रो जीवति वेति ॥ २ ॥ ते व्वायुमब्रुवन् । अयं व्वै वायुर्य्योऽयं पवते व्वायो त्त्वमिदं विद्धि यदि हतो वा व्वृत्रो जीवति वा त्त्वं व्वै न-ऽआशिष्ठोऽसि यदि जीविष्यति त्त्वमेव क्षिप्प्रं पुनरागमि-ष्यसीति ॥ ३ ॥ स होवाच । किम्मे ततः स्यादिति प्प्रथम-वषट्कार ऽएव ते सोमस्य राज्ञ ऽइति तथेत्त्येयाय व्वायुरेद्धतं

* अत्र शतम् २३०० ।

( B ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ५. १. २; कठ० सं० २७ १. २; कपि० सं० ४१. ९; तै० सं० ६. ४. ६; मै० सं० ४. ५. ६ ।

ऽवृत्रꣳ स होवाच हतो ऽवृत्रो यद्ध ते कुर्य्यात तत्कुरुतेति ॥ ४ ॥ ते देवा ऽअभ्यसृज्यन्त । यथा वित्तिं वेत्स्यमाना-ऽएवꣳ स यमेकोऽलभते स ऽएकदेवत्योऽभवद्यं द्वौ स द्विदेवत्यो यं बहवः स बहुदेवत्यस्तद्यदेनं पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम ॥ ५॥ स ऽएषामापूयत् । स ऽएनाञ्छुक्तः पूतिरभिववौ स नाऽलमाहुत्या ऽआस नाऽलं भक्षाय ॥ ६ ॥ ते देवा वायुमब्रुवन् । वायविमं नो विवाहीमं नः स्वदयेति स होवाच किम्मे ततः स्यादिति त्वयैवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्च्युप-वातेति ॥ ७ ॥ तस्य देवाः । यावन्मात्रमिव गन्धस्याऽप-जघ्नुस्तं पशुष्वदधुः स ऽएष पशुषु कुणपगन्धस्तस्मात्कुण-पगन्धान्नाऽपिगृह्णीत सोमस्य हैष राज्ञो गन्धः ॥ ८ ॥ नो ऽएव निष्ठीवेत् । तस्माद्यद्यप्यासक्त ऽइव मन्येता-ऽभिवातं परीयाच्छ्रीर्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान्प्रत्यवरोहेदेवꣳ हाऽस्मा-द्यक्ष्मः प्रत्यवरोहति ॥ ९ ॥ अथैतरं वायुर्व्यवात् । तद-स्वदयत्ततोऽलमाहुत्या ऽआसालं भक्षाय तस्मादेतानि नानादेवत्यानि सन्ति वायव्यानीत्याचक्षते सोऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञ ऽएतान्न्यु ऽएनेन पात्राण्याचक्षते ॥ १० ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे । वायुर्वै नोऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्रथमवषट्कारश्च सो-मस्य राज्ञ ऽएतान्न्यु ऽएनेन पात्राण्याचक्षते हन्ताऽस्मिन्न-पित्वमिच्छा ऽइति ॥ ११ ॥ स होवाच । वायवा

माऽस्मिन्ग्रहे भजेति किं ततः स्यादिति निरुक्तमेव वाग्वदेदिति निरुक्तश्चेद्वाग्वदेदाख्वा भजामीति तत ऽएष ऽऐन्द्रवायवो ग्रहोऽभवद्वायव्यो हैव ततः पुरा ॥ १२ ॥ स ऽइन्द्रोऽब्रवीत्। अर्द्धम्मेऽस्य ग्रहस्येति तुरीयमेव त ऽइति वायुरर्द्धमेव म ऽइतीन्द्रस्तुरीयमेव त ऽइति वायुः ॥ १३ ॥ [ अर्धप्रपाठकः ॥ ६८ ॥ ] तौ प्रजापतिं प्रतिप्प्रश्नमेयतुः। स प्प्रजापतिर्ग्रहं द्वेधा चकार स होवाचेदं वायोरित्यथ पुनरर्द्धं द्वेधा चकार स होवाचेदं वायोरितीदं तवेतीन्द्रं तुरीयमेव भाजयाञ्चकार यद्वै चतुर्त्थं तत्तुरीयं तत ऽएष ऽऐन्द्रतुरीयो ग्रहोऽभवत् ॥ १४ ॥ तस्य वा ऽएतस्य ग्रहस्य द्वे पुरोरुचौ वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वे ऽअनुवाक्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वौ प्प्रैषौ वायव्य ऽएव पूर्व ऽऐन्द्रवायव ऽउत्तरो द्वे याज्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरैवमेनं तुरीयं—तुरीयमेव भाजयाञ्चकार ॥ १५ ॥ स होवाच। तुरीयं-तुरीयं चेन्मामबीभजुस्तुरीयमेव तर्हि वाङ्निरुक्तं वदिष्यतीति तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यद्वयांꣳसि वदन्त्यथैतत्तुरीयं वाचोऽनिरुक्तं यदिदं क्षुद्रꣳ सरीसृपं वदति ॥ १६ ॥ तस्मादेतदृषिणाभ्यनूक्तम्। 'चत्वारि[1] वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता

(१) ऋ० सं० २. ३. ३२।

नेङ्गयन्ति तुरीयं व्वाचो मनुष्या व्वदन्ती'ति ॥१७॥ * अथाऽतो गृह्णात्येव । '[1]आ वायो भूष शुचिपा ऽउप नः सहस्रं ते नियुतो व्विश्ववार । उपो ते ऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्व्वपेयं व्वायवे त्वे'ति ॥ १८ ॥ † अथाऽपगृह्य पुनरानयति । '[2]इन्द्रवायू ऽइमे सुता ऽउप प्प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि व्वायव ऽइन्द्र वायुभ्भ्यान्त्वैष तें योनिः सजोषोभ्भ्यान्त्वे'ति सादयति स यदाह सजोषोभ्भ्यान्त्वेति यो वै व्वायुः स ऽइन्द्रो य ऽइन्द्रः स व्वायुस्तस्म्मादाहैष ते योनिः सजोषोभ्भ्यान्त्वेति ॥१९॥(C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ मैत्रावरुणग्रहः ]

क्रतूदक्षौ ह वा ऽअस्य मित्रावरुणौ । एतन्न्वद्ध्यात्मं स यदेव मनसा कामयत ऽइदं मे स्यादिदं कुर्व्वीयेति स ऽएव क्रतुरथ यदस्म्मै तत्समृद्ध्यते स दक्षो मित्र ऽएव क्रतुर्व्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं व्वरुणोऽभिगन्तैव ब्रह्म कर्त्ता क्षत्रियः ॥ १ ॥ ते हैते ऽअग्रे नानेवाऽऽसतुः । ब्रह्म च क्षत्रं च ततः शशाकैव ब्रह्म मित्र ऽऋते क्षत्राद्वरुणात्स्थातुम् ॥ २ ॥ नक्षत्रं व्वरुणः । ऋते ब्रह्मणो मित्राद्यद्ध किंश्च व्वरुणः कर्म्म

* का० श्रौ० सू० ९. ६. ६ ।

† का० श्रौ० सू० ९. ६. ७ ।

( १ ) शु० सं० अ० ७ क० ७ । ( २ ) शु० सं० अ० ७ क० ८ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—काण्व० श० ५. १. ३; का० सं० २७. ३; कपि० सं० ६. ४. ७; मै० सं० ४. ५. ८ ।

चक्रेऽप्प्रसूतं ब्रह्मणा मित्रेण न हैवाऽस्म्मै तत्त्समानृधे ॥ ३ ॥ स क्षत्रं वरुणः। ब्रह्म मित्रमुपमन्त्रयाञ्चक्र ऽउपमावर्त्तस्व सꣳसृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म्म करवा ऽइति तथेति तौ समसृजेतां तत ऽएष मैत्रावरुणो ग्रहोऽभवत् ॥ ४ ॥ सो ऽएव पुरोधा। तस्मान्न ब्राह्मणः सर्वस्येव क्षत्रियस्य पुरोधां कामयेत सꣳह्येतौ सृजेते सुकृतं च दुष्कृतञ्च नो ऽएव क्षत्रियः सर्वमिव ब्राह्मणं पुरोदधीत सꣳ ह्येवैतौ सृजेते सुकृतञ्च दुष्कृतञ्च स यत्ततो वरुणः कर्म्म चक्रे प्प्रसूतं ब्रह्मणा मित्रेण सꣳ हैवाऽस्म्मै तदानृधे ॥ ५ ॥ तत्तदुवक्लृप्तमेव। यद् ब्राह्मणोऽराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवाऽनवक्लृप्तं यत्क्षत्रियोऽब्राह्मणो भवति यद्ध किञ्च कर्म्म कुरुतेऽप्प्रसूतं ब्रह्मणा मित्रेण न हैवाऽस्म्मै तत्त्समृद्ध्यते तस्म्मादु क्षत्रियेण कर्म्म करिष्यमाणेनोपसर्त्तव्य ऽएव ब्राह्मणः सꣳ हैवाऽस्म्मै तद् ब्रह्मप्प्रसूतं कर्म्मर्द्ध्यते ॥ ६ ॥ अथाऽतो * गृह्णात्त्येव। 'अयं वाम्मित्रावरुणा सुतः सोम ऽऋतावृधा। ममेदिह श्रुतꣳ हवम्। उपयामगृहीतोऽसि मित्रावरुणाभ्यान्त्वे'ति ॥ ७ ॥ तं पयसा श्रीणाति। तद्यत्पयसा श्रीणाति व्वृत्रो वै सोम ऽआसीत्तं यत्र देवा ऽअघ्नँस्तं मित्रमब्रुवँस्त्वमपि हꣳसीति स न चकमे सर्वस्य वा ऽअहं मित्रमस्म्मि न मित्रꣳ सन्नमित्रो भविष्यामीति तं वै त्वा यज्ञादन्तरेष्याम-

* "मैत्रावरुणमयं वामिति" (का० श्रौ० सू० ९. ६. ८)।

(१) शु० सं० अ० ७ क० ९।

ऽइत्त्यहमपि हन्मीति होवाच तस्म्मात्त्पशवोऽपाऽक्काम-न्मित्रꣳ सन्नमित्रोऽभूदिति स पशुभिर्व्व्यार्द्ध्यत तमेतद्देवाः पशुभिः समार्द्धयन्यत्त्पयसा श्रीणँस्तथो ऽएवैनमेष ऽएत-त्पशुभिः समर्द्धयति यत्त्पयसा श्रीणाति ॥ ८ ॥ तदाहुः । शश्वद्ध नैव चकमे हन्तुमिति तद्यदेवाऽत्र पयस्तन्मित्रस्य सोम ऽएव वरुणस्य तस्म्मात्त्पयसा श्रीणाति ॥ ९ ॥ * स श्रीणाति । 'राया वयꣳ ससवाꣳसो मदेम हव्व्येन देवा यवसेन गावः । तां धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्याम्त्वे'ति सादयति स यदाहर्त्तायुभ्याम्त्वेति ब्रह्म वा ऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं वरुण ऽएवाऽऽयुः संव्वत्सरो हि वरुणः संव्वत्सर-ऽआयुस्तस्म्मादाहैष ते योनिर्ऋतायुभ्याम्त्वेति ॥१०॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ आश्विनग्रहः ]

श्रोत्रꣳ ह वा ऽअस्याऽऽश्विनः । तस्म्मात्त्सर्व्वतः परिहारं भक्षयति सर्व्वतो ह्यनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाऽङ्गिरसो वा स्वर्ग्गं लोकꣳ समाश्नुवत तच्च्यव-नो वा † भार्ग्गवश्च्च्यवनो वाऽङ्गिरसस्तदेव जीर्ण्णिः कृत्या-रूपो जहे ॥ १ ॥ शर्य्यातो ह वा ऽइदं मानवो ग्रामेण

* का० श्रौ० सू० ९. ६. ९ ।
( १ ) शु० सं० अ० ७ क० १० ।
(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. ४; कठ० सं० २७. ४; कपि० सं० ४२. ४; तै० सं० ६. ४, ८; मै० सं० ४. ५ ।
† आख्यायिकेयं महाभारतस्य वनपर्वण्यप्युपलभ्यते ( अ० १२२–१२५ पृ० १९२–१९६ चि० शा० पूना ) ।

चचार। स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः ॥ २ ॥ स शार्य्यातेभ्यश्चुक्रोध। तेभ्योऽसंज्ञाञ्चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥३॥ शार्य्यातो ह वा ईक्षाञ्चक्रे। यत्किमकरं तस्मादिदमापदीति स गोपालाँश्चाविपालाँश्च सᳮह्वयितवा उवाच ॥ ४ ॥ स होवाच। को वोऽद्येह किञ्चिदद्राक्षीदिति ते होचुः पुरुष एवाऽयं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदाञ्चकार स वै च्यवन इति ॥ ५ ॥ स रथं युक्त्वा। सुकन्याᳮ शार्य्यातीमुपाऽधाय प्रसिष्यन्द स आजगाम यत्रर्षिरास तत् ॥ ६ ॥ स होवाच। ऋषे नमस्ते यन्नावेदिषं तेनाहिᳮसिषमियᳮ सुकन्या तया तेऽपह्नुवे सञ्जानीतां मे ग्राम इति तस्य ह तत एव ग्रामः सञ्जज्ञे स ह तत एव शार्य्यातो मानव उद्युयुजे नेदपरᳮ हिनसानीति ॥ ७ ॥ अश्विनौ ह वा इदं भिषज्यन्तौ चेरतुः। तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥ ८ ॥ तौ होचतुः। सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेष आवामनुप्रेहीति सा होवाच यस्मै मां पिताऽदान्नैवाऽहं तं जीवन्तᳮ हास्यामीति तद्धाऽयमृषिराजज्ञौ ॥ ९ ॥ स होवाच। सुकन्ये किं त्वैतदवोचतामिति तस्मा एतद्व्याचचक्षे स ह व्याख्यात उवाच यदि * त्वैतत्पुनर्ब्रवतः सा त्वं ब्रूतान्न वै सुसर्वाविव

* 'त्वैतत्पुनर्ब्रुवतः' इति पाठः 'ग-च' पुस्तकयोः।

स्त्थो न सुसमृद्धाविवाऽथ मे पतिं निन्दथ ऽइति तौ यदि त्वाऽब्रवतः केनाऽवमसर्वौं स्वः केनाऽसमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्ताꣳ हैतदेवोचतुः ॥ १० ॥ सा होवाच । न वै सुसर्वाविव स्त्थो न सुसमृद्धाविवाऽथ मे पतिं निन्दथ ऽइति तौ होचतुः केनाऽवमसर्वौं स्वः केनाऽसमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति ॥ ११ ॥ तौ होचतुः । एतꣳ ह्रदमभ्यवहर स येन वयसा कमिष्यते तेनोदैष्यतीति तꣳ ह्रदमभ्यवजहार स येन वयसा चकमे तेनोदेयाय ॥ १२ ॥ तौ होचतुः । सुकन्ये केनाऽवमसर्वौं स्वः केनाऽसमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनाऽसर्वौं स्त्थस्तेनाऽसमृद्धाविति तौ ह तत ऽएवाऽश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥ १३ ॥ तौ होचतुः । उप नौ ह्वयद्ध्वमिति ते ह देवा ऽऊचुर्न्न वामुपह्वयिष्यामहे बहु मनुष्येषु सꣳसृष्टमचारिष्टं भिषज्यन्ताविति ॥ १४ ॥ तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजद्ध्व ऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयद्ध्वमथ वो वक्ष्याव ऽइति तथेति ता ऽउपाऽह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णँस्तावद्ध्वर्यू यज्ञस्याऽभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते

बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमान ऽआगच्छताम् ॥ १५ ॥ तौ होचतुः । मुख्यौ वा ऽआवां यज्ञस्य स्वो यावद्धूर्ष्वू ऽइहु नाविमं पुरस्ताद् ग्रहं पर्य्याहरताऽभि द्विदेवत्त्यानिति ताभ्यामेतं पुरस्ताद् ग्रहं पर्य्याजह्रुरभि द्विदेवत्त्याँस्तस्मादेष दशमो ग्रहो गृह्यते तृतीय ऽएव वषट्क्रियतेऽथ यदश्विनावितीमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदꣳ सर्व्वमाश्नुवातां पुष्करस्रजावित्त्यग्निरेवाऽस्यै पुष्करमादित्त्योऽमुष्यै ॥ १६ ॥ अथाऽतो गृह्णात्येव । 'या वां कशा मधुमत्त्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यान्त्वैष ते योनिर्म्माध्वीभ्यान्त्वे'ति सादयति तं वै मधुमत्त्यर्च्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति तद्यन्मधुमत्त्यर्च्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति ॥ १७ ॥ दध्यङ् ह वाऽआभ्यामाथर्व्वणः । मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मान्मधुमत्त्यर्च्चा गृह्णाति माध्वीभ्यान्त्वेति सादयति ॥ १८ ॥ तानि वाऽएतानि । श्लक्ष्णानि पात्राणि भवन्ति * रास्नावमैन्द्रवायवपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद् द्विदेवत्त्यमजकावं मैत्रावरुणपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद् द्विदेवत्त्यमौष्ट्रमाश्विनपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद् द्विदेवत्त्यमथ यद-

(१) शु० सं० अ० ६ क० ११।

* का० श्रौ० सू० ९. २. ५–७।

श्विनाविति मुख्यौ वा ऽअश्विनावौष्ठ्रमिव वा ऽइदं मुखं तस्मादौष्ठ्रमाश्विनपात्रं भवति ॥ १९ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ शुक्रामन्थिग्रहौ ]

चक्षुषी ह वा ऽअस्य शुक्रामन्थिनौ । तद्वा ऽएष ऽएव शुक्रो य ऽएष तपति तद्यदेष ऽएतत्तपति तेनैष शुक्रश्चन्द्रमा ऽएव मन्थी ॥ १ ॥ तꣳ सक्तुभिꣳ श्रीणाति । तदेनं मन्थं करोति तेनो ऽएष मन्थ्येतौ ह वा ऽआसां प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्ज्जानीयुꣳ ॥ २ ॥ तयोरत्तैवाऽन्न्यतरꣳ । आद्योऽन्न्यतरोऽत्तैव शुक्र ऽआद्यो मन्थी ॥ ३ ॥ तयोरत्तैवाऽन्न्यतरमनु । आद्योऽन्न्यतरमन्न्वत्तैव शुक्रमन्न्वाद्यो मन्थिनमनु तौ वा ऽअन्न्यस्म्मै गृह्येते ऽअन्न्यस्म्मै हूयेते शण्डामर्कावित्त्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यत्तथा ॥ ४ ॥ यत्र वै देवाꣳ । असुररक्षसान्न्यपजग्घ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म्म देवाꣳ किञ्च कर्म्म कुर्वते तद्ध स्म्म मोहयित्त्वा क्षिप्प्र ऽएव पुनरपद्रवतꣳ ॥ ५ ॥ ते ह देवा ऽऊचुꣳ । उपजानीत यथेमावपहनामहा-ऽइति ते होचुर्गृहावेवाऽऽभ्यां गृह्णाम तावभ्यवैष्यतस्तौ

(E) एतद्ब्राह्मणस्था विषया' अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. १. ५; कठ० सं० २७. ५; कपि० सं० ४२. ५; तै० सं० ६. ४. ९; मै० सं० ४. ६. १।

स्वीकृत्याऽपहनिष्यामह ऽइति ताभ्यां गृहौ जगृहुस्ताव-भ्युवैतां तौ स्वीकृत्याऽपाऽघ्नत तस्माच्छण्डामर्क्काभ्या-मिति गृह्येते देवताभ्यो हूयेते ॥ ६ ॥ अपि होवाच याज्ञवल्क्यः। नो स्विद्देवताभ्य ऽएव गृह्णीयामा३ विजितरूपमिव हीदमिति तद्वै स तन्मीमाᳫँसामेव चक्रे नेत्तु चकार ॥ ७ ॥ इमामु हैके शुक्रस्य पुरोरुचं कुर्वन्ति। 'अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्ज्जरायू रजसो विमान' ऽइति तदेतस्य रूपं कुर्म्मो य ऽएष तपतीति यदाह ज्योति-र्ज्जरायुरिति ॥ ८ ॥ इमां त्वेव शुक्रस्य पुरोरुचं कुर्य्यात्। *'तं[1] प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदᳫँ स्वर्व्विदमि'त्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठ-तातिं बर्हिषदᳫँ स्वर्व्विद'म्प्रतीचीनं[2] व्वृजनं दोहसे धुनि-माशुं जयन्तमनु यासु वर्द्धसे। उपयामगृहीतोऽसि श-ण्डाय त्वैष ते योनिर्व्वीरतां पाही'ति सादयत्यत्ता ह्येत-मन्वत्ता हि वीरस्तस्मादाहैष ते योनिर्व्वीरतां पाहीति दक्षिणार्द्धे सादयत्येताᳫँ ह्येष दिशमनु सञ्चरति ॥ ९ ॥ अथ मन्थिनं गृह्णाति। 'अयं वेनश्चोदयत्पृश्निगर्भा[3] ज्ज्योतिर्ज्जरायू रजसो विमाने। इममपाᳫँ सङ्गमे सूर्य्यस्य

* "शुक्रं बैल्वेन तम्प्रत्नथेति" "अयं वेन इत्येके" का० श्रौ० सू० ९. ६. ११, १२; "अयं वेनश्चोदयदिति शुक्रं गृहीत्वा" "तम्प्रत्नथेति मन्थिनं गृहीत्वा" आप० श्रौ० सू० १२. १४. १४–१५; तैत्तिरीय–मैत्रायणीय-कठशाखासु प्रथमतः 'अयं वेनः' ततः 'तम्प्रत्नथा' इत्येव क्रमः स्वीकृतः। काण्व-माध्यन्दिनसंहितयोस्तु तद्वैपरीत्येन आदृतः तै० सं० १. ४. ८. ९; मै० सं० १. ३. १०. ११; कठ० सं० ४. ३; काण्व० सं० १. ७. ७।

(१) शु० सं० अ० ६ क० १२। (२) शु० सं० अ० ६ क० १२। (३) शु० सं० अ० ६ क० १६।

शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि मर्काय त्वे'ति ॥ १० ॥ तꣳ सक्तुभिꣳ श्रीणाति । तद्य-त्सक्तुभिꣳ श्रीणाति वरुणो ह वै सोमस्य राज्ञोऽभीवाऽक्षि प्प्रतिपिपेष तदश्वयत्ततोऽश्वꣳ समभवत्तद्यच्छ्वयथात्सम-भवत्तस्मादश्वो नाम तस्याऽश्रु प्प्राऽस्कन्दत्ततो यवꣳ समभवत्तस्मादाहुर्वरुणण्यो यव ऽइति तद्यदेवाऽस्याऽत्र चक्षुषोऽमीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मा-त्सक्तुभिꣳ श्रीणाति ॥ ११ ॥ स * श्रीणाति । 'मनो न येषु हवनेषु तिग्मं विपꣳ शच्च्या वनुथो द्रवन्ता । आयꣳ शर्य्याभिस्तुविनृम्म्णो ऽअस्याश्रीणीताऽऽदिशं गभस्तावेष ते योनिꣳ प्प्रजाꣳ पाही'ति सादयत्यायो ह्येतमन्वाद्या हीमाꣳ प्प्रजा विशस्तस्मादाहैष ते योनिꣳ प्प्रजाꣳ पाहीति ॥ १२ ॥ † द्वौ प्प्रोक्षितौ यूपशकलौ भवतꣳ । द्वावप्प्रो-क्षितौ प्प्रोक्षितं चैवाऽद्ध्वर्य्युरादत्तेऽप्प्रोक्षितं चैवमेव प्प्रतिप्प्रस्थाता प्प्रोक्षितं चैवाऽऽदत्तेऽप्प्रोक्षितं च शुक्रमेवाऽद्ध्वर्य्युरादत्ते मन्थिनं प्रतिप्प्रस्थाता ॥ १३ ॥ सोऽद्ध्वर्य्युꣳ । अप्प्रोक्षितेन यूपशकलेनाऽपमा'ष्ट्वर्यपमृष्टꣳ शण्ड' ऽइत्त्येवमेव प्प्रतिप्प्रस्थाता'ऽपमृष्टो मर्क' ऽइति तदाददानावेवाऽसुररक्षसे ऽअपहतो 'देवास्त्वा शुक्रपाꣳ प्प्रणयन्त्वि'त्येवाऽद्ध्वर्य्युर्न्निष्क्रामति 'देवास्त्वा मन्थिपाꣳ

* का० श्रौ० सू० ९. ६. १३ ।

† का० श्रौ० सू० ९. १०. १–५ ।

( १ ) शु० सं० अ० ७ क० १६ । ( २ ) शु० सं० अ० ७ क० १७ । ( ३ ) शु० सं० अ० ७ क० १२ । ( ४ ) शु० सं० अ० ७ क० १७ । ( ५ ) शु० सं० अ० ७ क० १२ ।

[1]प्प्रणयन्त्वि'ति प्प्रतिप्प्रस्त्थाता तदेनौ देवताब्भ्य ऽएव प्प्रणयतः ॥१४॥ तौ जघनेनाऽऽहवनीयमरत्नी * सन्धत्तः । ता ऽउत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावद्ध्वर्युः सादयत्युत्तरायां प्रतिप्प्रस्त्थाताऽननुसृजन्तावेवा'[2]ऽनाधृष्टाऽसी'ति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्य्येष्यन्तौ वा ऽएतावग्निं भवतोऽत्येष्यन्तौ तस्म्मा ऽएवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न्न हिनस्ति ॥ १५ ॥ सोऽद्ध्वर्य्युः † पर्य्येति । '[3]सुवीरो वीरान्प्रजनयन्परी'हीत्यत्ता ह्येतमन्वत्ता हि वीरस्तस्म्मादाह सुवीरो वीरान्प्रजनयन्परीहि'[4]त्यभि रायस्प्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्प्पोषेण यजमानमिति ॥ १६ ॥ अथ प्प्रतिप्प्रस्त्थाता ‡ पर्य्येति । 'सुप्प्रजाः प्प्रजाः[5] प्प्रजनयन्परीही'त्याद्यो ह्येतमन्वाद्या हीमाः प्प्रजा विशस्तस्म्मादाह सुप्प्रजाः प्प्रजाः प्प्रजनयन्परीहि'[6]त्यभि रायस्प्पोषेण यजमानमि'ति तद्यजमानायाऽऽशिषमाशास्ते यदाहाऽभि रायस्प्पोषेण यजमानमिति ॥ १७ ॥ तावपिधाय निष्क्रामतः । तिर ऽएवैनावेतत्कुरुतस्तस्म्मादिमौ सूर्य्याचन्द्रमसौ प्प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्याऽपोर्ण्णुतः पुरस्तात्तिष्ठन्तौ जुहुत ऽआविरेवैनावे-

* का० श्रौ० सू० ९. १०. ६ ।

(१) शु० सं० अ० ७ क० १७ । (२) शु० सं० अ० ७ क० १२, १७ ।

† "सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः" ( का० श्रौ० सू० ९. १०. ७ क )।

(३) शु० सं० अ० ७ क० १३ । (४) शु० सं० अ० ७ क० १३ ।

‡ "सुप्रजा इति प्रतिप्रस्थातोत्तरम्" ( का० श्रौ० सू० ९. १०. ७ ख )।

(५) शु० सं० अ० ७ क० १८ । (६) शु० सं० अ० ७ क० १८ ।

५६

तत्कुरुतस्तस्म्मादिमौ सूर्य्याचन्द्रमसौ प्प्रत्यञ्चौ यन्तौ सर्व्व ऽएव पश्यति तस्म्मात्त्पराग्गेतः सिच्च्यमानं न कश्चन पश्यति तदु पश्चात्त्प्रजायमानꣳ सर्व्व ऽएव पश्यति ॥ १८ ॥
तौ जघनेन * यूपमरत्नी सन्धत्तः । यद्यग्निर्न्नोद्धाधेत यद्यु ऽअग्निरुद्धाधेताऽप्प्यग्ग्रेणैव यूपमरत्नी सन्दध्यातांꣳ 'सञ्जग्मानो दिवा पृथिव्व्या शुक्रः शुक्रशोचिषे'त्त्येवा-ऽध्वर्य्युः 'सञ्जग्मानो दिवा पृथिव्व्या मन्थी मन्थिशोचिषे'ति प्प्रतिप्प्रस्त्थाता चक्षुषोरेवैते ऽआरमणे कुरुतश्च्चक्षुषी-ऽएवैतत्त्सन्धत्तस्तस्म्मादिमे ऽअभितोऽस्त्थनी चक्षुषी सꣳहिते ॥१९॥ सोऽध्वर्य्युः । † अप्प्रोक्षितं यूपशकलं निरस्यति 'निरस्तः शण्ड' ऽइत्त्येवमेव प्प्रतिप्प्रस्त्थाता 'निरस्तो मर्क' ऽइति तत्पुराऽऽहुतिभ्योऽसुररक्षसे ऽअपहतः ॥ २० ॥
अथाऽध्वर्य्युः । ‡ प्रोक्षितं यूपशकलमाहवनीये प्प्राऽस्यति 'शुक्रस्याऽधिष्ठानमसी'त्त्येवमेव प्प्रतिप्प्रस्त्थाता 'मन्थिनो-ऽधिष्ठानमसी'ति चक्षुषोरेवैते समिधौ चक्षुषी ऽएवैतत्त्स-मिन्धे तस्म्मादिमे समिद्धे चक्षुषी ॥ २१ ॥ तत्र $ जपति । 'अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य रायस्प्पोषस्य ददितारः स्यामे'त्त्याशीरेवैषैतस्य कर्म्मण ऽआशिषमेवैतदा

---

* का० श्रौ० सू० ९. १०. ८, ९ ।
(१) शु० सं० अ० ७ क० १३ । (२) शु० सं० अ० ७ क० १८ ।
† का० श्रौ० सू० ९. १०. १० ।
‡ का० श्रौ० सू० ९. १०. ११ ।
$ का० श्रौ० सू० ९. १०. १२ क ।
(३) शु० सं० अ० ७ क० १३ । (४) शु० सं० अ० ७ क० १८ । (५) शु० सं० अ० ७ क० १३ । (६) शु० सं० अ० ७ क० १८ । (७) शु० सं० अ० ७ क० १४ ।

शास्ते ॥२२॥ अथाऽऽश्राव्याऽऽह । * प्रातः—प्प्रातः सवस्य शुक्रवतो मधुश्चुत ऽइन्द्राय सोमान्प्रस्थितान्प्रेष्येति व्वषट्कृते ऽद्ध्वर्य्युर्जुहोति तदनु प्प्रतिप्प्रस्थाता तदनु चमसाद्ध्वर्य्यवः ॥ २३ ॥ तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । चक्षुषी वा ऽएतौ तत्पुरस्ताद्देवैतच्चक्षुषी धत्तस्तस्मादिमे पुरस्ताच्चक्षुषी ॥ २४ ॥ अभितो यूपं तिष्ठन्तौ जुहुतः । यथा वै नासिकैवं यूपस्तस्मादिमे ऽअभितो नासिकां चक्षुषी ॥ २५ ॥ तौ वै व्वषट्कृतौ सन्तौ मन्त्रेण हूयेते । एतेनो हैतौ तदुदश्नुवाते यदेनौ सर्व्वꣳ सवनमनुहूयते यद्ध्वेवैतौ सर्व्वꣳ सवनमनुहूयत ऽएतौ वै प्प्रजापतेः प्प्रत्यक्षतमां चक्षुषी ह्येतौ सत्यं वै चक्षुः सत्यꣳ हि प्प्रजापतिस्तस्मादेनौ सर्व्वꣳ सवनमनुहूयते ॥ २६ ॥ † स जुहोति । 'सा [1]प्प्रथमा संस्कृतिर्व्विश्श्ववारा स प्प्रथमो व्वरुणो मित्रो ऽअग्निः । स प्प्रथमो बृहस्प्पतिश्चिकित्वाँस्तस्मा ऽइन्द्राय सुतमाजुहोत स्वाहे'ति ॥ २७ ॥ स यज्जुहोति । सा प्प्रथमा स प्प्रथम ऽइति शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी ऽएव प्प्रथमे सम्भवतस्तस्माज्जुहोति सा प्प्रथमा स प्प्रथम ऽइति ॥ २८ ॥ अथ ‡ सम्प्रेष्यति । प्प्रैतु होतुश्चमसः प्प्र ब्रह्मणः प्प्रोद्गातॄणां प्र यजमानस्य प्प्रयन्तु सदस्यानाꣳ

* "आश्राव्याऽऽह प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान् प्रेष्येति" ( का० श्रौ० सू० ९. १०. १२ ख )।

† का० श्रौ० सू० ९. ११. १,२।

( १ ) शु० सं० अ० ७ क० १४–१५ ।

‡ का० श्रौ० सू० ९. ११. ३।

होत्राणां चमसाद्ध्वर्युरेव ऽउपावर्त्तध्वꣳ शुक्रस्याऽभ्युन्नयध्वमिति सम्प्रैष ऽएवैष पर्य्येत्त्य प्प्रतिप्प्रस्स्थाताऽद्ध्वर्य्योः पात्रे सꣳस्रवमवनयत्यत्र ऽएवैतद्द्वाच्यं बलिꣳ हारयति तमद्ध्वर्युर्होतृचमसेऽवनयति भक्षाय * वषट्कर्त्तुर्हि भक्षः प्प्राणो वै वषट्कारः सोऽस्म्मादेतद्वषट्कुर्वतः पराङिवाऽभूत्त्प्राणो वै भक्षस्तत्त्प्राणं पुनरात्त्मन्धत्ते ॥ २९ ॥ † अथ यदेते प्प्रतीची पात्रे न हरन्ति। हरन्त्यन्न्यान्न्ग्रहाँश्चक्षुषी ह्येते सꣳस्रवमेव होतृचमसेऽवनयति ॥ ३० ॥ अथ होत्राणां ‡ चमसानभ्युन्नयन्ति। हुतोच्छिष्टा वा ऽएते सꣳस्रवा भवन्ति नाऽलमाहुत्त्यै तानेवैतत्त्पुनराप्प्याययन्ति तथाऽलमाहुत्त्यै भवन्ति तस्म्माद्धोत्राणां चमसानभ्युन्नयन्ति ॥ ३१ ॥ अथ होत्राः संय्याजयन्ति। होत्रा ह वै युक्ता देवेभ्यो यज्ञं वहन्ति ता ऽएवैतत्त्सन्तर्प्पयन्ति तृप्ताः प्प्रीता देवेभ्यो यज्ञं वहानिति तस्म्माद्धोत्राः संय्याजयन्ति ॥ ३२ ॥ स प्प्रथमायां वा होत्रायाम्। इष्ट्वायामुत्तमायां ‡‡ वाऽनुमन्त्रयते 'तृम्प्यन्तु होत्रा मध्वो याः स्विष्टा याः सुप्प्रीताः सुहुता यत्त्स्वाहे'ति होत्राणामेवैषा

* अथ भक्षपरिभाषा—प्रतिप्रस्थात्रोः सर्वत्र होमाभिषवनिमित्तः सकृद्भक्षः, अनुवषट्कारप्रयुक्तस्य होमस्य प्रतिपत्तिकर्मत्वात्तन्निमित्तभक्षणाभावस्तयोः। वषट्कर्त्तुस्तु प्रतिवषट्कारं भक्षणम्, तेनाऽनुवषट्कारसत्त्वे द्विर्भक्षः, तदभावे सकृत्। 'उद्गातृचमसं नाऽन्यो भक्षयेत्' इति निषेधात् तं चमसं तदन्यो न भक्षयेत् ( का० श्रौ० सू० वृ० ९. ११. १८ )।

† का० श्रौ० सू० ९. ११. ४,५।

‡ 'पञ्चसून्नयन्ति' का० श्रौ० सू० ९. ११. ६,७।

‡‡ का० श्रौ० सू० ९. ११. ९,१०।

( १ ) शु० सं० अ० ७ क० १५।

तृप्तिरथेत्त्य प्प्रत्यङ्ङुपविश'त्त्ययाऽग्नीदि'त्त्यग्नीद्ध्यत्र यजतामुत्तमः संस्थजति तस्म्मादाहाऽयाऽग्नीदिति ॥ ३३ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ (A)

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १३६ ॥



[ आग्रयणग्रहः ]

आत्त्मा ह वा ऽअस्याऽऽग्रयणः । सोऽस्यैष सर्व्वमेव सर्व्वᳪ ह्ययमात्त्मा तस्म्मादनया गृह्णात्त्यस्यै हि स्त्थाली भवति स्त्थाल्या ह्येनं गृह्णाति सर्व्वं वा ऽइयᳪ सर्व्वमेष ग्रहस्तस्म्मादनया गृह्णाति ॥१॥ पूर्ण्णं गृह्णाति । सर्व्वं वै पूर्ण्णᳪ सर्व्वमेष ग्रहस्तस्म्मात्त्पूर्ण्णं गृह्णाति ॥ २ ॥ विश्वेब्भ्यो देवेब्भ्यो गृह्णाति । सर्व्वं वै विश्वे देवाः सर्व्वमेष ग्रहस्तस्म्माद्विश्वेब्भ्यो देवेब्भ्यो गृह्णाति ॥ ३ ॥ सर्व्वेषु सवनेषु गृह्णाति । सर्व्वं वै सवनानि सर्व्वमेष ग्रहस्तस्म्मात्त्सर्व्वेषु सवनेषु गृह्णाति ॥ ४ ॥ स यदि राजोपदस्येत् । तमत ऽएव तन्न्वीरन्नतः प्प्रभावयेयुरात्त्मा वा ऽआग्रयण ऽआत्त्मनो वा ऽइमानि सर्व्वाण्ण्यङ्गानि प्प्रभवन्त्येतस्म्मादन्ततो हारियोजनं ग्रहं गृह्णाति तदात्त्मन्न्येवाऽस्यां प्रतिष्ठायामन्ततो यज्ञः प्प्रतितिष्ठति ॥ ५ ॥ अथ यस्म्मादाग्रयणोनाम । यां वा ऽअमूं

---

(१) शु० सं० अ० ७ क० १५।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. २. १; काठ० २७. ७. ८; मै० सं० ४. ६. ३; तै० सं० २७. ७. ८।

ग्रावाणमादुदानो व्वाचं यच्छत्यत्र वै साऽग्रेऽवदत्तद्यत्साऽत्राऽग्रेऽवदत्तस्मादाग्रयणो नाम ॥ ६ ॥ रक्षोभ्यो वै तां भीषा व्वाचमयच्छन् । षड्वा ऽअतः प्प्राचो ग्रहान्न्गृह्णात्यथैष सप्तमः षड्वा ऽऋतवः संवत्सरस्य सर्वं वै संवत्सरः ॥ ७ ॥ तान्देवाः । सर्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्राऽग्रे व्वाचमवदँस्तथो ऽएवैष ऽएतार्ठ० सर्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्राऽग्रे व्वाचं वदति ॥ ८ ॥ अथाऽतो * गृह्णात्येव । 'ये देवासो दिव्व्येकादश स्थ पृथिव्व्यामध्येकादश स्थ । अप्प्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् । उपयामगृहीतोऽस्याऽऽग्रयणोऽसि स्वाग्रयण' ऽइति व्वाचमेवैतदयातयाम्म्नीं करोति तस्मादनया समानः सद्विपरुर्षांसं वदत्यजामितायै जामि ह कुर्याद्यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीयात्तस्मादाहाऽऽग्रयणोऽसि स्वाग्रयण ऽइति ॥ ९ ॥ 'पाहि[2] यज्ञं पाहि यज्ञपतिमि'ति । व्वाचमेवैतदुत्स्रष्ट्वामाह गोपाय यज्ञमिति पाहि यज्ञपतिमिति व्वाचमेवैतदुत्स्रष्ट्वामाह गोपाय यजमानमिति यजमानो हि यज्ञपति'र्व्विष्णुस्त्वामिन्द्रियेण[3] पातु व्विष्णुं त्वं पाही'ति व्वाचमेवैतदुत्स्रष्ट्वामाह यज्ञो वै व्विष्णुर्यज्ञस्त्वां व्वीर्य्येण गोपायत्त्विति व्विष्णुं त्वं पाहीति व्वाचमेवैतदुत्स्रष्ट्वामाह यज्ञं त्वं गोपाये'त्य॑भि सवनानि पाही'ति तदेतं

(१) शु० सं० अ० ७ क० १९—२० ।

* "आग्रयणं द्वयोर्धारयोर्य्ये देवास इति" का० श्रौ० सू० ९. ६. १४ ।

(२) शु० सं० अ० ७ क० २० । (३) शु० सं० अ० ७ क० २० । (४) शु० सं० अ० ७ क० २० ।

ग्रहमाह सर्वाणि ह्येष सवनानि प्प्रति ॥ १० ॥ अथ * दशापवित्रमुपगृह्य हिङ्करोति । सा हैषा वागनुद्यमाना ततान तस्यां देवा वाचि तान्तायाᳬं हिङ्कारेणैव प्प्राणम-दधुः प्प्राणो वै हिङ्कारः प्प्राणो हि वै हिङ्कारस्तस्स्मादपि गृह्य नासिके न हिङ्कर्त्तुᳬं शक्नोति सैतेन प्प्राणेन सम-जिहीत यदा वै तान्तः प्प्राणं लभतेऽथ स सञ्जिहीते तथो ऽएवैष ऽएतद्वाचि तान्तायाᳬं हिङ्कारेणैव प्प्राणं दधाति सैतेन प्प्राणेन सञ्जिहीते त्रिष्कृत्त्वो हिङ्करोति त्रिवृद्धि यज्ञः ॥ ११ ॥ अथाऽऽह 'सोमः पवत' ऽइति । स यामेवाऽमूं भीषाऽसुररक्षसेब्भ्यो न निरब्रुवँस्तामेवै-तत्सर्वस्मिन्न्विजितेऽभयेऽनाष्ट्रेऽत्र निराह तामाविष्करोति तस्स्मादाह सोमः पवत ऽइति ॥१२॥ 'अस्स्मै[२] ब्रह्मणेऽस्स्मै क्षत्रायेऽति । तद् ब्रह्मणे च क्षत्राय चाऽऽहाऽस्स्मै सुन्न्वते[३] यजमानाय पवत' ऽइति तद्यजमानायाऽऽह ॥ १३ ॥ तदाहुः । एतावदेवोक्त्वा सादयेदेतावद्वा ऽइदᳬं सर्वं यावद् ब्रह्म क्षत्रं व्विडिन्द्राग्नी वा ऽइदᳬं सर्वं तस्स्मादेता-वदेवोक्त्वा सादयेदिति ॥ १४ ॥ तदु ब्रूयादेव भूयः । 'इष ऽऊर्ज्जे[४] पवत' ऽइति व्वृष्ट्यै तदाह यदाहेष ऽइत्त्यूर्ज्ज-ऽइति यो व्वृष्टादूर्ग्ग्रसो जायते तस्स्मै तदा'हाऽद्भ्य[५]-

* "दशापवित्रेणाऽऽग्रयणमुपगृह्य त्रिर्हिङ्कृत्य सोमः पवत इति सकृच्छेषम्" ( का० श्रौ० सू० ९. ६. १५ )

( १ ) शु० सं० अ० ७ क० २१ । ( २ ) शु० सं० अ० ७ क० २१ । ( ३ ) शु० सं० अ० ७ क० २१ । ( ४ ) शु० सं० अ० ७ क० २१ । ( ५ ) शु० सं० अ० ७ क० २१ ।

ऽओषधीभ्यः पवत' ऽइति तदन्नयश्चौषधिभ्यश्चाऽऽह 'द्यावापृथिवीभ्यां पवत' ऽइति तदाभ्यां द्यावापृथिवीभ्यामाह ययोरिदꣳ सर्वमधि 'सुभूताय पवत' ऽइति साधवे पवत ऽइत्येवैतदाह ॥ १५ ॥ तदु हैक ऽआहुः । 'ब्रह्मवर्चसाय पवत' ऽइति तदु तथा न ब्रूयाद्यद्वा ऽआहाऽस्मै ब्रह्मण ऽइति तदेव ब्रह्मवर्चसायाऽऽह 'विश्वेभ्यस्त्वा देवेभ्य ऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य' ऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं वै मध्ये सादयत्यात्मा ह्यस्यैष मध्य ऽइव ह्ययमात्मा दक्षिणोक्थ्यस्थाली भवत्युत्तराऽऽदित्यस्थाली ॥ १६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥ (B)



[ उक्थ्यग्रहः ]

अयꣳ ह वा ऽअस्यैषोऽनिरुक्त ऽआत्मा यदुक्थ्यः । सोऽस्यैष ऽआत्मैवाऽऽत्मा ह्ययमनिरुक्तः प्राणः सोऽस्यैषऽआयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताऽजरꣳ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥१॥ तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णꣳ सर्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति ॥२॥ * तस्या-

(१) शु० सं० अ० ७ क० २१। (२) शु० सं० अ० ७ क० २१। (३) आप० श्रौ० सू० १२. १५. ८। (४) शु० सं० अ० ७ क० २१।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. २. २; क० सं० २७. ९; मै० सं० ४. ६. ४; तै० सं० ६. ४. ११।

* अत्र शतम् २४०० ॥

सावेव ध्रुव ऽआयुः । आत्मैवाऽस्यैतेन सꣳहितः पर्वाणि सन्ततानि तद्वा ऽअगृहीत ऽएवैतस्मादच्छावाकायोत्तमो ग्रहो भवति ॥ ३ ॥ अथ राजानमुपाऽवहरति । तृतीयं वसतीवरीणामवनयति तत्पर्व समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्वस्य स यदुत्तरस्य सनवस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थम् ॥ ४ ॥ एवमेव माध्यन्दिने सवने । अगृहीत ऽएवैतस्मादच्छावाकायोत्तमो ग्रहो भवत्यथ तृतीयं वसतीवरीणामवनयति तत्पर्व समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्वस्य स यदुत्तरस्य सवनस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थं तद्यदस्यैतेनाऽऽत्मा सꣳहितस्तेनाऽस्यैष ऽआयुः ॥५॥ सैषा कामदुघैवेन्द्रस्योद्धारः । त्रिभ्य ऽएवैनं * प्रातः सवन ऽउक्थेभ्यो विगृह्णाति त्रिभ्यो माध्यन्दिने सवने तत्षट्कृत्वः षड्वा ऽऋतवऽऋतवो वा ऽइमान्त्सर्वान्कामान्पचन्त्येतेनो हैषा काम-

---

* ज्योतिष्टोमीयप्रातःसवने—उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, ( वैकल्पिको वैश्वानरः ) ऋतुग्रहौ, ऐन्द्राग्नः, वैश्वदेवश्चेति त्रयोदश ग्रहाः ।

माध्यन्दिने सवने—शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, मरुत्वतीयास्त्रयः, माहेन्द्रः, दधिग्रहश्चेति नव ग्रहाः ।

तृतीयसवने—आदित्यः, सावित्रः, वैश्वदेवः, पात्नीवतः, हारियोजन इति पञ्च ग्रहाः । तत्र ग्रह शब्देन 'गृह्यत इति ग्रहः' इति कर्म व्युत्पत्या सोमरसः । 'गृह्यतेअस्मिन्' इति व्युत्पत्या च तदाधारभूतं पात्रमुच्यते । अत्र नवैव उलूखला ग्रहाः । आग्रयणः, उक्थ्यः, ध्रुवः, आदित्यः, इति चतस्रो मृन्मय्यः स्थाल्यः –स्थालीग्रहा इति यावत् ।

दुघैवेन्द्रस्योद्धारः ॥ ६ ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । उक्थꣳ हि पुरोरुग्गृग्घि पुरोरुगृग्घ्युक्थꣳ साम ग्रहोऽथ यदन्यद्यजुष्पति तद्यजुस्ता हैता ऽअभ्यर्द्ध ऽएवाऽग्र ऽऋग्भ्य ऽआसुरभ्यर्द्धो- यजुर्भ्योऽभ्यर्द्धः सामभ्यः ॥ ७ ॥ ते देवा ऽअब्रुवन् । हन्तेमा यजुःषु दधाम तथेयं बहुलतरेव विद्या भविष्यतीति ता यजुःष्वदधुस्तत ऽएषा बहुलतरेव विद्याऽभवत् ॥ ८ ॥ तं त्वयद्पुरोरुक्कं गृह्णाति । उक्थꣳहि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थꣳ स यदेवैनमुक्थेभ्यो विगृह्णाति तेनो हाऽस्यैष पुरोरुङ्मा- न्भवति तस्मादपुरोरुक्कं गृह्णाति ॥ ९ ॥ अथाऽतो *गृह्णात्येव । 'उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत' ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति बृहद्वते वयस्वत ऽइति वीर्य्यवत ऽइत्त्येवैतदाह यदाह बृहद्वते वय- स्वत ऽइ'त्युक्[2]थाव्यं गृह्णामी'त्युक्थेभ्यो ह्येनं गृह्णाति '[3]यत्त ऽइन्द्र बृहद्वय' ऽइति यत्त ऽइन्द्र वीर्य्यमित्त्येवैतदाह 'तस्मै त्वा[4] विष्णवे त्वे'ति यज्ञस्य ह्येनमायुषे गृह्णाति तस्मादाह तस्मै त्वा विष्णवे त्वे'त्त्येष[5] ते योनिरुक्थे- भ्यस्त्वे'ति सादयत्युक्थेभ्यो ह्येनं गृह्णाति ॥ १० ॥ तं विगृह्णाति । 'देवेभ्य[6]स्त्वा देवाव्यं यज्ञस्याऽऽयुषे गृह्णा- मी'ति प्रशासनꣳ स कुर्य्याद्य ऽएवं कुर्य्याद्यथादेवतं त्वेव विगृह्णीयात् ॥ ११ ॥ † 'मित्रावरु[7]णाभ्यां त्वा । देवाव्यं

* का० श्रौ० सू० ९. ६. २०।

(१) शु० सं० अ० ७ क० २२। (२) शु० सं० अ० ७ क० २२। (३) शु० सं० अ० ७ क० २२। (४) शु० सं० अ० ७ क० २२। (५) शु० सं० अ० ७ क० २२। (६) शु० सं० अ० ७ क० २२।

† का० श्रौ० सू० ९. १४. ९।

(७) शु० सं० अ० ७ क० २३।

यज्ञस्याऽऽयुषे गृह्णामी'त्येव मैत्रावरुणाय मैत्रावरुणीषु हि तस्म्मै स्तुवते मैत्रावरुणीरनुशꣳसति मैत्रावरुण्या यजति ॥ १२ ॥ * 'इन्द्राय[1] त्वा । देवाꣳव्यं यज्ञस्याऽऽयुषे गृह्णामी' त्येव ब्राह्मणाच्छꣳसिन ऽऐन्द्रीषु हि तस्म्मै स्तुवत ऽऐन्द्रीरनुशꣳसत्त्यैन्द्र्या यजति ॥ १३ ॥ 'इन्द्राग्निभ्यान्त्वा[2] देवाꣳव्यं यज्ञस्याऽऽयुषे गृह्णामी'त्येवाऽच्छावाकायैन्द्राग्नीषु हि तस्म्मै स्तुवत ऽऐन्द्राग्नीरनुशꣳसत्त्यैन्द्राग्न्या यजतीन्द्राय त्वेन्द्राय त्वेत्त्येव माध्यन्दिने सवन ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनम् ॥१४॥ तदु ह चरकाद्ध्वर्य्यवो विगृह्णन्ति । 'उपयाम गृहीतोऽसि[3] देवेब्भ्यस्त्वा देवाꣳव्यमुक्थेब्भ्य ऽउक्थाꣳव्यं मित्रावरुणाब्भ्यां जुष्टं गृह्णाम्म्येष ते योनिर्म्मित्रावरुणाब्भ्यां त्वे'ति सादयति पुनर्हविरसीति स्त्थालीमभिमृशति ॥ १५ ॥ 'उपयामगृहीतोऽसि । देवेब्भ्यस्त्वा[4] देवाꣳव्यमुक्थेब्भ्य-ऽउक्थाꣳव्यमिन्द्राय जुष्टं गृह्णाम्म्येष ते योनिरिन्द्राय त्वे'ति सादयति पुनर्हविरसीति स्त्थालीमभिमृशति ॥ १६ ॥ 'उपयामगृहीतोऽसि[5] । देवेब्भ्यस्त्वा देवाꣳव्यमुक्थेब्भ्य-ऽउक्थाꣳव्यमिन्द्राग्निब्भ्यां जुष्टं गृह्णाम्म्येष ते योनिरिन्द्राग्निब्भ्यान्त्वे'ति सादयति नाऽत्र पुनर्हविरसीति स्त्थालीमभिमृशतीन्द्राय त्वेन्द्राय त्वेत्त्येव माध्यन्दिने सवन-ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनं द्विर्हि पुनर्हविरसीति

* का० श्रौ० सू० ९. १४. १५ ।

(१) शु० सं० अ० ७ क० २३ । (२) शु० सं० अ० ७ क० २३ । (३) शु० सं० अ० ७ क० २३ । (४) शु० सं० अ० ७ क० २३ । (५) शु० सं० अ० ७ क० २३ ।

स्थालीमभिमृशति तूष्णीं तृतीयं निदधाति ॥ १७ ॥ तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेदग्रे ह्येवैष-ऽउपयामेन गृहीतो भवत्यग्रे योनौ सन्नोऽजामितायै जामि ह कुर्याद्यदेनमत्राऽप्युपयामेन गृह्णीयाद्योनौ सादयेदथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै गृहं ग्रहीष्यन्भवति न तदाद्रियेत तूष्णीमेव निदध्यात् ॥ १८ ॥(C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ध्रुवग्रहः ]

अयꣳ ह वा ऽअस्यैष प्राणः । योऽयं पुरस्तात्स वै वैश्वानर ऽएवाऽथ योऽयं पश्चात्स ध्रुवस्तौ स्मैतौ द्वावेवाऽग्रे ग्रहौ गृह्णन्ति ध्रुववैश्वानराविति तयोरयमप्येतर्ह्यन्यतर ऽएव गृह्यते ध्रुव ऽएव स यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत यजमानस्य तं चमसेऽवनयेदथैतमेव होतृचमसे ॥ १ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष-ऽआत्मनः सोऽस्यैष ऽआयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताजरꣳ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥ २ ॥ तं वै पूर्ण्णं गृह्णाति । सर्वं वै तद्यत्पूर्ण्णꣳ सर्वं तद्यदायुस्तस्मात्पूर्ण्णं गृह्णाति ॥ ३ ॥ वैश्वानराय गृह्णाति । संवत्सरो वै वैश्वानरः संवत्सर ऽआयुस्तस्माद्वैश्वानराय गृह्णाति ॥ ४ ॥

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. २. ३; कठ० २७. १०; तै० सं० ६. ५. १; मै० सं० ३. ६. ५ ।

स प्प्रातःसवने गृहीतः । ऐतस्म्मात्कालादुपशेते तदेनः सर्वाणि सवनान्न्यतिनयति ॥ ५ ॥ तन्न स्तूयमानेऽवनयेत् । न ह संव्वत्सरं यजमानोऽतिजीवेद्यत्स्तूयमानेऽवनयेत् ॥६॥ तः शस्यमानेऽवनयति । तदेनं द्वादशः स्तोत्रमतिनयति तथा परम्परमायुः समश्नुते तथो ह यजमानो ज्योग्जीवति तस्म्माद् ब्राह्मणोऽग्निष्टोमसत्स्यादेतस्य होमान्न सर्प्पेन्न प्प्रस्तावयेत तथा सर्वमायुः समश्नुत ऽआयुर्वा ऽअस्यैष तथा सर्वमायुरेति ॥ ७ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष ऽआत्मनः स यत्पुरैतस्य होमात्सर्प्पेद्वा प्प्र वा स्तावयेत ध्रुवः हाऽवमेहेन्नेद्ध्रुवमवमेहानीति तस्म्माद्वा ऽअग्निष्टोमसद्भवति तद्वै तद्यजमानऽएव यजमानस्य ह्येष तदात्मनः ॥ ८ ॥ स वा ऽअग्निष्टोमसद्भवति । यशो वै सोमस्तस्म्माद्यश्च सोमे लभते यश्च नोभावेवाऽऽगच्छतो यश ऽएवैतद्द्रष्टुमागच्छन्ति तद्वाऽएतद्यशो ब्राह्मणाः सम्प्रसृप्प्याऽऽत्मन्दधते यद्भक्षयन्ति स ह यश ऽएव भवति य ऽएवं विद्वान्भक्षयति ॥ ९ ॥ ते वा ऽएते । सर्प्पन्त ऽएवाऽग्निष्टोमसद्येतद्यशः सन्निधाय सर्प्पन्ति ते पराञ्चो यशसो भवन्ति तदेष परिगृह्यैव पुनरात्मन्न्यशो धत्ते तेषाः हैष ऽएव यशस्वितमो भूत्वा प्प्रैति य ऽएवं विद्वानग्निष्टोमसद्भवति ॥ १० ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्प्पृधिर ऽएतस्मिन्न्यज्ञे प्प्रजापतौ पितरि संवत्सरेऽस्म्माकमयं भविष्यत्त्यस्म्माकमयं भविष्यतीति ॥ ११ ॥

ततो देवाः । अर्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतदग्निष्टोमसद्यं ददृशुस्त ऽएतेनाऽग्निष्टोमसद्येन सर्वं यज्ञः समवृञ्जताऽन्तरायन्नसुरान्यज्ञात्तथो ऽएवैष ऽएतेनाऽग्निष्टोमसद्येन सर्वं यज्ञः संवृङ्क्तेऽन्तरेति सपत्नान्यज्ञात्तस्म्माद्वाऽअग्निष्टोमसद्भवति ॥ १२ ॥ तं गृहीत्त्वोत्तरे । हविर्द्धाने सादयति प्प्राणा वै ग्रहा नेत्प्राणान्मोहयानीत्युपकीर्ण्णे वाऽइतरान्ग्रहान्त्सादयत्यथैतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय ॥ १३ ॥ यद्वा ऽअस्योर्द्ध्वं नाभेः । तदस्यैत ऽआत्मन ऽउपरीव वै तद्यदूर्द्ध्वं नाभेरुपरीवैतद्यदुपकीर्ण्णं तस्म्मादुपकीर्ण्णे सादयत्यथैतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय ॥ १४ ॥ यद्वा ऽअस्याऽवाचीनं नाभेः । तदस्यैष ऽआत्मनोऽध ऽइव वै तद्यदवाचीनं नाभेरध ऽइवैतद्यद्व्युह्य न तृणं चनाऽन्तर्द्धाय तस्म्मादेतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय सादयति ॥ १५ ॥ एष वै प्प्रजापतिः । य ऽएष यज्ञस्तायते यस्म्मादिमाः प्प्रजाः प्प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते स यानुपकीर्ण्णे सादयति तस्म्माद्यास्तानु प्प्रजाः प्प्रजायन्ते ता ऽअन्येनाऽऽत्मनोऽस्यां प्रतितिष्ठन्ति या वै शफैः प्प्रतितिष्ठन्ति ता ऽअन्न्येनाऽऽत्मनोऽस्यां प्रतितिष्ठन्त्यथ यदेतं व्व्युह्य न तृणं चनाऽन्तर्द्धाय सादयति तस्म्माद्या ऽएतमनु प्प्रजाः प्प्रजायन्ते ता ऽआत्मनैवाऽस्यां प्रतितिष्ठन्ति मनुष्याश्च श्वापदाश्च ॥ १६ ॥ तद्वा ऽएतत् । अस्या ऽएवाऽन्न्यदुत्तरं करोति यदुपकिरति स यानुपकीर्ण्णे सादयति तस्म्माद्यास्तानु प्प्रजाः प्प्रजायन्ते ता ऽअन्न्येनैवाऽऽत्मनोऽस्यां

प्रतितिष्ठन्ति शफैः ॥ १७ ॥ तद्वा ऽएतत् । आहवनीये जुह्वति पुरोडाशं धानाः करम्भं दध्यामिक्षामिति तद्यथा मुख ऽआसिञ्चेदेवं तदुथैष ऽएकरूप ऽउपशेत ऽआप-ऽइवैव तस्माद्यदनेन मुखेन नानारूपमशनमश्नात्यथैतेन प्राणेनैकरूपमेव प्रस्तावयतेऽप ऽइवैवाऽथ यस्माद्ध्रुवो नाम ॥ १८ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य-ऽआसङ्गाद्बिभयाञ्चक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तेषा-मेतान्दक्षिणान्गृहानुज्जघ्नुरप्येतद्दक्षिणꣳ हविर्द्धानमु-ज्जघ्नुरथैतमेव न शेकुरुद्धन्तुं तदुत्तरमेव हविर्द्धानं दक्षिणꣳ हविर्द्धानमदृꣳह तद्यदेतं न शेकुरुद्धन्तुं तस्माद् ध्रुवो नाम ॥ १९ ॥ तं वै गोपायन्ति । शिरो वा ऽएष ऽएतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विꣳशतिश्चतुर्विꣳशत्यक्षरा वै गायत्री तस्या-ऽएष शिरः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्याहुः श्रेष्ठो ह व्यथेत यदेष व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्यथाता-ऽइति तस्माद्वै गोपायन्ति ॥२०॥ वत्सो वा ऽएषः । एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विꣳशतिश्चतुर्विꣳशत्यक्षरा वै गायत्री तस्या ऽएष वत्सस्तं यद् गोपायन्ति गोपायन्ति वा ऽइमान्वत्सान्दो-हाय यदिदं पयो दुह्र ऽएवमियं गायत्री यजमानाय सर्वान्कामान्दोहाता ऽइति तस्माद् वै गोपायन्ति ॥ २१ ॥ अथ यदद्ध्वर्युश्च प्रतिप्रस्थाता च । निश्च क्रामतः प्र

च पद्येते यथा बद्धवत्सोपाऽऽचरेदेवमेतं गृहमुपाऽऽचरत- स्तमवनयति गायत्रीमेवैतत्प्रस्नावयति प्प्रत्तेयं गायत्री यज- मानाय सर्वान्न्कामान्दोहाता ऽइति तस्माद्वा ऽअवनयति ॥ २२ ॥ * सोऽवनयति । 'ध्रुवं[1] ध्रुवेण[2] मनसा वाचा सोममवनयामी'ति गृह्णामीति वा'ऽथा न ऽइन्द्र ऽइद्वि- शोऽसपत्नाः समनसस्करदि'ति यथा न ऽइन्द्र इमाः प्प्रजा व्विशः श्रियै यशसेऽन्नाद्यायाऽसपत्नाः सम्मनसः करवदित्येवैतदाह ॥ २३ ॥ अथाऽतो † गृह्णा- त्येव । 'मूर्द्धानं[3] दिवो ऽअरतिं पृथिव्व्या वैश्वानरमृत ऽआ जातमग्निम् । कविꣳ सम्म्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः । उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षिति- र्ध्रुवाणां ध्रुवतमोऽच्च्युतानामच्च्युतक्षित्तम ऽएष ते योनिर्वै- श्वानराय त्त्वे'ति सादयति व्व्युह्य न तृणं चनाऽन्तर्द्धाय वैश्वानराय ह्येनं गृह्णाति ॥ २४ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ विप्रुड्ढोमः ]

गृहान्न्गृहीत्त्वा । उपनिष्क्रम्म्य व्विप्प्रुषाꣳ होमं जुहोति तद्यद्विप्प्रुषाꣳ होमं जुहोति या ऽएवाऽस्याऽत्र

* 'ध्रौवꣳ होतृचमसेऽवनयति ध्रुवन्ध्रुवेणेति' ।

( १ ) शु० सं० अ० ७ क० २५ । ( २ ) शु० सं० अ० ७ क० २५ ।

† का० श्रौ० सू० ९. ६. २१ ।

( ३ ) शु० सं० अ० ७ क० २४,२५ ।

( D ) एतद्ब्राह्मणस्थाविषयाअन्यत्राऽप्युपलभ्यन्ते यथा—का०श० ५. २. ४; क० सं० २८ १; कपि० ४४, १; तै० सं० ६. ५. २; मै० सं० ४. ६. ६ ।

विप्रुष स्कन्दन्ति ता ऽएवैतदाहवनीये स्वगाकरोत्त्याहवनीयो ह्याहुतीनां प्रतिष्ठा तस्माद्विप्रुषाᳫं होमं जुहोति ॥ १ ॥ स * जुहोति । 'यस्ते[1] द्रप्स स्कन्दति यस्ते ऽअᳫंशुरि'ति यो वै स्तोक स्कन्दन्ति स द्रप्सस्तत्तमाह यस्ते ऽअᳫंशुरिति तदᳫंशुमाह 'ग्रावच्च्युतो[2] धिषणयोरुपस्त्थादि'ति ग्राव्णा हि च्च्युतोऽधिषवणाब्भ्याᳫं स्कन्द'त्यद्ध्वर्य्योर्व्वा[3] परि वा यः पवित्रादि'त्यद्ध्वर्य्योर्व्वा हि पाणिब्भ्याᳫं स्कन्दति पवित्राद्वा 'तन्ते[4] जुहोमि मनसा वषट्कृतᳫं स्वाहे'ति तद्यथा वषट्कृतᳫं हुतमेवमस्यैतद्भवति ॥ २ ॥ अथ स्तीर्ण्णायै वेदेः । द्वे तृणे ऽअद्ध्वर्य्युरादत्ते तावद्ध्वर्य्यू प्प्रथमौ प्प्रतिपद्येते प्प्राणोदानौ यज्ञस्याऽथ प्प्रस्तोता वागेव यज्ञस्याऽथोद्गाताऽऽत्मैव प्प्रजापतिर्य्यज्ञस्याऽथ प्प्रतिहर्त्ता भिषग्वा व्व्यानो वा ॥ ३ ॥ तान्वा ऽएतान् । पञ्चर्त्त्विजो यजमानोऽन्वारभत ऽएतावान्वै सर्वो यज्ञो यावन्त ऽएते पञ्चर्त्त्विजो भवन्ति पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतद्यजमानोऽन्न्वारभते ॥ ४ ॥ अथाऽन्न्यतरत्तृणम् । † चात्त्वालमभि प्प्राऽस्यति 'देवानामुत्[5]क्क्रमणमसी'ति यत्र वै देवा यज्ञेन स्वर्ग्गं लोकᳫं समाश्नुवत त ऽएतस्म्माच्चात्त्वा-

* का० श्रौ सू० ९. ६. २८ ।

(१) शु० सं० अ० ७ क० २६ । (२) शु० सं० अ० ७ क० २६; 'ग्रावच्युतः' इत्यत्र 'बाहुच्युतः' इति तैत्तिरीयपाठः । (३) शु० सं० अ० ७ क० २६ । (४) शु० सं० अ० ७ क० २६ ।

† का० श्रौ० सू० ९. ६. ३२ ।

(५) शु० सं० अ० ७ क० २६ ।

लादूर्द्ध्वाः स्वर्ग्गं लोकमुपोदक्रामँस्तद्यजमानमेवैतत्स्वर्ग्ग्यं पन्थानमनु संख्यापयति ॥ ५ ॥ अथाऽन्न्यतरत्तृणम् । पुरस्तादुद्गातृणामुपाऽस्यति तूष्णीमेव स्तोमो वा ऽएष प्प्रजापतिर्य्यदुद्गातारः स ऽइदꣳ सर्व्वꣳ युत ऽइदꣳ सर्व्वꣳ सम्भवति तस्म्माऽएवैतत्तृणमपि दधाति तथो हाऽद्ध्वर्य्युं न युते नैनꣳ सम्भवत्यथ यदा जपन्ति जपन्ति ह्यत्रोद्गातारः ॥ ६ ॥ * अथ स्तोत्रमुपाकरोति । 'सोमः पवत' ऽइति स वै परागेव स्तोत्रमुपाकरोति पराञ्च स्तुवते देवान्न्वा ऽएतानि स्तोत्राण्ण्यब्भ्युऽऽपावृत्तानि † यत्पवमानाः पराञ्चो ह्येतैर्द्देवाः स्वर्ग्गं लोकꣳ समाश्नुवत तस्म्मात्परागेव स्तोत्रमुपाकरोति पराञ्च स्तुवते ॥ ७ ॥ उपावर्त्तद्ध्वमिति वा ऽअन्न्यानि स्तोत्राणि । अब्भ्यावर्त्तं धुर्य्यैः स्तुवत ऽइमा वै प्प्रजाऽएतानि स्तोत्राण्ण्यब्भ्युपाऽऽवृत्तास्तस्म्मादिमाः प्प्रजाः पुनरब्भ्यावर्त्तं प्रजायन्ते ॥ ८ ॥ अथ यदत्र बहिष्पवमानेन स्तुवते । अत्र ह वा ऽअसावग्र ऽआदित्य ऽआस तमृतवः परिगृह्यैवाऽत ऽऊर्द्ध्वाः स्वर्ग्गं लोकमुपोदक्रामन्त्स ऽएषऽऋतुषु प्प्रतिष्ठितस्तपति तथो ऽएवैतदृत्विजो यजमानं परिगृह्यैवाऽत ऽऊर्द्ध्वाः स्वर्ग्गं लोकमुपोत्क्रामन्ति तस्म्मादत्र बहिष्पवमानेन स्तुवते ॥ ९ ॥ नौर्ह वा ऽएषा स्वर्ग्ग्या । यद्बहिष्पवमानं तस्या ऽऋत्विज ऽएव स्फ्याश्चाऽरित्राश्च

* का० श्रौ० सू० ९. ६. ३४ ।

(१) शु० सं० अ० ७ क० २६ ।

† "कयानश्चित्र इत्याद्यासु नवसु गायत्रीच्छन्दस्कासु ऋक्षु ( ऋ० ३. ६. २४, २५ ) गीयमानं स्तोत्रं पवमानमित्युच्यते" ।

स्वर्ग्गस्य लोकस्य सम्पारणास्तस्या ऽएक ऽएव मज्जयिता य ऽएव निन्द्यः स यथा पूण्णामभ्यारुह्य मज्जयेदेवꣳ हैनाꣳ स मज्जयति तद्वै सर्व्वं ऽएव यज्ञो नौः स्वर्ग्या तस्मादु सर्व्वस्मादेव यज्ञान्निन्द्यं परिबिबाधिषेत ॥ १० ॥ * अथ स्तुत ऽएतां व्वाचं वदति । अग्नीदग्नीन्विहर बर्हिः स्तृणीहि पुरोडाशाँ२ अलङ्कुरु पशुनेहीति व्विहरत्यग्नीदग्नीन्त्समिन्ध- ऽएवैनानेतत्स्तृणाति बर्हिः स्तीर्ण्णे बर्हिषि समिद्धे देवेभ्यो जुहवानीति पुरोडाशाँ२ ऽअलङ्कुर्व्विति पुरोडाशैर्हि प्प्रच- रिष्यन्भवति पशुनेहीति पशुꣳ ह्युपाकरिष्यन्भवति ॥ ११ ॥ अथ पुनः प्प्रपद्य । आश्विनं ग्रहं गृह्णात्याश्विनं ग्रहं गृहीत्त्वोपनिष्क्रम्य यूपं परिव्ययति परिवीय यूपं पशुमुपाकरोति रसमेवाऽस्मिन्नेतद्दधाति ॥ १२ ॥ [ अर्धप्रपाठकः ॥७०॥ ] स प्प्रातःसवन ऽआलब्धः । आ तृतीयसवनाच्छ्रप्प्यमाण ऽउपशेते सर्व्वस्मिन्नेवैतद्यज्ञे रसन्दधाति सर्व्वꣳ ह्यज्ञꣳ रसेन प्प्रसजति ॥ १३ ॥ तस्मा- दाग्नेयमग्निष्टोम ऽआलभेत । तद्धि सलोम यदाग्नेयमग्नि- ष्टोम ऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्रा- ग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्त्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञ- क्रतून् व्यावर्त्तयति ॥ १४ ॥ अथ सवनीयैः पुरोडाशैः प्प्रचरति । देवो वै सोमो दिवि हि सोमो व्वृत्रो वै सोम-

* का० श्रौ० सू० ९. ७. ४ ।

ऽआसीत्तस्यैतच्छरीरं यद्दिरयो यदुश्मानस्तदेषोऽशाना नामौषधिर्ज्जायत ऽइति ह स्म्माऽऽह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याऽभिषुण्वन्तीति ॥ १५ ॥ स यत्पशुमालभते । रसमेवाऽस्मिन्नेतद्दधात्यथ यत्सवनीयैः पुरोडाशैः प्प्रचरति मेधमेवाऽस्मिन्नेतद्दधाति तथो हाऽस्यैष सोम ऽएव भवति ॥ १६ ॥ सर्व्वं ऽऐन्द्रा भवन्ति । इन्द्रो वै यज्ञस्य देवता तस्म्मात्सर्व्व ऽऐन्द्रा भवन्ति ॥ १७ ॥ अथ यत्पुरोडाशः । धानाः करम्भो दध्यामिक्षेति भवति या यज्ञस्य देवतास्ताः सुप्प्रीता ऽअसन्निति ॥ १८ ॥ इदं व्वा ऽअपूपमशित्वा कामयते । धानाः खादेयं करम्भमश्नीयान्दध्यश्नीयामामिक्षामश्नीयामिति ते सर्व्वे कामा या यज्ञस्य देवतास्ताः सुप्प्रीता ऽअसन्नित्यथ यदेषा प्प्रातःसवन ऽएव मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ १९ ॥ गायत्री वै प्प्रातःसवनं वहति । त्रिष्टुम्माध्यन्दिनꣳ सवनं जगती तृतीयसवनं तद्वा ऽअनेकाकिन्न्येव त्रिष्टुम्माध्यन्दिनꣳ सवनं व्वहति गायत्र्या च बृहत्या चाऽनेकाकिनी जगती तृतीयसवनं गायत्र्योष्णिहककुब्भ्यामनुष्टुभा ॥२०॥ गायत्र्येवैकाकिनी प्प्रातःसवनं वहति । सैताभ्यां पङ्क्तिभ्याꣳ स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च चत्त्वार्य्याज्यानि बहिष्पवमानं पञ्चमं पञ्च परापङ्क्तिः सैतया स्तोत्रपङ्क्त्याऽनेकाकिनी गायत्री प्प्रातःसवनं वहति ॥२१॥ इन्द्रस्य पुरोडाशः । हर्य्योर्द्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्याऽनेकाकिनी

गायत्री प्प्रातःसवनं व्वहत्त्येतस्या ऽएव पङ्क्तेः सम्पदः कामाय प्प्रातःसवन ऽएवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ २२ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ ऋतुग्रहैन्द्राग्नवैश्वदेवग्रहाः ]

भक्षयित्त्वा समुपहूताः स्स्म ऽइत्त्युक्त्वोत्तिष्ठति । पुरोडाशबृगलमादाय तद्यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्म्मै *पुरोडाशबृगलं पाणावादधदाहाऽच्छावाक व्वदस्व यत्ते व्वाद्यमित्त्यहीयत व्वा ऽअच्छावाकः ॥ १ ॥ तमिन्द्राग्नीऽअनु समतनुताम् । प्रजानां प्रजात्त्यै तस्म्मादैन्द्राग्नोऽच्छावाकः स ऽएतेन च हविषा यदस्म्मा ऽएतत्पुरोडाशबृगलं पाणावादधात्त्येतेन चाऽऽर्षेयेण यदेतदन्वाह तेनाऽनु समश्नुते ॥ २ ॥ स व्वै सन्नेऽच्छावाके । ऋतुग्रहैश्चरति तद्यत्सन्नेऽच्छावाक ऽऋतुग्रहैश्चरति मिथुनं व्वा ऽअच्छावाक ऽऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वः हि मिथुनं प्रजननः सऽएतस्म्मान्मिथुनात्प्रजननादृतून्त्संवत्त्सरं प्रजनयति ॥ ३ ॥ यद्वेव सन्नेऽच्छावाके । † ऋतुग्रहैश्चरति सर्व्वं व्वा ऽऋतवः संवत्त्सरः सर्व्वमेवैतत्प्रजनयति तस्म्मात्सन्नेऽच्छावाक ऽऋतु-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ३. ११ ।

* अच्छावाकस्य पाणौ पुरोडाश( बृगलं )शकलं प्रक्षिपन् अच्छावाक ! वदस्व यत्ते वाद्यमिति ब्रूयादित्यर्थः ( सा० भा० ) ।

† का० श्रौ० सू० ९. १२. १ ।

ग्रहैश्चरति ॥४॥ तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य तस्माद् द्वादश गृह्णीयादथो ऽअपि त्रयोदश गृह्णीयादस्ति त्रयोदशो मास ऽइति द्वादश त्वेव गृह्णीयादेषैव सम्पत् ॥५॥ द्रोणकलशाद् गृह्णाति । प्रजापतिर्वै द्रोणकलशः स ऽएतस्मात्प्रजापतेर्ऋतून्त्संवत्सरं प्रजनयति ॥ ६ ॥ उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तो ये ऽउभयतोमुखे तस्मादयमनन्तः संवत्सरः परिप्लवते तं गृहीत्वा न सादयति तस्मादयमसन्नः संवत्सरः ॥ ७ ॥ नाऽनुवाक्यामन्वाह । ह्वयति वा ऽअनुवाक्यया गतो ह्येवाऽयमृतुर्यदि दिवा यदि नक्तं नाऽनुवषट्करोति नेदृतूनपवृणजाऽइति सहैव प्प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवैतत्सर्वं संवत्सरेण परिगृहीतस्तदिदं सर्वं संवत्सरेण परिगृहीतम् ॥ ८ ॥ निरेवाऽन्यतरः क्रामति । प्राऽन्न्यतरः पद्यते तस्मादिमेऽन्न्वञ्चो मासा यन्त्यथ यदुभौ वा सह निष्क्रामेतामुभौ वा सह प्प्रपद्येयातां पृथगु हैवेमे मासाऽईयुस्तस्मान्निरेवाऽन्न्यतरः क्रामति प्प्राऽन्न्यतरः पद्यते ॥ ९ ॥ तौ वा ऽऋतुने * षट् प्प्रचरतः । तद्देवा ऽअहरसृजन्तर्तुभिरिति चतुस्तद्रात्रिमसृजन्त स यद्धैतावदेवाऽभविष्यद्रात्रिर्हैवाऽभविष्यन्न † ऽव्यवस्यत् ॥ १० ॥ तौ वाऽऋतुनेत्युपरिष्टाद् द्विश्चरतः । तद्देवाः पुरस्तादहरदधुस्तस्मादिदमग्राऽहरथ रात्रिरथ श्वोऽहर्भविता ॥ ११ ॥ ऋतु-

* का० श्रौ० सू० ९. १३. २–७।

† 'व्ययवस्यत्' इति पाठः 'ग' पुस्तके।

नेति वै देवाः । मनुष्यानसृजन्तर्त्तुभिरिति पशून्त्स यत्त-न्मध्ये येन पशूनसृजन्त तस्मादिमे पशव ऽउभयतः परिगृहीता वशमुपेता मनुष्याणाम् ॥ १२ ॥ तौ वा-ऽऋतुनेति षट् प्रचरर्ष । इतरथा पात्रे विपर्य्यस्यते ऽऋतु-भिरिति चतुश्चरित्त्वेतरथा पात्रे विपर्य्यस्येते ऽअन्यतरत-ऽएव तद्देवा ऽअहरसृजन्ताऽन्यतरतो रात्रिमन्यतरत-ऽएव तद्देवा मनुष्यानसृजन्ताऽन्यतरतः पशून् ॥ १३ ॥ अथाऽतो * गृह्णात्येव । 'उपयामगृहीतोऽसि मधवे त्वे'त्ये-वाऽध्वर्युर्गृह्णा'त्युपयामगृहीतोऽसि माधवाय त्वे'ति प्रति-प्रस्थातैतावेव वासन्तिकौ स यद्वसन्त ऽओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च ॥ १४ ॥ 'उपयामगृहीतोऽसि । शुक्राय त्वे'त्येवाऽध्वर्युर्गृह्णा'त्युपया-मगृहीतोऽसि शुचये त्वे'ति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च ॥ १५ ॥ 'उपयामगृहीतोऽसि नभसे त्वे'त्येवाऽध्वर्युर्गृह्णा'त्युपया-मगृहीतोऽसि नभस्याय त्वे'ति प्रतिप्रस्थातैतावेव वार्षिका-वमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च ॥१६॥ 'उपयामगृहीतोऽसि । इषे त्वे'त्येवाऽध्वर्युर्गृह्णा'त्युपयाम-गृहीतोऽस्यूर्ज्जे त्वे'ति प्रतिप्रस्थातैतावेव शारदौ स यच्छ-रद्यूर्ग्रस ऽओषधयः पच्यन्ते तेनो हैताविषश्चोर्ज्जश्च

* का० श्रौ० सू० ९. १२-१३-१७।

(१) शु० सं० अ० ७ क० ३०। (२) शु० सं० अ० ७ क० ३०। (३) शु० सं० अ० ७ क० ३०। (४) शु० सं० अ० ७ क० ३०। (५) शु० सं० अ० ७ क० ३०। (६) शु० सं० अ० ७ क० ३०। (७) शु० सं० अ० ७ क० ३०। (८) शु० सं० अ० ७ क० ३०।

॥ १७ ॥ '[1]उपयामगृहीतोऽसि सहसे त्वे'त्येवाऽऽद्ध्वर्युर्गृह्णा-'[2]त्युपयामगृहीतोऽसि सहस्याय त्वे'ति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त ऽइमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च ॥ १८ ॥ [3]उपयामगृहीतोऽसि तपसे त्वे'त्येवाऽऽद्ध्वर्युर्गृह्णा'[4]त्युपयामगृहीतोऽसि तपस्याय त्वे'ति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च ॥ १९ ॥ '[5]उपयामगृहीतोऽसि। अꣳहसस्पतये त्वे'ति * त्रयोदश ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादुथ प्रतिप्रस्थाताऽऽद्ध्वर्योः पात्रे स ꣳस्रवमवनयत्यद्ध्वर्युर्वा प्रतिप्रस्थातुः पात्रे सꣳस्रवमव नयत्याहरति भक्षम् ॥ २० ॥ अथ प्रतिप्रस्थाताऽभक्षितेन पात्रेण। ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति न वा ऽऋतुग्रहाणामनुवषट्कुर्वन्त्येतेभ्यो वाऽऐन्द्राग्नं ग्रहं ग्रहीष्यन्भवति तदस्यैन्द्राग्नेनैवाऽनुवषट्कृता भवन्ति ॥ २१ ॥ यद्वेवैन्द्राग्नं ग्रहं गृह्णाति। सर्वं वा ऽइदं प्राऽजीजनद्य ऽऋतुग्रहानग्रहीत्स ऽइदꣳ सर्वं प्रजनय्येदमेवैतत्सर्वं प्राणोदानयोः प्रतिष्ठापयति तदिदꣳ सर्वं प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानाविमे हि द्यावापृथिवी प्राणोदानावनयोर्हीदꣳ सर्वं प्रतिष्ठितम् ॥ २२ ॥ यद्वेवैन्द्राग्नं † ग्रहं गृह्णाति। सर्वं वा ऽइदं प्राऽजी-

(१) शु० सं० अ० ७ क० ३०। (२) शु० सं० अ० ७ क० ३०। (३) शु० सं० अ० ७ क० ३०। (४) शु० सं० अ० ७ क० ३०। (५) शु० सं० अ० ७ क० ३०।

* का० श्रौ० सू० ९. १३. १८।

† का० श्रौ० सू० ९. १३. १९–२०।

जनय्य ऽऋतुगृहानगृहीत्त्स ऽइदꣳ सर्व्वं प्रजनय्याऽस्मिन्नेवैतत्त्सर्व्वस्मिन्न्प्राणोदानौ दधाति ताविमावस्मिन्त्सर्व्वस्मिन्न्प्राणोदानौ हि तौ ॥ २३ ॥ अथाऽतो गृह्णात्त्येव । 'इन्द्राग्नी ऽआगतꣳ सुतं गीर्ब्भिर्न्नभो व्वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोसीन्द्राग्निब्भ्यान्त्वैष ते योनिरिन्द्राग्निब्भ्यान्त्वे'ति सादयतीन्द्राग्निब्भ्याꣳ ह्येनं गृह्णाति ॥ २४ ॥ अथ व्वैश्वदेवं गृहं गृह्णाति । सर्व्वं व्वा ऽइदं प्राऽजीजनय्य ऽऋतुग्रहानग्रहीत्त्स यद्धैतावदेवाऽभविष्यद्यावत्त्यो हैवाऽग्रे प्प्रजाꣳ सृष्टास्तावत्त्यो हैवाऽभविष्यन्न प्प्राऽजनिष्यन्त ॥ २५ ॥ अथ यद्वैश्वदेवं * गृहं गृह्णाति । इदमेवैतत्त्सर्व्वमिमाꣳ प्प्रजा यथायथं व्व्यवसृजति तस्म्मादिमाꣳ प्प्रजाꣳ पुनरब्भ्यावर्त्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्त्येष वै शुक्रो य ऽएष तपति तस्य ये रश्मयस्ते व्विश्वे देवास्तस्म्माच्छुक्रपात्रेण गृह्णाति ॥२६॥ अथाऽतो † गृह्णात्त्येव । 'ओमासश्चर्षणीधृतो व्विश्वे देवास ऽआगत । दाश्वाꣳसो दाशुषꣳ सुतम् । उपयामगृहीतोऽसि व्विश्वेब्भ्यस्त्वा देवेब्भ्य ऽएष ते योनिर्व्विश्वेब्भ्यस्त्वा देवेब्भ्य' ऽइति सादयति व्विश्वेब्भ्यो ह्येनं देवेब्भ्यो गृह्णाति ॥ २७ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(१) शु० सं० अ० ७ क० ३१ ।

* का० श्रौ० सू० ९. १४. १ ।

† का० श्रौ० सू० ९. १४. १ ।

(२) शु० सं० अ० ७ क० ३३ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ३. २; तै० सं० ६. ५. ४; क० सं० २८. २; कपि० सं० ४४. २ । मै० सं० ४. ६. ७,८;

५९

[ शस्त्रप्रतिगरः ]

गृणाति ह वा ऽएतद्धोता यच्छꣳसति । तस्मा-ऽएतद् गृणते प्प्रत्येवाऽध्वर्युरागृणाति तस्मात् * प्रतिगरो नाम ॥ १ ॥ तं वै प्प्राङ्ङासीनमाह्वयते । सर्व्वे वा ऽअन्य-ऽउद्गातुः प्प्राञ्च ऽआर्त्विज्यं कुर्व्वन्ति तथो हाऽस्यैतत्प्रागे-वाऽऽर्त्विज्यं कृतं भवति ॥ २ ॥ प्रजापतिर्व्वा ऽउद्गाता । योषग्घोता स ऽएतत् प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति यत्स्तुते तद्धोता शस्त्रेण प्प्रजनयति तच्छ्यति यथाऽयं पुरुषः शितस्तद्यदेनच्छ्यति तस्मा-च्छस्त्रं नाम ॥ ३ ॥ तदुपपल्युरुय प्प्रतिगृणाति । इदमेवै-तद्रेतः सिक्तमुपनिमदत्यथ यत्पराङ् तिष्ठन्प्रतिगृणीयात्पराग् हैवैतद्रेतः सिक्तं प्रणश्येत्तन्न प्प्रजायेत सम्म्यङ्ङा ऽउ चै-वैतद्भूत्वैतद्रेतः सिक्तं प्रजनयतः ॥ ४ ॥ यातयामानि वै देवैश्छन्दाꣳसि । छन्दोभिर्हि देवाः स्वर्ग्गं लोकꣳ समा-श्नुवत मदो वै प्प्रतिगरो यो वा ऽऋचि मदो यः सामन्त्सो वै स तच्छन्दः स्वेवैतद्रसं दधात्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते ॥५॥ तस्माद्यद्यर्द्धर्च्चशः शꣳसेत् । अर्द्धर्च्चेऽर्द्धर्च्चे प्प्रतिगृणीयाद्यदि पच्छः शꣳसेत्पदे पदे

* यत्र यत्र होत्रा 'शोंसावोम्' इति आहावः क्रियते तत्र तत्र सर्वत्र तत्समकालमेव अध्वर्युणा 'शोंसामो दैव' इति कार्यः। एवम्— 'अध्वर्यो शोंसावोम्, अध्वर्यो शोसोंसावोम्' इत्यत्राऽपि 'शोंसामो दैव' इत्येव प्रतिगरः। शस्त्रे काश्चन ऋचोऽर्धर्चशः, काश्चन पच्छः पठ्यन्ते। तत्र अर्धर्चे पच्छे च होत्रा अवसिते 'ओथामो दैव' इति प्रतिगरः। एवं शस्त्रे सर्वा ऋचः प्रणवान्ताः पठ्यन्ते। तत्र सर्वत्र 'ओ३थामो दैव' इति प्रतिगरः। एवं शस्त्रसमाप्तौ ऋक् प्रणवान्ता पठ्यते, तत्र तु 'ओ३म्' इति त्रिमात्रः प्रणवः प्रतिगरः। निवित्सु अपि 'ओथामो दैव' इत्येव प्रतिगरः। यथा— 'अग्निर्देवेद्धः ओथामो दैव' इत्यादि। निविदस्तु निविदध्याये ( ऋ० परि० १ ) द्रष्टव्याः ॥

प्प्रतिगृणीयाद्यत्र वै शङ्सन्नवानिति तदसुररक्षसानि यज्ञमन्न्ववचरन्ति तत्प्रतिगरेण सन्दधाति नाष्ट्राणाᳪं रक्षसामनन्न्ववचाराय यजमानस्यो चैवैतद् भ्रातृव्यलोकं छिनत्ति ॥६॥ चतुरक्षराणि ह वा ऽअग्रे च्छन्दाᳪंस्यासुः। ततो जगती सोममच्छापतत्त्सा त्रीण्यक्षराणि हित्वाऽऽजगाम ततस्त्रिष्टुप्प्सोममच्छापतत्त्सैकमक्षरᳪं हित्वाऽऽजगाम ततो गायत्री सोममच्छापतत्त्सैतानि चाऽक्षराणि हरन्त्यागच्छत्सोमं च ततोऽष्टाक्षरा गायत्र्यभवत्तस्मादाहुरष्टाक्षरा गायत्रीति ॥ ७ ॥ तया प्प्रातःसवनमतन्न्वत । तस्माद्गायत्रं प्रातःसवनं तयैव माध्यन्दिनᳪसवनमतन्न्वत ताᳪं ह त्रिष्टुबुवाचोप त्वाऽहमायानि त्रिभिरक्षरैरुप मा ह्वयस्व मा मा यज्ञादन्तर्ग्गा ऽइति तथेति तामुपाऽऽह्वयत तत ऽएकादशाक्षरा त्रिष्टुबभवत्तस्मादाहुस्त्रैष्टुभं माध्यन्दिनᳪसवनमिति ॥ ८ ॥ तयैव तृतीयसवनमतन्न्वत । ताᳪं ह जगत्युवाचोप त्वाऽहमायान्न्येकेनाऽक्षरेणोप मा ह्वयस्व मा मा यज्ञादन्तर्ग्गा ऽइति तथेति तामुपाऽऽह्वयत ततो द्वादशाक्षरा जगत्यभवत्तस्मादाहुर्ज्जागतं तृतीयसवनमिति ॥ ९ ॥ तदाहुः। गायत्राणि वै सर्व्वाणि सवनानि गायत्री ह्येवैतदुपसृजमानैदिति तस्मात्सᳪसिद्धं प्रातःसवने प्प्रतिगृणीयात्सᳪसिद्धा हि गायत्र्यागच्छत्सकृन्न्मद्वन्न्माध्यन्दिने सवन ऽएकᳪं हि साक्षरᳪं हित्वाऽगच्छत्तेनैवैनामेतत्समर्द्धयति कृत्स्नां करोति ॥ १० ॥ यत्र त्रिष्टुभः शस्यन्ते । त्रिमद्वत्तृतीयसवने त्रीणि हि साक्षराणि

हित्वाऽगच्छत्तैरेवैनामेतत्समर्द्धयति कृत्स्नां करोति ॥ ११ ॥ * षत्र द्यावापृथिव्व्यꣳ शस्यते। इमे ह वै द्यावापृथिवीऽइमाः प्प्रजा ऽउपजीवन्ति तदनयोरेवैतद् द्यावा पृथिव्व्यो रसन्दधाति ते रसवत्त्या ऽउपजीवनीये ऽइमाः प्प्रजाऽउपजीवन्ति स वा ऽओ३मित्त्येव प्प्रातिगृणीयात्तद्धि सत्त्यं तद्देवा विदुः ॥ १२ ॥ तद्धैके। ओथामो दैव वागिति प्प्रतिगृणन्ति वाक्प्रतिगर ऽएतद्वाचमुपाऽऽप्नुम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यथा वै कथा च प्प्रतिगृणात्त्युपाऽऽप्तैवाऽस्य वाग्भवति वाचा हि प्प्रतिगृणाति तस्म्मादो३मित्त्येव प्प्रतिगृणीयात्तद्धि सत्त्यं तद्देवा विदुः ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

## [ अथ माध्यन्दिनसवनम् ]

( तत्र मरुत्वतीयग्रहादि )

† इहा३ ऽइहा३ ऽइत्त्यभिषुणोति। इन्द्रमेवैतदाच्च्यावयति बृहद्बृहदितीन्द्रमेवैतदाच्च्यावयति ॥ १ ॥ स शुक्रामन्थिनौ प्प्रथमौ गृह्णाति। शुक्रवद्ध्येतत्सवनमथाऽऽग्रयणꣳ सर्वेषु ह्येष सवनेषु गृह्यतेऽथ मरुत्त्वतीयमथोक्थ्यमुक्थानि ह्यत्राऽपि भवन्ति ॥ २ ॥ तद्धैके। ‡ उक्थ्यं

* अत्र शतम् २५०० ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ५. ३. ३; तै० सं० ३. २. ९।

† का० श्रौ० सू० ९. १४. ६–९।

‡ "उक्थं गृहीत्वा मरुत्वतीयौ। एतद्वा विपरीतम्। मध्य उक्थ्यमभितो मरुत्वतीयावित्येके" ( आप० श्रौ० सू० १३. २. ३ )

गृहीत्वाऽथ मरुत्वतीयं गृह्णन्ति तदु तथा न कुर्य्यान्मरुत्वतीयमेव गृहीत्वाऽथोक्थ्यं गृह्णीयात् ॥ ३ ॥ तान्वाऽएतान्। पञ्च ग्रहान् गृह्णात्येष वै वज्रो यन्माध्यन्दिनः पवमानस्तस्मात्पञ्चदशः पञ्च सामा भवति पञ्चदशो हि वज्रः स ऽएतैः पञ्चभिर्ग्रहैः पञ्च वा ऽइमा ऽअङ्गुलयोऽङ्गुलिभिर्वै प्प्रहरति ॥ ४ ॥ इन्द्रो व्वृत्राय वज्रं प्रजहार। स व्वृत्रं पाप्प्मानꣳ हत्त्वा व्विजितेऽभयेऽनाष्ट्रे दक्षिणा निनाय तस्स्मादप्प्येतर्हि यदैवैतेन माध्यन्दिनेन पवमानेन स्तुवतेऽथ व्विजितेऽभयेऽनाष्ट्रे दक्षिणा नीयन्ते तथोऽएवैष ऽएतैः पञ्चभिर्ग्रहैः पाप्प्मने द्विषते ब्भ्रातृव्व्याय वज्रं प्रहरति स व्वृत्रं पाप्प्मानꣳ हत्त्वा व्विजितेऽभयेऽनाष्ट्रे दक्षिणा नयति तस्स्माद्वा ऽएतान्पञ्च ग्रहान्गृह्णाति ॥ ५ ॥ तद्यन्मरुत्वतीयान्गृह्णाति । एतद्वा ऽइन्द्रस्य निष्केवल्यꣳ सवनं यन्माध्यन्दिनꣳ सवनं तेन व्वृत्रमजिघाꣳसत्तेन व्व्यजिगीषत मरुतो वा ऽइत्त्यश्वत्थेऽपक्रम्म्य तस्थुः क्षत्रं वा ऽइन्द्रो व्विशो मरुतो विशा वै क्षत्त्रियो बलवान्भवति तस्स्मादाश्वत्थे ऽऋतुपात्रे स्यातां काष्मर्य्यमये त्वेव भवतः ॥ ६ ॥ तानिन्द्र ऽउपमन्त्रयाञ्चक्रे। उपमाऽऽवर्त्तद्ध्वं युष्माभिर्बलेन व्वृत्रꣳ हनानीति ते होचुः किं नस्ततः स्यादिति तेब्भ्य ऽएतौ मरुत्वतीयौ ग्रहाऽवगृह्णात् ॥ ७ ॥ ते होचुः। अपनिधायैनमोज ऽउपाऽऽवर्त्तामहा ऽइति त ऽएनमपनिधायैवौज ऽउपाऽऽववृतुस्तद्वा-

(१) शु० सं० अ० ७ क० ३४।

ऽइन्द्रोऽस्पृणुताऽपनिधाय वै मौज ऽउपाऽवृतन्निति ॥ ८ ॥ स होवाच । सहैव मौजसोपाऽऽवर्त्तद्ध्वमिति तेभ्यो वै नस्तृतीयं ग्रहं गृहाणेति तेभ्य ऽएतं तृतीयं ग्रहमगृह्णा-'दुपयामगृहीतोऽसि मरुतान्त्वौजस' ऽइति त ऽएनᳫं सहैवौजसोपाऽऽवर्त्तन्त तैर्व्यजयत तैर्वृत्रमहन्न्क्षत्रं वा-ऽइन्द्रो विशो मरुतो विशा वै क्षत्रियो बलवान्भवति तत्क्षत्र ऽएवैतद्बलं दधाति तस्मान्मरुत्वतीयान्गृह्णाति ॥ ९ ॥ स वा ऽइन्द्रायैव मरुत्वते गृह्णीयात् । नाऽपि मरुद्भ्यᳫं स यद्धाऽपि मरुद्भ्यो गृह्णीयात्प्रत्युद्यामिनीᳫं ह क्षत्राय विशं कुर्य्यादथैतदिन्द्रमेवाऽनु मरुत ऽआभजति तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति तस्मा-दिन्द्रायैव मरुत्वते गृह्णीयान्नाऽपि मरुद्भ्यᳫं ॥ १० ॥ अप-क्रमादु हैवैषामेतद्बिभयाञ्चकार । यदिमे मन्नाऽपक्रामेयु-र्यन्नाऽन्यद्भियेरन्निति तानेवैतदनपक्रमिणोऽकुरुत तस्मा-दिन्द्रायैव मरुत्वते गृह्णीयान्नाऽपि मरुद्भ्यᳫं ॥ ११ ॥ ऋतु-पात्राभ्यां गृह्णाति । ऋतवो वै संवत्सरो यज्ञस्तेऽदᳫं प्रातᳫंसवने प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान्गृह्णात्यथैत-त्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति विशो वै मरुतोऽन्नं वै विश ऽऋतवो वा ऽइदᳫं सर्वमन्नाद्यं पचन्ति तस्मादृतुपात्राभ्यां मरु-त्वतीयान्गृह्णाति ॥ १२ ॥ अथाऽतो * गृह्णात्येव । 'इन्द्र

* का० श्रौ० सू० १०. १. १३ ।

(१) शु० सं० अ० ७ क० ३५ ।

मरुत्त्व ऽइह पाहि सोमं ष्यथा शार्थ्याते ऽअपिबः सुतस्य। तव प्प्रणीती तव शूर शर्म्मन्नाविवासन्ति कवयः सु यज्ञाः। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत ऽएष ते योनिरिन्द्राय त्वा मरुत्वते' ॥ १३ ॥ 'मरुत्त्वन्तं व्वृषभम्[1]। वावृधानमकवारिं दिव्व्यꣳ शासमिन्द्रम्। विश्वासाहमवसे नूतनायोग्ग्रꣳ सहोदामिह तꣳ हुवेम। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्त्वत ऽएष ते योनिरिन्द्राय त्वा मरुत्त्वते। उपयामगृहीतोऽसि मरुतान्त्वौजस' ऽइति तृतीयं * ग्रहं गृह्णाति ॥ १४ ॥ अथ माहेन्द्रं ग्रहं गृह्णाति। पाप्प्मना वा ऽएतदिन्द्रः सꣳसृष्टोऽभूद्यद्विशा मरुद्भिः स यथा व्विजयस्य कामाय विशा समाने पात्रेऽश्नीयादेवं तद्यदस्मा ऽएतं मरुद्भिः समानं ग्रहमगृह्णन् ॥ १५ ॥ तन्देवाः। सर्व्वस्मिन्न्विजितेऽभयेऽनाष्ट्रे यथेषीकां मुञ्जाद्विवृहेदेवꣳ सर्व्वस्मात्पाप्प्मनो व्व्यवृहन्न्यन्माहेन्द्रं ग्रहमगृह्णꣳस्तथो ऽएवैष ऽएतद्यथेषीका व्विमुञ्जा स्यादेवꣳ सर्व्वस्मात्पाप्प्मनो निर्म्मुच्च्यते यन्माहेन्द्रं ग्रहं गृह्णाति ॥१६॥ यद्वेव माहेन्द्रं ग्रहं गृह्णाति। इन्द्रो वा ऽएष पुरा व्वृत्रस्य वधादथ व्वृत्रꣳ हत्वा यथा महाराजो विजिग्ग्यान ऽएवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रं ग्रहं गृह्णाति महान्तमु चैवैनमेतत्खलु करोति व्वृत्रस्य वधाय तस्माद्वेव माहेन्द्रं ग्रहं गृह्णाति शुक्रपात्रेण गृह्णात्येष वै शुक्रो य ऽएष तप-

(१) शु० सं० अ० ७ क० ३६।

* का० श्रौ० सू० १. ३. ६।

त्येष ऽउ ऽएव महाँस्तस्माच्छुक्रपात्रेण गृह्णाति ॥ १७ ॥ अथाऽतो * गृह्णात्त्येव । 'महाँ२ ऽइन्द्रो नृवदा चर्षणिप्रा-ऽउत द्विबर्हा ऽअमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वेति सादयति महेन्द्राय ह्येनं गृह्णाति ॥ १८ ॥ † अथोपाकृत्त्यैतां वाचं वदति । अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताऽग्नीदाशिरं विनय सौम्यस्य वित्तादिति ते वै तृतीसवनायैवाऽभिषोतारोऽभि-षुण्वन्ति तृतीयसवनायौलूखलानुद्वादयन्ति तृतीयसवना-याऽग्नीदाशिरं विनयति तृतीयसवनाय सौम्यं चरुꣳ श्रपयत्त्येते वै शुक्रवती रसवती सवने यत्प्रातःसवनञ्च माध्यन्दिनञ्च सवनमथैतन्निर्द्धीतशुक्रं यत्तृतीयसवनं तदेवैतस्मान्माध्यन्दिनात्सवनान्निर्म्मिमीते तथो हाऽस्यै-तच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मादेतामत्र वाचं वदति ॥ १९ ॥ (C)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ १३९ ॥



* का० श्रौ० सू० १०. ३. ११ ।

(१) शु० सं० अ० ७ क० ३९ ।

† "शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुतौलूखलानुद्वादयताऽग्नीदाशिरं विनय सौम्यस्य वित्तादिति" ( का० श्रौ० सू० १०. ३. १२ ) ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ३. ४; कठ० सं० २८. ३. २; कपि० सं० ४४. ३. २; तै० सं० ६. ५. ५ ।

[ दाक्षिणहोमो दक्षिणादानञ्च ]

घ्नन्ति वा ऽएतद्यज्ञम्। यदेनं तन्न्वते यन्न्वेव राजानमभिषुण्ण्वन्ति तत्तं घ्नन्ति यत्पशुꣳ संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाब्भ्यां दृषदुपलाब्भ्याꣳ हविर्य्यज्ञं घ्नन्ति ॥ १ ॥ स ऽएष यज्ञो हतो न ददक्षे। तन्देवा दक्षिणाभिरदक्षयँस्तद्यदेनं दक्षिणाभिरदक्षयँस्तस्म्माद्दक्षिणा नाम तद्यदेवाऽत्र यज्ञस्य हतस्य व्व्यथते तदेवाऽस्यैतद्दक्षिणाभिर्द्दक्षयत्त्यथ समृद्ध ऽएव यज्ञो भवति तस्म्माद्दक्षिणा ददाति ॥ २ ॥ तद्धै षड् द्वादशेत्त्येव हविर्य्यज्ञे ददति। न ह त्त्वेवाऽशतदक्षिणः सौम्म्योऽद्ध्वरः स्यादेष वै प्प्रत्त्यक्षं यज्ञो यत्प्रजापतिः पुरुषो वै प्प्रजापतेर्न्नेदिष्ठꣳ सोऽयꣳ शतायुः शततेजाः शतवीर्य्यस्तꣳ शतेनैव दक्षयति नाऽशतेन तस्म्मान्नाऽशतदक्षिणः सौम्म्योऽद्ध्वरः स्यान्नो हैवाऽशतदक्षिणेन यजमानस्यर्त्विक् स्यान्नेदस्याऽक्षिभूरसानि यमिमे हनिष्यन्त्येव न दक्षयिष्यन्तीति ॥ ३ ॥ द्वया वै * देवा देवाः। अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा व्विभक्त ऽएव यज्ञ ऽआहुतय ऽएव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्प्रीणाति दक्षिणाभिर्म्मनुष्यदेवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानाँस्त ऽएनमुभये देवाः प्प्रीताः स्वर्ग्गं लोकमभिवहन्ति ॥ ४ ॥ ता वा ऽएताः। ऋत्विजामेव दक्षिणा-

* 'देवा' इति नास्ति 'ग' पुस्तके।

ऽअन्यं वा ऽएत ऽएतस्याऽऽत्मानꣳ संस्कुर्वन्त्येतं यज्ञमृङ्मयं यजुर्म्मयꣳ साममयमाहुतिमयꣳ सोऽस्याऽमुष्मिँल्लोकऽआत्मा भवति तद्ये माऽजीजनन्तेति तस्मादृत्विग्भ्यऽएव दक्षिणा दद्यान्नाऽनृत्विग्भ्यः ॥ ५ ॥ अथ प्प्रतिपरेत्य गार्हपत्यम् । दाक्षिणानि जुहोति स दशाहोमीये वाससि हिरण्यं प्रबद्ध्याऽवधाय जुहोति देवलोके मेऽप्प्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाऽभिप्प्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्न्वारभ्य यजमानः ॥ ६ ॥ चतस्रो वै दक्षिणाः । हिरण्यं गौर्वासोऽश्वो न वै तदवकल्प्पते यदश्वस्य पादमवदध्याद्यद्वा गोः पादमवदध्यात्तस्माद्दशाहोमीये वाससि हिरण्यं प्रबद्ध्याऽवधाय जुहोति ॥ ७ ॥ सौरीभ्यामृग्भ्यां * जुहोति । तमसा वा ऽअसौ लोकोऽन्तर्हितः स ऽएतेन ज्ज्योतिषा तमोऽपहत्य स्वर्ग्गं लोकमुपसङ्क्रामति तस्म्मात्सौरीभ्यामृग्भ्यां जुहोति ॥ ८ ॥ स जुहोति । 'उदु[1]त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यꣳ स्वाहे'त्येतया गायत्र्या गायत्री वा ऽइयं पृथिवी सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ९ ॥ अथ † द्वितीयां जुहोति । 'चित्रं[2] देवानामुदगादनीकं चक्षुर्म्मित्रस्य वरुणस्याऽग्नेः । आप्प्रा द्यावा पृथिवी ऽअन्तरिक्षꣳ सूर्य्यऽआत्मा जगतस्तस्थुषश्च स्वाहे'त्येतया त्रिष्टुभा लोक-

* का० श्रौ० सू० १०. २. ४ ।
( १ ) शु० सं० अ० ७ क० ४१ । ( २ ) शु० सं० अ० ७ क० ४२ ।
† का० श्रौ० सू० १०. ३. ५ ।

मेवैतयोपप्रैति ॥ १० ॥ अथाऽऽग्नीध्रे । द्वे वैकां वा जुहोति तद्यदग्नावाऽऽग्नीध्रे द्वे वैकां वा जुहोत्यग्निर्वै पशूनामीष्टे त ऽएनमभितः परिणिविशन्ते तमेतयाऽऽहुत्या प्रीणाति सोऽस्मै प्रीतोऽनुमन्यते तेनाऽनुमतां ददाति ॥ ११ ॥ स * जुहोति । '[1]अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम ऽउक्तिं विधेम स्वाहे'त्यथ यद्यश्वं युक्तं वाऽयुक्तं वा दास्यन्त्स्यादुथ द्वितीयां जुहुयाद्यद्यु न नाऽऽद्रियेत ॥ १२ ॥ स † जुहोति । '[2]अयं नो ऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुर ऽएतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसातावयः शत्रूञ्जयतु जर्हृषाणः स्वाहे'ति वाजसा ह्यश्वः ॥ १३ ॥ अथ ‡ हिरण्यमादाय शालामभ्यैति । दक्षिणेन वेदिं दक्षिणा ऽउपतिष्ठन्ते सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते '[3]रूपेण वो रूपमभ्यागामि'ति न ह वा ऽअग्रे पशवो दानाय चक्षमिरे तेऽपनिधाय स्वानि रूपाणि शरीरैः प्रत्युपाऽतिष्ठन्त तानेतद्देवाः स्वैरेव रूपैर्यज्ञस्याऽर्द्धादुपाऽयँस्ते स्वानि रूपाणि जानाना ऽअभ्यवायँस्ते रातमनसोऽलं दानायाऽभवँस्तथो-ऽएवैनानेष ऽएतत्स्वैरेव रूपैर्यज्ञस्याऽर्द्धादुपैति ते स्वानि

---

* का० श्रौ० सू० १०. २. ६ ।
(१) शु० सं० अ० ७ क० ४३ ।
† का० श्रौ० सू० १०. २. ७ ।
(२) शु० सं० अ० ७ क० ४४ ।
‡ का० श्रौ० सू० १०. २. ८, ९ ।
(३) शु० सं० अ० ७ क० ४५ ।

रूपाणि जानाना ऽअभ्यवायन्ति ते रातमनसोऽलं दानाय भवन्ति ॥ १४ ॥ 'तुथो वो विश्ववेदा विभजत्वि'ति । ब्रह्म वै तुथस्तदेना ब्रह्मणा विभजति ब्रह्म वै दक्षिणीयं चाऽदक्षिणीयं च वेद तथो हाऽस्यैता दक्षिणीयायैव दत्ता भवन्ति नाऽदक्षिणीयाय ॥ १५ ॥ 'ऋतस्य पथा प्रेते'ति । यो वै देवानां पथैति स ऽऋतस्य पथैति- 'चन्द्रदक्षिणा' ऽइति तदेतेन ज्योतिषा यन्ति ॥ १६ ॥ अथ * सदोऽभ्यैति । 'वि स्वः पश्य व्यन्तरिक्षमि'ति वि त्वया दक्षिणया लोकं ख्येषमित्येवैतदाह ॥ १७ ॥ † अथ सदः प्रेक्षते । 'यतस्व सदस्यै'रिति मा त्वा सदस्या ऽअतिरिक्षतेत्येवैतदाह ॥ १८ ॥ अथ ‡ हिरण्यमादायाऽऽग्नीध्रमभ्यैति । 'ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमि'ति यो वै ज्ञातो ज्ञातकुलीनः स पितृमान्पैतृमत्यो या वै ज्ञातायाऽपि कतिपयीर्दक्षिणा ददाति ताभिर्महज्जय'त्यृषिमार्षेयमि'ति यो वै ज्ञातोऽनूचानः स ऽऋषिरार्षेयः 'सुधातुदक्षिणमि'ति स हि सुधातुदक्षिणः ॥ १९ ॥ अथैवमुपसद्य । अग्नीधे हिरण्यं ददा'त्यस्मद्राता देवत्रा

( १ ) शु० सं० अ० ७ क० ४५ । ( २ ) शु० सं० अ० ७ क० ४५ । ( ३ ) शु० सं० अ० ७ क० ४५ ।

* का० श्रौ० सू० १०. २. १६ ।

( ४ ) शु० सं० अ० ७ क० ४५ ।

† का० श्रौ० सू० १०. २. १७ ।

( ५ ) शु० सं० अ० ७ क० ४५ ।

‡ का० श्रौ० सू० १०. २. १८, १९ ।

( ६ ) शु० सं० अ० ७ क० ४५ । ( ७ ) शु० सं० अ० ७ क० ४६ । ( ८ ) शु० सं० अ० ७ क० ४६ । ( ९ ) शु० सं० अ० ७ क० ४६ ।

गच्छते॒'ति यां वै रा॒तमना ऽअ॒विचिकित्सन्द॒क्षिणां द॒दाति त॒या मह॒ज्जयति दे॒वत्रा गच्छते॒ति दे॒वलोके मे॒ ऽप्प्यसदि॒ति वै॒ यजते यो य॒जते त॒द्देवलोक॒ ऽए॒वैनमेत॒द-पित्त्वि॒नं करोति 'प्प्रदा॒ता॒रमा॒विशते॒'ति मामा॒विशते॒-त्त्ये॒वैत॒दाह त॒थो हाऽस्म्मादेताः प॒राच्च्यो न प्प्र॒णश्यन्ति तद्य॒द॒ग्नीधे प्प्रथमा॒य द॒क्षिणां द॒दात्त्य॒तो हि वि॒श्वे दे॒वा-ऽअमृतत्त्व॒मपा॒ऽजयँस्त॒स्म्माद॒ग्नीधे प्प्रथमा॒य द॒क्षिणां दद-ाति ॥ २० ॥ अ॒थैव॒मेवोपस॒द्य । * आत्त्रेया॒य हि॒रण्ण्यं द॒दाति य॒त्र वा॒ ऽअद॒ः प्प्रातरनुवा॒कमन्न्वाह॒स्त॒द्ध स्म्मैत॒-त्पु॒रा शद्धःसन्त्य॒त्त्रिर्वा ऽऋ॒षीणाꣳ हो॒ता सा॒ऽथैतत्स॒दोऽसु-रतमस॒मभि॒पुप्प्लुवे त ऽऋ॒षयो॒ऽत्त्रिमब्रुवन्ने॒हि प्प्रत्त्य॒ङ्ङिदं तमो॒ऽपजही॒ति स॒ ऽएतत्तमो॒ऽपा॒ऽहन्नयं वै ज्ज्यो॒तिरु॒र्ष ऽइदं त॒मोऽपा॒ऽवधीदि॒ति त॒स्म्मा ऽएतज्ज्यो॒तिर्हि॒रण्ण्यं द॒क्षिणा-मनयज्ज्ज्यो॒तिर्हि॒ हि॒रण्ण्यं तद्धै स तत्ते॒जसा वी॒र्य्येण॒र्षिस्त-मो॒ऽपजघाना॒ऽथैष॒ ऽएते॒नैवैतज्ज्यो॒तिषा तमो॒ऽपहन्ति त॒स्म्मा-दात्त्रेया॒य हि॒रण्ण्यं दधाति ॥ २१ ॥ † अ॒थ ब्रह्म॒णे । ब्रह्मा हि॒ यज्ञ॒ं दक्षिण॒तोऽभिगोपायत्त्य॒थोद्गा॒त्त्रेऽथ होत्त्रे॒ऽथाऽद्ध्वर्य्यु-भ्भ्याꣳ हविर्द्धा॒न ऽआ॒सीनाभ्भ्याम॒थ पु॒नरे॒त्त्य प्प्रस्तोत्त्रे॒ऽथ मैत्रावरुणाया॒ऽथ ब्राह्मणाच्छꣳसिने॒ऽथ पोत्त्रे॒ऽथ नेष्ट्रे॒ऽथा-ऽच्छावाकाया॒ऽथोन्नेत्त्रे॒ऽथ ग्रावस्तुते॒ऽथ सुब्रह्मण्ण्या॒यै प्प्रतिहर्त्त्रे॒-

(१) शु॰ सं॰ अ॰ ७ क॰ ४६।

* का॰ श्रौ॰ सू॰ १०. २. २०।

† का॰ श्रौ॰ सू॰ १०. २. २५, २६।

ऽउत्तमाय ददाति प्प्रतिहर्त्ता वा ऽएष सोऽस्स्मा ऽएतदन्ततः प्प्रतिहरति तथो हाऽस्स्मादेताः पराच्च्यो न प्प्रणश्यन्ति ॥२२॥ अथाऽऽहेन्द्राय मरुत्त्वतेऽनुब्रूहीति । यत्र वै प्प्रजापतिरग्ग्रे ददौ तद्धेन्द्र ऽईक्षाञ्चक्रे सर्व्वं व्वा ऽअयमिदं दास्यति नाऽस्स्मभ्यं किञ्चन परिशेक्ष्यतीति स ऽएतं व्वज्ज्रमुदयच्छदिन्द्राय मरुत्त्वते ऽनुब्रूहीत्त्यदानाय ततो नाऽददात्स ऽएषोऽप्प्येतर्हि तथैव व्वज्र ऽउद्यम्म्यत ऽइन्द्राय मरुत्त्वतेऽनुब्रूहीत्त्यदानाय ततो न ददाति ॥२३॥ चतस्रो वै दक्षिणाः । हिरण्ण्यमायुर्व्वै तेनाऽऽत्त्मनस्त्रायत ऽआयुर्हि हिरण्ण्यं तदभ्भय ऽआग्नीध्रं कुर्व्वं तेऽददात्तस्स्मादप्प्येतर्ह्यग्नीधे हिरण्ण्यं दीयते ॥२४॥ अथ गौः । प्राणमेवैतयाऽऽत्त्मनस्त्रायते प्प्राणो हि गौरन्नꣳ हि गौरन्नꣳ हि प्प्राणस्ताꣳ रुद्राय होत्रेऽददात् ॥ २५ ॥ अथ व्वासः । त्त्वचमेवैतेनाऽऽत्त्मनस्त्रायते त्त्वग्घि व्वासस्तद् बृहस्प्पतय ऽउद्गात्रे ऽददात् ॥२६॥ अथाऽश्वः । व्वज्ज्रो वा ऽअश्वो व्वज्ज्रमेवैतत्पुरोगां कुरुते यमलोके मेऽप्प्यसदिति वै यजते यो यजते तद्यमलोक ऽएवैनमेतदपित्त्विनं करोति तं रुयमाय ब्रह्मणेऽददात् ॥ २७ ॥ स * हिरण्ण्यं प्रत्त्येति । 'अग्नये त्त्वा मह्यं व्वरुणो ददात्त्वि'त्त्यग्नये ह्येतद्वरुणोऽददा'[1]त्सोऽमृतत्त्वमशीयाऽऽयुर्दात्र ऽएधि मयो मह्यं प्रतिग्रहीत्र' ऽइति ॥२८॥ अथ † गां प्रत्त्येति । 'रुद्राय[2] त्त्वा मह्यं व्वरुणो ददात्त्वि'ति

* 'अग्नये त्वेति हिरण्यं प्रतिगृह्णीतः' ( का० श्रौ० सू० १०. २. २७ )
( १ ) शु० सं० अ० ७ क० ४७ । ( २ ) शु० सं० अ० ७ क० ४७ ।
† 'रुद्राय त्वेति गाम्' ( का० श्रौ० सू० १०. २. २८ क ) ।
( ३ ) शु० सं० अ० ७ क० ४७ ।

रुद्राय ह्येतां व्रुरुणोऽदद्ा'त्सोऽमृतत्त्वमशीय प्प्राणो दात्र ऽएधि व्रयो मह्मं प्रतिग्रहीत्र' ऽइति ॥ २९ ॥ अथ * व्रासः प्प्रत्त्येति । 'बृहस्प्पतये त्त्वा मह्मं व्रुरुणो दद्ात्त्वि'ति बृहस्प्पतये ह्येतद्व्रुरुणोऽदद्ात्त्सो'ऽमृतत्त्व-मशीय त्त्वग्दात्र ऽएधि मयो मह्मं प्रतिग्रहीत्र' ऽइति ॥ ३० ॥ † अथाऽश्वम्प्रत्त्येति । 'यमाय त्त्वा मह्मं व्रुरुणो दद्ात्त्वि'ति यमाय ह्येतं व्रुरुणोऽदद्ा'त्त्सोऽमृतत्त्वम-शीय हयो दात्र ऽएधि व्रयो मह्मं प्रतिग्रहीत्र' ऽइति ॥३१॥ ‡ अथ यदन्यद्दद्ाति । कामेनैव तद्दद्ातीदं मेऽप्प्यमुत्रा-ऽसदिति तत्प्रत्त्येति 'कोऽदात्कस्म्मा ऽअदात्कामोऽदात्का-मायाऽदात् । कामो दाता कामः प्प्रतिग्रहीता कामैतत्त' ऽइति तद्देवताया ऽअतिदिशति ॥ ३२ ॥ तदाहुः । न देव-ताया ऽअतिदिशेदिदं वै यां देवताᳬ समिन्धे सा दीप्प्य-माना श्वः-श्वः श्रेयसी भवतीदं वै यस्मिन्नग्नावभ्याद्धति स दीप्प्यमान ऽएव श्वः-श्वः श्रेयान्भवति श्वः-श्वो ह वै श्रेयान्भवति य ऽएवं व्रिद्वान्प्रतिगृह्णाति तद्यथा समिद्धे

(१) शु० सं० अ० ७ क० ४७।

* 'बृहस्पतये त्वेति वासः' ( का० श्रौ० सू० १०. २. २८ ख )।

(२) शु० सं० अ० ७ क० ४७। (३) शु० सं० अ० ७ क० ४७।

† 'यमाय त्वेत्यश्वम्' ( का० श्रौ० सू० १०. २. २८ ग )।

(४) शु० सं० अ० ७ क० ४७। (५) शु० सं० अ० ७ क० ४७।

‡ 'कोदादित्यन्यत्' ( का० श्रौ० सू० १०. २. २९ ) अत्र अन्यदित्यनेन मन्थौदन-तिलमाषादीनां ग्रहणम्।

(६) शु० सं० अ० ७ क० ४८।

जुहुयादेवमेतां जुहोति यामधीयते ददाति तस्मादधीयन्नाऽतिदिशत् ॥ ३३ ॥ (D)

## तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

### [ अथ मध्यन्दिनसवनम् ]

#### ( तत्राऽऽदित्यग्रहः )

त्रया वै देवाः । वसवो रुद्रा ऽआदित्यास्तेषां विभक्तानि सवनानि वसूनामेव प्प्रातः सवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां तृतीयसवनं तद्वा ऽअमिश्रमेव वसूनां प्रातः सवनममिश्रꣳ रुद्राणां माध्यन्दिनꣳ सवनं मिश्रमादित्यानां तृतीयसवनम् ॥ १ ॥ ते हाऽऽदित्या ऽऊचुः । यथेदममिश्रं वसूनां प्रातः सवनममिश्रꣳ रुद्राणां माध्यन्दिनꣳ सवनमेवं न ऽइमं पुरा मिश्राद् ग्रहं जुहुथेति तथेति देवा ऽअब्रुवँस्ते सꣳस्थित ऽएव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः स ऽएषोऽप्प्येतर्हि तथैव गृहो हूयते सꣳस्थित ऽएव माध्यन्दिने सवने पुरा तृतीयसवनात् ॥ २ ॥ ते हाऽऽदित्या ऊचुः । नेव वा ऽइतरस्मिन्त्सवने स्मो नेवेतरस्मिन्न्यद्वै नो रक्षाꣳसि न हिꣳस्युरिति ॥ ३ ॥ ते ह द्विदेवत्यानूचुः । रक्षोभ्यो वै बिभीमो हन्त युष्मान्प्रविशामेति ॥ ४ ॥ ते ह द्विदेवत्या ऽऊचुः । किमस्माकं ततः स्यादित्यस्माभिरनुवषट्कृता भविष्य-

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ४. १; क० सं० २८. ४. ५; कपि० सं० ४४, ४; तै० सं० ६. ६. १; मै० सं० ४. ८. २, ३ ।

थेत्यु हाऽऽदित्त्या ऽऊचुस्तथेति ते द्विदेवत्त्यान्प्राऽऽविशन् ॥५॥ स यत्र प्प्रातःसवने। द्विदेवत्त्यैः प्प्रचरति तत्प्रतिप्प्रस्त्थाता-ऽऽदित्त्यपात्रेण द्रोणकलशात्प्रतिनिगृह्णीत 'ऽउपयामगृहीतोऽ-सी'त्त्येतावताऽद्ध्वर्युरेवाऽऽश्रावयत्त्यद्ध्वर्य्योरनुहोमं जुहोति प्रतिप्प्रस्त्थाता 'ऽऽदित्त्येब्भ्यस्त्वे'ति सꣳस्रवमवनयत्त्येतावतैव-मेव सर्व्वेषु ॥६॥ तद्यत्प्रतिप्प्रस्त्थाता प्प्रतिनिगृह्णीते। द्विदेव-त्त्यान्वै प्प्राऽऽविशन्नस्म्माभिरनुवषट्कृता भविष्यथेत्त्यु हाऽऽ-दित्त्या ऊचुर्य्यां वा ऽअमूं द्वितीयामाहुतिं जुहोति स्विष्टकृते वै तां जुहोति स्विष्टकृतो वा ऽएतेऽनुवषट्क्रियन्ते तथो हाऽस्यैतेऽनुवषट्कृता ऽइष्टस्विष्टकृतो भवन्त्युत्तरार्द्धे जुहो-त्त्येषा ह्येतस्य देवस्य दिक्तस्म्मादुत्तरार्द्धे जुहोति ॥ ७ ॥ यद्द्वेव प्प्रतिप्प्रस्त्थाता प्प्रतिनिगृह्णीते। द्विदेवत्त्यान्वै प्प्राऽऽवि-शन्त्स यानेव प्प्राऽऽविशँस्तेब्भ्य ऽएवैतन्निर्म्मिमीतेऽथाऽ * पिद्धाति रक्षोब्भ्यो ह्यबिभयु'र्व्विष्ण ऽउरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्नि'ति यज्ञो वै व्विष्णुस्त-द्यज्ञायैवैतत्परिददाति गुप्त्या ऽअथाऽऽह सꣳस्थित ऽएव माध्यन्दिने सवने पुरा तृतीयसवनाद्देहि यजमानेति ॥ ८ ॥ ते सम्प्रपद्यन्ते। अद्ध्वर्युश्च यजमानश्चाऽऽग्नीध्रश्च प्प्रति-प्प्रस्त्थाता चोन्नेताऽथ योऽन्यः परिचरो भवत्युभे द्वारे-†ऽअपिदधति रक्षोब्भ्यो ह्यबिभयुरथाऽद्ध्वर्युरादित्त्यस्त्थालीं चाऽऽदित्त्यपात्रं चाऽऽदत्ते स ऽउपर्य्युपरि पूतभृतं व्विगृह्णाति

(१) शु० सं० अ० ८ क० १। (२) शु० सं० अ० ८ क० १। (३) शु० सं० अ० ८ क० १।

* का० श्रौ० सू० ९. ९. २१।

† 'अपिदधाति' इति 'च' पुस्तके।

नेद्व्यवश्च्योतदिति ॥ ९ ॥ अथ * गृह्णाति । 'कदा[1] चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय ऽइन्नु ते दानं देवस्य पृच्यत ऽआदित्येभ्यस्त्वे'ति ॥ १० ॥ तं वै नोपयामेन गृह्णीयात् । अग्रे ह्येवैष ऽउपयामेन गृहीतो भवत्यजामितायै जामि ह कुर्याद्यदेनमत्राऽप्युपयामेन गृह्णीयात् ॥ ११ ॥ अथाऽपगृह्य † पुनरानयति । 'कदा[2] चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयाऽऽदित्य सवनं तऽइन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वे'ति ॥ १२ ॥ अथ दधि गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु पशवस्तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयोहितं मध्यत ऽइव गृह्णीयादित्याहुर्मध्यत ऽइव हीदं पशूनां पय ऽइति पश्चादिव त्वेव गृह्णीयात्पश्चादिव हीदं पशूनां पयः ॥ १३ ॥ यद्वेव दधि गृह्णाति । हुतोच्छिष्टा वा ऽएते सꣳस्रवा भवन्ति नाऽलमाहुत्यै तानेवैतत्पुनराप्याययति तथाऽलमाहुत्यै भवन्ति तस्माद्दधि गृह्णाति ॥ १४ ॥ स ‡ गृह्णाति । 'यज्ञो[3] देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आवोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसदादित्येभ्यस्त्वे'ति ॥ १५ ॥ तमुपाꣳशुसवनेन मेक्षयति । विवस्वान्वा ऽएष ऽआदित्यो

---

* का० श्रौ० सू० १०. ४. ३ ।

† का० श्रौ० सू० १०. ४. ४ ।

‡ का० श्रौ० सू० १०. ४. ५ ।

(१) शु० सं० अ० ७ क० ३ । (२) शु० सं० अ० ८ क० २ । (३) शु० सं० अ० ८ क० ४ ।

निदानेन यदुपांशुसवन ऽआदित्यग्रहो वा ऽएष भवति तदेनथ्ँ स्व ऽएव भागे प्प्रीणाति ॥१६॥ [काण्डस्यार्धम् ३१४] तं न दशाभिर्न्न पवित्रेणोपस्पृशति । एते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनश्च सवनमथैतन्निर्द्धीतशुक्रं यत्तृतीयसवनः स यन्न दशाभिर्न्न पवित्रेणोपस्पृशति तेनो हाऽस्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मान्न दशाभिर्न्न पवित्रेणोपस्पृशति ॥ १७ ॥ स * मेक्षयति । 'विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्वे'त्यथोन्नेत्र ऽउपांशुसवनं प्रयच्छत्यथाऽऽहोन्नेतारमास्तृज ग्रावण ऽइति तानाधवनीये वा सृजति चमसे वा ॥ १८ ॥ राजानमुन्नीय । आदित्यानां वै तृतीयसवनमादित्यान्वा ऽअनु ग्रावाणस्तदेनान्त्स्व ऽएव भागे प्प्रीणात्यपोर्ण्णुवन्ति द्वारे ॥१९॥ † अथाऽपिधायोपनिष्क्रामति । रक्षोभ्यो ह्वबिभयुरथाऽऽहाऽऽदित्येभ्योऽनुब्रूहीत्यत्र सम्पश्येद्यदि कामयेताऽऽश्राव्य त्वेव सम्पश्येदादित्येभ्यः प्प्रेष्य 'प्प्रियेभ्यः प्प्रियधामभ्यः प्प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य ऽउरोरन्तरिक्षस्याऽध्यक्षेभ्य' ऽइति वषट्कृते जुहोति नाऽनुवषट्करोति नेत्पशूनग्नौ प्प्रवृणजानीति प्प्रयच्छति प्प्रतिप्प्रस्थात्रे सथ्ँस्रवौ ॥ २० ॥ अथ पुनः प्प्रपद्य ।

* का० श्रौ० सू० १०. ४. ६–८ ।
(१) शु० सं० अ० ८ क० ५ ।
† "अपावृतद्वारे निष्क्रामतो ग्रहमपिधाय पाणिना स्थाल्या वा" (का० श्रौ० सू० १०. ४. १०) ।
(२) का० श्रौ० सू० १०. ४. ११ ।

*आग्रयणमादत्त ऽउदीचीनदशं पवित्रं वितन्वन्ति प्रस्कन्दयत्त्यद्धरुर्युराग्रयणस्य सम्प्रगृह्णाति प्रतिप्रस्थाता सꣳस्रवावानयत्त्युन्नेता चमसेन वोदञ्चनेन वा ॥ २१ ॥ तं चतस्रृणां धाराणामाग्रयणं गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्न्वा ऽअनु गावस्तस्मादिदं गवां चतुर्द्धाविहितं पयस्तस्माच्चतस्रृणां धाराणामाग्रयणं गृह्णाति ॥२२॥ तद्यत्प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति । आदित्यग्रहो वा ऽएष भवति न वा ऽआदित्यग्रहस्याऽनुवषट्करोत्त्येतस्माद्वै सावित्रं ग्रहं ग्रहीष्यन्भवति तदस्य सावित्रेणैवाऽनुवषट्कृतो भवति ॥ २३ ॥ यद्वेव प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति । पुरा वा ऽएभ्य ऽएतद्भिमश्राद् ग्रहमहौषुः पुरा तृतीयसवनात्तृतीयसवनाय वा ऽएष ग्रहो गृह्यते तदादित्यास्तृतीयसवनमपियन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति तस्मात्प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति ॥ २४ ॥ (E)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ सावित्रग्रहः ]

मनो ह वा ऽअस्य सविता । तस्मात्सावित्रं गृह्णाति प्राणो ह वा ऽअस्य सविता तमेवाऽस्मिन्नेतत्पुरस्तात्प्राणं

* का० श्रौ० सू० १०. ५. १ ।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ४. २; कठ० सं० २८. ६; कपि० सं० ४४. ६; तै० सं० ६. ५. ६; मै० सं० ४. ६. ९ ।

दधाति यदुपांशुं गृह्णाति तमेवाऽस्मिन्नेतत्पश्चात्प्राणन्दधाति यत्सावित्रं गृह्णाति ताविमा ऽउभयतः प्प्राणौ हि तौ यश्चाऽयमुपरिष्टाद्यश्चाऽधस्तात् ॥ १ ॥ ऋतवो वै संवत्सरो यज्ञः । तेऽदः प्प्रातःसवने प्प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान्गृह्णात्यथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति न वा ऽअत्रर्त्तुभ्यऽइति कञ्चन ग्रहं गृह्णन्ति नर्त्तुपात्राभ्यां कश्चन ग्रहो गृह्यते ॥ २ ॥ एष वै सविता य ऽएष तपति । एष ऽउऽएव सर्व्वं ऽऋतवस्तदृतवः संवत्सरस्तृतीयसवने प्प्रत्यक्षमवकल्प्यन्ते तस्मात्सावित्रं गृह्णाति ॥ ३ ॥ तं व्वा ऽउपांशुपात्रेण गृह्णाति । मनो ह वा ऽअस्य सविता प्प्राणऽउपांशुस्तस्मादुपांशुपात्रेण गृह्णात्यन्तर्यामपात्रेण वा समानंह्येतद्यदुपांश्वन्तर्यामौ प्प्राणोदानौ हि ॥ ४ ॥ [ अर्धप्रपाठकः ॥६१॥ ] आग्रयणाद् गृह्णाति । मनो ह वा ऽअस्य सविताऽऽत्माऽऽग्रयण ऽआत्मन्न्येवैतन्मनो दधाति प्प्राणो ह वाऽअस्य सविताऽऽत्माऽऽग्रयण ऽआत्मन्न्येवैतत्प्राणन्दधाति ॥५॥ अथाऽतो * गृह्णात्येव । '(१)व्वाममद्य सवितर्व्वाममु श्वो दिवेदिवे व्वाममस्म्मभ्यंसावीः । व्वामस्य हि क्षयस्य देव भूरेरया धिया व्वामभाजः स्याम । उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा ऽअसि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाये'ति ॥ ६ ॥ तं गृहीत्वा न सादयति । मनो ह वा ऽअस्य सविता तस्मादिदमसन्नं मनः

* का० श्रौ० सू० १०. ५. १३ ।
(१) शु० सं० अ० ८ क० ६–७ ।

प्प्राणो ह वा ऽअस्य सविता तस्मादयमसन्नः प्प्राणः सञ्चरत्त्यथाऽऽह * देवाय सवित्रेऽनुब्रूहीत्त्याश्राव्याऽऽह देवाय सवित्रे प्प्रेष्येति वषट्कृते जुहोति नाऽनुवषट्करोति मनो ह वा ऽअस्य सविता नेन्न्मनोऽग्नौ प्प्रवृणजानीति प्प्राणो ह वा ऽअस्य सविता नेत्प्राणमग्नौ प्प्रवृणजानीति ॥ ७ ॥ अथाऽभक्षितेन पात्रेण । वैश्वदेवं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्याऽनुवषट्करोत्त्येतस्माद्वै वैश्वदेवं ग्रहं ग्रहीष्यन्न्भवति तदस्य वैश्वदेवेनैवाऽनुवषट्कृतो भवति ॥ ८ ॥ यद्वेव वैश्वदेवं ग्रहं गृह्णाति । मनो ह वा ऽअस्य सविता सर्वमिदं विश्वे देवाऽइदमेवैतत्सर्वं मनसः कृतानुकरमनुवर्त्म करोति तदिदः सर्वं मनसः कृतानुकरमनुवर्त्म ॥ ९ ॥ यद्वेव वैश्वदेवं ग्रहं गृह्णाति । प्राणो ह वा ऽअस्य सविता सर्वमिदं विश्वे देवाऽअस्मिन्नेवैतत्सर्वस्मिन् प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन् प्राणोदानौ हि तौ ॥ १० ॥ यद्वेव वैश्वदेवं ग्रहं गृह्णाति । वैश्वदेवं वै तृतीयसवनं तदुच्च्यत ऽएव सामतो यस्माद्वैश्वदेवं तृतीयसवनमुच्च्यत ऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं महावैश्वदेवं गृह्णाति ॥ ११ ॥ तं वै पूतभृतो गृह्णाति । वैश्वदेवो वै पूतभृदतो हि देवेभ्य ऽउन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृत् ॥ १२ ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति

* का० श्रौ० सू० १०. ६. १ ।

सर्व्वं वै विश्वे देवा यदृचो यद्यजूᳪंषि यत्सामानि स यदेवैनं विश्वेब्भ्यो देवेब्भ्यो गृह्णाति तेनो हाऽस्यैष पुरोरुङ्मान्न्भवति तस्म्मादपुरोरुक्कं गृह्णाति ॥ १३ ॥ अथाऽतो * गृह्णात्त्येव । 'उपयामगृहीतोऽसि सुशर्म्मासि सुप्प्रतिष्ठान' ऽइति प्प्राणो वै सुशर्म्मा 'सुप्प्रतिष्ठानो बृहदुक्षाय नम' ऽइति प्प्रजापतिर्व्वै बृहदुक्षः प्प्रजापतये नम ऽइत्त्येवैतदाह 'विश्वेब्भ्यस्त्वा देवेब्भ्य ऽएष ते योनिर्व्विश्वेब्भ्यस्त्वा देवेब्भ्य' ऽइति सादयति विश्वेब्भ्यो ह्येनं देवेब्भ्यो गृह्णात्त्यथेत्त्य प्प्राङुपविशति ॥ १४ ॥ स यत्रैताᳪं † होता शᳪंसति । 'एकया च दशभिश्च स्वभूते द्वाब्भ्यामिष्टये विᳪंशती च । तिसृभिश्च वहसे त्रिᳪंशता च नियुद्भिर्वायविह ता विमुञ्च' ऽइति तदेतस्यां वायव्व्यायामृचि पात्राणि विमुच्च्यन्ते वायुप्प्रणेत्रा वै पशवः प्प्राणो वै वायुः प्प्राणेन हि पशवश्चरन्ति ॥ १५ ॥ सह देवेब्भ्यः पशुभिरपचक्राम । तन्देवाः प्प्रातःसवनेऽन्वमन्न्त्रयन्त स नोपाऽऽववर्त्त तं माध्यन्दिने सवनेऽन्वमन्त्रयन्त स ह नैवोपाऽऽववर्त्त तं तृतीयसवनेऽन्वमन्त्रयन्त ॥ १६ ॥ स होपावर्त्स्यन्नुवाच । यद्व ऽउपाऽऽवर्त्तेय किम्मे ततः स्यादिति त्वयैवैतानि पात्राणि युज्येरँस्त्वया विमुच्च्येरन्निति तदेनेनैतत्पात्राणि युज्यन्ते यदै-

* का० श्रौ० सू० १०. ६. २ ।

(१) शु० सं० अ० ८ क० ८ । (२) शु० सं० अ० ८ क० ८ । (३) शु० सं० अ० ८ क० ८ ।

† का० श्रौ० सू० १०. ६. ३,४ ।

(४) शु० सं० अ० २७ क० ३३ ।

न्द्रवायवाग्रान्प्रातःसवने गृह्णात्यथैनेनैतत्पात्राणि विमुच्यन्ते यदाह नियुद्भिर्वायविह ता विमुञ्चेति पशवो वै नियुतस्तत्पशुभिरेवैतत्पात्राणि विमुच्यन्ते ॥ १७ ॥ स यत्प्रातःसवन ऽउपाऽवर्त्स्यत् । गायत्रं वै प्रातःसवनं ब्रह्म गायत्री ब्राह्मणेषु ह पशवोऽभविष्यन्नथ यन्माध्यन्दिने सवन ऽउपाऽवर्त्स्यदैन्द्रं वै माध्यन्दिनꣳ सवनं क्षत्रमिन्द्रः क्षत्रियेषु ह पशवोऽभविष्यन्नथ यत्तृतीयसवनऽउपाऽऽवर्त्तत वैश्वदेवं वै तृतीयसवनꣳ सर्वमिदं विश्वे देवास्तस्मादिमे सर्वत्रैव पशवः ॥ १८ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ सौम्यश्चरुः, पात्नीवतग्रहश्च ]

सौम्येन चरुणा प्रचरति । सोमो वै देवानाꣳ हविरथैतत्सोमायैव हविष्क्रियते तथाऽतः सोमोऽनन्तर्हितो भवति चरुर्भवति चरुर्वै देवानामन्नमोदनो हि चरुरोदनो हि प्रत्यक्षमन्नं तस्माच्चरुर्भवति ॥ १ ॥ तेन न प्रातः सवने प्रचरति । न माध्यन्दिने सवन ऽएते वै देवानां निष्केवल्ये सवने यत्प्रातःसवनश्च माध्यन्दिनश्च सवनं पितृदेवत्यो वै सोमः ॥ २ ॥ स यत्प्रातःसवने वा प्रचरेत् । माध्यन्दिने वा सवने समदꣳ ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तेन तृतीयसवने प्रचरति वैश्वदेवं वै

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ४. ३; कठ० सं० २८. ७; कपि० सं० ४४. ७; तै० सं० ६. ५. ७; मै० सं० ४. ७. १।

तृतीयसवनं तथा ह्यासमदं करोति नानुवाक्यामन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाह ॥ ३ ॥ अथ * चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याऽऽह घृतस्य यजेति वषट्कृते जुहोति तद्या अतः प्राच्य आहुतयो हुता भवन्ति ताभ्य एवैतदन्तर्दधाति तथा ह्यासमदं करोति ॥ ४ ॥ † स आज्यस्योपस्तीर्य । द्विश्चरोरवद्यत्यथो परिष्टादाज्यस्याभिघारयत्याश्राव्याऽऽह सौम्यस्य यजेति वषट्कृते जुहोति ॥ ५ ॥ अथाऽपरं चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याऽऽह घृतस्य यजेति वषट्कृते जुहोति तद्या अत ऊर्द्ध्वा आहुतीर्होष्यन्भवति ताभ्य एवैतदन्तर्दधाति तथा ह्यासमदं करोति स यदि कामयेतोभयतः परियजेद्यद्यु कामयेताऽन्यतरतः परियजेत् ॥ ६ ॥ अथ प्रचरणीति ‡ स्रुग्भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाऽद्धुरुर्धुः शालाकैर्धिष्ण्यान्व्याघारयति तद्यच्छालाकैर्धिष्ण्याञ्व्याघारयति यद्वैनानदो देवा अब्रुवँस्तृतीयसवने वो घृत्याहुतिः प्राप्स्यति न सौम्यापहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवन एव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्याञ्व्याघारयति तानेतैरेव यजुर्भिरुर्यथोपकीर्णं यथापूर्वं व्याघारयति मार्जालीय एवोत्तमम् ॥ ७ ॥

---

* का० श्रौ० सू० १०. ६. ७–९ ।

† अत्र शतम् २६००; का० श्रौ० सू० १०. ६. १०,११ ।

‡ का० श्रौ० सू० १०. ६. १४ ।

तद्वैके । * आग्नीध्रीये पुनराघारयन्त्युदग्न ऽइदं कर्म्माऽनुसन्तिष्ठाता ऽइति तदु तथा न कुर्य्याद्दिमार्ज्जालीय ऽएवोत्तमः ॥ ८ ॥ स यत्राऽध्वर्युः । शालाकैर्द्धिष्ण्याद्ध्याघारयति तत्प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना ऽअन्ततो यज्ञस्य प्रजायन्ते तदेना ऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पात्नीवतं गृह्णाति ॥ ९ ॥ तं वा ऽउपांशुपात्रेण गृह्णाति । यदि सावित्रमुपांशुपात्रेण गृह्णीयादन्तर्य्यामपात्रेणैतं यदि सावित्रमन्तर्य्यामपात्रेण गृह्णीयादुपांशुपात्रेणैतत् समानं ह्येतद्यदुपांश्वन्तर्य्यामौ प्राणो हि यो वै प्राणः स ऽउदानो वृषा वै प्राणो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १० ॥ तं वा ऽअपुरोरुक्कं गृह्णाति । वीर्य्यं वै पुरोरुङ्नेत्स्त्रीषु वीर्य्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति ॥ ११ ॥ अथाऽतो † गृह्णात्येव । 'उप[1]यामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त' ऽइति ब्रह्म वै बृहस्पतिर्ब्रह्मप्रसूतस्य देव सोम त ऽइत्येवैतदा'हे[2]न्दोरिन्द्रियावत' ऽइति वीर्य्यवतऽइत्येवैतदाह यदाहेन्दोरिन्द्रियावत ऽइति 'प[3]त्नीवतो ग्रहाँ२ऽऋध्यासमि'ति न सम्प्रति पत्नीभ्यो गृह्णाति नेत्स्त्रीषु

* का० श्रौ० सू० १०. ६. १५।

† का० श्रौ० सू० १०. ६. १६।

(१) शु० सं० अ० ८ क० ९। (२) शु० सं० अ० ८ क० ९। (३) शु० सं० अ० ८ क० ९।

व्वीर्य्यं दधानीति तस्मान्न सम्प्रति पत्नीभ्यो गृह्णाति ॥ १२ ॥ अथ स्रुचः प्रचरण्याऽ सᳫँस्रवः परिशिष्टो भवति। तेनैनᳫँ श्रीणाति समर्द्धयति वा ऽअन्न्याद्ग्रहा-ञ्छ्रीणन्नथैतं व्व्यर्द्धयति व्वज्रो वा ऽआज्यमेतेन वै देवा व्वज्रेणाऽऽज्येनाऽघ्नन्नेव पत्नीर्न्निराक्ष्णुवँस्ता हता निरष्टा नाऽऽत्मनश्च्च नैशत न दायस्य च नैशत तथो ऽएवैष ऽएतेन व्वज्रेणाऽऽज्येन हन्त्येव पत्नीर्न्निरक्ष्णोति ता हता निरष्टा नाऽऽत्मनश्च्च नेशते न दायस्य च नेशते ॥१३॥ स* श्रीणाति। '[1]अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताऽभूत्। अहᳫँ सूर्य्यमुभयतो ददर्शाऽहं देवानां परमं गुहा यदि'ति स यदह महमिति श्रीणाति पुᳫँस्वेवैतद्वीर्य्यं दधाति ॥ १४ ॥ † अथा-ऽऽहाऽग्नीत्पात्नीवतस्य यजेति। व्वृषा वा ऽअग्नीद्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स जुहो'[2]त्यग्ना३ ऽइपत्नीवन्नि'ति व्वृषा वा ऽअग्निर्य्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १५ ॥ '[3]सजूर्द्देवेन त्वष्ट्रे'ति। त्वष्टा वै सिक्तᳫँ रेतो व्विकरोति तदेष ऽएवैतत्सिक्तᳫँ रेतो व्विकरोति '[4]सोमं पिब स्वाहे'त्युत्तरार्द्धे जुहोति या ऽइतरा ऽआहुतयस्ते देवा-ऽअथैताः पत्न्य ऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्रीपुमाᳫँसमुपशेत ऽआहरत्यद्ध्वर्य्युरग्नीधे भक्षᳫँ स-

* का० श्रौ० सू० १०. ६. १७।

(१) शु० सं० अ० ८ क० ९।

† का० श्रौ० सू० १०. ६. १८, १९।

(२) शु० सं० अ० ८ क० १०। (३) शु० सं० अ० ८ क० १०। (४) शु० सं० अ० ८ क० १०।

ऽआहाऽद्धुरर्षं ऽउप मा ह्वयस्वेति तं न प्रत्युपह्वयेत को हि हतस्य निरष्टस्य प्रत्युपहवस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याऽग्नौ वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत ॥ १६ ॥

अथ सम्प्रेष्यति । * अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नी-मुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच ऽइति यद्यग्निष्टोमः स्यात् ॥१७॥ † यद्युक्थ्यः स्यात् । सोमं प्रभावयेति ब्रूयात्स बिभ्रदेवैतत्पात्रमग्नीन्ने-ष्टुरुपस्थमासीदत्यग्निर्वा ऽएष निदानेन यदाग्नीध्रो योषा नेष्टा वृषा वा ऽअग्नीद्योषा नेष्टा मिथुनमेवैतत्प्रजननं क्रियत ऽउदानयति नेष्टा पत्नीं तामुद्गात्रा ‡ संख्यापयति 'प्रजापतिर्वृषाऽसि रेतोधा रेतो मयि धेहीति' प्रजापतिर्वा-ऽउद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१८॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ हरियोजनग्रहः ]

पशवो वै देवानां छन्दाᳪंसि । तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाᳪंसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र छन्दाᳪंसि देवान्त्समतर्प्पयन्नथ च्छन्दाᳪंसि

* का० श्रौ० सू० १०. ६. २० ।

† "सोमं प्रभावयेत्युक्थ्यादिषु" ( का० श्रौ० सू० १०. ६. २१ )

‡ का० श्रौ० सू० १०. ७. ३ ।

( १ ) शु० सं० अ० ८ क० १० ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ४. ४; कठ० सं० २८. ८; कपि० ४४. ८; तै० सं० ६. ५. ८ । मै० सं० ४. ७. ४ ।

देवाः समतर्प्पयँस्तदुतस्तत्प्रागभूद्यच्छन्दाᳬंसि शुक्रानि देवेभ्यो यज्ञमवाक्षुर्य्यदेनान्त्समतीतृपन् ॥ १ ॥ अथ हारियोजनं गृह्णाति । छन्दाᳬंसि वै हारियोजनश्छन्दाᳬंस्येवैतत्सन्तर्प्पयति तस्माद्धारियोजनं गृह्णाति ॥ २ ॥ तं वा ऽअतिरिक्तं गृह्णाति । यदा हि शंय्योराहाऽथैनं गृह्णातीदं वै देवा ऽअथ च्छन्दाᳬंस्यतिरिक्तान्यथ मनुष्या ऽअथ पशवोऽतिरिक्तास्तस्मादतिरिक्तं गृह्णाति ॥ ३ ॥ द्रोणकलशे गृह्णाति । वृत्रो वै सोम ऽआसीत्तं यत्र देवा ऽअघ्नँस्तस्य मूर्द्धोद्ववर्त्त स द्रोणकलशोऽभवत्तस्मिन्न्यावान्वा यावान्वा रसः समस्रवदतिरिक्तो वै स ऽआसीदतिरिक्त-ऽएष ग्रहस्तदतिरिक्त ऽएवैतदतिरिक्तं दधाति तस्माद्द्रोणकलशे गृह्णाति ॥४॥ तं वा ऽअपुरोरुक्कं गृह्णाति। छन्दोभ्यो ह्येनं गृह्णाति स यद्वेवैनं छन्दोभ्यो गृह्णाति तेनो हाऽस्यैष पुरोरुङ्मान्भवति तस्मादपुरोरुक्कं गृह्णाति॥५॥ * अथाऽतो गृह्णात्येव । 'उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यान्त्वे'त्यृक्सामे वै हरी ऽऋक्सामाभ्याᳬं ह्येनं गृह्णाति ॥ ६ ॥ अथ † धाना ऽआवपति । 'हर्य्योर्द्धाना स्थ सह सोमा ऽइन्द्राये'ति तद्यदेवाऽत्र मितश्च छन्दोऽमितश्च तदेवैतत्सर्वं भक्षयति ॥ ७ ॥ तस्योन्नेताऽऽश्रावयति । अतिरिक्तो वा ऽउन्नेता न ह्येषोऽन्न्यस्याऽऽश्रावयत्यतिरिक्त ऽएष

---

* का० श्रौ० सू० १०. ८. १ ।
( १ ) शु० सं० अ० ८ क० ११ ।
† का० श्रौ० सू० १०. ८. २ ।

ग्रहस्तदुतिरिक्त ऽएवैतदुतिरिक्तं दधाति तस्म्मादुन्नेताऽऽश्रावयति ॥ ८ ॥ * मूर्द्धन्नधिनिधायाऽऽश्रावयति । मूर्द्धा ह्यस्यैषोऽथाऽऽह † धाना सोमेब्भ्योऽनुब्रूहीत्त्याश्राव्व्याऽऽह धाना सोमान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोत्त्यनुवषट्कृतेऽथ धाना व्विलिप्प्सन्ते भक्षाय ॥ ९ ॥ ‡ तद्धैके । होत्रे द्रोणकलशं प्रतिपराऽऽहरन्ति वषट्कर्त्तुर्ब्भक्ष ऽइति वदन्तस्तदु तथा न कुर्य्याद्यथा चमसं वा ऽअन्न्ये भक्षा ऽअथैषोऽतिरिक्तस्तस्म्मादेतस्म्मिन्त्सर्व्वेषामेव भक्षस्तस्म्माद्धाना व्विलिप्प्सन्ते भक्षाय ॥ १० ॥ ता न दद्भिः खादेयुः । पशवो वा ऽएते नेत्पशून्प्रम्म्रदे करवामहा ऽइति प्प्राणैरेव ‡‡ भक्षयन्ति 'यस्ते ऽअ[1]श्वसनिर्ब्भक्षो यो गोसनिरि'ति पशवो ह्येते तस्म्मादाह यस्ते ऽअश्वसनिर्ब्भक्षो यो गोसनिरिति '[2]तस्यं त ऽइष्ट यजुषस्तुतस्तोमस्ये'तीष्टानि हि यजूंषि भवन्ति स्तुता स्तोमाः 'शस्[3]तोक्थस्ये'ति शस्तानि ह्युक्थानि भव'न्त्युपै[4]हतस्योपहूतो भक्षयामी'त्त्युपहूतस्य ह्येतदुपहूतो भक्षयति ॥ ११ ॥ ता नाऽग्नौ प्प्रकिरेयुः । नेदुच्छिष्टमग्नौ जुहवामेत्त्युत्तरवेदावेव निवपन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति ॥ १२ ॥ अथ पूर्ण्णपात्रान्त्समवमृशन्ति । यानेकेऽप्प्सुषोमा ऽइत्त्याचक्षते

---

* 'ग' पुस्तके 'मूर्द्धन्नभिनिधाय' इति पाठः ।

† का० श्रौ० सू० १०. ८. ३ ।

‡ का० श्रौ० सू० १०. ८. ५ ।

‡‡ का० श्रौ० सू० १०. ८. ६ ।

(१) शु० सं० अ० ८ क० ११ । (२) शु० सं० अ० ८ क० १२ । (३) शु० सं० अ० ८ क० १२ । (४) शु० सं० अ० ८ क० १२ ।

यथा वै युक्तो व्वहेदेवमेते य ऽआर्त्त्विज्ज्यं कुर्व्वन्त्युत वै युक्तः क्षणुते वा व्वि वा *लिशन्ते शान्तिरापो भेषजं तद्यदेवाऽत्र क्षणवते वा व्वि वा लिशन्ते शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः सन्दधते तस्मात्पूर्ण्णपात्रान्त्समवमृशन्ति ॥१३॥ ते †समवमृशन्ति 'सं व्वर्च्चसा पयसा सन्तनूभिरगन्म्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्न्वो यद्विलिष्टमि'ति यद्विवृढं तत्सन्दधते ॥ १४ ॥ अथ मुखान्न्युपस्पृशन्ते । द्वयं तद्यस्म्मान्न्मुखान्न्युपस्पृशन्तेऽमृतं वा ऽआपोऽमृतेनैवैतत्सꣳस्पृशन्ते ऽएतदु चैवैतत्कर्म्माऽऽत्मन्न्कुर्व्वते तस्म्मान्न्मुखान्न्युपस्पृशन्ते ॥१५॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ समिष्टयजुर्होमः ]

तानि वा ऽएतानि । नव समिष्टयजूꣳषि जुहोति तद्यन्नव समिष्टयजूꣳषि जुहोति नव वा ऽअमूर्बहिष्पवमाने स्तोत्रिया भवन्ति सैषोभयतोन्न्यूना व्विराट् प्रजननायैतस्म्माद्वा ऽउभयतो न्न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृज ऽइतश्चोर्द्ध्वा ऽइतश्चाऽवाचीस्तथो ऽएवैष ऽएतस्म्मादुभयत ऽएव न्न्यूनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्द्ध्वाऽइतश्चाऽवाचीः ॥ १ ॥ हिङ्कार स्तोत्रियाणां दशमः ।

* 'लिशते' इति 'क-ग' पुस्तकयोः पाठः ।

† का० श्रौ० सू० १०. ८. ८ ।

( १ ) शु० सं० अ० ८ क० १३ ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. १; कठ० सं० २८. ९; कपि० ४४. ९; तै० सं० ६. ५. ९; मै० सं० ४. ७. ४ ।

स्वाहाकार ऽएतेषां तथो हाऽस्यैषा न्न्यूना विराड्दशं-दशिनी भवति ॥ २ ॥ अथ यस्मात्समिष्टयजूꣳषि नाम । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञ-स्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतानि जुहोति तस्मात्समिष्टयजूꣳषि नाम ॥ ३ ॥ अथ यस्मात्समिष्टयजूꣳषि जुहोति । रिरिचान-ऽइव वा ऽएतदीजानस्याऽऽत्मा भवति यद्ध्यस्य भवति तस्य हि ददाति तमेवाऽतस्त्रिभिः पुनराप्यायययति ॥ ४ ॥ अथ यान्न्युत्तराणि त्रीणि जुहोति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायत ऽउप हैव ता-ऽआसते यावन्न समिष्टयजूꣳषि जुह्वतीमानि नु नो जुह्व-त्विति ता ऽएवैतद्यथायथं व्व्यवसृजति यत्र यत्राऽऽसां चरणं तदनु ॥ ५ ॥ अथ यन्न्युत्तमानि त्रीणि जुहोति। यज्ञं वा-ऽएतदजीजनत यदेनमतत तं जनयित्वा यत्राऽस्य प्प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजूꣳषि जुहोति ॥ ६ ॥ स * जुहोति । 'समिन्द्र[1] णो मनसा नेषि गोभिरि'ति मनसेति तन्मनसा रिरिचानमाप्यायययति गोभिरिति तद् गोभी रिरिचानमाप्यायययति 'सꣳसूरि[2]भिर्म्मघवन्त्सꣳ स्वस्त्या । सम्ब्रह्मणा देवकृतं यदस्ती'ति ब्रह्मणेति तद् ब्रह्मणा रिरिचानमाप्यायययति 'सन्देवा[3]नाꣳ सुमतौ यज्ञियानाꣳ स्वाहा' ॥ ७ ॥ 'सं व्वर्[4]चसा । पयसा सन्तनू-

* का० श्रौ० सू० १०. ८. १२ ।

(१) शु० सं० अ० ८ क० १५ । (२) शु० सं० अ० ८ क० १५ । (३) शु० सं० अ० ८ क० १५ । (४) शु० सं० अ० ८ क० १६ ।

भिरि'ति वर्च्चसेति तद्वर्च्चसा रिरिचानमाप्प्याययति पयसेति रसो वै पयस्तत्पयसा रिरिचानमाप्प्यायय'त्त्यगन्न्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमि'ति यद् विवृढं तत्सन्दधाति ॥ ८ ॥ 'धाता रातिः । सवितेदं जुषन्तां प्रजापतिर्न्निधिपा देवो ऽअग्निः । त्वष्टा विष्णुः प्प्रजया सꣳरराणा यजमानाय द्रविणं दधात स्वाहे'ति तद्देव रिरिचानं पुनराप्प्याययति यदाह यजमानाय द्रविणं दधात स्वाहेति ॥ ९ ॥ 'सुगावो देवाः । सदना-ऽअकर्म्म य ऽआजग्मेदꣳ सवनं जुषाणा' ऽइति सुगानि वो देवाः सदनान्न्यकर्म्म य ऽआगन्तेदꣳ सवनं जुषाणा-ऽइत्त्येवैतदाह भरमाणा वहमाना हवीꣳषीति तद्देवता ऽव्यवसृजति भरमाणा ऽअह ते यन्तु येऽवाहना वहमाना-ऽउ ते यन्तु ये वाहनवन्त ऽइत्त्येवैतदाह तस्म्मादाह 'भरमाणा वहमाना हवीꣳष्यस्म्मे धत्त वसवो वसूनि स्वाहा' ॥ १० ॥ 'याँ२ ऽआवहः । उशतो देव देवाँस्तान्प्रेरय स्वे-ऽअग्ने सधस्त्थ' ऽइत्त्यग्निं वा ऽआहाऽमून्देवानावहाऽमून्दे-वानावहेति तमेवैतदाह यान्देवानावाक्षीस्तान्न्गमय यत्र यत्रैषां चरणं तदन्न्विति जक्षिवाꣳसः पपिवाꣳसश्च्च विश्व ऽइति जक्षिवाꣳसो हि पशुं पुरोडाशं भवन्ति पपिवा-ꣳस ऽइति पपिवाꣳसो हि सोमꣳ राजानं भवन्ति तस्म्मा-दाह 'जक्षिवाꣳसः पपिवाꣳसश्च्च विश्वेऽसुं घर्म्मꣳ

(१) शु० सं० अ० ८ क० १६। (२) शु० सं० अ० ८ क० १७। (३) शु० सं० अ० ८ क० १८। (४) शु० सं० अ० ८ क० १८। (५) शु० सं० अ० ८ क० १९। (६) शु० सं० अ० ८ क० १९।

स्वरातिष्ठताऽनु स्वाहे'ति तद्देव देवता व्यवसृजति ॥११॥ 'वयꣳ हि त्वा। प्रयति यज्ञे ऽअस्मिन्नग्ने होतारमवृणीमहीह। ऋधगया ऽऋधगुताऽशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहे'त्यग्निमेवैतया विमुञ्चत्यग्निं व्यवसृजति ॥१२॥ 'देवा गातुविद' ऽइति। गातुविदो हि देवा 'गातुं वित्त्वे'ति यज्ञं वित्त्वेत्येवैतदाह 'गातुमिते'ति तदेतेन यथायथं व्यवसृजति 'मनसस्पत ऽइमं देव यज्ञꣳ स्वाहा वाते धा' ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञꣳ सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्दधाति तस्मादाह स्वाहा वाते धा ऽइति ॥ १३ ॥ 'यज्ञ यज्ञं गच्छ। यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहे'ति तत्प्रतिष्ठितमेवैतद्यज्ञꣳ सन्तꣳ स्वायां योनौ प्रतिष्ठापय'त्येष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहे'ति तत्प्रतिष्ठितमेवैतद्यज्ञꣳ सन्तꣳ सहसूक्तवाकꣳ सर्ववीरं यजमानेऽन्ततः प्रतिष्ठापयति ॥ १४ ॥ (D)

## चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

### माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥१२२॥



(१) शु० सं० अ० ८ क० २०। (२) शु० सं० अ० ८ क० २१। (३) शु० सं० अ० ८ क० २१। (४) शु० सं० अ० ८ क० २१। (५) शु० सं० अ० ८ क० २१। (६) शु० सं० अ० ८ क० २२। (७) शु० सं० अ० ८ क० २२।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. २; कठ० सं० २९. ३; कपि० ४५. ४; तै० सं० ६. ६. २; मै० सं० ४. ८. ४।

[ अवभृथः ]

स वा ऽअवभृथमभ्यवैति । तद्यदवभृथमभ्यवैति यो वा ऽअस्य रसोऽभूदाहुतिभ्यो वा ऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति तन्न परास्यं तदपोऽभ्यवहरन्ति रसो वा ऽआपस्तदस्मिन्नेतꣳ रसं दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति स ऽएनं जात ऽएव सन् जनयति तद्यदपोऽभ्यवहरन्ति तस्मादवभृथः ॥१॥ अथ समिष्टयजूꣳषि जुहोति । समिष्टयजूꣳषि ह्येवाऽन्तो यज्ञस्य स हुत्वैव समिष्टयजूꣳषि यदेतमभितो भवति तेन चात्वालमुप समायन्ति स कृष्णविषाणाञ्च मेखलाञ्च * चात्वाले प्रास्यति ॥ २ ॥ [1]'माऽहिर्भूर्म्मा पृदाकुरि'ति । असौ वाऽऋजीषस्य त्वगाकारो यदेनदपोऽभ्यवहरन्त्यथैष ऽएवैतस्य त्वगाकारो रज्जुरिव हि सर्प्पाः कूपा ऽइव हि सर्प्पाणामायतनान्न्यस्ति वै मनुष्याणां च सर्प्पाणां च विभ्रातृव्यमिव नेत्तदतः सम्भवदिति तस्मादाह माऽहिर्भूर्म्मा पृदाकुरिति ॥ ३ ॥ अथ वाचयति । [2]'उरुꣳ हि राजा वरुणश्चकार सूर्य्याय पन्थामन्वेतवा ऽउ' ऽइति यथाऽयमुरुरभयोऽनाष्ट्रः सूर्य्याय पन्था ऽएवं मेऽयमुरुरभयोऽनाष्ट्रः पन्था ऽअस्त्वित्येवैतदाह ॥ ४ ॥ [3]'अपदे पादा प्रतिधातवेऽकरि'ति । यदि ह वा ऽअप्यपाद्भवत्यलमेव प्रतिक्रमणाय भवत्युता'ऽपवक्ता हृदयाविधश्चिदि'ति

* "कृष्णविषाणमेखले चात्वाले प्रास्यति माहिर्भूरिति" (का० श्रौ० सू० १०. ८. १५)।

(१) शु० सं० अ० ८ क० २३। (२) शु० सं० अ० ८ क० २३। (३) शु० सं० अ० ८ क० २३। (४) शु० सं० अ० ८ क० २३।

तदेनꣳ सर्वस्माद्व्रूद्याद्देनसः पाप्मनः प्रमुञ्चति ॥ ५ ॥
अथाऽऽह साम गायेति । साम ब्रूहीति वा गायेति त्वेव
ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिदं बहिर्द्धा
यज्ञाच्छरीरं नाष्ट्रा रक्षाꣳसि हिनसन्निति साम हि
नाष्ट्राणाꣳ रक्षसामपहन्ता ॥ ६ ॥ आग्नेय्यां गायति ।
अग्निर्हि रक्षसामपहन्ताऽतिच्छन्दसि गायत्येषा वै सर्वाणि
छन्दाꣳसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति
॥ ७ ॥ स गायति । 'अग्निष्टपति प्रतिदहत्यहावोऽहाव'
ऽइति तन्नाष्ट्रा ऽएवैतद्रक्षाꣳस्यतोऽपहन्ति ॥ ८ ॥ त ऽउ-
दञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाऽऽग्नीध्रꣳ स
यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ॥ ९ ॥ स यः
स्यन्दमानानाꣳ स्थावरो ह्रदः स्यात् । तमपोऽभ्यवेयादेता
वा ऽअपां वरुणगृहीता याः स्यन्दमानानां न स्यन्दन्ते
वरुण्यो वा ऽअवभृथो निर्वरुणतायै यद्यु ता न विन्देदपि या-
ऽएव काश्चाऽपोऽभ्यवेयात् ॥१०॥ * तमपोऽवक्रमयन्न्वा-
चयति । 'नमो वरुणायाऽभिष्ठितो वरुणस्य पाश' ऽइति
तदेनꣳ सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥११॥
अथ चतुर्गृहीतमाज्यं गृहीत्वा । समिधं † प्रास्याऽभि-
जुहो[2]त्यग्नेरनीकमप ऽआविवेशाऽपां नपात्प्रतिरक्षन्नसुर्य्यम् ।
दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्य-

* का० श्रौ० सू० १०. ८. २३ ।
(१) शु० सं० अ० ८. क० २३ ।
† का० श्रौ० सू० १०. ८. २४ ।
(२) शु० सं० अ० ८. क० २४ ।

रस्वाहे॒ति ॥१२॥ अग्नेर्ह वै देवाः । यावद्वा यावद्वाऽप्सु प्रवेशयांश्चक्रुर्नेदुतो नाष्ट्रा रक्षाᳬंस्युपोत्तिष्ठानित्त्यग्निर्हि रक्षसामपहन्ता तमेतया च समिधैतया चाऽऽहुत्त्या समिन्धे समिद्धे देवेभ्यो जुहवानीति ॥१३॥ अथाऽपरं चतुर्ग्गृहीतमाज्यं गृहीत्त्वा । आश्राव्याऽऽह समिधो यजेति सोऽपबर्हिषश्चतुरः प्प्रयाजान्न्यजति प्प्रजा वै बर्हिर्व्वरुण्यो वा ऽअवभृथो नेत्प्रजा व्वरुणो गृह्णादिति तस्म्मादुपबर्हिषश्चतुरः प्प्रयाजान्न्यजति ॥ १४ ॥ अथ * व्वारुण ऽएककपालः पुरोडाशो भवति । यो वा ऽअस्य रसोऽभूदाहुतिभ्यो वा ऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति रसो वै पुरोडाशस्तदस्मिन्नेतᳬं रसन्दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति स ऽएनं जात ऽएव सञ्जनयति तस्म्माद्वारुण ऽएककपालः पुरोडाशो भवति ॥ १५ ॥ स ऽआज्यस्योपस्तीर्य । पुरोडाशस्याऽवद्यन्नाह व्वरुणायाऽनुब्रूहीत्यत्र हैक ऽऋजीषस्य द्विरवद्यन्ति तदु तथा न कुर्य्याच्छरीरं व्वा ऽएतद्भवति नाऽलमाहुत्त्यै द्विरवद्यति सकृदभिघारयति प्प्रत्त्यनक्त्यवदाने ऽआश्राव्याऽऽह व्वरुणं ष्यजेति व्वषट्कृते जुहोति ॥ १६ ॥ अथाऽऽज्यस्योपस्तीर्य । पुरोडाशमवदधदाहाऽग्नीवरुणाभ्यामनुब्रूहीति तत्स्विष्टकृते स यन्नाऽग्नय ऽइत्त्याह नेदग्निं व्वरुणो गृह्णादिति स यद्यमुत्रर्ज्जीषस्य † द्विरवद्येदथाऽत्र सकृद्यद्यु न

* का० श्रौ० सू० १०. ८. २७ ।

† का० श्रौ० सू० १०. ८. ३० ।

नाऽऽद्रियेताऽथोपरिष्टाद् द्विराज्यस्याऽभिघारयत्त्याश्राव्व्या-ऽऽह्वाऽग्नीवरुणौ यजेति वषट्कृते जुहोति ॥ १७ ॥ ता वाऽएताः। षडाहुतयो भवन्ति षड्वा ऽऋतवः संवत्सरस्य संवत्सरो वरुणस्तस्मात्षडाहुतयो भवन्ति ॥ १८ ॥ एतदादित्यानामयनम्। आदित्यानीमानि यजूᳬषीति वा ऽआहुः स यावदस्य वशः स्यादेवमेव चिकीर्षेद्यद्यु ऽएनमितरथा यजमानः कर्त्तवै ब्रूयादितरथो तर्हि कुर्य्यादेतानेव चतुरः प्प्रयाजाननपबर्हिषो यजेद् द्वावाज्यभागौ वरुणमग्नीवरुणौ द्वावनुयाजावपबर्हिषौ तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १९ ॥ एतदङ्गिरसामयनम्। अतोऽन्यतरत्कृत्वा * यस्मिन्कुम्भ ऽऋजीषं भवति तं प्रप्लावयति 'समुद्रे[१] ते हृदयमप्स्वन्तरि'त्यापो वै समुद्रो रसो वा ऽआपस्तस्मिन्नेतः रसन्दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति स ऽएनं जात ऽएव सञ्जनयति 'सन्त्वा[२] विशन्त्वोषधीरुताऽऽप' ऽइति तदस्मिन्नुभयः रसन्दधाति यश्चौषधिषु यश्चाऽप्सु 'यज्ञस्य[३] त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहे'ति तद्यदेव यज्ञस्य साधु तदेवाऽस्मिन्नेतद्दधाति ॥ २० ॥ † अथाऽनुसृज्योपतिष्ठते। 'देवीराप[४] ऽएष वो गर्भ' ऽइत्यपाᳬ ह्येष

* का० श्रौ० सू० १०. ९. ११.

(१) शु० सं० अ० ८ क० २५। (२) शु० सं० अ० ८ क० २५। (३) शु० सं० अ० ८ क० २५।

† का० श्रौ० सू० १०. ९. २।

(४) शु० सं० अ० ८ क० २६।

गर्ब्भ'स्तꣳ सुप्रीतꣳ[1] सुभृतं बिभृते'ति तदेनमद्भ्यः परिददाति गुप्त्यै 'देव सोमैष[2] ते लोक' इत्त्यापो ह्येतस्य लोक'स्तस्मिञ्छञ्च[3] वक्ष्व परि च वक्ष्वे'ति तस्मिन्नः शञ्चैधि सर्व्वाभ्यश्च्च न आर्त्तिभ्यो गोपायेत्त्येवैतदाह ॥ २१ ॥ * अथोपमारयति । 'अवभृथ[4] निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्द्देवकृतमेनोऽयासिषमव मर्त्त्यैर्म्मर्त्त्यकृतमि'त्यव ह्येतद्देवैर्द्देवकृतमेनोऽयासीत्सोमेन राज्ञाऽव मर्त्त्यैर्म्मर्त्त्यकृतमित्यव ह्येतन्मर्त्त्यैर्म्मर्त्त्यकृतमेनोऽयासीत्पशुना पुरोडाशेन 'पुरुराव्णो[5] देव रिषस्पाही'ति सर्व्वाभ्यो माऽऽर्त्तिभ्यो गोपायेत्त्येवैतदाह ॥ २२ ॥ अथाऽभ्यवेत्य स्नातः । अन्न्योऽन्न्यस्य पृष्ठे प्प्रधावतस्तावन्न्ये वाससी परिधायोदेतः स यथाऽहिस्त्वचो निर्म्मुच्च्येतैवꣳ सर्व्वस्मात्पाप्मनो निर्म्मुच्च्यते तस्मिन्न तावच्च नैनो भवति यावत्कुमारेऽद्गुति स येनैव निष्क्रामन्ति तेन पुनरायन्ति पुनरेत्त्याऽऽहवनीये समिधमभ्यादधाति 'देवानाꣳ[6] समिदसी'ति यजमानमेवैतया समिन्धे देवानाꣳ हि समिद्धिमनु यजमानः समिद्ध्यते ॥ २३ ॥ (E)

चतुर्थाध्याये पंचमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

* का० श्रौ० सू० १०. ९. ३।

(१) शु० सं० अ० ८ क० २६। (२) शु० सं० अ० ८ क० २६। (३) शु० सं० अ० ८ क० २६। (४) शु० सं० अ० ८ क० २७। (५) शु० सं० अ० ८ क० २७। (६) शु० सं० अ० ८ क० २७।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. ३; तै० सं० ६, ६, ३; कठ० सं० २९, ३; कपि० सं० ४५, ४; मै० सं० ४. ८, ५।

[ उदयनीयेष्टिः ]

आदित्येन चरुणोदयनीयेन प्रचरति । तद्यदादित्यश्चरुर्भवति यद्वेवैनामदो देवा ऽअब्रुवँस्तवैव प्रायणीयस्तवोदयनीय ऽइति तमेवाऽस्या ऽएतदुभयत्र भागं करोति ॥ १ ॥ स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्न्यजते । तस्मात्तत्प्रायणीयं नामाऽथ यदत्राऽवभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम तद्वा ऽएतत्समानमेव हविरदित्या ऽएव प्रायणीयमदित्या ऽउदयनीयमियꣳ ह्येवाऽदितिः ॥ २ ॥ स वै पत्थ्यामेवाऽग्रे स्वस्तिं यजति । तद्देवा ऽअप्रज्ञायमाने वाचैव प्रत्यपद्यन्त वाचा हि मुग्धं प्रज्ञायतेऽथाऽत्र प्रज्ञाते यथापूर्वं करोति ॥ ३ ॥ सोऽग्निमेव प्रथमं यजति । अथ सोममथ सवितारमथ पत्थ्याꣳ स्वस्तिमथाऽदितिं वाग्वै पत्थ्या स्वस्तिरियमदितिरस्यामेव तद्देवा वाचं प्रत्यष्ठापयन्त्सेयं वागस्यां प्रतिष्ठिता वदति ॥ ४ ॥ अथ मैत्रावरुणीं वशामनूबन्ध्यामालभते । स ऽएषोऽन्न्य ऽएव यज्ञस्तायते पशुबन्ध ऽएव समिष्टयजूꣳषि ह्येवाऽन्तो यज्ञस्य ॥ ५ ॥ तद्यन्मैत्रावरुणी वशा भवति । यद्वा ऽईजानस्य स्विष्टं भवति मित्रोऽस्य तद् गृह्णाति यद्वस्य दुरिष्टं भवति वरुणोऽस्य तद् गृह्णाति ॥ ६ ॥ तदाहुः । केजानोऽभूदिति तद्यदेवाऽस्याऽत्र मित्रः स्विष्टं गृह्णाति तदेवाऽस्मा ऽएतया प्रीतः प्रत्यवसृजति यदु चाऽस्य वरुणो दुरिष्टं गृह्णाति तच्चैवाऽस्मा ऽएतया प्रीतः स्विष्टं करोति तदु चाऽस्मै प्रत्यवसृजति सोऽस्यैष

स्व ऽएव यज्ञो भवति स्वहः सुकृतम् ॥ ७ ॥ तद्यन्मैत्रावरुणी वशा भवति। यत्र वै देवाः रेतः सिक्तं प्राऽजनयँस्तदाग्निमारुतमित्युक्थं तस्मिँस्तद्व्याख्यायते यथा तद्देवा रेतः प्प्राऽजनयँस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्न्ये पशवः ॥ ८ ॥ अथ यद्भासाः पांशसवः पर्य्यशिष्यन्त। ततो गर्द्दभः समभवत्तस्माद्यत्र पांशुलं भवति गर्द्दभस्थानमिव बतेत्याहुरथ यदा न कश्चन रसः पर्य्यशिष्यत तत ऽएषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं य्यज्ञस्याऽनुवर्त्तते तस्माद्वाऽएषाऽत्र मैत्रावरुणी वशाऽवक्लृततमा भवति यदि वशां न विन्देदप्प्युक्षवश ऽएव स्यात् ॥ ९ ॥ अथैतरं विश्वे देवा* ऽअमरीमृश्यन्त। ततो वैश्वदेवी समभवदथ बार्हस्प्पत्त्या सोऽन्तोऽन्तो हि बृहस्प्पतिः ॥ १० ॥ स यः सहस्रं वा भूयो वा दद्यात्। स ऽएनाः सर्व्वा ऽआलभेत। सर्व्वं वै तस्याऽऽप्तं भवति सर्व्वं जितं य्यः सहस्रं वा भूयो वा ददाति सर्व्वमेता ऽएवमेव यथापूर्व्वं मैत्रावरुणीमेवाऽग्रेऽथ वैश्वदेवीमथ बार्हस्प्पत्त्याम् ॥ ११ ॥ अथो ये दीर्ग्घसत्रमासीरन्। संवत्सरं वा भूयो वा त ऽएनाः सर्व्वा ऽआलभेरन्त्सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं य्ये दीर्ग्घसत्रमासते संवत्सरं वा भूयो वा सर्व्वमेता ऽएवमेव यथापूर्व्वम् ॥ १२ ॥ अथोदवसानीययेष्ट्या यजते। स ऽआग्नेयं

* 'अमरीमृत्स्यन्त' इति पाठः 'ग' पुस्तके।

पञ्चकपालं पुरोडाशं निर्वपति तस्य पञ्चपदाः पङ्क्तयो याज्याऽनुवाक्या भवन्ति यातयामेव वा ऽएतदीजानस्य यज्ञो भवति सोऽस्मात्पराङिव भवत्यग्निर्वै सर्वे यज्ञाऽअग्नौ हि सर्वान्यज्ञाँस्तन्वते ये च पाकयज्ञा ये चेतरे तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १३ ॥ तद्यत्पञ्चकपालः पुरोडाशो भवति। पञ्चपदाः पङ्क्तयो याज्याऽनुवाक्याः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १४ ॥ तस्य हिरण्यं दक्षिणा। आग्नेयो वा ऽएष यज्ञो भवत्यग्नेरेतो हिरण्यं तस्माद्धिरण्यं दक्षिणाऽनड्वान्वा स हि वहेनाऽऽग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति ॥ १५ ॥ अथो चतुर्गृहीतमेवाऽऽज्यं गृहीत्वा। वैष्णव्यर्चा जुहो'त्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र-प्र यज्ञपतिं तिर स्वाहे'ति यज्ञो वै विष्णुस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्याऽयातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति तत्रो यच्छक्नुयात्तद्दद्यान्नाऽदक्षिणꣳ हविः स्यादिति ह्याहुरथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोति काल ऽएव प्रातराहुतिम् ॥ १६ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) शु० सं० अ० ५ क० ३८।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ५. ४।

[ आनुबन्ध्ययागः ]

वशामालभन्ते । तामालभ्य संज्ञपयन्ति संज्ञप्याऽऽह वपामुत्खिदेत्युत्खिद्य वपामनुमर्शं गर्भमेष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन्न्यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥ न वै तदवकल्पते । यदेकां मन्यमाना ऽएकयेवैतया चरेयुर्यद्वे मन्यमाना द्वाभ्यामिव चरेयु स्थालीश्चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ २ ॥ अथ वपया चरन्ति । यथैव तस्यै चरणं वपया चरित्वाऽध्वर्युश्च यजमानश्च पुनरेतः स ऽआहाऽध्वर्युर्निरूहैतं गर्भमिति तद्ध ह नोदरतो निरूहेदार्त्ताया वै मृतायाऽउदरतो निरूहन्ति यदा वै गर्भः समृद्धो भवति प्रजननेन वै स तर्हि प्रत्यङ्ङैति तमपि विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥ ३ ॥ तं * निरुह्यमाणमभिमन्त्रयते । '[1]एजतु दशमास्यो गर्भो जरायुणा सहे'ति स यदाहैजत्विति प्राणमेवाऽस्मिन्नेतद्दधाति दशमास्य ऽइति यदा वै गर्भः समृद्धो भवत्यथ दशमास्यस्तमेतदप्यदशमास्यꣳ सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति ॥ ४ ॥ जरायुणा सहेति । तद्यथा दशमास्यो जरायुणा सहेयादेवमेतदाह '[2]यथाऽयं वायुरेजति यथा समुद्र ऽएजती'ति प्राणमेवाऽस्मिन्नेतद्दधा'[3]त्येवाऽयं दशमास्यो ऽअस्रज्जरायुणा सहे'ति तद्यथा दश-

* का० श्रौ० सू० २५. १०. ५ ।

( १ ) शु० सं० अ० ८ क० २८ । ( २ ) शु० सं० अ० ८ क० २८ । ( ३ ) शु० सं० अ० ८ क० २८ ।

मास्यो जरायुणा सह स्रꣳसेतैवमेतदाह ॥ ५ ॥ तदाहुः । कथमेतं गर्भं कुर्य्यादित्यङ्गादङ्गाद्धैवाऽस्याऽवद्येयुर्यथैवेतरेषामवदानानामवदानं तदु तथा न कुर्य्यादुत ह्येषोऽविकृताङ्गो भवत्यधस्तादेव ग्रीवा ऽअपिकृत्त्यैतस्याꣳ स्थाल्यामेतं मेधꣳ श्चोतयेयुः सर्व्वेभ्यो वा ऽअस्यैषोऽङ्गेभ्यो मेध श्चोतति तदस्य सर्व्वेषामेवाऽङ्गानामवत्तं भवत्यवद्यन्ति वशाया ऽअवदानानि यथैव तेषामवदानम् ॥ ६ ॥ तानि पशुश्रपणे श्रपयन्ति । तदेवैतं मेधꣳ श्रपयन्त्युष्णीषेणाऽऽवेष्ट्य * गर्भं पार्श्वतः पशुश्रपणस्योप निदधाति यदा श्रृतो भवत्यथ समुद्याऽवदानान्न्येवाऽभिजुहोति नैतं मेधमुद्वासयन्ति पशुं तदेवैतं मेधमुद्वासयन्ति ॥ ७ ॥ तं जघनेन चात्वालमन्तरेण यूपं चाऽग्निञ्च हरन्ति । दक्षिणतो निधाय प्प्रतिप्प्रस्थाताऽवद्यत्यथ स्रुचोरुपस्तृणीतेऽथ मनोतायै हविषोऽनुवाचऽआहाऽवद्यन्ति वशाया ऽअवदानानां यथैव तेषामवदानम् ॥८॥ अथ प्प्रचरणीति स्रुग्भवति । † तस्यां प्रतिप्प्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्प्रत्त्यनक्त्यवदाने ऽअथाऽनुवाच ऽआहाऽऽश्राव्याऽऽह प्प्रेष्येति व्वषट्कृतेऽद्ध्वर्य्युर्ज्जुहोत्त्यद्ध्वर्य्योरनुहोमं ‡ जुहोति प्प्रतिप्प्रस्थाता ॥ ९ ॥ 'यस्यै[1] ते यज्ञियो गर्भ' ऽइति । अयज्ञिया वै गर्भास्तमेतद् ब्रह्मणैव यजुषा यज्ञियं करोति 'यस्यै[2] योनि-

* का० श्रौ० सू० २५. १०. ८,९।
† का० श्रौ० सू० २५. १०. १०।
‡ का० श्रौ० सू० २५. १०. ११,१२।
(१) शु० सं० अ० ८ क० २९। (२) शु० सं० अ० ८ क० २९।

हिरण्ययी'त्त्यदो वा ऽएतस्यै योनिं विच्छिन्दन्ति यददो निष्कर्षन्त्यमृतमायुर्हिरण्यं तामेवाऽस्या ऽएतदमृतां रुयोनिं करो'त्त्यङ्गान्न्यह्रुता यस्य तं मात्रा समजीगमथ्ठं स्वाहे'ति यदि पुमान्त्स्याद्यद्यु स्त्री स्यादङ्गान्न्यह्रुता यस्यै तां मात्रा समजीगमथ्ठं स्वाहेति यद्यु ऽअविज्ञातो गर्ब्भो भवति पुथ्ठंस्कृत्त्यैव जुहुयात्पुमाथ्ठंसो हि गर्ब्भो ऽअङ्गान्न्यह्रुता यस्य तं मात्रा समजीगमथ्ठं स्वाहेत्त्यदो वा ऽएतं मात्रा विष्वञ्चं कुर्वन्ति यददो निष्कर्षन्ति तमेतद् ब्रह्मणैव यजुषा समर्द्ध्य मध्यतो यज्ञस्य पुनर्म्मात्रा सङ्गमयति ॥ १० ॥

अथाऽद्धरुर्युर्व्वनस्पतिना * चरति । व्वनस्पतिनाऽद्धरुर्युश्च-रित्त्वा यान्न्युपभृत्त्यवदानानि भवन्ति तानि समानयमान-ऽआहाऽग्नये स्विष्टकृतेऽनुब्रूहीत्त्यत्त्याक्रामति प्प्रतिप्प्रस्थाता स ऽएतद्ध सर्व्वमेव मेधं गृह्णीतेऽथोपरिष्टाद् द्विराज्यस्या-ऽभिघारयत्त्याश्राव्याऽऽह प्प्रेष्येति व्वषट्कृतेऽद्धरुर्युर्ज्जुहो-त्त्यद्धरुर्योरनुहोमं जुहोति प्प्रतिप्प्रस्थाता ॥११॥ 'पुरुदस्मो[२] विषुरूप ऽइन्दुरि'ति । बहुदान ऽइति हैतद्यदाह पुरुदस्म-ऽइति विषुरूप ऽइति विषुरूपा ऽइव हि गर्ब्भा 'ऽइन्दु-[३]रन्तर्म्महिमानमानञ्ज धीर' ऽइत्त्यन्तर्ह्येष मातर्य्यक्तो भव-'त्त्येकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनाऽनु-

(१) शु० सं० अ० ८ क० २९।
* का० श्रौ० सू० २५. १०. १४,१५।
(२) शु० सं० अ० ८ क० ३०। (३) शु० सं० अ० ८ क० ३०। (४) शु० सं० अ० ८ क० ३०।

प्प्रथन्ताᳬं स्वाहे'ति प्प्रथयत्त्येवैनामेतत्त्सुभूयो ह जयत्त्यष्ट्टापद्येष्ट्वा यदु चाऽनष्ट्टाऽपद्या ॥ १२ ॥ तदाहुः । क्वैतं गब्र्भं कुर्य्यादिति वृक्ष ऽएवैनमुद्दध्युरन्तरिक्षायतना वै गब्र्भाऽअन्तरिक्षमिवैतद्यद्वृक्षस्तदेनᳬं स्व ऽएवाऽऽयतने प्प्रतिष्ट्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेद् वृक्ष ऽएनं मृतमुद्धाऽस्यन्तीति तथा हैव स्यात् ॥ १३ ॥ अप ऽएवैनमब्भ्यवहरेयुः । आपो वा ऽअस्य सर्व्वस्य प्प्रतिष्ट्ठा तदेनमप्प्स्वेव प्प्रतिष्ट्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेदप्प्स्वेव मरिष्यतीति तथा हैव स्यात् ॥ १४ ॥ आखूत्त्कर * ऽएवैनमुपकिरेयुः । इयं व्वा ऽअस्य सर्व्वस्य प्प्रतिष्ट्ठा तदेनमस्यामेव प्प्रतिष्ट्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्राऽनुव्व्याहरेत्क्षिप्प्रेऽस्मै मृताय श्मशानं करिष्यन्तीति तथा हैव स्यात् ॥१५॥ पशुश्रपण ऽएवैनं मरुद्भ्यो जुहुयात्। अहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदश्शृतो गब्र्भ ऽआहवनीयाद्वा ऽएष ऽआहृतो भवति पशुश्रपणस्तथाऽऽह न बहिर्द्धा यज्ञाद् भवति न प्प्रत्त्यक्षमिवाऽऽहवनीये देवानां व्वै मरुतस्तदेनं मरुत्स्वेव प्प्रतिष्ट्ठापयति ॥ १६ ॥ स हुत्त्वैव समिष्टयजूᳬंषि । प्रथमाऽवशान्तेष्वङ्गारेष्वेतᳬं स्रोष्णीषं गब्र्भमादत्ते तं प्राङ्गतिष्ठञ्जुहोति † मारुत्त्यर्चा 'मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जन' ऽइति न स्वाहाकरोत्त्यहुतादो व्वै देवानां मरुतो विडहुत-

* का॰ श्रौ॰ सू॰ २५. १०. १६–१७।

† का॰ श्रौ॰ सू॰ २५. १०. १८।

(१) शु॰ सं॰ अ॰ ८ कं॰ ३१।

मिवैतद्यदुस्वाहाकृतं देवानां वै मरुतस्तदेनं मरुत्स्वेव प्प्रतिष्ठापयति ॥ १७ ॥ * अथाऽङ्गारैरभि समूहति। 'मही द्यौः[1] पृथिवी च न ऽइमं रुयज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिरि'ति ॥ १८ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ षोडशिग्रहः ]

इन्द्रो ह वै षोडशी। तं नु सकृदिन्द्रं भूतान्न्यत्त्यरिच्च्यन्त प्प्रजा वै भूतानि ता हैनेन सदृग्भवमिवाऽऽसुः ॥ १ ॥ इन्द्रो ह वा ऽईक्षाञ्चक्रे। कथं न्न्वहमिदꣳ सर्व्वमतितिष्ठेयमर्व्वागेव मदिदꣳ सर्व्वꣳ स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत स ऽइदꣳ सर्व्वमेवाऽत्त्यतिष्ठदर्व्वागेवाऽस्म्मादिदꣳ सर्व्वमभवत्सर्व्वꣳ ह वा ऽइदमतितिष्ठत्त्यर्व्वागेवाऽस्म्मादिदꣳ सर्व्वं भवति यस्यैवं विदुष ऽएतं ग्रहं गृह्णन्ति ॥ २ ॥ तस्म्मादेतदृषिणाऽभ्यनूक्तम्। 'न ते महित्त्वमनु[2]भूदध द्यौ रुर्यदन्न्यया स्फिग्ग्या क्षामवस्तथा' ऽइति न ह वाऽअस्याऽसौ द्यौरन्न्यतरां चन स्फिगीमनुबभूव तथेदꣳसर्व्वमेवाऽत्त्यतिष्ठदर्व्वागेवाऽस्म्मादिदꣳ सर्व्वमभवत्सर्व्वꣳ ह वा ऽइदमतितिष्ठत्त्यर्व्वागेवाऽस्म्मादिदꣳ सर्व्वं भवति

* का० श्रौ० सू० २५. १०. १९।

(१) शु० सं० अ० ८ क० ३२।

(B) अत्रशतम् २७००; एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ४।

(२) ऋ० सं० ३. ३२. ११।

यस्यैवं विदुष ऽएतं ग्रहं गृह्णन्ति ॥ ३ ॥ तं वै हरिवत्यर्चा गृह्णाति । हरिवतीषु स्तुवते हरिवतीरनुशꣳसति वीर्यं वै हर ऽइन्द्रोऽसुराणाꣳ सपत्नानाꣳ समवृङ्क्त तथो ऽएवैष ऽएतद्वीर्यꣳ हरꣳ सपत्नानाꣳ संवृङ्क्ते तस्माद्धरिवत्यर्चा गृह्णाति हरिवतीषु स्तुवते हरिवतीरनु शꣳसति ॥ ४॥ तं वा ऽअनुष्टुभा गृह्णाति । गायत्रं वै प्रातः सवनं त्रैष्टुभं माध्यन्दिनꣳ सवनं जागतं तृतीयसवनमथाऽतिरिक्ताऽनुष्टुबस्त्येवैनमेतद्रेचयति तस्मादनुष्टुभा गृह्णाति ॥ ५ ॥ तं वै चतुःस्रक्तिना * पात्रेण गृह्णाति । त्रयो वा ऽइमे लोकास्तदिमानेव लोकाँस्तिसृभिः स्रक्तिभिराप्नोत्यथास्त्येवैनं चतुर्थ्या स्रक्त्या रेचयति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥६॥ [अर्धप्रपाठकः ॥६३॥] तं वै प्रातः सवने गृह्णीयात् । आग्रयणं गृहीत्वा स प्रातः सवने गृहीत ऽएतस्मात्कालादुपशेते तदेनꣳ सर्वाणि सवनान्यतिरेचयति ॥७॥ माध्यन्दिने वैनꣳ सवने गृह्णीयात् । आग्रयणं गृहीत्वा सो ऽएषा मीमाꣳसैव प्रातः सवन ऽएवैनं गृह्णीयादाग्रयणं गृहीत्वा स प्रातः सवने गृहीत ऽएतस्मात्कालादुपशेते ॥ ८ ॥ † अथाऽतो गृह्णात्येव । '[1]आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन ऽएष ते योनिरिन्द्राय त्वा षोडशिन' ऽइति ॥ ९ ॥ अनया वा । '[2]युक्ष्वा

* का० श्रौ० सू० १२. ५. ७ ।
† का० श्रौ० सू० १२. ५. २ ।
(१) शु० सं० अ० ८ क० ३३ । (२) शु० सं० अ० ८ क० ३४ ।

हि केशिना हुरी ऽवृषणा कक्ष्यप्प्रा। अथा न ऽइन्द्र सोमपा गिरामुपश्रुतिं चर। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन-ऽएष ते योनिरिन्द्राय त्वा षोडशिन' ऽइति ॥ १० ॥ अथेत्य स्तोत्रमुपाकरोति । सोमोऽत्त्यरेच्च्युपाऽऽवर्त्तद्ध्व-मित्त्यत्त्येवैनमेतद्रेचयति तं वै पुराऽस्तमयादुपाकरोत्त्यस्तमि-तेऽनुशꣳसति तदेनेनाऽहोरात्रे सन्दधाति तस्मात्पुराऽस्त-मयादुपाकरोत्त्यस्तमितेऽनुशꣳसति ॥ ११ ॥ (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अतिग्राह्या ग्रहाः ]

सर्वे ह वै देवाः । अग्ग्रे सदृशा ऽआसुः सर्वे पुण्ण्या-स्तेषाꣳ सर्वेषाꣳ सदृशानाꣳ सर्वेषां पुण्ण्यानां त्रयोऽकाम-यन्ताऽतिष्ठावानः स्यामेत्त्यग्निरिन्द्रः सूर्य्यः ॥ १ ॥ तेऽर्च्चन्तः श्राम्म्यन्तश्चेरुः । त ऽएतानतिग्राह्यान्ददृशुस्तानत्त्यगृह्णत तद्यदेनानत्त्यगृह्णत तस्मादतिग्राह्या नाम तेऽतिष्ठावानो-ऽभवन्न्यथैत ऽएतदतिष्ठेवाऽतिष्ठेव ह वै भवति यस्यैवं विदुष ऽएतान्ग्रहान्न्गृह्णन्ति ॥ २ ॥ नो ह वा ऽइदमग्ग्रेऽग्नौ वर्च्च ऽआस । यदिदमस्मिन्न्वर्च्चः सोऽकामयतेदं मयि वर्च्चः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मि-न्नेतद्वर्च्च ऽआस ॥ ३ ॥ नो ह वा ऽइदमग्ग्र ऽइन्द्र ऽओज-ऽआस । यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतदोज-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. १; तै० सं० ६. ६. ११; मै० सं० ४. ७. ६।

ऽआस ॥ ४ ॥ नो ह वा ऽइदमग्रे सूर्य्ये भ्राज ऽआस । यदिदमस्मिन्भ्राजꣳ सोऽकामयतेदं मयि भ्राजꣳ स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्भ्राज ऽआसैतानि ह वै तेजाꣳस्येतानि वीर्य्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ ५ ॥ तान्वै प्रातःसवने गृह्णीयात् । आग्रयणं गृहीत्वाऽऽत्मा वा ऽआग्रयणो बहु वा ऽइदमात्मन ऽएकैकमतिरिक्तं क्लोम हृदयं त्वद्यत्वत् ॥ ६ ॥ माध्यन्दिने वैनान्त्सवने गृह्णीयात् । उक्थ्यं गृहीत्वोपाकरिष्यन्वा पूतभृतोऽयꣳ ह वा ऽअस्यैषोऽनिरुक्त ऽआत्मा यदुक्थ्यꣳ सो ऽएषा मीमाꣳसैव प्रातः सवन ऽएवैनान्गृह्णीयादाग्रयणं गृहीत्वा ॥ ७ ॥ ते माहेन्द्रस्यैवाऽनुहोमꣳ हूयन्ते । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रमिन्द्रो वै यजमानो यजमानस्य वा ऽएते कामाय गृह्यन्ते तस्मान्माहेन्द्रस्यैवाऽनुहोमꣳ हूयन्ते ॥ ८ ॥ अथाऽतो * गृह्णात्येव । '[1]अग्ने पवस्व स्वपा ऽअस्मे वर्च्चः सुवीर्य्यम् । दधद्रयिं मयि पोषम् । उपयामगृहीतोऽस्यग्नये त्वा वर्च्चस ऽएष ते योनिरग्नये त्वा वर्च्चसे' ॥ ९ ॥ '[2]उत्तिष्ठन्नोजसा । सह पीत्वी शिप्रे ऽअवेपयः । सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस ऽएष ते योनिरिन्द्राय त्वौजसे' ॥ १० ॥ '[3]अदृश्रमस्य केतवः ।

* का० श्रौ० सू० १२. ३. २ ।

(१) शु० सं० अ० ८ क० ३८ । (२) शु० सं० अ० ८ क० ३९ । (३) शु० सं० अ० ८ क० ४० ।

वि रश्मयो जनाँ२ ऽअनु । भ्राजन्तो ऽअग्नयो यथा । उप-याम गृहीतोऽसि सूर्य्याय त्वा भ्राजायैष ते योनिः सूर्य्याय त्वा भ्राजाये'ति ॥ ११ ॥ तेषां † भक्षः । 'अग्ने वर्चस्विन्वर्च्चस्वाँस्त्वं देवेष्वसि वर्च्चस्वानहं मनुष्येषु भूया-समिन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासः सूर्य्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजि-ष्ठोऽहं मनुष्येषु भूयासमि'त्त्येतानि ह वै भ्राजाथंस्येतानि वीर्य्याण्ण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ १२ ॥ तान्वै पृष्ठ्ये षडहे गृह्णीयात् । पूर्वे त्र्यह ऽआग्ने-यमेव प्रथमेऽहन्नैन्द्रं द्वितीये सौर्य्यं तृतीय ऽएवमेवाऽन्व-हम् ॥ १३ ॥ तानु हैक ऽउत्तरे त्र्यहे गृह्णन्ति । तदु तथा न कुर्य्यात्पूर्व्व ऽएवैनाँस्त्र्यहे गृह्णीयाद्यद्युत्तरे त्र्यहे ग्रहीष्य-न्त्स्यात्पूर्व्व ऽएवैनाँस्त्र्यहे गृहीत्वाऽथोत्तरे ‡ त्र्यहे गृह्णीया-देवमेव यथापूर्व्वं विश्वजिति सर्व्वपृष्ठ ऽएकाह ऽएव गृह्णन्ते ॥ १४ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



एष वै प्रजापतिः । य ऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वे वाऽप्प्येतर्ह्यनु प्रजायन्ते ॥ १ ॥

† का० श्रौ० सू० १२. ३. ६ ।

(१) शु० सं० अ० ८ क० ३८–४० ।

‡ का० श्रौ० सू० १२. ३. ३–४ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्तै यथा— का० श० ५. ६. २; कपि० सं० ४६. २. ३; तै० सं० ६. ८; मै० सं० ४. ७. ३ ।

उपाꣳशुपात्रमेवाऽन्वजाः प्प्रजायन्ते । तद्वै तत्पुनर्य्यज्ञे प्प्रयुज्यते तस्स्मादिमाः प्प्रजाः पुनरब्भ्यावर्त्तं प्रजायन्ते ॥ २ ॥ अन्तर्य्यामपात्रमेवाऽन्ववयः प्प्रजायन्ते । तद्वै तत्पुनर्य्यज्ञे प्प्रयुज्यते तस्स्मादिमाः प्प्रजाः पुनरब्भ्यावर्त्तं प्रजायन्ते ॥ ३ ॥ अथ यदेतयोरुभयोः । सह सतोरुपाꣳशुं पूर्व्वं जुहोति तस्स्मादु सह सतोऽजाऽऽविकस्योभयस्यैवा-ऽजाः पूर्व्वा यन्त्यनूच्च्योऽवयः ॥ ४ ॥ अथ यदुपाꣳ-शुꣳ हुत्वा । ऊर्द्ध्वमुन्मार्ष्टि तस्स्मादिमा ऽअजा ऽअरा डीतरा ऽआक्रममाणा ऽइव यन्ति ॥५॥ अथ यदन्तर्य्यामꣳ हुत्वा । अवाञ्चमवमार्ष्टि तस्स्मादिमा ऽअवयोऽवाचीन-शीर्ष्ण्यः खनन्त्य ऽइव यन्त्येता वै प्प्रजापतेः प्प्रत्यक्षतमां यदजाऽवयस्तस्स्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति ॥ ६ ॥ शुक्रपात्रमेवाऽनु मनुष्याः प्प्रजायन्ते । तद्वै तत्पुनर्य्यज्ञे प्प्रयुज्यते तस्स्मादिमाः प्प्रजाः पुनरब्भ्यावर्त्तं प्रजायन्त ऽएष वै शुक्रो य ऽएष तपत्येष ऽउ ऽएवेन्द्रः पुरुषो वै पशूनामैन्द्रस्तस्स्मात्पशू-नामीष्टे ॥ ७ ॥ ऋतुपात्रमेवाऽन्वेकशफं प्रजायते । तद्वै तत्पुनर्य्यज्ञे प्प्रयुज्यते तस्स्मादिमाः प्प्रजाः पुनरब्भ्यावर्त्तं प्रजायन्त ऽइतीव वा ऽऋतुपात्रमितीवैकशफस्य शिर ऽआग्र-यणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवाऽनु गावः प्प्रजायन्ते तानि वै तानि पुनर्य्यज्ञे प्प्रयुज्यन्ते तस्स्मादिमाः प्प्रजाः पुन-रब्भ्यावर्त्तं प्रजायन्ते ॥८॥ अथ यदजाः । कनिष्ठानि पात्रा-ण्ण्यनु प्प्रजायन्ते तस्स्मादेतास्त्रिः संवत्सरस्य विजायमाना

द्वौ त्रीनिति जनयन्त्यः कनिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ ९ ॥ अथ यद्द्वावः । भूयिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेताः सकृत्संवत्सरस्य विजायमाना ऽएकैकं जनयन्त्यो भूयिष्ठा भूयिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ १० ॥ अथ द्रोणकलशे । अन्ततो हारियोजनं ग्रहं गृह्णाति प्रजापतिर्वै द्रोणकलशः स ऽइमाः प्रजा ऽउपाऽऽवर्त्तते ता ऽअवति ता ऽअभिजिघ्रत्येतद्वा ऽएना भवति यदेनाः प्रजनयति ॥ ११ ॥ पञ्च ह त्वेव तानि पात्राणि । यानीमाः प्रजा ऽअनु प्रजायन्ते समानमुपाꣳश्वन्तर्यामयोः शुक्रपात्रमृतुपात्रमाग्रयणपात्रमुक्थ्यपात्रं पञ्च वाऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञो यद्यु षडेवर्त्तवः संवत्सरस्येत्यादित्यपात्रमेवैतेषाꣳ षष्ठम् ॥ १२ ॥ एकꣳ ह त्वेव तत्पात्रम् । यदिमाः प्रजा ऽअनु प्रजायन्त ऽउपाꣳशुपात्रमेव प्राणो ह्युपाꣳशुः प्राणो हि प्रजापतिः प्रजापतिꣳ ह्येवेदꣳ सर्वमनु ॥ १३ ॥ (E)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ ग्रहावेक्षणम् ]

एष वै प्रजापतिः । य ऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाऽप्येतर्ह्यनु प्रजायन्ते स ऽआश्विनं ग्रहं गृहीत्वाऽवकाशानवकाशयति ॥ १ ॥ स-

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ६; तै० सं० ६. ५. १०।

ऽउपाᳫंशुमेव * प्प्रथममवकाशयति । 'प्राणाय[1] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथोपाᳫंशुसवनं 'व्व्यानाय[2] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथाऽन्तर्य्याम'मुदानाय[3] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथैन्द्रवायवं 'वाचे[4] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथ मैत्रावरुणं 'क्रतूदक्षाभ्भ्यां[5] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथाऽऽश्विनᳫं 'श्रोत्राय[6] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथ शुक्रामन्थिनौ 'चक्षुर्भ्भ्यां[7] मे वर्चोदसौ वर्च्चसे पवेथा'मिति ॥ २ ॥ अथाऽऽग्रयणम् । 'आत्मने[8] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथोक्थ्य'मोजसे[9] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथ ध्रुव'मायुषे[10] मे वर्चोदा वर्च्चसे पवस्वे'त्त्यथाऽम्भृणौ 'विश्वाभ्यो[11] मे प्रजाभ्भ्यो वर्चोदसौ वर्च्चसे पवेथामि'ति वैश्वदेवौ वा ऽअम्भृणावतो हि देवेभ्भ्य ऽउन्नयन्त्यतो मनुष्येभ्भ्योऽतः पितृभ्भ्यस्तस्माद्वैश्वदेवावम्भृणौ ॥ ३ ॥ अथ † द्रोणकलशम् । 'कोऽसि[12] कतमोऽसी'ति प्प्रजापतिर्व्वै कः 'कस्यासि[13] को नामाऽसी'ति प्प्रजापतिर्व्वै को नाम 'यस्य[14] ते नामाऽमन्मही'ति मनुते ह्यस्य नाम 'यन्त्वा[15] सोमेनाऽतीतृपामे'ति तर्प्पयति ह्येनᳫं सोमेन स ऽआश्विनं ग्रहं गृहीत्वा-

---

* तै० सं० ३, २, ३; का० श्रौ० सू० ९. ७. ८ ।

( १ ) शु० सं० अ० ७ क० २७ । ( २ ) शु० सं० अ० ७ क० २७ । ( ३ ) शु० सं० अ० ७ क० २७ । ( ४ ) शु० सं० अ० ७ क० २७ । ( ५ ) शु० सं० अ० ७ क० २७ । ( ६ ) शु० सं० अ० ७ क० २७ । ( ७ ) शु० सं० अ० ७ क० २७ । ( ८ ) शु० सं० अ० ७ क० २८ । ( ९ ) शु० सं० अ० ७ क० २८ । ( १० ) शु० सं० अ० ७ क० २८ । ( ११ ) शु० सं० अ० ७ क० २८ ।

† "कोऽसीति द्रोणकलशम्" (का० श्रौ० सू० ९. ७. १४)।

( १२ ) शु० सं० अ० ७ क० २९ । (१३) शु० सं० अ० ७ क० २९ । (१४) शु० सं० अ० ७ क० २९ । ( १५ ) शु० सं० अ० ७ क० २९ ।

ऽन्वङ्गमाशिषमाशास्ते 'सुप्प्रजाः प्प्रजाभिः स्यामि'ति तत्प्रजामाशास्ते 'सुवीरो वीरैरि'ति तद्वीरानाशास्ते 'सुपोषः पोषैरि'ति तत्पुष्टिमाशास्ते ॥ ४ ॥ तान्वै न सर्वमिवाऽव-काशयेत् । यो न्न्वेव ज्ञातस्तमवकाशयेद्योवाऽस्य प्प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनाद्व्प्राप्नुयात्स ऽआश्विनं ग्रहं गृहीत्वा कृत्स्नं रुषजं जनयति तं कृत्स्नं रुषजं जनयित्वा तमात्मन्धत्ते तमात्मन्कुरुते ॥ ५ ॥ (F)

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



## [ सोमप्रायश्चित्तानि ]

ता वा ऽएताः । चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्प्राय श्चित्तयो नामैष वै प्प्रजापतिरुर्ष ऽएष यज्ञस्तायते यस्स्मा-दिमाः प्प्रजाः प्प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते ॥ १ ॥ अष्टौ वसवः । एकादश रुद्रा द्वादशाऽऽदित्या ऽइमे-ऽएव द्यावापृथिवी त्रयस्त्रिꣳश्यौ त्रयस्त्रिꣳशद्वै देवाः प्प्रजा-पतिश्चतुस्त्रिꣳशस्तदेनं प्रजापतिं करोत्त्येतद्वा ऽअस्त्येत-द्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्म्मर्त्यꣳ स ऽएष प्प्रजा-पतिः सर्व्वं वै प्प्रजापतिस्तदेनं प्रजापतिं करोति तस्मादेता-श्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्प्रायश्चित्तयो नाम ॥ २ ॥ ता हैके । यज्ञं तन्न्व ऽइत्त्याचक्षते यज्ञस्य ह

( १ ) शु० सं० अ० ७. क० २९ । ( २ ) शु० सं० अ० ७. क० २९ । ( ३ ) शु० सं० अ० ८ क० २९ ।

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते— का० श० ५, ६, ३ ।

त्वेवैतानि पर्व्वाणि स ऽएष यज्ञस्तायमान ऽएता ऽएव देवता भवन्नेति ॥ ३ ॥ सा यदि घर्म्मदुघा ह्वलेत् । अन्न्यामुपसङ्क्रामेयुः स यस्यामेवैनां वेलायां पुरा पिन्न्वयन्ति तद्धैवैनामुदीचीथं स्तथापयेदग्रेण वा शालां प्राचीम् ॥ ४ ॥ तद्ये ऽएते ऽअभितः । पुच्छकाण्डऽः शिखण्डास्त्थे ऽउच्छ्रयाते तयोर्ष्वद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिऽःशतमाज्याहुतीर्ज्जुहोत्येतावान्न्वै सर्व्वो यज्ञो यावत्य ऽएताश्चतुस्त्रिऽःशद्ब्याहृतयो भवन्ति तदस्यां कृत्स्नमेव सर्व्वं ऽयज्ञं दधात्येषा ह्वतो घर्म्मं पिन्न्वत ऽएषो तत्र प्प्रायश्चित्तिः क्रियते ॥ ५ ॥ अथ यद्यज्ञस्य ह्वलेत् । तत्समन्न्वीक्ष्य जुहुयाद्दीक्षोपसत्स्वाहवनीये प्प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व्व स्रऽसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्भिषज्यति तया सन्दधाति ॥ ६ ॥ अथ * यदि स्कन्देत् । तदद्भिरुपनिनयेदद्भिर्व्वा ऽइदऽः सर्व्वमाप्तऽः सर्व्वस्यैवाऽऽप्त्यै वैष्णववारुण्यर्च्चा यद्वा ऽइदं किञ्चाच्छेति वरुण ऽएवेदऽः सर्व्वमार्प्पयति '(१)ययोरोजसा स्कभिता रजाथंसि व्वीर्य्येभिर्व्वीरतमा शविष्ठा । या पत्येते ऽअप्प्रतीता सहोभिर्व्विष्णू ऽअगन्न्वरुणा पूर्व्वहूतावि'ति यज्ञो वै व्विष्णुस्तस्यैतदार्च्छति वरुणो वा ऽआर्प्पयिता तद्यस्याश्चैवैतद्देवताया ऽआर्च्छति यो च देवताऽऽर्प्पयति ताभ्यामेवैतदुभाभ्यां भिषज्यत्युभाभ्याथं सन्दधाति ॥ ७ ॥ अथो ऽअभ्येव † मृशेत् ।

* का० श्रौ० सू० १०. ९. १ ।

(१) शु० सं० अ० ८ क० ५९ ।

† का० श्रौ० सू० २५. २. २७ ।

'देवान्दिवमगन्न्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्ष-मगन्न्यज्ञस्ततो मा द्रविणमष्टु पितॄन्पृथिवीमगन्न्यज्ञस्ततो मा द्रविणमष्टु यं कञ्च लोकमगन्न्यज्ञस्ततो मे भद्रम-भूदि'त्येवैतदाह ॥ ८ ॥ तद्ध स्मैतदारुणिराह । किꣳ स यजेत यो यज्ञस्य व्यृद्ध्या पापीयान्मन्न्येत यज्ञस्य वा-ऽअहं व्यृद्ध्या श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह यदेता ऽआशिष ऽउपगच्छति ॥ ९ ॥ (G)

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ सहस्रदक्षिणा ]

तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति । तदेषा साहस्री क्रियते स प्प्रथमेऽहँस्त्रीणि च शतानि नयति त्रयस्त्रिꣳ-शतं चैवमेव द्वितीयेऽहँस्त्रीणि चैव शतानि नयति त्रयस्त्रिꣳ-शतं चैवमेव तृतीयेऽहँस्त्रीणि चैव शतानि नयति त्रयस्त्रिꣳ-शतं चाऽथैषा * साहस्र्यतिरिच्च्यते ॥ १ ॥ सा वै त्रिरू-पा स्यादित्याहुः । एतद्ध्यस्यै रूपतममिवेति रोहिणी ह त्वेवोपद्ध्वस्ता स्यादेतद्ध्वैवाऽस्यै रूपतममिव ॥ २ ॥ सा स्या-दप्प्रवीता । वाग्वा ऽएषा निदानेन यत्साहस्र्ययातयाम्म्नी वा ऽइयं वागयातयाम्म्न्यप्प्रवीता तस्म्मादप्प्रवीता स्यात् ॥३॥ तां प्रथमेऽहन्नयेत् । वाग्वा ऽएषा निदानेन यत्साहस्री तस्या ऽएतत्सहस्रं वाचः प्प्रजातं पूर्व्वा हैषैति पश्चादेनां

(१) शु० सं० अ० ८ क० ६० ।

(G) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५, ७, ४ ।

* का० श्रौ० सू० १३. ४. १४, १५ ।

प्रजातमन्न्वेत्युत्तमे वैनामहन्नयेत्पूर्वमहाऽस्यै प्प्रजातमेति पश्च्चादेषाऽन्न्वेति सो ऽएषा मीमाथ्ंसैवोत्तम ऽएवैनामहन्नयेत्पूर्वमहाऽस्यै प्प्रजातमेति पश्च्चादेषाऽन्न्वेति ॥ ४ ॥

तामुत्तरेण हविर्द्धाने । दक्षिणेनाऽऽग्नीध्रं * द्रोणकलशमवघ्रापयति यज्ञो वै द्रोणकलशो यज्ञमेवैनामेतद्दर्शयति ॥ ५ ॥ 'आजिग्घ्र कलशम् । मह्या त्त्वा व्विशन्त्विन्दव' ऽइति रिरिचान ऽइव वा ऽएष भवति यः सहस्रं ददाति तमेवैतद्रिरिचानं पुनराप्प्याययति यदाहाऽऽजिग्घ्र कलशं मह्या त्त्वा व्विशन्त्विन्दव ऽइति ॥ ६ ॥ 'पुनरूर्ज्जा निवर्त्तस्वे'ति । तद्देव रिरिचानं पुनराप्प्याययति यदाह पुनरूर्ज्जा निवर्त्तस्वेति ॥ ७ ॥ 'सा नः सहस्रं धुक्ष्वे'ति । तत्सहस्रेण रिरिचानं पुनराप्प्याययति यदाह सा नः सहस्रं धुक्ष्वेति ॥ ८ ॥ 'उरुधारा पयस्वती पुनर्म्माऽऽविशताद्रयिरि'ति । तद्देव रिरिचानं पुनराप्प्याययति यदाह पुनर्म्माऽऽविशताद्रयिरिति ॥ ९ ॥

अथ दक्षिणे † कर्ण्णं ऽआजपति । 'इडे रन्ते हव्ये काम्म्ये चन्द्रे ज्योतेऽदिति सरस्वति महि व्विश्रुति । एता तेऽअघ्न्ये नामानि देवेब्भ्यो मा सुकृतं ब्रूतादि'ति व्वोचेरिति वैतानि ह वा ऽअस्यै देवत्रा नामानि सा यानि ते देवत्रा नामानि तैर्म्मा देवेब्भ्यः सुकृतं ब्रूतादित्येवैतदाह ॥ १० ॥

---

* का० श्रौ० सू० १३. ४. १७ ।

(१) शु० सं० अ० ८ क० ४२ । (२) शु० सं० अ० ८ क० ४२ । (३) शु० सं० अ० ८ क० ४२ । (४) शु० सं० अ० ८ क० ४२ ।

† का० श्रौ० सू० १३. ४. १८ ।

(५) शु० सं० अ० ८ क० ४३ ।

तामुवार्ज्जन्ति । सा यद्यपुरुषाऽभिवीता प्प्राचीयात्तत्र व्विद्यादुरात्सीदयं ऽख्यजमानः कल्याणं लोकुमजैषीदिति यद्युदीचीयाच्छ्रेयानस्मिँल्लोके यजमानो भविष्यतीति व्विद्याद्यदि प्प्रतीचीयादिभ्यतिल्विल ऽइव धान्न्यतिल्विलो भविष्यतीति व्विद्याद्यदि दक्षिणेयात्क्षिप्प्रेऽस्म्माल्लोकाद्यजमानः प्प्रैष्यतीति व्विद्यादेतानि व्विज्ञानानि ॥ ११ ॥ तद्या ऽएतास्तिस्रस्तिस्रस्त्रिः शत्यधि भवन्ति । तास्वेतामुपसमाकुर्वन्ति व्वि वा ऽएतां व्विराजं बृहन्ति यां व्व्याकुर्वन्ति व्विच्छिन्नोऽएषा व्विराड्या व्विवृढा दुशाक्षरा वै व्विराट् तत्कृत्स्नां व्विराजः सन्दधाति ताथं * होत्रे दद्याद्धोता हि साहस्रस्तस्म्मात्ताथं होत्रे दद्यात् ॥ १२ ॥ द्वौ वोन्नतारौ कुर्वीत । तयोरुर्यतरो नाऽऽश्रावयेत्तस्म्मा ऽएनां दद्याद्व्यृद्धो वाऽएष ऽउन्नेता य ऽऋत्विक् सन्नाऽऽश्रावयति व्व्यृद्धो ऽएषा व्विराड्या व्विवृढा तद्व्यृद्ध ऽएवैतद्व्यृद्धं दधाति ॥ १३ ॥ तदाहुः । न सहस्रेऽधि किञ्चन दद्यात्सहस्रेण ह्येव सर्वान्न्कामानाप्प्नोतीति तदु होवाचाऽऽसुरिः काममेव दद्यात्सहस्रेणाऽऽह सर्वान्न्कामानाप्प्नोति कामेनो ऽअस्येतरद्दत्तं भवतीति ॥ १४ ॥ अथ यदि रथं वा युक्तं दास्यन्त्स्यात् । यद्वा वशायै वा वपायाथं हुतायां दद्यादुदवसानीयायां व्वेष्टौ ॥ १५ ॥ स वै दक्षिणा नयन् । अन्न्यूना दशतो

---

* "सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात्, उन्नेतारौ वा वृत्त्वाऽनाश्रावयते, दश-दशाभेदेन दक्षिणा दद्यात्" ( का० श्रौ० सू० १३. ४. २०–२२ )।

अत्र देवयाज्ञिकः—

"दशभ्यो दशकौ दत्वा चतुर्भ्योऽष्टौ च पञ्चकान् ।
द्विकेन पूरयेत् षड्भ्यः षड्भ्यो द्विकमिति स्थितिः ॥" इति ।

नयेद्यस्मा ऽएकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दशतमुपावर्त्तयेद्यस्मै द्वे दास्यन्त्स्यात्पञ्चभ्यस्तेभ्यो दशतमुपावर्त्तयेद्यस्मै तिस्रो दास्यन्त्स्यात्त्रिभ्यस्तेभ्यो दशतमुपावर्त्तयेद्यस्मै पञ्च दास्यन्त्स्याद्द्वाभ्यां ताभ्यां दशतमुपावर्त्तयेदेवमा शतात्तथो हाऽस्यैषाऽन्न्यूना विराडमुष्मिँल्लोके कामदुघा भवति ॥ १६ ॥ (H)

पञ्चमाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिकासंख्या ॥ १२५ ॥



## [ व्यूढद्वादशाहधर्माः ]

तद्यत्रैतद्द्वादशाहेन * व्व्यूढच्छन्दसा यजते । तद् ग्रहान्व्व्यूहति व्व्यूहत ऽउद्गाता च होता च च्छन्दाᳬसि स ऽएष प्प्रज्ञात ऽएव पूर्व्वस्त्र्यहो भवति † समूढच्छन्दास्तदैन्द्रवायवाग्रान्ग्गृह्णाति ॥ १ ॥ अथ चतुर्थेऽहन्व्व्यूहति । ग्रहान्व्व्यूहन्ति छन्दाᳬसि तदाग्रयणाग्रान्ग्गृह्णाति प्प्राजापत्त्यं व्वा ऽएतच्चतुर्थमहर्ब्भवत्यात्मा व्वा ऽआग्रयण ऽआत्मा

(H) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ५; तै० सं० ७. १. ५–७ ।

* का० श्रौ० सू० १२. ६. ३ ।

† समूढपक्षे व्यूढपक्षे च हौत्रे विशेषो हौत्रसूत्रे (आश्व० श्रौ० सू०, ऐ० ब्रा० च ४. १,२) ज्ञेयः । एवम् औद्गात्रे विशेषोऽपि लाट्यायनादौ द्रष्टव्यः ।

छन्दसां व्यूहनमपि व्यूढात्मके द्वादशाहे उक्तम्—"छन्दांसि वा अन्योन्यस्याऽऽयतनमभ्यध्यायन् गायत्री त्रिष्टुभा, त्रिष्टुब्जगत्या, जगती गायत्र्येति" ( ऐ० ब्रा० ४. ४. ५ ) ।

"स्वस्वस्थानविपरीतत्वेन ऊढानि स्थानान्तरे प्रक्षिप्तानि छन्दांसि यस्मिन् सोऽयं व्यूढच्छन्दा" ( ऐ० ब्रा० सा० भा० ४. ४. ५ ) इति ।

वै प्रजापतिस्तस्मादाग्रयणाग्रान्गृह्णाति ॥ २ ॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳪं हिङ्कृत्य सादयत्यथैतत्प्रज्ञातमेव पञ्चममहर्भवति तदैन्द्रवायवाग्रान्गृह्णाति ॥ ३ ॥ अथ षष्ठेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दाᳪंसि तच्छुक्राग्रान्गृह्णात्यैन्द्रं वा ऽएतत्षष्ठमहर्भवत्येष वै शुक्रो य ऽएष तपत्येष ऽउ ऽएवेन्द्रस्तस्माच्छुक्राग्रान्गृह्णाति ॥ ४ ॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳪं सादयति ॥ ५ ॥ अथ सप्तमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दाᳪंसि तच्छुक्राग्रान्गृह्णाति बार्हतं वा ऽएतत्सप्तममहर्भवत्येष वै शुक्रो य ऽएष तपत्येष ऽउ ऽएव बृहँस्तस्माच्छुक्राग्रान्गृह्णाति ॥ ६ ॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳪं सादयत्यथैतत्प्रज्ञातमेवाऽष्टममहर्भवति तदैन्द्रवायवाग्रान्गृह्णाति ॥ ७ ॥ अथ नवमेऽहन्व्यूहति ग्रहान्व्यूहन्ति छन्दाᳪंसि तदाग्रयणाग्रान्गृह्णाति जागतं वा ऽएतन्नवममहर्भवत्यात्मा वा ऽआग्रयणः सर्वं वा ऽइदमात्मा जगत्त-

स्म्मादाग्रयणाग्रान्न्गृह्णाति ॥ ८ ॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्प्राणान्न्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्न्गृह्णात्यथ यदा ग्रहान्न्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ हिङ्कृत्य सादयति ॥ ९ ॥ तदाहुः । न व्व्यूहेद् ग्रहान्न्प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्प्राणान्न्यद्व्व्यूहेत्तस्मान्न व्व्यूहेत् ॥ १० ॥ तदु व्व्यूहेदेव । अङ्गानि वै ग्रहाः कामं व्वा ऽइमान्न्यङ्गानि व्व्यत्यासꣳ शेते तस्म्मादु व्व्यूहेदेव ॥ ११ ॥ तदु नैव व्व्यूहेत् । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्प्राणान्न्यद् व्व्यूहेत्तस्म्मान्न व्व्यूहेत् ॥१२॥ किं नु तत्राऽध्वर्य्योः । यदुद्गाता च होता च च्छन्दाꣳसि व्व्यूहत ऽएतद्वा ऽअध्वर्य्युर्व्व्यूहति ग्रहान्न्यदैन्द्रवायवाग्रान्न्प्रातःसवने गृह्णाति शुक्राग्रान्न्माध्यन्दिने सवन ऽआग्रयणाग्राँस्तृतीयसवने ॥ १३ ॥ (1)

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



## [ सोमापहरणादि ]

यदि सोममपहरेयुः । विधावतेच्छतेति ब्रूयात्स यदि विन्दन्ति किमाद्रियेरन्न्यद्यु न विन्दन्ति तत्र प्प्रायश्चित्तिः क्रियते ॥ १ ॥ द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चाऽरुणपुष्पाणि च स यान्न्यरुणपुष्पाणि फाल्गुनानि तान्न्यभिषुणुयादेष वै सोमस्य न्न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि तस्म्मादरुणपुष्पाण्यभिषुणुयात् ॥ २ ॥ यद्यरुणपुष्पाणि न

(1) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ६. ६; तै० सं० ७. १. ७।

विन्देयुः । श्येनहृतमभिषुणुयाद्यत्र वै गायत्री सोममच्छापतत्तस्या ऽआहरन्त्यै सोमस्याऽथंशुरपतत्तच्छ्येनहृतमभवत्तस्माच्छ्येनहृतमभिषुणुयात् ॥ ३ ॥ यदि श्येनहृतं न विन्देयुः । आदारानभिषुणुयाद्यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य यो रसो ऽव्यप्प्रुष्यत्तत ऽआदाराः समभवँस्तस्मादादारानभिषुणुयात् ॥ ४ ॥ यद्यादारान्न विन्देयुः । अरुणदूर्वा ऽअभिषुणुयादेष वै सोमस्य न्न्यङ्गो यदरुणदूर्वास्तस्मादरुणदूर्वा ऽअभिषुणुयात् ॥ ५ ॥ यद्यरुणदूर्वा न विन्देयुः । अपि यानेव कांश्च हरितान्कुशानभिषुणुयात्तत्राऽप्प्येकामेव गां दद्यादथाऽवभृथादुदेत्य पुनर्दीक्षेत पुनर्र्यज्ञो ह्येव तत्र प्प्रायश्चित्तिरिति नु सोमापहृतानाम् ॥ ६ ॥ अथ कलशदिराम् । यदि कलशो दीर्य्येताऽनुलिप्प्सद्ध्मिति ब्रूयात्स यद्यनुलभेरन् प्रस्तृतमात्रं वाऽञ्जलिमात्रं वा तदन्न्यैरेकधनैरभ्युन्नीय यथाप्प्रभावं प्रचरेयुर्य्यद्यु नाऽनुलभेरन्नाग्रयणस्यैव प्प्रस्कन्न्याऽन्न्यैरेकधनैरभ्युन्नीय यथाप्प्रभावं प्रचरेयुः स यद्यनीतासु दक्षिणासु कलशो दीर्य्येत तत्राऽप्प्येकामेव गां दद्यादथाऽवभृथादुदेत्य पुनर्दीक्षेत पुनर्र्यज्ञो ह्येव तत्र प्प्रायश्चित्तिरिति नु कलशदिराम् ॥७॥ अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्च्येत पूतभृत ऽएवोक्थ्यं गृह्णीयाद्यद्युक्थ्यमतिरिच्च्येत षोडशिनमुपेयुर्य्यदि षोडशिनमतिरिच्च्येत रात्रिमुपेयुर्य्यदि रात्रिमतिरिच्च्येताऽहरुपेयुर्न्नैत्त्वेवाऽतीरेकोऽस्ति ॥८॥

पञ्चमाध्याये दशमं ब्राह्मणम् ॥ १० ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ अंशुग्रहः ]

प्रजापतिर्वा ऽएष यदꣳशुः सोऽस्यैष ऽआत्मैवाऽऽत्मा ह्ययं प्रजापतिस्तदस्यैतमात्मानं कुर्वन्ति यत्रैतं गृह्णन्ति तस्मिन्नेतान्प्राणान्दधाति यथा-यथैते प्राणा ग्रहा व्व्याख्यायन्ते स ह सर्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति ॥ १ ॥ तदारम्भणवत् । यत्रैतं गृह्णन्त्यथैतदनारम्भणमिव यत्रैतं न गृह्णन्ति तस्माद्वा ऽअꣳशुं गृह्णाति ॥ २ ॥ तं वा ऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्वा ऽएष प्प्राजापत्य ऽउदुम्बरस्तस्मादौदुम्बरेण पात्रेण गृह्णाति ॥ ३ ॥ तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वा ऽइमे लोकास्तदिमानेव लोकाँस्तिसृभिराप्नोति प्रजापतिर्वा ऽअतीमाँल्लोकाँश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ४ ॥ स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमꣳशून्निवपति तूष्णीमप ऽउपसृजति तूष्णीमुद्यत्य सकृदभिषुणोति तूष्णीमेनमनवानञ्जुहोति तदेनं प्रजापतिं करोति ॥ ५ ॥ अथाऽस्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवाऽत्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ६ ॥ तदु होवाच राम ऽऔपतस्विनिः । काममेव प्राण्यात्काममुदन्यात्यद्वै तूष्णीं जुहोति तदुवैनं प्रजापतिं करोतीति ॥ ७ ॥ अथाऽस्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवाऽत्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ८ ॥ तदु होवाच बुडिल ऽआश्व-

तराश्विः । उद्यत्स्यैव गृह्णीयान्नाऽभिषुणुयादभिषुण्वन्ति वाऽअन्न्याभ्यो देवताभ्यस्तदन्न्यथा ततः करोति यथो चाऽन्न्याभ्यो देवताभ्योऽथ यदुद्यच्छति तदेवाऽस्याऽभिषुतं भवतीति ॥ ९ ॥ तदु होवाच याज्ञवल्क्यः । अभ्येव षुणुयान्न सोम ऽइन्द्रमसुतो ममाद नाऽब्रह्माणो मघवानः सुतास ऽइत्यृषिणाऽभ्यनूक्तं न वा ऽअन्न्यस्यै कस्यै चन देवतायै सकृदभिषुणोति तदन्न्यथा ततः करोति यथो चाऽन्न्याभ्यो देवताभ्यस्तस्मादभ्येव षुणुयादिति ॥ १० ॥ तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरः प्प्रजापतिः प्प्रजापतिरंशुस्तदेनं प्रजापतिं करोति ॥ ११ ॥* तासां द्वादश गर्भाः । ताश्चतुर्विंशतिश्चतुर्विंशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरः प्प्रजापतिः प्प्रजापतिरंशुस्तदेनं प्रजापतिं करोति ॥ १२ ॥ तदु ह कौकूस्तः । चतुर्विंशतिमेवैताः प्प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददावृषभं पञ्चविंशं हिरण्यमेतदु ह स ददौ ॥ १३ ॥ स वा ऽएष न सर्वस्येव ग्ग्रहीतव्व्यः । आत्मा-ह्वस्यैष यो न्न्वेव ज्ञातस्तस्य ग्रहीतव्व्यो यो वाऽस्य प्प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनं प्राऽऽप्नुयात् ॥ १४ ॥ सहस्रे ग्रहीतव्व्यः । सर्वं वै सहस्रं सर्वमेष सर्ववेदसे ग्रहीतव्व्यः सर्वं वै सर्ववेदसं सर्वमेष विश्वजिति सर्वपृष्ठे ग्रहीतव्व्यः सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राज-

* अत्र शतम् २८०० ॥

सूये ग्रहीतव्यः सर्वछ हि तत्सत्रे ग्रहीतव्यः सर्वं वै सत्रछ सर्वमेष ऽएतानि ग्रहणानि ॥ १५ ॥ (A)

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अतिग्राह्यग्रहग्रहणम् ]

एतं वा ऽएते गच्छन्ति। षड्भिर्म्मासैरूर्ध्व ऽएष तपति ये संवत्सरमासते तदुच्च्यत ऽएव सामतो यथैतस्य रूपं क्रियत ऽउच्च्यत ऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं गृह्णन्त्येतेनो ऽएवैनं गच्छन्ति ॥ १ ॥ अथाऽतो * गृह्णात्येव। उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यम्। उपयामगृहीतोऽसि सूर्य्याय त्वा भ्राजायैष ते योनिः सूर्य्याय त्वा भ्राजाये'ति ॥ २ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पश्वयनस्तोमायने ]

अथाऽतः पश्वयनस्यैव। पश्वेकादशिन्न्यैवेयात्स-ऽआग्नेयं प्रथमं पशुमालभतेऽथ वारुणमथ पुनराग्नेयमेवमेवैतया पश्वेकादशिन्न्येयात् ॥ १ ॥ अथो ऽअप्प्यैन्द्राग्नमेवाऽहरहः पशुमालभेत। अग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वतीन्द्रो वै यज्ञस्य देवता तत्सर्वाश्चैवैतद्देवता

---

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ८. १।

* का० श्रौ० सू० १२. २. १४।

( १ ) शु० सं० अ० ८ क० ४१।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. ३।

नाऽपराध्नोति यो च यज्ञस्य देवता तां नाऽपराध्नोति ॥ २ ॥ अथाऽत स्तोमायनस्यैव । आग्नेयमग्निष्टोम ऽआलभेत तद्धि सलोम यदाग्नेयमग्निष्टोम ऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून्व्यावर्त्तयत्येतानि त्रीण्ययनानि तेषां यतमत्कामयेत तेनेयादृद्वा ऽउपालम्भ्यौ पशू सौर्यं द्वितीयं पशुमालभते वैषुवतेऽहन्प्राजापत्यं महाव्रते ॥ ३ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ महाव्रतीयः ]

अथाऽतो महाव्रतीयस्यैव । प्रजापतेर्ह वै प्प्रजाः ससृजानस्य पर्वाणि विसस्रꣳसुः स विस्रस्तैः पर्वभिर्न्न शशाक सꣳहातुं ततो देवा ऽअर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतं महाव्रतीयं ददृशुस्तमस्म्मा ऽअगृह्णँस्तेनाऽस्य पर्वाणि समदधुः ॥ १ ॥ स सꣳहितैः पर्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यं यद्वै मनुष्याणामशनं तद्देवानां व्रतं महद्वा ऽइदं व्रतमभूद्येनाऽयꣳ समहास्तेति तस्म्मान्महाव्रतीयो नाम ॥ २ ॥ एवं वा ऽएते भवन्ति । ये संवत्सरमासते यथैव तत्प्रजापतिः प्प्रजाः ससृजान-

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. २ ।

ऽआसीत्स यथैव तत्प्रजापतिः संवत्सरेऽन्नाद्यमभ्युदतिष्ठदेवमेवैत ऽएतत्संवत्सरेऽन्नाद्यमभ्युत्तिष्ठन्ति येषामेवं विदुषामेतं ग्रहं गृह्णन्ति ॥ ३ ॥ तं वा ऽइन्द्रायैव * विमृधे गृह्णीयात् । सर्वा वै तेषां मृधो हता भवन्ति सर्वं जितं ये संवत्सरमासते तस्माद्विमृधे 'वि[1] न ऽइन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो ऽअस्माँ२ ऽअभिदासत्यधरं गमया तमः । उपयाम गृहीतोऽसीन्द्राय त्वा विमृध ऽएष ते योनिरिन्द्राय त्वा विमृध' ऽइति ॥ ४ ॥ अथो विश्वकर्म्मणे । विश्वं वै तेषां कर्म्म कृतः सर्वं जितं भवति ये संवत्सरमासते तस्माद्विश्वकर्म्मणे 'वाचस्पतिं[2] विश्वकर्म्माणमूतये मनोजुवं वाजे ऽअद्या हुवेम । स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा । उपयाम गृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण ऽएष ते योनिरिन्द्राय त्वा विश्वकर्मण' ऽइति ॥ ५ ॥ यद्यु ऽऐन्द्रीं वैश्वकर्म्मणीं विद्यात् । तथैव गृह्णीया'द्वि[3]श्वकर्म्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो वि हव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण ऽएष ते योनिरिन्द्राय त्वा विश्वकर्म्मण'-ऽइति ॥ ६ ॥ (D)

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



* का० श्रौ० सू० १३. २. २३ ।

(१) शु० सं० अ० ८ क० ४४ । (२) शु० सं० अ० ८ क० ४५ । (३) शु० सं० अ० ८ क० ४६ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युलभ्यन्ते— का० श० ५. ७. ४ ।

[ ग्रहस्तुतिः ]

एष वै ग्रहः । य ऽएष तपति येनेमाः सर्वाः प्प्रजा गृहीतास्तस्मादाहुर्ग्रहान्न्गृह्णीम ऽइति चरन्ति ग्रहगृहीताः सन्त ऽइति ॥ १ ॥ व्वागेव ग्रहः । व्वाचा हीदꣳ सर्व्वं गृहीतं किमु तद्यद्वाग्ग्रहः ॥ २ ॥ नामैव ग्रहः । नाम्म्ना हीदꣳ सर्व्वं गृहीतं किमु तद्यन्नाम ग्रहो बहूनां वै नामानि व्विद्माऽथ नस्तेन ते न गृहीता भवन्ति ॥ ३ ॥ अन्नमेव ग्रहः । अन्नेन हीदꣳ सर्व्वं गृहीतं तस्माद्यावन्तो नोऽशनमश्नन्ति ते नः सर्व्वे गृहीता भवन्त्येषैव स्त्थितिः ॥ ४ ॥ स य ऽएष सोमग्रहः । अन्नं व्वा ऽएष स यस्यै देवताया ऽएतं ग्रहं गृह्णाति साऽस्मै देवतैतेन ग्रहेण गृहीता तं कामꣳ समर्द्धयति यत्काम्म्या गृह्णाति स ऽउद्यन्तं व्वाऽऽदित्यमुपतिष्ठतेऽस्तं य्यन्तं व्वा गृहोऽस्यमुमनयाऽऽर्त्या गृहाणाऽसावदोमा प्प्रापदिति यं द्विष्यादसावस्मै कामो मा समर्द्धीति वा न हैवाऽस्मै स कामः समृद्ध्यते यस्म्माऽएवमुपतिष्ठते ॥ ५ ॥ (E)

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ सौमिकं ब्रह्मत्वम् ]

देवा ह वै यज्ञं तन्न्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्ते होचुः को नो दक्षिणत ऽआसिष्यतेऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥ १ ॥

(E) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. १ ।

ते होचुः । य ऽएव नो वीर्य्यवत्तमः स दक्षिणत ऽआस्तामथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥ २ ॥ ते होचुः । इन्द्रो वै नो वीर्य्यवत्तम ऽइन्द्रो दक्षिणतऽआस्तामथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥३॥ ते हेन्द्रमूचुः । त्वं वै नो वीर्य्यवत्तमोऽसि त्वं दक्षिणतऽआस्वाऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥ ४ ॥ स होवाच । किं मे ततः स्यादिति ब्राह्मणाच्छꣳसिस्या ते ब्रह्मसाम त ऽइति तस्माद्ब्राह्मणाच्छꣳसिनं प्रवृणीत ऽइन्द्रो ब्रह्मा ब्राह्मणादितीन्द्रस्य ह्येषा स ऽइन्द्रो दक्षिणत ऽआस्ताऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपाऽऽचरँस्तस्माद्य ऽएव वीर्य्यवत्तमः स्यात्स दक्षिणत ऽआसीताऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरेयुरुर्य्यो वै ब्राह्मणानामनूचानतमः स ऽएषां वीर्यवत्तमोऽथ यदिदं रुय ऽएव कश्च ब्रह्मा भवति कुवित्तूष्णीमास्त ऽइति तस्माद्य ऽएव वीर्य्यवत्तमः स्यात्स दक्षिणत ऽआसीताऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरेयुस्तस्माद्ब्राह्मणा दक्षिणत ऽआसतेऽथाऽभयेऽनाष्ट्र ऽउत्तरतो यज्ञमुपचरन्ति ॥ ५ ॥ स यत्राऽऽह । ब्रह्मन्स्तोष्यामः प्प्रशास्तरिति तद् ब्रह्मा *जप[१]त्येतं ते देव सवितर्य्यज्ञं प्राहुर्बृहस्प्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव । स्तुत सवितुः प्प्रसव' ऽइति सोऽसावेव बन्धुरेतेन न्वेव भूयिष्ठा ऽइवोपचरन्ति ॥ ६ ॥ अनेन त्वेवोपचरेत् । 'देव सवितरेतद् बृहस्प्पते प्प्रेति' तत्स-

* का० श्रौ० सू० २. २. १९ ।
( १ ) शु० सं० अ० २ क० १२ ।

वितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पते प्प्रेति बृहस्प्पतिर्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्म्मा ऽएवैतत्प्राऽऽह तस्म्मादाह बृहस्पते प्प्रेति ॥ ७ ॥ अथ मैत्रावरुणो जपति । 'प्रसूतं देवेन सवित्रा जुष्टं मित्रावरुणाब्भ्यामि'ति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता जुष्टं मित्रावरुणाब्भ्यामिति मित्रावरुणौ वै मैत्रावरुणस्य देवते तद्ये ऽएव मैत्रावरुणस्य देवते ताब्भ्यामेवैतत्प्राऽऽह तस्म्मादाह जुष्टं मित्रावरुणाब्भ्यामिति ॥ ८ ॥ (F)

षष्ठाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ ब्रह्मत्व-सदो-हविर्धान-विधिशेषः ]

त्रयी वै विद्या । ऋचो यजूꣳषि सामानीयमेवर्चोऽस्याꣳ ह्यर्च्चति योऽर्च्चति स व्वागेवर्चो व्वाचा ह्यर्च्चति योऽर्च्चति सोऽन्तरिक्षमेव यजूꣳषि द्यौः सामानि सैषा त्रयी व्विद्या सौम्म्येऽद्ध्वरे प्प्रयुज्यते ॥ १ ॥ इममेव लोकमृचा जयति । अन्तरिक्षं य्यजुषा दिवमेव साम्म्ना तस्म्माद्यस्यैका व्विद्याऽनूक्ता स्यादुत्त्वेवाऽपीतरयोर्न्निर्म्मितं व्विवक्षेतेममेव लोकमृचा जयत्यन्तरिक्षं य्यजुषा दिवमेव साम्म्ना ॥ २ ॥ तद्वा ऽएतत् । सहस्रं व्वाचः प्प्रजातं द्वे ऽइन्द्रस्तृतीये तृतीयं व्विष्णुर्ऋ्चश्च सामानि चेन्द्रो यजूꣳषि व्विष्णुस्तस्म्मात्सदस्यृक्सामाब्भ्यां कुर्वन्त्यैन्द्रꣳ हि सदः ॥ ३ ॥ [अर्धप्रपाठकः ६३ ॥] अथैतं व्विष्णुं य्यजम् । एतैर्य्यजुर्ब्भिः पुर-

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ७. ६ ।

ऽइवैव बिभ्रति तस्मात्पुरश्चरणं नाम ॥४॥ वागेवर्चश्च सामानि च। मन ऽएव यजूᳬंषि सा यत्रेयं वागासीत्सर्वमेव तत्राऽक्रियत सर्वं प्राऽज्ञायताऽथ यत्र मन ऽआसीन्नैव तत्र किञ्चनाऽक्रियत न प्राऽज्ञायत नो हि मनसा ध्यायतः कश्चनाऽऽजानाति ॥५॥ ते देवा वाचमब्रुवन्। प्राची प्रेहीदं प्रज्ञपयेति सा होवाच किं मे ततः स्यादिति यत्किञ्चाऽवषट्कृतᳬं स्वाहाकारेण यज्ञे हूयते तत्त ऽइति तस्माद्यत्किञ्चाऽवषट्कृतᳬं स्वाहाकारेण यज्ञे हूयते तद्वाचः सा प्राची प्रैत्सैतत्प्राज्ञपयदितीदं कुरुतेतीदं कुरुतेति ॥ ६ ॥ तस्मादु कुर्वन्त्येवर्चा हविर्द्धाने। प्रातरनुवाकमन्वाह सामिधेनीरन्वाह ग्राव्णोऽभिष्टौत्येवᳬं हि सयुजावभवताम् ॥ ७ ॥ तस्मादु कुर्वन्त्येव सदसि। यजुषौदुम्बरीमुच्छ्रयन्ति सदः सम्मिन्वन्ति धिष्ण्यानुपकिरन्त्येवᳬं हि सयुजावभवताम् ॥ ८ ॥ तद्वाऽएतत्सदः परिश्रयन्ति। एतस्मै मिथुनाय तिर ऽइवेदं मिथुनं चर्य्याता ऽइति व्यृद्धं वा ऽएतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत ऽआग ऽएव कुर्वाते तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा ऽइति यथा ह मिथुनं चर्य्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतᳬं हि द्वारम् ॥ ९ ॥ एवमेवैतद्धविर्द्धानं परिश्रयन्ति। एतस्मै मिथुनाय तिर ऽइवेदं मिथुनं चर्य्याता ऽइति व्यृद्धं वा ऽएतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत ऽआग ऽएव कुर्वाते तस्माद्द्वारेण हविर्द्धानं

प्रेक्षमाणं ब्रूयान्मा प्प्रेक्षथा ऽइति यथा ह मिथुनं चर्य्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतꣳ हि द्वारम् ॥ १० ॥ तद्वा ऽएतद् । वृषा साम योषामृचꣳ सदस्यद्ध्येति तस्मा-न्मिथुनादिन्द्रो जातस्तेजसो वै तत्तेजो जातं यदृचश्च साम्नश्चेन्द्र ऽइन्द्र ऽइति ह्येतमाचक्षते य ऽएष तपति ॥ ११ ॥ अथैतद् वृषा सोमः । योषा ऽअपो हविर्द्धाने-ऽद्ध्येति तस्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्वै तदन्नं जातं यदद्भ्यश्च सोमाच्च चन्द्रमाश्चन्द्रमा ह्येतस्याऽन्नं य-ऽएष तपति तद्यजमानं चैवैतज्जनयत्यन्नाद्यं चाऽस्मै जनय-त्यृचश्च साम्नश्च यजमानं जनयत्यद्भ्यश्च सोमाच्चा-ऽस्माऽन्नाद्यम् ॥ १२ ॥ यजुषा ह वै देवाः । अग्रे यज्ञं तेनिरेऽथर्च्चाऽथ साम्ना तदिदमप्येतर्हि यजुषैवाऽग्रे यज्ञं तन्वतेऽथर्च्चाऽथ साम्ना यजो ह वै नामैतद्यद्यजुरिति ॥ १३ ॥ यत्र वै देवाः । इमा विद्याः कामान्दुदुह्रे तद्ध यजुर्वि-द्यैव भूयिष्ठान्कामान्दुदुहे सा निर्द्धीततमेवाऽऽस सा नेतरे विद्ये प्प्रत्यास नाऽन्तरिक्षलोक ऽइतरौ लोकौ प्प्रत्यास ॥ १४ ॥ ते देवा ऽअकामयन्त । कथं न्वियं विद्येतरे विद्ये प्प्रतिस्यात्कथमन्तरिक्षलोक ऽइतरौ लोकौ प्प्रतिस्यादिति ॥ १५ ॥ ते होचुः । उपाꣳशवेव यजुर्भिश्चराम तत ऽएषा विद्येतरे विद्ये प्रतिभवि-ष्यति ततोऽन्तरिक्षलोक ऽइतरौ लोकौ प्प्रति भवि-ष्यतीति ॥ १६ ॥ तैरुपाꣳश्वचरन् । आप्याययन्नेवैनानि तत्तत ऽएषा विद्येतरे विद्ये प्प्रत्यासीत्ततोऽन्तरिक्षलोक-

ऽइतरौ लोकौ प्प्रत्त्यासीत्तस्स्माद्यजूᳪंषि निरुक्तानि सन्त्त्यनिरुक्तानि तस्स्मादयमन्तरिक्षलोको निरुक्तः सन्ननिरुक्तः ॥ १७ ॥ स य ऽउपाᳪंशु यजुर्ब्भिश्च्चरति । आप्प्याय्यत्त्येवैनानि स तान्न्येनमापीनान्न्याऽऽप्प्याययन्त्त्यथ य ऽउच्चैश्च्चरति रूक्षयत्त्येवैनानि स तान्न्येनᳪं रूक्षाणि रूक्षयन्ति ॥ १८ ॥ व्वागेवर्च्चश्च्च सामानि च । मन ऽएव यजूᳪंषि स य ऽऋचा च साम्म्ना च चरन्ति व्वाक्के भवन्त्त्यथ ये यजुषा चरन्ति मनस्ते भवन्ति तस्स्मान्नाऽनभिप्प्रेषितमद्ध्वर्य्युणा किञ्चन क्रियते यद्दैवाऽद्ध्वर्य्युराहाऽनुब्रूहि यजेत्त्यथैव ते कुर्व्वन्ति य ऽऋचा कुर्व्वन्ति यद्दैवाऽद्ध्वर्य्युराह सोमᳪं पवत ऽउपावर्त्तद्ध्वमित्त्यथैव ते कुर्व्वन्ति ये साम्म्ना कुर्व्वन्ति नो ह्यनभिगतं मनसा व्वाग्वदति ॥ १९ ॥ तद्वा ऽएतन्मनोऽद्ध्वर्य्युः । पुर ऽइवैव चरति तस्मात्पुरश्च्चरणं नाम पुर ऽइव ह वै श्रिया यशसा भवति य ऽएवमेतद्वेद ॥२०॥ तद्वा ऽएतदेव पुरश्च्चरणम् । य ऽएष तपति स ऽएतस्यैवाऽऽवृता चरेद् ग्रहं गृहीत्त्वैतस्यैवाऽऽवृतमन्न्वावर्त्तेत प्प्रतिगीर्य्यैतस्यैवाऽऽवृतमन्न्वावर्त्तेत ग्रहᳪं हुत्त्वैतस्यैवाऽऽवृतमन्न्वावर्त्तेत स हैष भर्त्ता स यो हैवं विद्वानेतस्याऽऽवृता शक्कोति चरितुᳪं शक्नोति हैव भार्य्यान्भर्त्तुम् ॥ २१ ॥ (G)

षष्ठाध्याये सप्तमं ब्रह्मणम् ॥ ७ ॥



(G) एतद्ब्राह्मणगतविषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ८. ४ ।

[ सत्रायणम् ]

या वै दीक्षा सा निषत्। तत्सत्रं तस्मादेना नाऽऽसत-ऽइत्याहुरथ यत्ततो यज्ञं तन्वते तद्यन्ति तन्नयति यो नेता भवति स तस्मादेनान्यन्तीत्याहुः ॥ १ ॥ या ह दीक्षा सा निषत्। तत्सत्रं तदयनं तत्सत्रायणमथ यत्ततो यज्ञस्योदृचं गत्वोत्तिष्ठन्ति तदुत्थानं तस्मादेनानुदस्थुरित्याहुरिति नु पुरस्ताद्वदनम् ॥ २ ॥ अथ दीक्षिष्यमाणाः समवस्यन्ति। ते यद्यग्निं चेष्यमाणा भवन्त्यरणिष्वेवाऽग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याऽऽहवनीयं यजन्तऽएतेन प्राजापत्येन पशुना ॥ ३ ॥ तस्य शिरो निदधति। तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाऽग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ ४ ॥ अथ यदहरेषां दीक्षा समैति। अरणिष्वेवाऽग्नीन्त्समारोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थते मध्यं प्रति शालाया ऽअथेतरेषामर्द्धा दक्षिणत ऽउपविशन्त्यर्द्धाऽउत्तरतो मथित्वोपसमाधायैकैकमेवोल्मुकमादायोपसमायन्ति गृहपतेर्गार्हपत्यं गृहपतेरेव गार्हपत्यादुद्धृत्याऽऽहवनीयं दीक्षन्ते तेषाꣳ समान ऽआहवनीयो भवति नाना गार्हपत्या दीक्षोपसत्सु ॥ ५ ॥ अथ यदहरेषां क्रयो भवति। तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्यऽउपवसथे धिष्ण्याग्न्वैसर्जिनानां काले प्राच्यः पत्न्यऽउपसमायन्ति प्रजहत्येतानपरानग्नीन्हुत ऽएव वैस-

र्ज्जिने ॥ ६ ॥ राजानं प्रणयति । उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैत ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति तैरेव तेषामुल्मुकैः प्प्रग्घ्नन्तीति ह स्माऽऽह याज्ञवल्क्यो ये तथा कुर्वन्तीत्येतन्न्वेकमयनम् ॥ ७ ॥ अथेदं द्वितीयम् । अरणिष्वेवाऽग्नीन्त्समारोह्योपसमायन्ति यत्र प्प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्त्वोपसमाधाय्योद्धृत्याऽऽहवनीयं स्सृजन्त ऽएतेन प्प्राजापत्येन पशुना ॥ ८ ॥ तस्य शिरो निदधति । तेषां स्सदि तदहर्दीक्षा न समैत्यरणिष्वेवाऽग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ ९ ॥ अथ यदहरेषां दीक्षा समैति । अरणिष्वेवाऽग्नीन्त्समारोह्योप समायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्प्रथमो मन्थतेऽथेतरे पर्य्युपविश्य मन्थन्ते ते जातं-जातमेवाऽनुप्प्रहरन्ति गृहपतेर्गार्हपत्त्ये गृहपतेरेव गार्हपत्याद्दुद्धृत्याऽऽहवनीयं दीक्षन्ते तेषाᳶं समान ऽआहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥ १० ॥ अथ यदहरेषां क्रयो भवति । तदहर्ग्गार्हपत्त्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्न्वैसर्ज्जिनानां काले प्प्राच्च्यः पत्त्न्यऽउपसमायन्ति प्प्रजहत्त्येतमपरमग्निᳶं हुत ऽएव वैसर्ज्जिने ॥ ११ ॥ राजानं प्रणयति । उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैत ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति समदमु हैव ते कुर्वन्ति समद्धैनाविन्दत्त्यर्त्तुका ह भवन्त्यपि ह तमर्द्धᳶं समद्विन्दति यस्मिन्नर्द्धे यजन्ते ये तथा कुर्वन्त्येतद् द्वितीयमयनम् ॥ १२ ॥ अथेदं तृतीयम् ।

गृहपतेरेवाऽरण्योः संवदन्ते य ऽइतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या य ऽएव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते त ऽआयन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याऽऽहवनीयं सृजन्त ऽएतेन प्राजापत्येन पशुना ॥ १३ ॥ तस्य शिरो निदधति। तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाऽग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ १४ ॥ अथ यदहरेषां दीक्षा समैति। गृहपतेरेवाऽरण्योः संवदन्ते य ऽइतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन सत्रेण तन्नः सह सह नः साधुकृत्या य-ऽएव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते त ऽआयन्ति यत्र दीक्षिष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याऽऽहवनीयं दीक्षन्ते तेषाᳬं समान ऽआहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥ १५ ॥ अथ यदहरेषां क्रयो भवति। तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य ऽउपसमायन्ति प्रजहत्येतमपरमग्निᳬं हुत ऽएव वैसर्जिने ॥ १६ ॥ राजानं प्रणयति। उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैन ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति तत्तत्कृतं नाऽकृतं यन्नाना धिष्ण्या

भवन्ति व्रीयानाकाशोऽसत्परिचरणायेत्यथ यन्नाना पुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्या ऽइति ॥ १७ ॥ अथ येन सत्रेण देवाः। क्षिप्र ऽएव पाप्मानमपाऽघ्नतेमां जितिमजयन्त्यैषामियं जितिस्तदुत ऽउद्यत ऽएकगृहपतिका वै देवा ऽएकपुरोडाशा ऽएकधिष्ण्याः क्षिप्र ऽएव पाप्मानमपाऽघ्नत क्षिप्रे प्राऽजायन्त तथो ऽएवैत ऽएकगृहपतिका ऽएकपुरोडाशा ऽएकधिष्ण्याः क्षिप्र ऽएव पाप्मानमपघ्नते क्षिप्रे प्रजायन्ते ॥ १८ ॥ अथाऽदः पूर्वस्मिन्नुदीचीनवंशा शाला भवति। तन्मानुषं समान ऽआहवनीयो भवति नाना गार्हपत्यास्तद्विकृष्टं गृहपतेरेव गार्हपत्ये जाघन्न्या पत्नीः संयाजयन्त्याज्येनेतरे प्रतियजन्त ऽआसते तद्विकृष्टम् ॥ १९ ॥ अथाऽत्र प्राचीनवंशा शाला भवति। तद्देवत्रा समान ऽआहवनीयो भवति समानो गार्हपत्यः समान ऽआग्नीध्रीयस्तदेतत्सत्रं समृद्धं यथैकाहः समृद्धऽएव तस्य न ह्वलाऽस्ति तस्यैषैव समान्यावृद्यदन्यद्धिष्ण्येभ्यः ॥ २० ॥

षष्ठाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥



[ सत्रधर्माः ]

देवा ह वै सत्रमासत। श्रियं गच्छेम यशः स्यामाऽन्नादाः स्यामेति तेभ्य ऽएतदन्नाद्यमभिजितमपाऽचिक्रमिषत्पशवो वा ऽअन्नं पशवो हैवैभ्यस्तदुपाचिक्रमिषन्न्यद्दै न ऽइमे श्रान्ता नु हिंस्युः कथमिव स्विन्नः सक्ष्यन्त-

ऽइति ॥ १ ॥ त ऽएते गार्हपत्त्ये द्वे ऽआहुती ऽअजुहवुः । गृहा वै गार्हपत्त्यो गृहा वै प्प्रतिष्ठा तदेनाङ्गृहेष्वेव न्ययच्छँस्तथैभ्य ऽएतदन्नाद्यमभिजितं नाऽपाऽक्रामत् ॥ २ ॥ तथो ऽएवेमे सत्रमासते । ये सत्रमासते श्रियं गच्छेम यशः स्यामाऽन्नादाः स्यामेति तेभ्य ऽएतदन्नाद्यमभिजितमपचिक्रमिषति पशवो वा ऽअन्नं पशवो हैवैभ्यस्तदुपचिक्रमिषन्ति यद्वै न ऽइमे श्रान्ता न हिंस्युः कथमिव स्विन्नः सक्ष्यन्त ऽइति ॥ ३ ॥ त ऽएते गार्हपत्त्ये द्वेऽआहुती जुह्वति । गृहा वै गार्हपत्त्यो गृहा वै प्प्रतिष्ठा तदेनाङ्गृहेष्वेव नियच्छन्ति तथैभ्य ऽएतदन्नाद्यमभिजितं नाऽपक्रामति ॥ ४ ॥ तथो ऽएवैतस्मात् । ऽएतदन्नाद्यमुपाऽऽहृतमपचिक्रमिषति यद्वै माऽयं न हिंस्यात्कथमिव स्विन्न्मा सक्ष्यत ऽइति ॥ ५ ॥ तस्य परस्तादेवाऽग्रेऽल्पश ऽइव प्प्राऽश्नाति । तदेनदुपनिमदति तद्वेद न वै तथा भूद्यथाऽमहंसि न वै मा हिंसीदिति तदेनमुपाऽवश्रयते स ह प्प्रिय ऽएवाऽन्नस्याऽन्नादो भवति य ऽएवं विद्वानेतस्य व्रतं शक्नोति चरितुम् ॥ ६ ॥ तद्वा ऽएतत् । * दशमेऽहन्त्सत्रोत्त्थानं क्रियते तेषामेकैक ऽएव वाचँयमऽआस्ते व्वाचमाप्प्याययँस्तयाऽपीनयाऽयातयाम्म्न्योत्तरमहस्तन्न्वतेऽथेतरे व्विसृज्यन्ते समिद्धारा वा स्वाध्यायं व्वा तत्राऽप्प्यश्नन्ति ॥ ७ ॥ तेऽपराह्ण ऽउपसमेत्त्य । अप ऽउपस्पृश्य पत्नीशालं सम्प्रपद्यन्ते तेषु समन्न्वारब्धेष्वेते-

* "दशमेऽपराह्णेऽप उपस्पृश्य शालाप्रवेशनम्" ( का० श्रौ० सू० १२. ४. ७ )।

ऽआहुती * जुहोती'[1]ह रतिरिह रमद्ध्वमिह धृतिरिह स्वधृतिः स्वाहे'ति पशूनेवैतदाह पशूनेवैतदात्मन्नियच्छन्ते ॥ ८ ॥ अथ द्वितीयां जुहोति । '[2]उपसृजन्धरुणं मात्र' ऽइत्त्यग्निमेवैतत्पृथिव्व्या ऽउपसृजन्नाह '[3]धरुणो मातरं धयन्नित्त्य'ग्निमेवैतत्पृथिवीं धयन्तमाह 'रा[4]यस्स्पोषमस्म्मासु दीधरत्स्वाहे'ति पशवो वै रायस्स्पोषः पशूनेवैतदात्मन्नियच्छन्ते ॥ ९ ॥ ते प्प्राञ्च ऽउपनिष्क्रामन्ति । ते पश्चात्प्राञ्चो हविर्द्धाने सम्प्रपद्यन्ते पुरस्ताद्वै प्प्रत्यञ्चस्तछंस्यमानाऽअथैवछं सत्रोत्थाने ॥ १० ॥ त ऽउत्तरस्य † हविर्द्धानस्य । जघन्न्यायां कूबर्य्याछं सामाऽभिगायन्ति 'स[5]त्रस्य ऽऋद्धिरि'ति राद्धिमेवैतदभ्युत्तिष्ठन्त्युत्तरवेदेर्व्वोत्तरायाछं श्रोणावितरं तु कृततरम् ॥ ११ ॥ यदुत्तरस्य हविर्द्धानस्य । जघन्न्यायां कूबर्य्या'[6]मगन्न्म ज्योतिरमृता ऽअभूमे'ति ज्योतिर्व्वा ऽएते भवन्त्यमृता भवन्ति ये सत्रमासते 'दिवं पृथिव्व्या ऽअध्यारुहामे'ति दिवं व्वा ऽएते पृथिव्व्याऽअध्यारोहन्ति ये सत्रमासतेऽविदाम देवानि'ति विन्दन्ति हि देवा'न्त्स्वर्ज्ज्योतिरि'ति त्रिर्न्निधनमुपाऽवयन्ति स्वर्ह्येते ज्योतिर्ह्येते भवन्ति तद्यदेवैतस्य साम्म्नो रूपं तदेवैते

* का० श्रौ० सू० १२. ४. ८,९ ।

( १ ) शु० सं० अ० ८ क० ५१ । ( २ ) शु० सं० अ० ८ क० ५१ । ( ३ ) शु० सं० अ० ८ क० ५१ । ( ४ ) शु० सं० अ० ८ क० ५१ ।

† का० श्रौ० सू० १२. ४. १० ।

( ५ ) शु० सं० अ० ८ क० ५२ । ( ६ ) शु० सं० अ० ८ क० ५२ । ( ७ ) शु० सं० अ० ८ क० ५२ । ( ८ ) शु० सं० अ० ८ क० ५२ । ( ९ ) शु० सं० अ० ८ क० ५२ ।

भवन्ति ये सत्रमासते ॥ १२ ॥ ते दक्षिणस्य हविर्द्धानस्य । अधोऽधोऽक्षꣳ सर्प्पन्ति स यथाऽहिस्त्वचो निर्म्मुच्च्येतैवꣳ सर्व्वस्म्मात्पाप्म्मनो निर्म्मुच्च्यन्तेऽतिच्छन्दसा सर्प्पन्त्येषा वै सर्व्वाणि च्छन्दाꣳसि यदतिच्छन्दास्तथैनान्न्पाप्म्मा नाऽन्न्वेत्येति तस्म्मादतिच्छन्दसा सर्प्पन्ति ॥ १३ ॥ ते * सर्प्पन्ति । '[1]युवं तमिन्द्रा पर्व्वता पुरोयुधा यो नः पृतन्न्यादप तं तमिद्धतं वज्ज्रेण तं तमिद्धतम् । दूरे चत्ताऽय च्छन्त्सद् गहनं यदिनक्षत् । अस्म्माकꣳ शत्रून्न्परि शूर विश्वतोऽदर्म्मा दर्षीष्ट विश्वत' ऽइति ॥ १४ ॥ ते प्प्राञ्चऽउपनिष्क्रामन्ति । ते पुरस्तात्प्रत्त्यञ्चः सदः † सम्प्रपद्यन्ते पश्चाद्वै प्प्राञ्चस्तꣳस्यमाना ऽअथैवꣳ सत्रोत्त्थाने ॥ १५ ॥ ते यथा धिष्ण्यमेवोपविशन्ति । देवेब्भ्यो ह वै वाचो रसोऽभिजितोऽपचिक्रमिषां चकार स ऽइमामेव पराङत्त्यसिसृप्प्सदियं वै वाक्तस्या ऽएष रसो यदोषधयो यद्वनस्प्पतयस्तमेतेन साम्म्नाऽऽप्प्नुवन्त्स ऽएनानाप्तोऽब्भ्यावर्त्तत तस्म्मादस्यामूर्द्ध्वा ऽओषधयो जायन्त ऽऊर्द्ध्वा वनस्प्पतयस्तथोऽएवैतेब्भ्य ऽएतद्वाचो रसोऽभिजितोऽपचिक्रमिषति सऽइमामेव पराङतिसिसृप्प्सतीयं वै वाक्तस्या ऽएष रसो यदोषधयो यद्वनस्प्पतयस्तमेतेन साम्म्नाऽऽप्प्नुवन्ति सऽएनानाप्तोऽब्भ्यावर्त्तते तस्म्मादस्यामूर्द्ध्वा ऽओषधयो जायन्त ऽऊर्द्ध्वा वनस्प्पतयः ॥ १६ ॥ सर्प्पराज्ञ्या ऽऋक्षु स्तुवते ।

* का० श्रौ० सू० १२. ४. १२ ।
(१) शु० सं० अ० ८ क० ५३ ।
† का० श्रौ० सू० १२. ४. १३ ।

इयं व्वै पृथिवी सर्प्पराज्ञी तदनयैवैतत्सर्व्वमाप्नुवन्ति स्वयम्प्रस्तुतमनुपगीतं ग्यथा नाऽन्न्य ऽउपशृणुयादिति ह रेचयेद्यदन्न्यः प्प्रस्तुयादतिरेचयेद्यदन्न्य ऽउपगायेदतिरेचयेद्यदन्य ऽउपशृणुयात्तस्मात्स्वयम्प्रस्तुतमनुपगीतम् ॥ १७ ॥ चतुर्होतृन्होता * व्व्याचष्टे। एतदेवैतत्स्तुतमनुशंसति यदि होता न व्विद्याद् गृहपतिर्व्याचक्षीत होतुस्त्वेव व्व्याख्यानम् ॥१८॥ अथाऽध्वर्ग्योः प्प्रतिगरः। 'अरात्सुरिमे यजमाना भद्रमेभ्यो यजमानेभ्योऽभूदि'ति कल्याणमेवैतन्मानुष्यै व्वाचो व्वदति ॥१९॥ अथ व्वाकोवाक्ये † ब्रह्मोद्यं वदन्ति। सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ग्ये सत्रमासतेऽचारिषुर्य्यजुर्भिस्तत्तान्न्यापँस्तदवारुत्सताऽशंसिषुर्ऋचस्तत्ता ऽआपँस्तदवारुत्सताऽस्तोषत सामभिस्तत्तान्न्यापँस्तदवारुत्सताऽथैषामेतदेवाऽनाप्तमनवरुद्धं भवति यद्वाकोवाक्यं ब्राह्मणं तदेवैतेनाऽऽप्नुवन्ति तदवरुन्धते ॥ २० ॥ ‡ औदुम्बरीमुपसंसृप्य व्वाचं ग्यच्छन्ति। व्विदुहन्ति वा ऽएते यज्ञं निर्द्धयन्ति ये व्वाचा यज्ञं तन्न्वते व्वाग्घि यज्ञस्तामेषां पुरैकैकऽएव व्वाचंग्यम ऽआस्ते व्वाचमाप्याययँस्तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्न्वतेऽथाऽत्र सर्व्वैव व्वागाप्ता भवत्त्यपवृक्ता ताः सर्व्व ऽएव व्वाचंग्यमा व्वाचमाप्यायन्ति तयाऽऽपीनयाऽयातयाम्न्याऽतिरात्रं तन्न्वते ॥ २१ ॥ औदुम्बरीमन्न्वारभ्याऽऽसते। अन्नं वा ऽऊर्ग्गुदुम्बर ऽऊर्ज्जैवैतद्वाचमाप्याय-

* "चतुर्होतृव्याख्यानं होतुः" ( का० श्रौ० सू० १२. ४. १६ )।
( १ ) का० श्रौ० सू० १२. ४. १८।
† का० श्रौ० सू० १२. ४. १९,२०।
‡ का० श्रौ० सू० १२. ४. २२।

यन्ति ॥ २२ ॥ * तेऽस्तमिते प्प्राञ्च ऽउपनिष्क्रामन्ति । ते जघनेनाऽऽहवनीयमासतेऽग्रेण हविर्द्धाने तान्वाचंय्यमानेव वाचंय्यमः † प्प्रतिप्रस्थाता वसतीवरीभिरभिपरिहरति ते यत्कामा ऽआसीरँस्तेन वाचं विसृजेरन्कामैर्ह स्म वै पुरर्षयः सत्त्रमासतेऽसौ नः कामः स नः समृद्ध्यतामिति यद्यु ऽअनेककामाः स्युर्ल्लोककामा वा प्प्रजाकामा वा पशुकामा वा ॥ २३ ॥ अनेनैव वाचं ‡ विसृजेरन् । 'भूर्ब्भुवः स्वरि'ति तत्सत्येनैवैतद्वाचः समर्द्धयन्ति तया समृद्धयाऽऽशिष ऽआशासते 'सुप्प्रजाः[2] प्प्रजाभिः स्यामे'ति तत्प्रजामाशासते 'सुवीरा[3] वीरैरि'ति तद्वीरानाशासते 'सुपोषाः पोषैरि'ति तत्पुष्टिमाशासते ॥ २४ ॥ अथ गृहपतिः सुब्रह्मण्यामाह्वयति । यं वा गृहपतिर्ब्रूयात्पृथग्गु हैवैके सुब्रह्मण्यामाह्वयन्ति ‡‡ गृहपतिस्त्वेव सुब्रह्मण्यामाह्वयेद्यं वा गृहपतिर्ब्रूयात्तस्मिन्त्समुपहवमिष्ट्वा समिधोऽभ्यादधति ॥ २५ ॥ (I)

## षष्ठाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ॥१२६॥

## इति षष्ठोऽध्यायः ॥ ६ ॥

ग्रहनामकं चतुर्थं काण्डं $ समाप्तम् ॥ ४ ॥



* का० श्रौ० सू० १२. ४. २३ ।
† का० श्रौ० सू० १२. ४. २४ ।
‡ का० श्रौ० सू० १२. ४. २५,२६ ।
( १ ) शु० सं० अ० ८ क० ५३ । ( २ ) शु० सं० अ० ८ क० ५३ । ( ३ ) शु० सं० अ० ८ क० ५३ । ( ४ ) शु० सं० अ० ८ क० ५३ ।

‡‡ का० श्रौ० सू० १२. ४. २७–२९ । (I) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ५. ८. ३ । $ अस्मिन् काण्डे कण्डिकासंख्या ॥६४८॥

# अथ सवनाम पञ्चमं काण्डम्



अस्मिन् काण्डे प्रतिपाद्यौ विषयौ—

वाजपेयो राजसूयश्च



## [ अथ वाजपेयविधिप्रस्तावः ]

( तत्र इन्द्रवृत्तान्ताख्यानम्, सावित्रहोमविध्यादिकञ्च )

॥ ॐ ॥ देवाश्च वा ऽअसुराश्च । उभये प्प्राजापत्याः पस्प्पृधिरे ततोऽसुरा ऽअतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवाऽऽस्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नाऽतिमन्येत पराभवस्य हैतन्मुखं यदतिमानः ॥ १ ॥ अथ देवाः । अन्न्योऽन्न्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्प्रजापतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नम् ॥ २ ॥ ते होचुः । कस्य न ऽइदं भविष्यतीति ते मम ममेत्त्येव न सम्पादयाञ्चक्रुस्ते हाऽसम्पाद्योचुराजिमेवाऽस्मिन्नजामहै स यो न ऽउज्जेष्यति तस्य न ऽइदं भविष्यतीति तथेति तस्मिन्नाऽऽजिमाजन्त ॥ ३ ॥ स बृहस्प्पतिः । सवितारमेव प्प्रसवायोपाऽधावत्सविता वै देवानां प्प्रसवितेदं मे प्प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्प्रसविता प्प्राऽसुवत्तत्सवितृप्प्रसूत ऽउदजयत्स ऽइदꣳ सर्वमभवत्स ऽइदꣳ सर्वमुदजयत्प्रजापतिꣳ ह्युदजयत्सर्वमु ह्येवेदं प्रजापतिस्तेन *ह्वैवैतामेवोर्ध्वां दिश-

---

* 'ह्वैताम्' इति 'ख' पुस्तके ।

मुदक्रामत्तस्म्माद्यश्च व्वेद यश्च नैषोर्द्ध्वा बृहस्प्पतेर्द्दिगित्ये-वाऽऽहुः ॥ ४ ॥ तद्ध्ये ह स्म्म पुरा व्वाजपेयेन यजन्ते । एताᳪ ह स्मैवोर्द्ध्वां दिशमुत्क्रामन्ति तत ऽऔपाविनैव जानश्रुतेयेन प्प्रत्त्यवरूढं ततोऽर्व्वाचीनं प्रत्त्यवरोहन्ति ॥ ५ ॥ तेनेन्द्रोऽयजत । स ऽइदᳪ सर्व्वमभवत् स ऽइदᳪ सर्व्वमुदजयत्प्रजापतिᳪ ह्युदजयत्सर्व्वमु ह्येवेदं प्रजापतिस्तेनेष्ट्वैतामेवोर्द्ध्वां दिशमुदक्रामत् ॥६॥ * तद्ध्येह स्म्म पुरा व्वाजपेयेन यजन्ते । एताᳪ ह स्मैवोर्द्ध्वां दिशमुत्क्रामन्ति तत ऽऔपाविनैव जानश्रुतेयेन प्प्रत्त्यवरूढं ततोऽर्व्वाचीनं प्रत्त्यवरोहन्ति ॥ ७ ॥ स यो † व्वाजपेयेन यजते । स ऽइदᳪ सर्व्वं भवति स ऽइदᳪ सर्व्वमुज्जयति प्प्रजापतिᳪ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः ॥ ८ ॥ तदाहुः । न व्वाजपेयेन यजेत सर्व्वं व्वा ऽएष ऽइदमुज्जयति यो व्वाजपेयेन यजते प्प्रजापतिᳪ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः स ऽइह न किञ्चन परिशिनष्टि तस्येश्वरः प्प्रजा पापीयसी भवितोरिति ॥ ९ ॥ तदु वै यजेतैव । य ऽएवमेतं रुयज्ञं क्लृप्तं व्विद्युर्ऋक्तो यजुष्टः सामतो ये प्प्रजज्ञयस्त ऽएनं याजयेयुरेषा ह त्वेवैतस्य यज्ञस्य समृद्धिर्य्यदेनं व्विद्वाᳪसो याजयन्ति तस्म्मादु यजेतैव ॥ १० ॥ स व्वा ऽएष ब्राह्मणस्यैव यज्ञः । यदेनेन‡ बृहस्प्पतिरयजत

---

* अत्र शतम् २९०० ॥

† "वाजपेयः शरद्यवैश्यस्य" का० श्रौ० सू० १४. १.१; शां० श्रौ० सू० (१५. १. १) ऽप्येवम् ।

‡ वाजपेययागात्पूर्वमनन्तरं च अव्यवहितशुक्लपक्षयोर्बृहस्पतिसवनामकं अग्निष्टोमसस्थं ऐकाहिकं यागं कुर्यात् । तत्राऽऽश्विनस्यामायां वाजपेयस्य सुत्यानुष्ठानपक्षे भाद्रपद्यां बृहस्पतिसवस्य सुत्या, आश्विनशुक्लदशम्यां वाजपेयस्य दीक्षा, कार्तिक्यां बृहस्पतिसवः । कार्तिकामायां वाजपेयसुत्याकरणकल्पे तु आश्विनपूर्णिमायां बृहस्पतिसवः, कार्तिकशुक्लदशम्यां वाजपेयदीक्षा

ब्रह्म हि बृहस्प्पतिर्ब्रह्म हि ब्राह्मणोऽथो राजन्न्यस्य यदेनेनेन्द्रोऽयजत क्षत्रꣳ हीन्द्रः क्षत्रꣳ राजन्न्यः ॥ ११ ॥ राज्ञ ऽएव राजसूयꣳ। राजा वै राजसूयेनेष्ट्वा भवति न वै ब्राह्मणो राज्यायाऽलमवरं वै राजसूयं परं वाजपेयꣳ ॥ १२ ॥ राजा वै राजसूयेनेष्ट्वा भवति। सम्म्राड्वाजपेयेनाऽवरꣳ हि राज्यं परꣳ साम्म्राज्यं कामयेत वै राजा सम्म्राड्भवितुमवरꣳ हि राज्यं परꣳ साम्म्राज्यं न सम्म्राट् कामयेत राजा भवितुमवरꣳ हि राज्यं परꣳ साम्म्राज्यꣳ ॥ १३ ॥ स यो वाजपेयेनेष्ट्वा सम्म्राड् भवति। स ऽइदꣳ सर्व्वꣳ संव्वृङ्क्ते स कर्म्मणः-कर्म्मणः पुरस्तादेताꣳ सावित्रीमाहुतिं * जुहोति ‘देवं सवितः प्प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये’ति ॥ १४ ॥ तद्यथैवाऽदो बृहस्प्पतिः। सवितारं प्रसवायोपाऽधावत्सविता वै देवानां प्रसवितेदं मे प्प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्प्रसविता प्प्राऽसुवत्तत्सवितृप्प्रसूत ऽउदजयदेवमेवैष ऽएतत्सवितारमेव प्प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्प्रसविता प्प्रसौति तत्सवितृप्प्रसूत ऽउज्जयति ॥ १५ ॥ तस्मादाह। ‘देवं[2] सवितः प्प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्व्यो

मार्गशीर्ष्यां बृहस्पतिसवः। तदसम्भवे वाजपेयानुष्ठानारम्भसम्बन्धिनि शुक्लपक्ष एव बृहस्पतिसवः। वाजपेयादनन्तरमप्यसम्भवेतदनन्तरमेव प्रतिपद्यारम्भे पञ्चम्यां सप्तम्यां वा बृहस्पतिसवः। बृहस्पतिसवोऽग्निष्टोमवद्भवति। विशेषस्त्वियानेव— अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहविषां निर्वाप इति।

* का० श्रौ० सू० १४. १. ११।

(१) शु० सं० अ० ९ क० १। (२) शु० सं० अ० ९ क० १।

गन्धर्व्वः केतपूः केतं नः पुनातु व्वाचस्प्पतिर्व्वाजं नः स्वदतु स्वाहे'ति प्प्रजापतिर्व्वै व्वाचस्प्पतिरन्नं व्वाजः प्प्रजापतिर्न्न-ऽइदमद्याऽन्नꣳ स्वदत्वित्येवैतदाह स ऽएतामेवाऽऽहुतिं जुहोत्या श्वःसुत्यायाः ऽएतद्ध्यस्यैतत्कर्म्माऽऽरब्धं भवति प्प्रसन्न ऽएतं यज्ञं भवति ॥ १६ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अंशुग्रहग्रहणादि ]

अꣳशुं गृह्णाति । सर्व्वत्त्वायैव तस्म्माद्वा ऽअꣳशुं गृह्णात्त्यथैतान्प्रज्ञातानेवाऽग्निष्टोमिकान्ग्रहान्गृह्णात्त्याग्रयणात् ॥१॥ अथ पृष्ठ्यान्गृह्णाति । तद्यद्देवैतैर्द्देवा ऽउदजयँस्तद्देवैष ऽएतैरुज्जयति ॥ २ ॥ अथ षोडशिनं गृह्णाति । तद्यद्देवैतेनेन्द्र-ऽउदजयत्तद्देवैष ऽएतेनोज्जयति ॥ ३ ॥ अथैतान्पञ्च * व्वाजपेयग्रहान्गृह्णाति । 'ध्रुवसदं[1] त्वा नृषदं मनः सदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतममि'ति सादयत्त्येषां व्वै लोकानामयमेव ध्रुव-ऽइयं पृथिवी ममेवैतेन लोकमुज्जयति ॥ ४ ॥ 'अप्सुषदं[2] त्वा । घृतसदं व्व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतममि'ति सादयत्त्येषां

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा- काठ० १३. १४; मै० सं० १. ११. १; तै० सं० १. ७. ७; तै० ब्रा० २. ३. २-८।

* का० श्रौ० सू० १४. २. १।

(१) शु० सं० अ० ९ क० २। (२) शु० सं० अ० ९ क० २।

व्वै लोकानामयमेव ऽव्योमेदुमन्तरिक्षमन्तरिक्षलोकमेवैतेनो-ज्जयति ॥५॥ 'पृथिविसदं त्वाऽन्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतममि'ति सादयत्येष वै देवसन्नाक-सदेष ऽएव देवलोको देवलोकमेवैतेनोज्जयति ॥६॥ 'अपाथं[2] रसमुद्वयसꣳ । सूर्य्ये सन्तꣳ समाहितमपाथं रसस्य यो रसस्तं व्वो गृह्णाणाम्म्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णा-म्म्येष ते योनिरिन्द्राय त्वा जुष्टतममि'ति सादयत्येष वा-ऽअपाथं रसो योऽयं पवते स ऽएष सूर्य्ये समाहितः सूर्य्या-त्पवत ऽएतमेवैतेन रसमुज्जयति ॥७॥ 'ग्रहा[3] ऽऊर्ज्जाहुतयः । व्यन्तो विप्राय मतिम् । तेषां व्विशिप्प्रियाणां व्वोऽहमिष-मूर्ज्जꣳ समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टगृह्णाम्म्येष ते योनिरिन्द्राय त्वा जुष्टतममि'ति सादयत्यूर्ग्वै रसो रस-मेवैतेनोज्जयति ॥ ८ ॥ तान्न्वा ऽएतान् । पञ्च व्वाजपेय-ग्रहान्न्गृह्णाति प्प्रजापतिं व्वा ऽएष ऽउज्जयति यो व्वाजपेयेन यजते संव्वत्सरो वै प्प्रजापतिः पञ्च वा ऽऋतवः संव्वत्सरस्य तत्प्रजापतिमुज्जयति तस्म्मात्पञ्च व्वाजपेयग्रहान्न्गृह्णाति ॥ ९ ॥ अथ सप्तदश सोमग्रहान्गृह्णाति । सप्तदश सुरा-ग्रहान्प्रजापतेर्व्वा ऽएते ऽअन्धसी यत्सोमश्च सुरा च ततः सत्यं श्रीर्ज्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरैते-ऽएवैतदुभे ऽअन्धसी ऽउज्जयति सर्वं व्वा ऽएष-

(१) शु० सं० अ० ९ क० २। (२) शु० सं० अ० ९ क० ३। (३) शु० सं० अ० ९ क० ३।

ऽइदमुज्जयति यो वाजपेयेन यजते प्प्रजापतिᳬ
ह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः ॥ १० ॥ स यत्सप्तदश ।
सोमग्रहान्न्गृह्णाति सप्तदशो वै प्प्रजापतिः प्प्रजापति-
र्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवाऽस्यै
तत्सत्यᳬ श्रियं ज्योतिरुज्जयति ॥ ११ ॥ अथ यत्सप्त-
दश । सुराग्रहान्न्गृह्णाति सप्तदशो वै प्प्रजापतिः प्प्रजा-
पतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवाऽस्यै
तदनृतं पाप्मानं तम ऽउज्जयति ॥ १२ ॥ त ऽउभये
चतुस्त्रिᳬशद् ग्रहाः सम्पद्यन्ते । त्रयस्त्रिᳬशद्वै देवाः
प्प्रजापतिश्चतुस्त्रिᳬशस्तत्प्रजापतिमुज्जयति ॥ १३ ॥ अथ
यत्र राजानं क्रीणाति । *तद्दक्षिणतः प्प्रतिवेशतः केशवा-
त्पुरुषात्सीसेन परिस्रुतं क्रीणाति न वा ऽएष स्त्री न पुमा-
न्न्यत्केशवः पुरुषो यदाह पुमाँस्तेन न स्त्री यदु केशवस्तेनो
न पुमान्नैतदयो न हिरण्यं यत्सीसं नैष सोमो न सुरा
यत्परिस्रुत्तस्मात्केशवात् पुरुषात्सीसेन परिस्रुतं क्रीणाति
॥ १४ ॥ अथ पूर्वेद्युः । द्वौ खरौ कुर्वन्ति पुरोऽक्षमेवाऽन्न्यं
पश्चादक्षमन्न्यं नेत्सोमग्रहाँश्च सुराग्रहाँश्च सह सादु-
यामेति तस्मात्पूर्वेद्युर्द्वौ खरौ कुर्वन्ति पुरोऽक्षमेवाऽन्न्यं
पश्चादक्षमन्न्यम् ॥ १५ ॥ अथ यत्र पूर्वया द्वारा ।
वसतीवरीः प्प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपा-
दयति दक्षिणतः पात्राण्यभ्भ्यवहरन्ति पुरोऽक्षमेव प्प्रत्य-

* "सोमात् क्रीयमाणात् सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात्" (का० श्रौ० सू० १४. १. १४)।

ङ्ङासीनोऽध्वर्युः सोमग्रहान्गृह्णाति पश्चादक्षं प्राङ्ङा-
सीनो नेष्टा सुराग्रहान्त्सोमग्रहमेवाऽध्वर्युर्गृह्णाति सुरा-
ग्रहं नेष्टा सोमग्रहमेवाऽध्वर्युर्गृह्णाति * सुराग्रहं नेष्टैव-
मेवैनाव्यत्यासं गृहीतः ॥ १६ ॥ न प्रत्यञ्चमक्षमध्वर्युः ।
सोमग्रहमतिहरति न प्राञ्चमक्षं नेष्टा सुराग्रहं ने-
ज्ज्योतिश्च तमश्चसंसृजावेति ॥ १७ ॥ उपर्युपर्येवा-
ऽक्षमध्वर्युः । सोमग्रहं धारयत्यधोऽधोऽक्षं नेष्टा † सुरा-
ग्रहं 'सम्पृचौ स्थः सम्मा भद्रेण पृङ्क्तमि'ति नेत्पापमिति
ब्रवावेति तौ पुनर्विहरतो 'विपृचौ स्थो वि मा पाप्मना
पृङ्क्तमि'ति तद्यथेषीकां मुञ्जाद्विवृहेदेवमेनः सर्वस्मात्पा-
प्मनो विवृहस्तस्मिन्न तावच्च नैनो भवति यावत्तृणस्याऽग्रं
तौ सादयतः ॥ १८ ॥ अथाऽध्वर्युः । हिरण्यपात्रेण मधु-
ग्रहं गृह्णाति तं मध्ये सोमग्रहाणाᳪं सादयत्यथोक्थ्यं
गृह्णात्यथ ध्रुवमथैतान्त्सोमग्रहानुत्तमे स्तोत्र ऽऋत्विजां
चमसेष्ववनीय जुह्वति तान्भक्षयन्त्यथ माध्यन्दिने

---

* सुरानिर्माणप्रकारश्चेत्थम्—प्रथमं शष्पाणि पिनष्टि, ततस्तोक्मानि, ततः सज्जत्वगादीनि । एतानि पृथक् पृथक् पिष्ट्वा पृथक् पृथक् पात्रेषु च संस्थापयेत्, ततो व्रीहिश्यामाकतण्डुलानां बहुन्युदके पात्रे प्रक्षिप्य दक्षिणाग्नौ पृथक् पृथक् श्रपयति । श्रृतौ तावुद्वास्य तत्र आचामं निषिञ्चति । ततः शष्पादिचूर्णत्रयस्य तृतीयं तृतीयमशमादाय तस्य तस्य तृतीयांशस्यार्धमर्धं द्वयोराचमयोः प्रक्षिपेत् । 'तयोश्चूर्णसंसृष्टयोर्मासरमित्युच्यते' । ततः शष्पादिचूर्णत्रयस्य एकैकं भागमादाय अर्धमर्धमोदनयोः प्रक्षिप्य सजत्वगादिचूर्णमवशिष्टं सर्वमादाय तस्यार्धमर्धमोदनद्वये प्रक्षिपेत् । तत एकस्मिन् बृहति पात्रे ओदनं प्रक्षिप्य मासरनामकावाचामौ तस्यां कुम्भ्यां प्रक्षिपेत् । ततो नैर्ऋत्यकोणे शालायां गर्तं कृत्वा तत्र कुम्भीं निधाय गर्तं मृदा प्रपूर्य दिनत्रयं विरमेत् (का० श्रौ० सू० ) वृत्तौ स्पष्टमिति ।

† का० श्रौ० सू० १४. २. ७,८, ।

( १ ) शु० सं० अ० ९ क० ४ । ( २ ) शु० सं० अ० ९ क० ४ ।

सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते तस्याऽतः ॥ १९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥ (B)



[ पशोस्तन्त्रता ]

आग्नेयमग्निष्टोम ऽआलभते। अग्निर्वाऽअग्निष्टोमोऽग्निष्टोममेवैतेनोज्जयत्यैन्द्राग्नमुक्थेभ्य ऽआलभत ऽऐन्द्राग्नानि वा ऽउक्थान्युक्थान्येवैतेनोज्जयत्यैन्द्रᳬ षोडशिन ऽआलभतऽइन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति ॥ १ ॥ सारस्वतᳬ सप्तदशाय स्तोत्रायाऽऽलभते। तदेतदनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वा ऽएष ऽउज्जयति यो वाजपेयेन यजते संवत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रिमुज्जयति तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते ॥ २ ॥ अथ मरुद्भ्य ऽउज्जेषेभ्यः। वशां पृश्निमालभेत ऽइयं वै वशा पृश्निर्यदिदमस्यां मूलि चाऽमूलं चाऽन्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरन्नं वा ऽएष उज्जयति यो वाजपेयेन यजतेऽन्नपेयᳬ ह वै नामैतद्यद्वाजपेयं विशो वै मरुतोऽन्नं वै विशऽउज्जेषेभ्य ऽइत्युज्जित्या ऽएव दुर्वेदे ऽउज्जेषवत्यौ याज्यानुवाक्ये यद्युज्जेषवत्यौ न विन्देदपि ये ऽएव के च मारुत्यौ स्यातां दुर्वेदो ऽएव वशा पृश्निर्यदि वशां पृश्निं न विन्देदपि यैव का च वशा स्यात् ॥ ३ ॥ तस्या ऽआवृत्।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १४. ३; मै० सं० १. ११. ४।

यत्र होता माहेन्द्रग्रहमनुशꣳसति तदस्यै वपया प्रचरेयुरेष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रमिन्द्रो वै यजमानस्तन्म-द्ध्यत ऽएवैतद्यजमाने वीर्य्यं दधाति तस्मादस्या ऽअत्र वपया प्रचरेयुः ॥ ४ ॥ द्वेधाऽवदानानि श्रपयन्ति । ततोऽर्द्धानां जुह्वामुपस्तीर्य्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभिघारयति न प्रत्यनक्त्यवदानानि तद्यदर्द्धानां द्विर्द्विरवद्यति तथैषा कृत्स्ना भवत्यथ यदेतैः प्रचरति तेन दैवीं विशमुज्जयत्यथाऽर्द्धानि मानुष्यै विश ऽउपहरति तेनो मानुषीं विशमुज्जयति ॥ ५ ॥ तदु तथा न कुर्य्यात् । ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य ऽएवं करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतस्यै वपया प्रचरेयुरेकधाऽवदानानि श्रपयन्ति न मानुष्यै विश ऽउपहरन्ति ॥ ६ ॥ अथ सप्तदश प्राजापत्यान्पशूनालभते । ते वै सर्व्वे तूपरा भवन्ति सर्व्वे श्यामाः सर्व्वे मुष्कराः प्रजापतिं वा ऽएष उज्जयति यो वाजपेयेन यजतेऽन्नं वै प्रजापतिः पशुर्वा ऽअन्नं तत्प्रजापतिमुज्जयति सोमो वै प्रजापतिः पशुर्वै प्रत्यक्षꣳ सोमस्तत्प्रत्यक्षं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ ७ ॥ ते वै सर्व्वे तूपरा भवन्ति । पुरुषो वै प्रजापतेर्न्नेदिष्ठꣳ सोऽयं तूपरोऽविषाणस्तूपरो वा ऽअविषाणः प्रजापतिः प्राजापत्या ऽएते तस्मात्सर्व्वे तूपरा

भवन्ति ॥ ८ ॥ सर्वे श्यामाः । द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्प्राजापत्या ऽएते तस्मात्सर्वे श्यामा भवन्ति ॥ ९ ॥ सर्वे मुष्कराः । प्रजननं वै मुष्करः प्प्रजननं प्रजापतिः प्प्राजापत्या ऽएते तस्मात्सर्वे मुष्करा भवन्ति दुर्वेदा ऽएवंरूः समृद्धाः पशवो य्द्येवंरूः समृद्धान्न विन्देदपि कतिपया ऽएवैवंरूः समृद्धाः स्युः सर्वैमु ह्येवेदं प्रजापतिः ॥ १० ॥ तद्धैके । व्वाच ऽउत्तममालभन्ते य्यदि वै प्प्रजापतेः परमस्ति व्वागेव तदेतद्वाचमुज्जयाम ऽइति व्वदन्तस्तदु तथा न कुर्य्यात्सर्वं व्वा ऽइदं प्रजापतिर्य्यदिमे लोका य्यदिदं किञ्च सा य्यद्वैवैषु लोकेषु व्वाग्वदति तद्वाचमुज्जयति तस्मादु तन्नाऽऽद्रियेत ॥ ११ ॥ तेषामावृत् । य्यत्र मैत्रावरुणो व्वामदेव्व्यमनुशꣳसति तदेषां व्वपाभिः प्प्रचरेयुः प्प्रजननं वै व्वामदेव्व्यं प्रजननं प्रजापतिः प्प्राजापत्त्या ऽएते तस्मादेषामत्र व्वपाभिः प्प्रचरेयुः ॥१२॥ अथेष्ट्वा ऽअनुयाजा भवन्ति । अव्व्यूढे स्रुचावथैषाꣳ हविर्ब्भिः प्प्रचरन्ति सोऽन्तोऽन्तो वै प्प्रजापतिस्तदन्तत ऽएवैतत्प्रजापतिमुज्जयत्यथ य्यत्पुरा प्प्रचरेद्यथा यमद्धानमेष्यन्त्स्यात्तं गत्वा स क ततः स्यादेवं तत्तस्मादेषामत्र हविर्ब्भिः प्प्रचरन्ति ॥ १३ ॥ तदु तथा न कुर्य्यात् । ह्वलति व्वा ऽएष य्यो यज्ञपथादेत्येति व्वा ऽएष यज्ञपथाऽद्य ऽएवं करोति तस्माद्यत्रैवेतरेषां पशूनां व्वपाभिः प्प्रचरन्ति तदेवैतेषां व्वपाभिः प्प्रचरेयुर्य्यत्रैवेतरेषां पशूनाꣳ हविर्ब्भिः प्प्रचरन्ति तदेवैतेषाꣳ हविषा प्प्रचरेयुरेकाऽनु-

वाक्या भवत्त्येका याज्यैकदेवत्त्या हि प्प्रजापतय ऽइत्त्युपांशूक्त्वा छागानाᳬ हविषोऽनुब्रूहीति प्प्रजापतय ऽइत्त्येवोपांशूक्त्वा छागानाᳬ हविः प्प्रस्थितं प्रेष्येति वषट्कृते जुहोति ॥ १४ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अथ माध्यन्दिनसवनम् ]

( तत्र यजमानाभिषेकः, आजिधावनञ्च )

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । माध्यन्दिने सवनऽआजिं धावन्त्येष वै प्प्रजापतिर्य्य ऽएष यज्ञस्तायते यस्म्माादिमाः प्प्रजाः प्प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते तन्मद्ध्यत ऽएवैतत्प्रजापतिमुज्जयति ॥१॥ अगृहीते माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्प्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यᳬ शस्त्रमिन्द्रो वै यजमानस्तदेनᳬ स्व ऽएवाऽऽयतनेऽभिषिञ्चति तस्म्मादगृहीते माहेन्द्रे ॥२॥ *अथ रथमुपाऽवहरति । 'इन्द्रस्य वज्ज्रोऽसी'ति वज्ज्रो वै रथ ऽइन्द्रो वै यजमानस्तस्म्मादाहेन्द्रस्य वज्ज्रोऽसीति 'वाजसा' ऽइति वाजसा हि रथ'स्त्वयाऽयं वाजᳬ सेदि'त्यन्नं वै वाजस्त्वयाऽयमन्नमुज्जयत्त्वित्त्येवैतदाह ॥ ३ ॥ तं †धूर्गृहीतमन्तर्वेद्यभ्यववर्त्तयति । 'वाजस्य नु प्प्रसवे मातरं

* का० श्रौ० सू० १४. ३. १ ।

( १ ) शु० सं० अ० ९ क० ५ । ( २ ) शु० सं० अ० ९ क० ५ । ( ३ ) शु० सं० अ० ९ क० ५ ।

† का० श्रौ० सू० १३. ३. २ ।

( ४ ) शु० सं० अ० ९ क० ५ ।

महीमि'त्यन्नं वै वाजोऽन्नस्य नु प्प्रसवे मातरं महीमित्त्ये- वैतदाह'ऽदितिं नाम वचसा करामह' ऽइतीयं वै पृथिव्य- दितिस्तस्मादाहाऽदितिं नाम वचसा करामह ऽइति 'यस्यामिदं विश्वं भुवनमाविवेशे'त्यस्याᳬहीदᳬ सर्वं भुवनमाविष्टं 'तस्यां नो देवः सविता धर्म्म साऽविषदि'ति तस्यां नो देवः सविता यजमानᳬ सुवतामित्त्येवैतदाह ॥ ४ ॥ अथाऽश्वानद्भिरभ्युक्षति । स्नपनायाऽभ्यवनीयमाना- न्त्स्नपितान्वोदानीतानद्भ्यो ह वा ऽअग्रेऽश्वः सम्बभूव सो- ऽद्भ्यः सम्भवन्नसर्वः समभवदसर्वो हि वै समभवत्तस्मान्न सर्वैः पद्भिः प्प्रतितिष्ठत्त्येकैकमेव पादमुदच्च्य तिष्ठति तद्यदेवाऽस्याऽत्राऽप्प्स्वहीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्वानद्भिरभ्युक्षति स्नपनायाऽभ्यवनीयमा- नान्त्स्नपितान्न्वोदानीतान् ॥ ५ ॥ सोऽभ्युक्षति *। 'अप्स्व- न्तरमृतमप्प्सु भेषजमपामुत प्प्रशस्तिष्वश्वा भवत वाजिन' ऽइत्त्यनेनाऽपि 'देवीरापो यो व ऽऊर्म्मिः प्प्रतूर्त्तिः ककु- न्न्मान्वाजसास्तेनाऽयं वाजᳬ सेदि'त्यन्नं वै वाजस्तेना- ऽयमन्नमुज्जयत्त्वित्त्येवैतदाह ॥ ६ ॥ अथ रथं रयुनक्ति । स दक्षिणायुग्ग्यमेवाऽग्रे युनक्ति सव्व्यायुग्ग्यं वा ऽअग्रे मानु- षेऽथैवं देवत्रा ॥ ७ ॥ स † युनक्ति । 'वातो वा मनो वे'ति

(१) शु० सं० अ० ९ क० ५। (२) शु० सं० अ० ९ क० ५। (३) शु० सं० अ० ९ क० ५।

* का० श्रौ० सू० १४. ३, ४।

(४) शु० सं० अ० ९ क० ६। (५) शु० सं० अ० ९ क० ७।

† का० श्रौ० सू० १४. ३. ६।

(६) शु० सं० अ० ९ क० ७।

न वै व्वातात्किञ्चनाऽशीयोऽस्ति न मनसः किञ्चनाऽशीयोऽस्ति तस्मादाह वा व्वातो मनो वेति 'गन्धर्व्वाः सप्तविंशतिस्ते ऽअग्रेऽश्वयुञ्जन्नि'ति गन्धर्व्वा ह वा ऽअग्रेऽश्वं युयुजुस्तद्येऽग्रेऽश्वमयुञ्जँस्ते त्वा युञ्जन्त्वित्येवैतदाह 'ते ऽअस्मिञ्जवमादधुरि'ति तद्येऽस्मिञ्जवमादधुस्ते त्वयि जवमादधत्वित्येवैतदाह ॥८॥ अथ* सव्व्यायुग्ग्यं युनक्ति। 'व्वातरंहा भव व्वाजिन्न्युज्यमान' ऽइति व्वातजवो भव व्वाजिन्न्युज्यमान ऽइत्येवैतदा'हेन्द्रस्येव दक्षिणः श्रियैधी'ति यथेन्द्रस्य दक्षिणः श्रियैवं यजमानस्य श्रियैधीत्येवैतदाह 'युञ्जन्तु त्वा मरुतो विश्ववेदस' ऽइति युञ्जन्तु त्वा देवा ऽइत्येवैतदाहा 'ऽऽते त्वष्टा पत्सु जवं दधात्वि'ति नाऽत्र तिरोहितमिवाऽस्त्यथ दक्षिणाप्प्राष्टिं युनक्ति सव्व्याप्प्राष्टिं वा ऽअग्रे मानुषेऽथैवं देवत्रा ॥ ९ ॥ स † युनक्ति। 'जवो यस्ते व्वाजिन्निहितो गुहा यः श्येने परीत्तो ऽअचरच्च व्वात' ऽइति जवो यस्ते व्वाजिन्नप्प्यन्न्यत्राऽपनिहितस्तेन न ऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह 'तेन नो व्वाजिन्न्बलवान् बलेन व्वाजजिच्च भव समने च पारयिष्णुरि'त्यन्नं वै व्वाजोऽन्नजिच्च न ऽएध्यस्मिँश्च नो यज्ञे देव समन ऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह ॥ १० ॥ तेवा ऽएतऽ एव त्रयो

(१) शु० सं० अ० ९ क० ६। (२) शु० सं० अ० ९ क० ७।

* का० श्रौ० सू० १४. ३. ७।

(३) शु० सं० अ० ९ क० ८। (४) शु० सं० अ० ९ क० ८। (५-६) शु० सं० अ० ९ क० ८।

† का० श्रौ० सू० १४. ३. ८।

(७) शु० सं० अ० ९ क० ९। (८) शु० सं० अ० ९ क० ९।

युक्ता भवन्ति । त्रिवृद्धि देवानां तद्धि देवत्राऽधिप्प्रष्टियुग-ऽएव चतुर्त्थोऽन्न्वेति मानुषो हि स तं ग्यत्र दास्यन्भवति तच्चतुर्त्थमुपयुज्य ददाति तस्म्मादपीतरस्मिन्न्यज्ञ ऽएत ऽएव त्रयो युक्ता भवन्ति त्रिवृद्धि देवानां तद्धि देवत्राऽधिप्प्रष्टि-युग ऽएव चतुर्त्थोऽन्वेति मानुषो हि स तं ग्यत्र दास्यन्भवति तच्चतुर्त्थमुपयुज्य ददाति ॥ ११ ॥ [ अर्धप्रपाठकः ५६ ]

अथ बार्हस्प्पत्त्यं चरुं नैवारꣳ सप्तदशशरावं निर्व्वपति । अन्नं व्वा ऽएष ऽउज्जयति यो व्वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदुजैषीत्तदेवाऽस्म्मा-ऽएतत्करोति ॥ १२ ॥ अथ यद्वार्हस्प्पत्त्यो भवति । बृहस्प्पतिर्ह्येतमग्र ऽउदजयत्तस्म्माद्वार्हस्प्पत्त्यो भवति ॥ १३ ॥ अथ यन्नैवारो भवति । ब्रह्म वै बृहस्प्पति-रेते वै ब्रह्मणा पच्च्यन्ते यन्नीवारास्तस्म्मान्नैवारो भवति सप्तदशशरावो भवति सप्तदशो वै प्प्रजापतिस्तत्प्रजा-पतिमुज्जयति ॥ १४ ॥ * तमश्वानवग्घ्रापयति । '[1]व्वाजिनं' ऽइति व्वाजिनो ह्यश्वास्तस्म्मादाह व्वाजिन ऽइति '[2]व्वाजजित' ऽइत्त्यन्नं वै व्वाजोऽन्नजित ऽइत्त्येवैतदाह '[3]व्वाजꣳ सरिष्यन्त' ऽइत्त्याजिꣳ हि सरिष्यन्तो भवन्ति '[4]बृहस्प्पतेर्ब्भागमवजिग्घ्रते'ति बृहस्प्पतेर्ह्येष भागो भवति तस्म्मादाह बृहस्प्पतेर्ब्भागमवजिग्घ्रतेति तद्यदश्वानव

* का० श्रौ० सू० १४. ३. १० ।

(१) शु० सं० अ० ९ क० ९ । (२) शु० सं० अ० ९ क० ९ । (३) शु० सं० अ० ९ क० ९ । (४) शु० सं० अ० ९ क० ९ ।

७१

ग्घापयतीममुज्जयानीति तस्म्माद्वा ऽअश्वानवग्घापयति ॥ १५ ॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ आजिधावनप्रशंसा, ब्रह्मणो रथचक्रे गानम्, दुन्दुभ्युपावहरणञ्च ]

तद्यदाजिं धावन्ति। इममेवैतेन लोकमुज्जयत्त्यथ यद् ब्रह्मा रथचक्रे साम गायति नाभिदघ्न ऽउद्धितेऽन्तरिक्षलोकमेवैतेनोज्जयत्त्यथ यद्यूपꣳ रोहति देवलोकमेवैतेनोज्जयति तस्म्माद्वा ऽएतत्त्रयं क्रियते ॥ १ ॥ स ब्रह्मा *रथचक्रमधिरोहति। नाभिदघ्न ऽउद्धितं 'देवस्याऽहꣳ सवितुः सवे सत्त्यसवसो बृहस्प्पतेरुत्तमन्नाकꣳ रुहेयमि'ति[1] यदि ब्राह्मणो यजते ब्रह्म हि बृहस्प्पतिर्ब्रह्म हि ब्राह्मणः ॥ २ ॥ अथ यदि राजन्न्यो यजते। 'देवस्याऽहꣳ सवितुः सवे सत्त्यसवस ऽइन्द्रस्योत्तमन्नाकꣳ रुहेयमि'ति[2] क्षत्रꣳ हीन्द्रः क्षत्रꣳ राजन्न्यः ॥ ३ ॥ त्रिः † सामाऽभिगायति। त्रिरभिगीयाऽवरोहति 'देवस्याऽहꣳ सवितुः सवे सत्त्यप्प्रसवसो बृहस्प्पतेरुत्तमं नाकमरुहमि'ति[3] यदि ब्राह्मणो यजते ब्रह्म हि बृहस्प्पतिर्ब्रह्म हि ब्राह्मणः ॥ ४ ॥ अथ यदि राजन्न्यो यजते। 'देवस्याऽहꣳ सवितुः सवे सत्त्यप्प्रसवसऽइन्द्रस्योत्तमन्नाकमरुहमि'ति[4] क्षत्रꣳ हीन्द्रः क्षत्रꣳ

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १३. ४; मै० सं० १. ११. १; तै० सं० १. ७. ७।

* का० श्रौ० सू० १४. ३. १०।

(१) शु० सं० अ० ९ क० १०। (२) शु० सं० अ० ९ क० १०।

† का० श्रौ० सू० १४. ४. १२।

(३) शु० सं० अ० ९ क० १०। (४) शु० सं० अ० ९ क० १०।

राजन्यः ॥ ५ ॥ अथसप्तदश दुन्दुभीननु वेद्यन्तꣳ सम्मिन्वन्ति । प्रतीच ऽआग्नीध्रात्प्रजापतिं व्वा ऽएष ऽउज्जयति यो व्वाजपेयेन यजते व्वाग्वै प्प्रजापतिरेषा वै परमा व्वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्प्रजापतिस्तद् प्प्रजापतिमुज्जयति ॥ ६ ॥ अथैतेषां * दुन्दुभीनाम् । एकं यजुषाऽऽहन्ति तत्सर्व्वे यजुषाऽऽहता भवन्ति ॥ ७ ॥ सऽआहन्ति । 'बृहस्प्पते[1] व्वाजं जय बृहस्प्पतये व्वाचं व्वदत बृहस्प्पतिं व्वाजं जापयते'ति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्प्पतिर्ब्रह्म हि ब्राह्मणः ॥ ८ ॥ अथ यदि राजन्न्यो यजते । 'इन्द्र[2] व्वाजं जयेन्द्राय व्वाचं व्वदतेन्द्रं व्वाजं जापयते'ति क्षत्रꣳ हीन्द्रः क्षत्रꣳ राजन्यः ॥ ९ ॥ अथैतेष्वाजिसृत्सु रथेषु । पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपाऽवहरति तत्सर्व्वे यजुषोपाऽवहृता भवन्ति ॥ १० ॥ स † ऽउपाऽवहरति । 'एषा वः[3] सासत्या संव्वागभूद्यया बृहस्प्पतिं व्वाजमजीजपताऽजीजपत बृहस्प्पतिं व्वाजं व्वनस्प्पतयो व्विमुच्च्यद्ध्वमि'ति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्प्पतिर्ब्रह्म हि ब्राह्मणः ॥ ११ ॥ अथ यदि राजन्न्यो यजते । 'एषा[4] वः सा सत्या संव्वागभूद्ययेन्द्रं व्वाजमजीजपताऽजीजपतेन्द्रं व्वाजं व्वनस्प्पतयो व्विमुच्च्यद्ध्वमि'ति क्षत्रꣳ हीन्द्रः क्षत्रꣳ

* का० श्रौ० सू० १४. ३. १४, १५ ।

( १ ) शु० सं० अ० ९ क० ११ । ( २ ) शु० सं० अ० ९ क० ११ ।

† का० श्रौ० सू० १४. ४. ९,१० ।

( ३ ) शु० सं० अ० ९ क० १२ । ( ४ ) शु० सं० अ० ९ क० १२ ।

राजन्न्यः ॥१२॥ अथ वेद्यन्तात् । राजन्न्य ऽउदक् सप्तदश प्प्रव्व्याधान्न्प्रविद्ध्यति यावान्न्वा ऽएकः प्प्रव्व्याधस्तावाँस्तिर्य्यङ् प्रजापतिरथ यावत्त्सप्तदशप्प्रव्व्याधास्तावानन्न्वङ् प्रजापतिः ॥१३॥ तद्यद्राजन्न्यः प्प्रविद्ध्यति । एष वै प्प्रजापतेः प्प्रत्त्यक्षतमां यद्राजन्न्यस्तस्म्मादेकः सन्न्बहूनामीष्टे यद्वेव चतुरक्षरः प्प्रजापतिश्च्चतुरक्षरो राजन्न्यस्तस्म्माद्राजन्न्यः प्प्रविद्ध्यति सप्तदशप्प्रव्व्याधान्न्प्रविद्ध्यति सप्तदशो वै प्प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ १४ ॥ अथ यं रथय्यजुषा * युनक्ति । तँय्यजमान ऽआतिष्ठति 'देवस्य[1]ाऽहꣳ सवितुः सवे सत्त्यप्प्रसवसो बृहस्प्पतेर्व्वाजजितो व्वाजं जेषमि'ति ॥ १५ ॥ तद्यथैवाऽदो बृहस्प्पतिः । सवितारं प्रसवायोपाऽधावत्त्सविता वै देवानां प्रसवितेदं मे प्प्रसुव त्वत्प्रसूतऽइदमुज्जयानीति तदस्म्मै सविता प्प्रसविता प्प्राऽसुवत्तत्सवितृप्प्रसूत ऽउदजयदेवमेवैष ऽएतत्त्सवितारमेव प्प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्प्रसविता प्प्रसौति तत्सवितृप्प्रसूत ऽउज्जयति ॥१६॥ अथ यद्यद्धूरर्य्योः । अन्तेवासी वा ब्रह्मचारी वैतद्यजुरधीयात्त्सोऽश्ववास्त्थाय † व्वाचयति 'व्वाजि[2]न' ऽइति व्वाजिनो ह्यश्वास्तस्म्माहद व्वाजिन ऽइति 'व्वाजजि[3]त' ऽइत्त्यन्नं वै व्वाजोऽन्नजित ऽइत्त्येवैतदाह'[4]ऽद्ध्वन

* का० श्रौ० सू० १४. ३. १८ ।

( १ ) शु० सं० अ० ९ क० १३ ।

† का० श्रौ० सू० १४. ३. २२ ।

( २ ) शु० सं० अ० ९ क० १३ । ( ३ ) शु० सं० अ० ९ क० १३ । ( ४ ) शु० सं० अ० ९ क० १३ ।

स्कभ्नुवन्त' ऽइत्यद्धनो हि स्कभ्नुवन्तो धावन्ति 'योजना मिमाना' ऽइति योजनशो हि मिमाना ऽअद्धानं धावन्ति 'काष्ठां गच्छतेति' यथैनानन्तरा नाष्ट्रा रक्षाꣳसि न हिꣳस्युरेवमेतदाह धावन्त्याजिमाघ्नन्ति दुन्दुभीनभि साम गायति ॥ १७ ॥ अथैताभ्यां जगतीभ्याम् । जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान ऽएव बन्धुः ॥ १८ ॥ स † जुहोति । 'एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो ऽअपिकक्ष ऽआसनि । क्रतुं दधिक्रा ऽअनु सꣳ सनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत्स्वाहा' ॥ १९ ॥ 'उत स्म । अस्य द्रवतस्तुरण्यतः पर्ण्णं न वेरनुवाति प्रगर्द्धिनः । श्येनस्येव ध्रजतो ऽअङ्कसं परि दधिक्राव्णः सहोर्ज्जा तरित्रतः स्वाहे'ति ॥ २० ॥ अथोत्तरेण त्रिचेन जुहोति । वाऽनु वा मन्त्रयते द्वयं तद्यस्माज्जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान ऽएव बन्धुरेतानेवैतदश्वान्धावत ऽउपवाजयत्येतेषु वीर्य्यं दधाति तिस्रो वा ऽइमाः पृथिव्य ऽइयमहैका द्वे ऽअस्याः परे ता ऽएवैतदुज्जयति ॥२१॥ ‡ सोऽनुमन्त्रयते । 'शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । ऽजम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः

---

( १ ) शु० सं० अ० ९ क० १३ । ( २ ) शु० सं० अ० ९ क० १३ ।
† का० श्रौ० सू० १४. ४. ३,४ ।
( ३ ) शु० सं० अ० ९ क० १४ । ( ४ ) शु० सं० अ० ९ क० १५ ।
‡ का० श्रौ० सू० १४. ४. ५ ।
( ५ ) शु० सं० अ० ९ क० १६ ।

॥ २२ ॥ 'तेनो ऽअर्[1]वन्तः । हवनश्रुतो हवं विश्वे शृण्वन्तु
वाजिनो मितद्रवः । सहस्रसा मेधसाता सनिष्यवो महो
ये धनꣳ समिथेषु जभ्रिरे ॥ २३ ॥ '[2]वाजे वाजेऽवत ।
वाजिनो नो धनेषु विप्रा ऽअमृता ऽऋतज्ञाः । अस्य मध्वः
पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरि'ति ॥ २४ ॥
अथ बार्हस्पत्त्येन चरुणा प्प्रत्युपतिष्ठते । तमुपस्पृशत्यन्नं
वा ऽएष ऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै
नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं
गत्त्वा सꣳस्पृशते तदात्मन्कुरुते ॥ २५ ॥ * स ऽउप
स्पृशति । 'आ मा[3] वाजस्य प्प्रसवो जगम्म्यादि' त्यन्नं वै वाज-
ऽआ माऽन्नस्य प्प्रसवो जगम्म्यादित्त्येवैतदाहे'मे द्यावा[4]पृथिवी
विश्वरूपे' ऽइति द्यावापृथिवी हि प्प्रजापति'रा मा[5] गन्तां
पितरामातरा चे'ति मातेव च हि पितेव च प्प्रजापतिरा
'मा सो[6]मो ऽअमृतत्त्वेन गम्म्या'दिति सोमो हि प्प्रजापतिः
॥ २६ ॥ तमश्वानवघ्रापयति । 'वा[7]जिन' ऽइति वाजिनो
ह्यश्वास्तस्म्मादाह वाजिन ऽइति 'वा[8]जजित ऽइत्त्यन्नं वै
वाजोऽन्नजित ऽइत्त्येवैतदाह 'वाजꣳ ससृ[9]वाꣳस' ऽइति
'सं[10]रिष्यन्त' ऽइति वा ऽअग्र ऽआह सरिष्यन्त ऽइव हि
तर्हि भवन्त्यथाऽत्र ससृवाꣳस ऽइति ससृवाꣳस ऽइव

(१) शु० सं० अ० ९ क० १७ । (२) शु० सं० अ० ९ क० १८ ।
* का० श्रौ० सू० १४. ४ ११,१२ ।
(३) शु० सं० अ० ९ क० १९ । (४) शु० सं० अ० ९ क० १९ । (५) शु० सं० अ० ९ क० १९ । (६) शु० सं० अ० अ० ९ क० १९ । (७) शु० सं० अ० ९ क० १९ । (८) शु० सं० अ० ९ क० १९ । (९,१०) शु० सं० अ० ९ क० १९ ।

ह्यत्र भवन्ति तस्मादाह सत्त्वाᳬ स ऽइति 'बृहस्पते-र्भागमवजिघ्रते'ति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति 'निर्मृजाना' ऽइति तद्यजमाने वीर्यं दधाति तद्यदश्वानवघ्रापयतीममुञ्जयानीति वा ऽअग्रेऽवघ्रापयत्यथाऽत्रेममुदजैषमिति तस्माद्वा ऽअश्वानवघ्रापयति ॥ २७ ॥ अथैतेषा*माजिसृताᳬ रथानाम् । एकस्मिन्वैश्यो वा राजन्यो वोपास्थितो भवति स वेदेरुत्तरायाᳬ श्रोणा ऽउपविशत्यथाऽध्वर्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रामतस्तं वैश्यस्य वा राजन्यस्य वा पाणावाधत्तोऽथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति स जघनेन शालां पर्य्येत्यैकं वैश्यस्य वा राजन्यस्य वा पाणावादधदाहाऽनेन त ऽइमं निष्क्रीणामीति सत्यं वै श्रीर्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरा सत्यमेवैतच्छ्रियं ज्योतिर्यजमाने दधात्यनृतेन पाप्मना तमसा वैश्यं विध्यति तैः स यं भोगं कामयते तं कुरुतेऽथैतᳬ सहिरण्यपात्रमेव मधुग्रहं ब्रह्मणे ददाति तं ब्रह्मणे ददद्मृतमायुरात्मन्धत्तेऽमृतᳬ ह्यायुर्हिरण्यं तेन स यं भोगं कामयते तं कुरुते ॥ २८ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



(१) शु० सं० अ० ९ क० १९। (२) शु० सं० अ० ९ क० १९।

* 'ग' पुस्तके 'आजिश्रिताम्' इति पाठो लभ्यते।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १३. १४, १४. १; मै० सं० १. ११: १-३; तै० सं० १. ७. ७,८।

[ यूपारोहणम् ]

अथ स्रुवं चाऽऽज्यविलापनीं चाऽऽदाय । आहवनीयमभ्यैति स ऽएता द्वादशाऽऽप्तीर्जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान ऽएव बन्धुः ॥ १ ॥ स * जुहोति । 'आपये स्वाहा[1] स्वापये स्वाहा पिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्प्पतये स्वाहाऽन्न्हे मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहे'त्येता द्वादशाऽऽप्तीर्जुहोति द्वादश वै मासाः संवत्सरस्य संवत्सरः प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तद्यैवाऽस्याऽऽप्तिर्य्या सम्पत्तामेवैतदुज्जयति तामात्मन्कुरुते ॥ २ ॥ अथ षट् क्लृप्तीर्जुहोति । वा वाचयति वा यदि जुहोति यदि वाचयति समान ऽएव बन्धुः ॥ ३ ॥ स † वाचयति । 'आयुर्य्यज्ञेन कल्पतां[2] प्राणो यज्ञेन कल्पतां चक्षुर्य्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामि'त्येताः षट् क्लृप्तीर्वाचयति षड्वा ऽऋतवः संवत्सरस्य संवत्सरः प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तद्यैवाऽस्य क्लृप्तिर्य्या सम्पत्तामेवैतदुज्जयति तामात्मन्कुरुते ॥ ४ ॥ अष्टाश्रिर्य्यूपो भवति । अष्टाक्ष-

---

* का० श्रौ० सू० १४. ५. १ ।
( १ ) शु० सं० अ० ९ क० २० ।
† का० श्रौ० सू० १४. ५. २० ।
( २ ) शु० सं० अ० ९ क० २१

वै गायत्री गायत्रमग्नेश्छन्दो देवलोकमेवैतेनोज्जयति सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विग्रथितो वा भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ ५ ॥ गौधूमं चषालं भवति । पुरुषो वै प्रजापतेर्नेदिष्ठꣳ सोऽयमत्रगेते वै पुरुषस्यौषधीनां नेदिष्ठतमां यद्गोधूमास्तेषां न त्वगस्ति मनुष्यलोकमेवैतेनोज्जयति ॥ ६ ॥ गर्त्तन्वाद्यूपोऽतीक्ष्णाग्रो भवति । पितृदेवत्यो वै गर्त्तꣳ पितृलोकमेवैतेनोज्जयति सप्तदशारत्निर्भवति सप्तदशो वै प्रजापतिस्तत् प्रजापतिमुज्जयति ॥ ७ ॥ अथ नेष्टा पत्नीमुदानेष्यन् । कौशं वासः परिधापयति कौशं वा * चण्डातकमन्तरं दीक्षितवसनाज्जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन्भवत्यस्ति वै पत्न्या ऽअमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भास्तद्यदेवाऽस्या ऽअमेध्यं तदेवाऽस्या ऽएतद्दर्भैर्मेध्यं कृत्वाऽथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नीमुदानेष्यन्कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनात् ॥ ८ ॥ अथ † निश्रयणीं निश्रयति । स दक्षिणत ऽउदङ् रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वेवोदङ् रोहेत्तथा ह्युदग्भवति ॥ ९ ॥ स रोक्ष्यन् ‡ जायामामन्त्रयते । जाय ऽएहि स्वो रोहावेति रोहावेत्याह जाया तद्यज्जायामामन्त्रयतेऽर्द्धो ह वा ऽएष-

---

* "जघनमात्रप्रच्छादकं वासश्चण्डातकशब्देनोच्यते" (का० श्रौ० सू० वृ० १४. ५. ३)।
† 'दारुनिर्मिता सोपानपङ्क्तिर्निश्रयणी' "निश्रेणिस्त्वधिरोहिणी" इत्यमरः ।
‡ का० श्रौ० सू० १४. ५. ६ ।

ऽआत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत्प्रजायतेऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दतेऽथ प्प्रजायते तर्हि हि सर्वो भवति सर्व्व ऽएतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते ॥ १० ॥ स * रोहति । 'प्रजापतेः प्प्रजा[1] ऽअभूमे'ति प्प्रजापतेर्ह्येष प्प्रजा भवति यो वाजपेयेन यजते ॥ ११ ॥ अथ गोधूमानुपस्पृशति । 'स्वर्द्देवा[2] ऽअगन्मे'ति स्वर्ह्येष गच्छति यो वाजपेयेन यजते ॥ १२ ॥ तद्यद्गोधूमानुपस्पृशति । अन्नं वै गोधूमा ऽअन्नं वा ऽएषऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्त्वा सꣳस्पृशते तदात्मन्कुरुते तस्माद्गोधूमानुपस्पृशति ॥ १३ ॥ अथ शीर्ष्णा † यूपमत्त्युज्जिहीते । 'अमृता[3] ऽअभूमे'ति देवलोकमेवैतेनोज्जयति ॥ १४ ॥ ‡ अथ दिशोऽनुवीक्ष्यमाणो जपति । 'अस्मे[4] वो ऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्च्चाꣳसि सन्तु व' ऽइति सर्व्वं वा ऽएष ऽइदमुज्जयति यो वाजपेयेन यजते प्प्रजापतिꣳ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः सोऽस्य सर्व्वस्य यश ऽइन्द्रियं वीर्य्यꣳ संवृज्य तदात्मन्धत्ते तदात्मन्कुरुते तस्माद्दिशोऽनुवीक्ष्यमाणो जपति ॥ १५ ॥ अथैनमूषपुटैरनूदस्यन्ति ‡‡ ।

* का० श्रौ० सू० १४. ५. ७ ।
(१) शु० सं० अ० ९ क० २१ । (२) शु० सं० अ० ९ क० २१ ।
† का० श्रौ० सू० १४. ५. १०, ११ ।
‡ अत्र शतम् ३००० ।
(३) शु० सं० अ० ९ क० २१ । (४) शु० सं० अ० ९ क० २२ ।
‡‡ का० श्रौ० सू० १४. ५. १२ ।

पशवो वा ऽऊषा ऽअन्नं वै पशवोऽन्नं वा ऽएष ऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्य-देवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्त्वा सꣳस्पृशते तदा-त्मन्कुरुते तस्मादेनमूषपुटैरनूदस्यन्ति ॥ १६ ॥ आश्वत्थेषु पलाशेषूपनद्धा भवन्ति। स यदेवाऽदोऽश्वत्थे तिष्ठत ऽइन्द्रो मरुत ऽउपाऽऽमन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति विशोऽनूदस्यन्ति विशो वै मरुतोऽअन्नं विशस्त-स्माद्विशोऽनूदस्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजा-पतिस्तत् प्रजापतिमुज्जयति ॥१७॥ अथेमामुपा ऽवेक्षमाणो * जपति। 'नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या' ऽइति बृहस्पतेर्ह वा ऽअभिषिषिचानात्पृथिवी बिभयाञ्च-कार महद्वा ऽअयमभूद्योऽभ्यषेचि यद्वै माऽयं नाऽव-दृणीयादिति बृहस्पतिर्ह पृथिव्यै विभयाञ्चकार यद्वै मेयं नाऽवधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ १८ ॥ बृहस्पतिसवो वा ऽएष यद्वाजपेयम्। पृथिव्यु हैतस्माद्विभेति महद्वा-ऽअयमभूद्योऽभ्यषेचि यद्वै माऽयं नाऽवदृणीयादित्येष ऽउ हाऽस्यै बिभेति यद्वै मेयं नाऽवधून्वीतेति तदनयैवैतन्मि-त्रधेयं कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ १९ ॥ अथ हिरण्यमभ्यवरोहति। अमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति ॥ २० ॥ † अथाऽजर्षभस्या-

---

* का० श्रौ० सू० १४. ५, १४।

(१) शु० सं० अ० ९ क० २२।

† का० श्रौ० सू० १४. ५. १७।

ऽजिनमुपस्तृणाति । तदुपरिष्टाद्रुक्मं निदधाति तमभ्यवरोहतीमां वैव ॥ २१ ॥ अथाऽस्मा ऽआसन्दीमाहरन्ति । उपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्य्यासीनमधस्तादिमाः प्रजा ऽउपासते तस्मादस्मा ऽआसन्दीमाहरन्ति ॥ २२ ॥ औदुम्बरी भवति । अन्नं वा ऽऊर्ग्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्याऽवरुद्ध्यै तस्मादौदुम्बरी भवति तामग्रेण हविर्द्धाने जघनेनाऽऽहवनीयं निदधाति ॥ २३ ॥ अथाऽजर्षभस्याऽजिनमास्तृणाति । प्रजापतिर्वा ऽएष यदजर्षभ ऽएता वै प्रजापतेः प्रत्यक्षतमां यदजास्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति तत्प्रजापतिमेवैतत्करोति तस्मादजर्षभस्याऽजिनमास्तृणाति ॥ २४ ॥ स ऽआस्तृणाति । 'इयं[1] ते राडि'ति राज्यमेवाऽस्मिन्नेतद्दधात्यथैनमासा*दयति 'यन्तां[2]ऽसि यमन' ऽइति यन्तारमेवैनमेतद्यमनमासां प्रजानां करोति 'ध्रुवो[3]ऽसि धरुण' ऽइति ध्रुवमेवैनमेतद्धरुणमस्मिँल्लोके करोति 'कृष्यै[4] त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वे'ति साधवे त्वेत्येवैतदाह ॥ २५ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ (A)

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११७ ॥



( १ ) शु० सं० अ० ९ क० २२ ।
* का० श्रौ० सू० १४. ५. १८ ।
( २ ) शु० सं० अ० ९ क० २२ । ( ३ ) शु० सं० अ० ९ क० २२ । ( ४ ) शु० सं० अ० ९ क० २२ ।
(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १४. १; मै० सं० १. ११. ३; तै० सं० १. ७. ८ ।

[ नैवारचरुप्रचारः, उज्जितिहोमः, स्विष्टकृद्यागश्च ]

बार्हस्पत्त्येन चरुणा प्प्रचरति । तस्यांऽनिष्टं ऽएव स्विष्टकृद्भवत्त्यथाऽस्म्मा ऽअन्नꣳ सम्भरत्त्यन्नं व्वा ऽएष-ऽउज्जयति यो व्वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वा-जपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवाऽस्म्मा ऽएतत्सम्भरति ॥१॥ औदुम्बरे पात्रे । अन्नं व्वा ऽऊर्ग्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्या-ऽवरुद्ध्यै तस्म्मादौदुम्बरे पात्रे सोऽप ऽएव प्प्रथमꣳ सम्भ-रत्त्यथ पयोऽथ यथोपस्म्मारमन्नानि ॥ २ ॥ तद्धैके । सप्तदशान्नानि सम्भरन्ति सप्तदशꣳ प्प्रजापतिरिति व्वदन्त-स्तदु तथा न कुर्य्यात्प्रजापतेर्व्वेव सर्व्वमन्नमनवरुद्धं क-ऽउ तस्म्मै मनुष्यो यꣳ सर्व्वमन्नमव*रुन्धति तस्म्मादु सर्व्वमेवाऽन्नं यथोपस्मारꣳ सम्भरन्नेकमन्नं न सम्भरेत् ॥ ३ ॥ स यन्न सम्भरति । तस्योद्द्ब्रुवीत तस्य नाऽश्नीयाद्याव-ज्जीवं तथा नाऽन्तमेति तथा ज्योग्जीवति स ऽएतस्य सर्व्वस्याऽन्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं व्वाजप्प्रसवीयानि जुहोति तद्याभ्य ऽएवैतद्देवताभ्यो जुहोति ता ऽअस्मै प्प्रसुवन्ति ताभिꣳ प्प्रसूत ऽउज्जयति तस्म्माद्वाजप्रसवीयानि जुहोति ॥ ४ ॥ स † जुहोति । '[1]व्वाजस्येमं प्रसवꣳ सुषुवेऽग्ग्रे सोमꣳ राजानमोषधीष्वप्प्सु । ता ऽअस्मभ्यं मधुमतीर्भवन्तु व्वयꣳ राष्ट्रे जागृयाम पुरोहिताꣳ स्वाहा' ॥ ५ ॥ '[2]व्वाजस्येमाम् । प्रसवꣳ शिश्रिये दिवमिमा च व्विश्वा भुवनानि

* 'अवरुन्धीत' इति पाठो 'ग' पुस्तके ।

† का० श्रौसू० अ० १४. ५. २३ ।

( १ ) शु० सं० अ० ९ क० २३ । ( २ ) शु० सं० अ० ९ क० २४ ।

सम्म्राट्। अदित्सन्तं दापयति प्प्रजानन्त्स नो रयिꣳ सर्व्ववीरं नियच्छतु स्वाहा' ॥ ६ ॥ 'व्वाजस्य[1] नु। प्प्रसवऽआबभूवेमा च व्विश्वा भुवनानि सर्व्वतः। सनेमि राजा परियाति विद्वान्प्रजां पुष्टिं वर्द्धयमानो ऽअस्मे स्वाहा' ॥ ७ ॥ सोमꣳ राजानम्[2]। अवसेऽग्निमन्न्वारभामहे। आदित्यान्न्विष्णुꣳ सूर्य्यं ब्रह्माणं च बृहस्प्पतिꣳ स्वाहा' ॥ ८ ॥ अर्य्यमणं बृहस्प्पतिम्। इन्द्रं दानाय चोदय। व्वाचं व्विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनꣳ स्वाहा' ॥ ९ ॥ 'अग्ने ऽअच्छा[3]। व्वदेह नः प्प्रति नः सुमना भव। प्र नो यच्छ सहस्रजित्त्वꣳ हि धनदा ऽअसि स्वाहा' ॥ १० ॥ प्र नः। 'यच्छत्[4]त्वर्य्यमा प्प्र पूषा प्प्र बृहस्प्पतिः। प्र वाग्देवी ददातु नः स्वाहे'ति ॥ ११ ॥ अथैनं परिशिष्टेनाऽभिषिञ्चति। अन्नाद्येनैवैनमेतदभिषिञ्चत्त्यन्नाद्यमेवाऽस्मिन्नेतद्दधाति तस्मादेनं * परिशिष्टेनाऽभिषिञ्चति ॥ १२ ॥ सोऽभिषिञ्चति। 'देवस्य[5] त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामि'ति देवहस्तैरेवैनमेतदभिषिञ्चति 'सरस्वत्यै[6] व्वाचो यन्तुर्य्यन्त्रिये दधामी'ति वाग्वै सरस्वती तदेनं वाच ऽएव यन्तुर्य्यन्त्रिये दधाति ॥ १३ ॥ तद्ध हैक ऽआहुः। 'व्विश्वेषां त्वा देवानां यन्तु-

---

(१) शु० सं० अ० ९ क० २५। (२) शु० सं० अ० ९ क० २६। (३) शु० सं० अ० ९ क० २७। (४) शु० सं० अ० ९ क० २८।

* का० श्रौ० सू० १४. ५. २४,२५।

(५) शु० सं० अ० ९ क० २३। (६) शु० सं० अ० ९ क० २९। (७) का० श्रौ० सू० १४. ५. २५।

रूर्यन्त्रिये दधामी'ति सर्वं वै विश्वे देवास्तदेनᳬ सर्वस्यैव यन्तुरूर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा वाचो यन्तुरूर्यन्त्रिये दधामीत्त्येव ब्रूयाद्वाग्वै सरस्वती तदेनं वाच ऽएव यन्तुरूर्यन्त्रिये दधाति 'बृहस्पतेष्ट्वा[१] साम्म्राज्ज्येनाऽभिषिञ्चाम्म्यसावि'ति नाम गृह्णाति तद् बृहस्पतेरेवैनमेतत्सायुज्ज्यᳬ सलोकतां गमयति ॥ १४ ॥ अथाऽऽह । सम्म्राडयमसौ सम्म्राडयमसाविति निवेदितमेवैनमेतत्सन्तं देवेब्भ्यो निवेदयत्त्ययं महावीर्य्यो योऽब्भ्यषेचीत्त्ययं ऽयुष्माकैकोऽभूत्तं गोपायतेत्त्येवैतदाह त्रिष्कृत्त्व ऽआह त्रिवृद्धि यज्ञᳬ ॥ १५ ॥ अथोज्जितीᳬ । जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान ऽएव बन्धुᳬ ॥ १६ ॥ स * वाचयति । 'अग्निरेकाक्षरेण[२] प्राणमुदजयत्तमुज्जेषं प्रजापतिᳬ सप्तदशाक्षरेण सप्तदशᳬ स्तोममुदजयत्तमुज्जेषमि'ति तद्यदेवैताभिरेता देवता ऽउदजयँस्तदेवैष ऽएताभिरुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ १७ ॥ अथाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाऽऽहुती ऽएतत्कर्म्म क्रियत ऽएष वै प्रजापतिर्य ऽएष यज्ञस्तायते यस्म्मादिमाᳬ प्रजाᳬ प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनुप्रजायन्ते तन्मद्ध्यत ऽएवैतत्प्रजापतिमुज्जयति तस्म्मादन्तरेणाऽऽहुती ऽएतत्कर्म्म क्रियत ऽआश्राव्याऽऽहाऽग्निᳬ स्विष्टकृतं

(१) शु० सं० अ० ९ क० ३०।
* का० श्रौ० सू० १४. ५. २८।
(२) शु० सं० अ० ९ क० ३१–३४।

ऽयजेति वषट्कृते जुहोति ॥१८॥ अथेडामादधाति । उपहूतायामिडायामप ऽउपस्पृश्य * माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति स ऽउपाऽवरोहति सोऽन्तेस्तोत्रस्य भवत्त्यन्ते शस्त्रस्य ॥ १९ ॥ तद्धैके । एतत्कृत्वाऽथैतत्कुर्वन्ति तदु तथा न कुर्य्यादात्मा वै स्तोत्रं प्रजा शस्त्रमेतस्माद्ध स यजमानं प्रणाशयति स जिह्म ऽएति स ह्वलति तस्मादेतदेव कृत्वाऽथैतत्कुर्य्यात् ॥ २० ॥ अथेडामादधाति । उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति स ऽउपाऽवरोहति सोऽन्ते स्तोत्रस्य भवत्त्यन्ते शस्त्रस्य ॥ २१ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



## [ अथ राजसूयविधिः ]

( तत्र पवित्रेष्टिः, अनुमतीष्टिः, चातुर्मास्यविधिश्च )

पूर्णाहुतिं जुहोति । सर्वं वै पूर्णꣳ सर्वं परिगृह्य सूयाऽइति तस्यां वरं ददाति सर्वं वै वरः सर्वं परिगृह्य सूयाऽइति स यदि कामयेत जुहुयादेतां यद्यु कामयेताऽपि नाऽद्रियेत ॥ १ ॥ अथ † श्वो भूते । अनुमत्यै हविरष्टा-

* का० श्रौ० सू० १४. ५. २९–३२ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १४. ३. २; मै० सं० १. ११. ४; तै० सं० १. ७. १० ।

† का० श्रौ० सू० १५. १. ६,७ ।

कपालं पुरोडाशं निर्वपति स ये जघनेन शम्म्यां पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला वा तान्त्स्रुवे सार्द्धं संवपत्यन्वाहार्य्यपचनादुल्मुकमाददते तेन दक्षिणा यन्ति स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्प्रदरं वा ॥२॥ तदग्निं समाधाय * जुहोति । 'एषं ते निर्ऋते भागस्तं जुषस्व स्वाहे'तीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्यदेवाऽस्या ऽअत्र नैर्ऋतं रूपं तदेवैतच्छमयति तथो हैनं सूयमानं निर्ऋतिर्न्न गृह्णात्यथ यत्स्वकृते † वेरिणे जुहोति श्वभ्रप्प्रदरे वैतदु ह्यस्यै निर्ऋतिगृहीतम् ॥ ३ ॥ अथाऽप्प्रतीक्षं पुनरायन्ति । अथाऽनुमत्त्या ऽअष्टाकपालेन पुरोडाशेन प्प्रचरतीयं वा ऽअनुमतिः स यस्तत्कर्म्म शक्नोति कर्त्तुं यच्चिकीर्षतीयं हाऽस्मै तदनु मन्न्यते तदिमामेवैतत्प्रीणात्यनयाऽनुमत्त्याऽनुमतः सूया ऽइति ॥ ४ ॥ अथ यदष्टाकपालो भवति । अष्टाक्षरा वै गायत्री गायत्री वा ऽइयं पृथिव्व्यथ यत्समानस्य हविष ऽउभयत्र जुहोत्त्येषा ह्येवैतदुभयं तस्य वासो दक्षिणा यद्वै सवासाऽअरण्यं नोदाशङ्कसते निधाय वै तद्वासोऽतिमुच्च्यते तथो हैनं सूयमानमासङ्गो न विन्दति ॥ ५ ॥ अथ श्वो भूते । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजते तद्यदेवाऽदः प्प्रजातमाग्नावैष्णवं दीक्षणीयं हवि-

* का० श्रौ० सू० १५. १. ८ ।
( १ ) शु० सं० अ० ९ क० ३३ ।
† का० श्रौ० सू० ९. ३५ ।

स्तदेवैतदग्निर्वै सर्वा देवता ऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्याऽवरार्द्ध्यो विष्णुः परार्द्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य सूया ऽइति तस्मादाग्नावैष्णव ऽएकादशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणाऽऽग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै विष्णुः स यज्ञोऽग्निरु वै यज्ञ ऽएव तदु तदाग्नेयमेव तस्माद्धिरण्यं दक्षिणा ॥ ६ ॥ अथ श्वो भूते । अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजत ऽएतेन वा ऽइन्द्रो वृत्रमहन्नेतेनो ऽएव व्यजयत यास्येयं विजितिस्तां तथो ऽएवैष ऽएतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूया ऽइति तस्मादग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति तस्योत्सृष्टो गौर्दक्षिणोत्सर्जं वा ऽअमुं चन्द्रमसं घ्नन्ति पौर्णमासेनाऽऽह घ्नन्त्यामावास्येनोत्सृजन्ति तस्मादुत्सृष्टो गौर्दक्षिणा ॥ ७ ॥ अथ श्वो भूते । ऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजते यत्र वा ऽइन्द्रो वृत्रमहँस्तदस्य भीतस्येन्द्रियं वीर्यमपचक्राम स ऽएतेन हविषेन्द्रियं वीर्यं पुनरात्मन्नधत्त तथो ऽएवैष ऽएतेन हविषेन्द्रियं वीर्यमात्मन्धत्ते तेजो वा ऽअग्निरिन्द्रियं वीर्यमिन्द्र ऽउभे वीर्ये परिगृह्य सूया ऽइति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति तस्यऽर्षभोऽनड्वान्दक्षिणा स हि वहेनाऽऽग्नेय ऽआण्डाभ्यामैन्द्रस्तस्मादृषभोऽनड्वान्दक्षिणा ॥ ८ ॥ अथाऽऽग्रयणेष्ट्या यजते । सर्वान्वा-

ऽएष यज्ञक्रतूनवरुन्धे सर्वा ऽइष्टीरपि दर्व्विहोमान्न्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्र्यदाग्रयणेष्टिरनया मेऽपीष्टमसदनयाऽपि सूया ऽइति तस्मादाग्रयणेष्ट्या यजत ऽओषधीर्व्वा ऽएष सूयमानोऽभिसूयते तदोषधीरेवैतदनमीवा ऽअकिल्विषाः कुरुतेऽनमीवा ऽअकिल्विषाऽओषधीरभि सूया ऽइति तस्य गौर्द्दक्षिणा ॥ ९ ॥ अथ * चातुर्म्मास्यैर्र्यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वाऽइष्टीरपि दर्व्विहोमान्न्यो राजसूयेन यजते देवसृष्टो वाऽएष यज्ञक्रतुर्र्यच्चातुर्म्मास्यान्न्येभिर्म्मेऽपीष्टमसदेभिरपि सूया ऽइति तस्माच्चातुर्म्मास्यैर्र्यजते ॥ १० ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ वैश्वदेवादि-पर्वाणि, पञ्चवातीयहोमविध्यादिकञ्च ]

वैश्वदेवेन यजते । वैश्वदेवेन वै प्प्रजापतिर्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया ऽइति तथोऽएवैष ऽएतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया ऽइति ॥ १ ॥ अथ वरुणप्प्रघासैर्र्यजते । वरुणप्प्रघासैर्व्वै प्प्रजापतिः प्प्रजा वरुणपाशात्प्राऽमुञ्चत्ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्प्रजाः प्प्राऽजायन्ताऽनमीवा ऽअकिल्विषाः प्प्रजा ऽअभि सूयाऽइति तथो ऽएवैष ऽएतद्वरुणप्प्रघासैरेव प्प्रजा वरुणपाशात्प्रमुञ्चति ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्प्रजाः

* का० श्रौ० सू० १५. १. १५,१६ ।

प्प्रजायन्तेऽनमीवा ऽअकिल्विषाः प्प्रजा ऽअभि सूया ऽइति ॥ २ ॥ अथ साकमेधैर्य्यजते । साकमेधैर्वै देवा व्वृत्रमघ्नँ-स्तैर्वेव व्व्यजयन्त येयमेषां व्विजितिस्तां तथो ऽएवैष-ऽएतैः पाप्प्मानं द्विषन्तं भ्रातृव्व्यछ हन्ति तथो ऽएव व्विजयते व्विजितेऽभयेऽनाष्ट्रे सूया ऽइति ॥ ३ ॥ अथ शुनासीर्य्येण यजते । उभौ रसौ परिगृह्य सूया ऽइत्यथ * पञ्चवातीयछ स पञ्चधाऽऽहवनीयं व्व्युह्य स्रुवेणोपघातं जुहोति ॥ ४ ॥ स पूर्व्वार्द्धे जुहोति । '[1]अग्निनेत्रेब्भ्यो देवेब्भ्यः पुरः सद्ध्यः स्वाहे'त्यथ दक्षिणार्द्धे जुहोति '[2]यमनेत्रेब्भ्यो देवेब्भ्यो दक्षिणासद्ध्यः स्वाहे'त्यथ पश्चा-र्द्धे जुहोति '[3]व्विश्वदेवनेत्रेब्भ्यो देवेब्भ्यः पश्चात्सद्भ्यः स्वाहे'त्यथोत्तरार्द्धे जुहोति '[4]मित्रावरुणनेत्रेब्भ्यो वा मरु-न्नेत्रेब्भ्यो वा देवेब्भ्य ऽउत्तरासद्ध्यः स्वाहे'त्यथ मध्ये जुहोति '[5]सोमनेत्रेब्भ्यो देवेब्भ्य ऽउपरिसद्ध्यो दुवस्वद्ब्भ्यः स्वाहे'ति ॥ ५ ॥ अथ सार्द्धछ समुह्य जुहोति । '[6]ये देवा-ऽअग्निनेत्राः पुरः सदस्तेब्भ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेब्भ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्स-दस्तेब्भ्यः स्वाहा ये देवा मित्रावरुणा नेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेब्भ्यः स्वाहा ये देवाः सोमनेत्राऽउपरिसदो दुवस्वन्तस्तेब्भ्यः स्वाहे'ति तद्यदेवं जुहोति ॥ ६ ॥ यत्र

* का० श्रौ० सू० १५. १. १८,१९ ।

( १ ) शु० सं० अ० ९ क० ३४ । ( २ ) शु० सं० अ० ९ क० ३४ । ( ३ ) शु० सं० अ० ९ क० ३४ । ( ४ ) शु० सं० अ० ९ क० ३४ । (५) शु० सं० अ० ९ क० ३४ । ( ६ ) शु० सं० अ० ९ क० ३५ ।

वै देवाः । साकमेधैर्व्यजयन्त येयमेषां विजितिस्तां तथोएवैष एतेन व्यजयते ऽअथो येऽमानि दिक्षु नाष्ट्रा रक्षांसि हन्तैभ्यो वज्रं प्रहरामेति वज्रो वा ऽआज्यं त ऽएतेन वज्रेणाऽऽज्येन दिक्षु नाष्ट्रा रक्षांस्यवाघ्नँस्ते व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतेन वज्रेणाऽऽज्येन दिक्षु नाष्ट्रा रक्षांस्यवहन्ति तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूया ऽइति ॥ ७ ॥ अथ यदेताऽअपराः पञ्चाऽऽहुतीर्ज्जुहोति । क्षण्णवन्ति वा ऽएतदग्नेर्व्विवृहन्ति यत्पञ्चधाऽऽहवनीयं व्यूहन्ति तदेवाऽस्यैतेन सन्दधाति तस्मादेता ऽअपराः पञ्चाऽऽहुतीर्ज्जुहोति ॥८॥ तस्य प्प्रष्टिवाहनोऽश्वरथो * दक्षिणा । त्रयोऽश्वा द्वौ सव्यष्टृसारथी ते पञ्च प्प्राणा यो वै प्प्राणः स वातस्तद्यदेतस्य कर्म्मण ऽएषा दक्षिणा तस्मात्पञ्चवातीयं नाम ॥ ९ ॥ स हैतेनाऽपि † भिषज्येत् । अयं वै प्प्राणो योऽयं पवते यो वै प्प्राणः स ऽआयुः सोऽयमेक ऽइवैव पवते सोऽयं पुरुषेऽन्तः प्प्रविष्टो दशधा विहितो दश वा ऽएताऽआहुतीर्ज्जुहोति तदस्मिन्दश प्प्राणान्कृत्स्नमेव सर्वमायुर्द्दधाति स यदिहाऽपि गतासुरिव भवत्या हैवैनेन हरति ॥ १० ॥ अथेन्द्रतुरीयम् । आग्नेयोऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनड्वुह्यै वहलाया ऽऐन्द्रं दधि तेनेन्द्रतुरीयेण यजत ऽइन्द्राग्नी ऽउ

* का॰ श्रौ॰ सू॰ १५. १. २० ।
† का॰ श्रौ॰ सू॰ १५. १. २१–२८ ।

हैवैतत्समूदाते ऽउत्पिबन्ते वा ऽइमानि दिक्षु नाष्ट्रा रक्षाᳬंसि हन्तैभ्यो वज्रं प्रहरावेति ॥ ११ ॥ सहाऽग्निरुवाच । त्रयो मम भागाः सन्त्वेकस्तवेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षाᳬंस्यपाऽहतां तौ व्यजयेतां यैनयोरियं विजितिस्तां तथो ऽएवैष ऽएतेन हविषा दिक्षु नाष्ट्रा रक्षाᳬंस्यपहन्ति तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूया ऽइति ॥ १२ ॥ स य ऽएष ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति । सोऽग्नेरेको भागोऽथ यद् वारुणो यवमयश्चरुर्भवति यो वै वरुणः सोऽग्निः सोऽग्नेर्द्वितीयो भागोऽथ यद्रौद्रो गावेधुकश्चरुर्भवति यो वै रुद्रः सोऽग्निः सोऽग्नेस्तृतीयो भागोऽथ यद् गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद् गावेधुको भवत्यथ यदनडुह्यै वहलाया ऽऐन्द्रं दधि भवति स ऽइन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं तत्तुरीयं तस्मादिन्द्रतुरीयं नाम तस्यैषैवाऽऽनडुही वहला दक्षिणा सा हि वहेनाऽऽग्नेय्यग्निदग्धमिव ह्यस्यै वहं भवत्यथ यत्स्त्री सती वहत्यधर्म्मेण तदस्यै वारुणᳬं रूपमथ यद् गौस्तेन रौद्र्यथ यदस्या ऽऐन्द्रं दधि तेनैन्द्र्येषा हि वा ऽएतत्सर्वं व्यश्नुते तस्मादेषैवाऽऽनडुही वहला दक्षिणा ॥ १३ ॥ अथाऽपामार्गहोमं * जुहोति । अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षाᳬंस्यपाऽमृजत तेऽव्यजयन्त येयमेषां विजितिस्तां तथोऽएवैष ऽएतदपामार्गैरेव दिक्षु नाष्ट्रा रक्षाᳬंस्यपमृष्टे

* का० श्रौ० सू० १५. २. १,२।

तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूया ऽइति ॥१४॥ स पालाशे वा स्रुवे वैकङ्कते वा। अपामार्गतण्डुलानादत्ते-ऽन्वाहार्य्यपचनादुल्मुकमाददते तेन प्राञ्चो वोदञ्चो वा यन्ति तदग्निꣳ समाधाय जुहोति ॥ १५ ॥ * स ऽउल्मुकमादत्ते । 'अग्ने[1] सहस्व पृतना' ऽइति युधो वै पृतना-युधः सहस्वेत्येवैतदाह।'ऽभिमातीरपास्ये[2]'ति सपत्नो वा-ऽअभिमातिः सपत्नमपजहीत्येवैतदाह 'दुष्टरस्तरन्नराती-रि[3]'ति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्वꣳ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति 'वर्चो[4]धा यज्ञवाहसी'ति साधु यजमाने दधदित्येवैतदाह ॥ १६ ॥ तदग्निꣳ समाधाय † जुहोति । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपाꣳशोर्वीर्य्येण जुहोमी'ति यज्ञमुखं वा ऽउपाꣳशुर्यज्ञमुखेनैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति 'हतꣳ[6] रक्षः स्वाहे'ति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १७ ॥ स यदि पालाशः स्रुवो ‡ भवति । ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति 'रक्षसां त्वा वधाये'ति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १८ ॥

---

* का० श्रौ० सू० १५. २. ५।

(१) शु० सं० अ० ९ क० ३७। (२) शु० सं० अ० ९ क० ३७। (३) शु० सं० अ० ९ क० ३७। (४) शु० सं० अ० ९ क० ३७।

† का० श्रौ० सू० १५. २. ६–८।

(५) शु० सं० अ० ९ क० ३८। (६) शु० सं० अ० ९ क० ३८।

‡ का० श्रौ० सू० १५. २. २।

(७) शु० सं० अ० ९ क० ३८।

स यदि प्प्राङिन्त्वा जुहोति । प्राञ्चथ्ठं स्रुवमस्यति यद्युदङ्ङिन्त्वा जुहोत्युदञ्चथ्ठं स्रुवमस्य'त्त्यवधिष्म रक्ष' ऽइति तन्नाष्ट्रा रक्षाथ्ठंसि हन्ति ॥ १९ ॥ अथाऽप्प्रतीक्षं पुनरायन्ति । स हैतेनाऽपि प्प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत्प्रतीत्त्य जुहोति प्प्रतीचीनफलो वा ऽअपामार्गः स यो हाऽस्मै तत्र किञ्चित्करोति तमेव तत्प्रत्यग्घूर्वति तस्य नामाऽदिशे'द्दुवधिष्माऽमुमसौ हत' ऽइति तन्नाष्ट्रा रक्षाथ्ठंसि हन्ति ॥ २० ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ त्रिषंयुक्तेष्टिः, द्विहविष्केष्टिश्च ]

आग्नावैष्णवमेकादशकपालं * पुरोडाशं निर्वपति । ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंय्युक्तेन यजते पुरुषानेतद्देवा ऽउपाऽयँस्तथो ऽएवैष ऽएतत्पुरुषानेवोपैति ॥ १ ॥ [ अर्धप्रपाठकः ५२ ] स यदाग्नावैष्णवः । एकादशकपालः पुरोडाशो भवत्त्यग्निर्वै दाता वैष्णवाः पुरुषास्तदस्म्मा ऽअग्निर्द्दाता पुरुषान्ददाति ॥ २ ॥ अथ यदैन्द्रा वैष्णवः । चरुर्भवतीन्द्रो वै यजमानो वैष्णवाः पुरुषाः स यानेवास्म्मा ऽअग्निर्द्दाता पुरुषान्ददाति तैरेवैतत्सथ्ठंस्पृशते

(१) शु० सं० अ० ९ क० ३८ । (२) शु० सं० अ० ९ क० ३८ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १५. २; मै० सं० ११. ६. ३; तै० सं० १. ८. ७ ।

* का० श्रौ० सू० १५. २. ११–१३ ।

तानारम्भङ्कुरुते ॥ ३ ॥ अथ यद्वैष्णवः । त्रिकपालो वा पुरोडाशो भवति चरुर्वा यानेवाऽस्मा ऽअग्निर्दाता पुरुषान्ददाति तेष्वेवैतदन्ततः प्प्रतितिष्ठति यद्वै पुरुषवान्कर्म्म चिकीर्षति शक्नोति वै तत्कर्त्तुं तत्पुरुषानेवैतदुपैति पुरुषवान्त्सूया ऽइति तस्य वामनो गौर्द्दक्षिणा स हि वैष्णवो यद्वामनः ॥ ४ ॥ अथाऽपरेण त्रिषंय्युक्तेन यजते । स-ऽआग्नापौष्णमेकादशकपालं पुरोडाशं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिषंय्युक्तेन यजते पशूनेव तद्देवा-ऽउपायँस्तथो ऽएवैष ऽएतत्पशूनेवोपैति ॥ ५ ॥ स * यदा-ग्नापौष्णः । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता पौष्णाः पशवस्तदस्मा ऽअग्निरेव दाता पशून्ददाति ॥६॥ अथ यदैन्द्रापौष्णः । चरुर्भवतीन्द्रो वै यजमानः पौष्णाः पशवः स यानेवाऽस्मा ऽअग्निर्दाता पशून्ददाति तैरेवैत-त्सछं स्पृशते तानारम्भङ्कुरुते ॥ ७ ॥ अथ यत्पौष्णः । चरु-र्भवति यानेवाऽस्मा ऽअग्निर्दाता पशून्ददाति तेष्वेवैतदन्ततः प्प्रतितिष्ठति यद्वै पशुमान्कर्म्म चिकीर्षति शक्नोति वै तत्कर्त्तुं तत्पशूनेवैतदुपैति पशुमान्त्सूया ऽइति तस्य † श्यामो गौर्द्दक्षिणा स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्प्रजननं मिथुनमेवैतत्प्रजननं क्रियते तस्माच्छ्यामो गौर्द्दक्षिणा ॥ ८ ॥ अथाऽपरेण

* का० श्रौ० सू० १५. २. १२ ।

† का० श्रौ० सू० १५. २. १४ ।

त्रिषंऽस्रुक्तेन यजते । सोऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रासौम्म्यं चरुꣳ सौम्म्यं चरुं तेन त्रिषंऽस्रुक्तेन यजते व्वर्च्च ऽएव तद्देवा ऽउपायँस्तथो ऽएवैष ऽएतद्वर्च्च-ऽएवोपैति ॥ ९ ॥ स यदग्नीषोमीयः । एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता व्वर्च्चः सोमस्तदस्म्मा ऽअग्निरेव दाता व्वर्च्चो ददाति ॥ १० ॥ अथ यदैन्द्रासौम्म्यः । चरुर्ब्भवतीन्द्रो वै यजमानो व्वर्च्चः सोमः स यद्देवाऽस्म्मा-ऽअग्निर्द्दाता व्वर्च्चो ददाति तेनैवैतत्सꣳस्पृशते तदात्मन्कुरुते ॥ ११ ॥ अथ यत्सौम्म्यः । चरुर्ब्भवति यद्देवाऽस्म्मा-ऽअग्निर्द्दाता व्वर्च्चो ददाति तस्मिन्नेवैतदन्ततः प्प्रातितिष्ठति यद्वै व्वर्च्चस्वी कर्म्म चिकीर्षति शक्नोति वै तत्कर्त्तुं तद्वर्च्च-ऽएवैतदुपैति व्वर्च्चस्वी सूया ऽइति नो ह्यवर्च्चसो व्यापत्त्या चनाऽर्त्थोऽस्ति तस्य * बब्भ्रुर्गौर्द्दक्षिणा स हि सौम्म्यो यद्बब्भ्रुः ॥ १२ ॥ अथ श्वो भूते । व्वैश्वानरं द्वादशकपालं पुरोडाशं निर्व्वपति व्वारुणं यवमयं चरुं ताब्भ्यामनूची नाऽहं व्वेष्टिब्भ्यां ऽयजते समानबर्हिर्ब्भ्यां व्वा ॥ १३ ॥ स यद्वै-श्वानरो भवति । संव्वत्सरो वै व्वैश्वानरः संव्वत्सरः प्प्रजा-पतिः प्प्रजापतिरेव तद्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया ऽइति तथो ऽएवैष ऽएतद्भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया ऽइति ॥ १४ ॥ अथ यद् द्वाद-शकपालो भवति । द्वादश वै मासाः संव्वत्सरस्य संव्वत्सरो वैश्वानरस्तस्म्माद् द्वादशकपालो भवति ॥ १५ ॥ अथ

* का॰ श्रौ॰ सू॰ १५. २. १५ ।

षद्वारुणो षवमयश्चरुर्भवति । तत्सर्वस्मादेवैतद् वरुणपाशात्सर्वस्माद् वरुण्ण्यात्प्रजाः प्प्रमुञ्चति ता ऽअस्याऽनमीवा ऽअकिल्विषाः प्प्रजाः प्प्रजायन्तेऽनमीवा ऽअकिल्विषाः प्प्रजा ऽअभिसूया ऽइति ॥ १६ ॥ * ऋषभो व्वैश्वानरस्य दक्षिणा । संवत्सरो वै व्वैश्वानरः संवत्सरः प्प्रजापतिर्ऋषभो वै पशूनां प्रजापतिस्तस्मादृषभो व्वैश्वानरस्य दक्षिणा कृष्णं व्वासो व्वारुणस्य तद्धि व्वारुणं षत्कृष्णं षदि कृष्णं न व्विन्देदपि षदेव किञ्च व्वासः स्याद् ग्रन्थिभिर्हि व्वासो व्वारुणं वरुण्ण्यो हि ग्रन्थिः ॥ १७ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ रत्नहविरिष्टिः ]

अरण्ण्योरग्नी † समारोह्य । सेनान्न्यो गृहान्न्परेत्त्याऽग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्त्यग्निर्वै देवतानामनीकꣳ सेनाया वै सेनानीरनीकं तस्मादग्नयेऽनीकवतऽएतद्वा ऽअस्यैकꣳ रत्नं षत्सेनानीस्तस्मा ऽएवैतेन सूयते तᳬ स्वमनपक्रमिणं कुरुते तस्य हिरण्ण्यं दक्षिणाऽऽग्नेयो वा ऽएष षज्ञो भवत्त्यग्ने रेतो हिरण्ण्यं तस्माद्धिरण्ण्यं दक्षिणा ॥१॥ अथ श्वो ‡ भूते । पुरोहितस्य गृहान्परेत्त्य बार्ह-

* का० श्रौ० सू० १५. २. २०,२१ ।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १५. २; मै० सं० ११. ६. ३; तै० सं० १. ८. ७ ।

† का० श्रौ० सू० १५. ३. १—३ ।

‡ का० श्रौ० सू० १५. ४; तै० सं० १. ८. ९. १ ।

स्पत्यं चरुं निर्वपति बृहस्पतिर्वै देवानां पुरोहित ऽएष वा ऽएतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्पुरोहितस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऽऊर्ध्वा बृहस्पतेर्दिक्तदेष ऽउपरिष्टादर्य्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा ॥२॥ अथ * श्वो भूते । सूयमानस्य गृह ऽऐन्द्रमेकादशकपालं पुरोडाशं निर्वपति क्षत्रं वा ऽइन्द्रः क्षत्रꣳ सूयमानस्तस्मादैन्द्रो भवति तस्यर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः ॥ ३ ॥ अथ श्वो † भूते । महिष्यै गृहान्परेत्य । आदित्यं चरुं निर्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा ऽएतस्य पत्नी भवति तस्मादादित्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यन्महिषी तस्या ऽएवैतेन सूयते ताꣳ स्वामनपक्रमिणीं कुरुते तस्यै धेनुर्दक्षिणा धेनुरिव वा ऽइयं मनुष्येभ्यः सर्वान् कामान्दुहे माता धेनुर्म्मातेव वा ऽइयं मनुष्यान्बिभर्त्ति तस्माद्धेनुर्दक्षिणा ॥४॥ अथ श्वो ‡ भूते । सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्वपति सवो वै सूतः सवो वै देवानां वरुणस्तस्माद्वारुणो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्सूतस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्याऽश्वो दक्षिणा स हि वारुणो यदश्वः ॥ ५ ॥ अथ श्वो भूते । ग्रामण्यो $ गृहान्परेत्य

* का० श्रौ० सू० १५. ३. ५; तै० सं० १८. ९. २ ।

† का० श्रौ० सू० १५. ३. ६ ।

‡ का० श्रौ० सू० १५. ३. ७ ।

$ का० श्रौ० सू० १५. ३. ८ ।

मारुतꣳ सप्तकपालं पुरोडाशं निर्वपति विशो वै मरुतो वैश्यो वै ग्रामणीस्तस्मान्मारुतो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यद्ग्रामणीस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य पृषन्गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत्पृषतो गोर्विशो वै मरुतो भूमो वै विट् तस्मात्पृषन् गौर्दक्षिणा ॥ ६ ॥ अथ श्वो भूते । क्षत्तुर्गृहान्परेत्य * सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं निर्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात्सावित्रो भवत्येतद्वा-ऽअस्यैकꣳ रत्नं यत्क्षत्ता तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य श्येतोऽनड्वान्दक्षिणैष वै सविता य-ऽएष तपत्येति वा ऽएष ऽएत्यनड्वान्युक्तस्तद्यच्छ्येतो भवति श्येत ऽइव ह्येष ऽउद्यꣳश्चाऽस्तं च यन्भवति तस्माच्छ्येतो-ऽनड्वान्दक्षिणा ॥ ७ ॥ अथ † श्वो भूते । संगृहीतुर्गृहान्परेत्याऽऽश्विनं द्विकपालं पुरोडाशं निर्वपति सयोनी वाऽअश्विनौ सयोनी सव्यष्टृसारथी समानꣳ हि रथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्संग्रहीता तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी यद्यमौ यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ता ऽउ ह्यपि समानयोनी ॥ ८ ॥ अथ श्वो भूते । ‡ भाग-

* का० श्रौ० सू० १५. ३. ९ ।
† का० श्रौ० सू० १५. ३. १० ।
‡ का० श्रौ० सू० १५. ३. ११ ।

दुघस्य गृहाद्दपरेत्त्य पौष्णं चरुं निर्व्वपति पूषा वै देवानां भागदुघ ऽएष वा ऽएतस्य भागदुघो भवति तस्म्मात्पौष्णो भवत्त्येतद्वा ऽअस्यैकꣳ रत्नं ख्यद्भागदुघस्तस्म्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्य श्यामो गौर्द्दक्षिणा तस्याऽसावेव बन्धुर्य्योऽसौ त्रिषꣳयुक्तेषु ॥ ९ ॥ अथ श्वो भूते । * अक्षावापस्य च गृहेब्भ्यो गोविकर्त्तस्य च गवेधुकाꣳ सम्भृत्त्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्व्वपति ते वा ऽएते द्वे सती रत्ने ऽएकं करोति सम्पदꣳ कामाय तद्यदेतेन यजते यां वा ऽइमाꣳ सभायां घ्नन्ति रुद्रो हैतामभिमन्यतेऽग्निर्व्वै रुद्रोऽधि देवनं वा ऽअग्निस्तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्प्रीणाति तस्य ह वा ऽएषाऽनुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वै तदेवं वेदैतद्वा ऽअस्यैकꣳ रत्नं ख्यदक्षावापश्च गोविकर्त्तश्च ताब्भ्यामेवैतेन सूयते तौ स्वावनपक्रामिणौ कुरुते तस्य द्विरूपो गौर्द्दक्षिणा शितिबाहुर्व्वा शितिवालो वाऽसिर्न्नखरो वालदाम्म्नाऽक्षावपनं प्रबद्धमेतदु हि तयोर्ब्भवति ॥ १० ॥ अथ श्वो भूते । † पालागलस्य गृहान् परेत्त्य चतुर्ग्गृहीतमाज्यं गृहीत्त्वाऽध्वन ऽआज्यं जुहोति 'जुषाणोऽध्वाऽऽज्यस्य वेतु स्वाहे'ति प्प्रहेयो वै पालागलोऽध्वानं वै प्प्रहित ऽएति तस्म्मादध्वन ऽआज्यं जुहोत्त्येतद्वा ऽअस्यैकꣳ रत्नं ख्यत्पालागलस्तस्म्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्य

* का० श्रौ० सू० १५. ३. १२।

† का० श्रौ० सू० १५. ३. १३।

दक्षिणा प्ल्युक्षणवेष्टितं धनुश्चर्म्ममया बाणवन्तो लोहित-ऽउष्णीष ऽएतदु हि तस्य भवति ॥ ११ ॥ तानि वा ऽएतानि । एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुब्वीर्य्यं त्रिष्टुब्वीर्य्यमेवैतद्रत्नान्न्यभि सम्पादयति तद्यद्रत्निनाथं हविर्भिर्य्यजत ऽएतेषां वै राजा भवति तेभ्य-ऽएवैतेन सूयते तान्त्स्वाननपक्रमिणः कुरुते ॥ १२ ॥ अथ श्वो भूते । * परिवृत्त्यै गृहान्परेत्य नैर्ऋतं चरुं निर्वपति या वा ऽअपुत्रा पत्नी सा परिवृत्ती स कृष्णानां व्रीहीणां नखैर्न्निर्भिद्य तण्डुलान्नैर्ऋतं चरुं श्रपयति स जुहो'त्येष ते निर्ऋते भागस्तं जुषस्व स्वाहे'ति या वा ऽअपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवाऽस्या ऽअत्र नैर्ऋतं रूपं तदेवैतच्छमयति तथो हैनं सूयमानं निर्ऋतिर्न्न गृह्णाति तस्य दक्षिणा कृष्णा † गौः परिमूर्ण्णी पर्य्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह मामेऽद्येशायां वात्सीदिति तत्पाप्मानमपाऽऽदत्ते ॥ १३ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ सौमारौद्रयागः ]

उपरिष्टाद्रत्नानाथं सौमारौद्रेण यजते । स ‡ श्वेतायै श्वेतवत्सायै पयसि श्रृतो भवति तद्यदुपरिष्टाद्रत्नानाथं सौमारौद्रेण यजते ॥१॥ स्वर्भानुर्ह वा ऽआसुरः। सूर्य्यं तमसा

* का० श्रौ० सू० १५. ३. १४ ।
( १ ) शु० सं० अ० ९ क० २५ ।
† का० श्रौ० सू० १५. ३. २० ।
‡ का० श्रौ० सू० १५. ३. २२ ।

विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रावे-वैतत्तमोऽपाहताᳬं स ऽएषोऽपहतपाप्मा तपति तथो ऽएवैष-ऽएतत्तमः प्रविशत्येतं वा तमः प्रविशति यदयज्ञियान्न्य-ज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्यज्ञेन प्रसजति शूद्राँस्त्व-द्याँस्त्वत्तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मैव दीक्षते तद्यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमोऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ २ ॥ स हैतेनाऽपि * यजेत । योऽलं यशसे सन्न यशो भवति यो वा ऽअनूचानः सोऽलं यशसे सन्न यशो भवति यो न यशो भवति स तमसा वै स तत्प्रावृतो भवति तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥ ३ ॥ अथ † मैत्राबार्हस्पत्यं चरुं निर्वपति । ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्यदयज्ञियान्न्यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्य-ज्ञेन प्रसजति शूद्राँस्त्वद्याँस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत्पुनर्यज्ञपथमपि पद्यते सोऽपि पद्यैव यज्ञपथं दीक्षते तस्मान्मैत्राबार्हस्पत्यं चरुं निर्वपति ॥ ४ ॥ तस्याऽऽवृत् । या स्वयम्प्रशीर्णाऽऽश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति वरुण्या वा ऽएषा या परशुवृक्णाऽथै-षा मैत्री या स्वयम्प्रशीर्णा तस्मात्स्वयम्प्रशीर्णायै शाखायै

* का० श्रौ० सू० १५. ३. २४ ।
† का० श्रौ० सू० १५. ३. २६,२७ ।

मैत्रं पात्रं करोति ॥ ५ ॥ अथाऽऽतच्च्य * दधि । विनाट-ऽआसिच्च्य रथं ऽयुक्त्वाऽऽबद्ध्य दुदीयितवा ऽआह तद्यत्स्व-यमुदितं नवनीतं तदाज्यं भवति वरुण्ण्यं वा ऽएतद्यन्मथि-तमथैतन्मैत्रं ऽयत्स्वयमुदितं तस्मात्स्वयमुदितमाज्यं भवति ॥ ६ ॥ द्वेधा तण्डुलान्कुर्वन्ति । स येऽणीयाꣳसः परिभि-न्नास्ते बार्हस्पत्त्या ऽअथ ये स्थवीयाꣳसोऽपरिभिन्नास्ते मैत्रा न वै मित्रः कञ्चन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कण्टको विभिनत्ति नाऽस्य व्रणश्चनाऽस्ति सर्वस्य ह्येव मित्रो मित्रम् ॥ ७ ॥ अथ बार्हस्पत्त्यं चरुमधि-श्रयति । तं मैत्रेण पात्रेणाऽपि दधाति तदाज्यमानयति तत्तण्डुलानावपति स ऽएष ऽऊष्मणैव श्रप्प्यते वरुण्ण्यो वा ऽएष योऽग्निना श्रृतोऽथैष मैत्रो य ऽऊष्मणा श्रृतस्तस्मा-दूष्मणा श्रृतो भवति तयोरुभयोरवद्यन्नाह मित्राबृहस्पति-ब्भ्यामनुब्रूहीत्याश्राव्व्याऽऽह मित्राबृहस्पती यजेति वषट्-कृते जुहोति ॥ ८ ॥

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



### [ अथ अभिषेचनीयाख्यः सोमयागः ]

#### ( तत्र देवसूहविषामनुष्ठानम् )

स वै दीक्षते । स ऽउपवसथेऽग्नीषोमीयं पशुमाल-भते तस्य वपया प्रचर्य्याऽग्नीषोमीयमेकादशकपालं पुरो-

* "विनाटाद्रथपर्यूढान्नवनीतं स्वयं जातमाज्यमासिच्य पात्रे तस्मिन्स्थविष्ठांस्तण्डुला-न्मित्रायाऽऽवपति" ( का० श्रौ० सू० १५. ३. २८ )

डाशं निर्वपति तदनु देवस्वाᳫं हवीᳫंषि निरूप्प्यन्ते ॥१॥ * सवित्रे † सत्यप्प्रसवाय । द्वादशकपालं वाऽष्टाकपालं व्वा पुरोडाशं निर्वपति प्प्लाशुकानां व्रीहीणाᳫं सविता वै देवानां प्रसविता सवितृप्प्रसूतः सूयाऽइत्यथ यत्प्लाशुकानां व्रीहीणां क्षिप्प्रे मा प्प्रसुवानिति ॥२॥ अथाऽग्नये ‡ गृहपतये । अष्टाकपालं पुरोडाशं निर्वपत्त्याशूनाᳫं श्रीर्वै गार्हपतं यावतो-यावत ऽईष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभि परिणयत्त्यथ यदाशूनां क्षिप्प्रे मा परिणयानिति ॥ ३ ॥ अथ सोमाय व्वनस्प्पतये । श्यामाकं ‡‡ चरुं निर्वपति तदेनᳫं सोम ऽएव व्वनस्प्पतिरोषधिभ्यः सुवत्त्यथ यच्छ्यामाको भवत्त्येते वै सोमस्यौषधीनां प्रत्त्यक्षतमां यच्छ्यामाकास्तस्म्माच्छ्यामाको भवति ॥४॥ अथ बृहस्प्पतये $ व्वाचे । नैवारं चरुं निर्वपति तदेनं बृहस्प्पतिरेव व्वाचे सुवत्त्यथ यन्नैवारो भवति ब्रह्म वै बृहस्प्पतिरेते वै ब्रह्मणा पच्च्यन्ते यन्नीवारास्तस्म्मान्नैवारो भवति ॥५॥ अथेन्द्राय ज्येष्ठाय । हायनानां § चरुं निर्वपति तदेनमिन्द्र ऽएव ज्येष्ठो ज्यैष्ठ्यमभि परिणयत्त्यथ यद्धायनानां भवत्त्यतिष्ठा वा ऽएता ऽओषधयो यद्धायना ऽअतिष्ठो वा ऽइन्द्रस्तस्म्माद्धायनानां भवति ॥६॥ अथ ¶ रुद्राय पशु-

* अत्र शतम् ३१०० ।

† "प्लाशुकानां सत्यप्रसवाय" ( का० श्रौ० सू० १५. ४. ५ ) ।

‡ "अंशूनामग्नये गृहपतये" ( का० श्रौ० सू० १५. ४. ६ )

‡‡ "श्यामाकः सोमाय वनस्पतये" ( का० श्रौ० सू० १५. ४. ८ ) ।

$ "नैवारो बृहस्पतये वाचे" ( का० श्रौ० सू० १५. ४. ९ )

§ "हायनानामिन्द्राय ज्येष्ठाय" ( का० श्रौ० सू० १५. ४. १० )

¶ "रुद्राय पशुपतये, नाम्वो मित्राय सत्याय, वरुणाय धर्मपतये" ( का० श्रौ० सू० १५. ४. ११–१३ ) ।

पतये । रौद्रं गावेधुकं चरुं निर्वपति तदेनꣳ रुद्र ऽएव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति ॥७॥ अथ मित्राय सत्याय । नाम्बानां चरुं निर्वपति तदेनं मित्र ऽएव सत्यो ब्रह्मणे सुवत्यथ यन्नाम्बानां भवति वरुण्या वा ऽएता ऽओषधयो याः कृष्टे जायन्तेऽथैते मैत्रा यन्नाम्बास्तस्मा-न्नाम्बानां भवति ॥ ८ ॥ अथ वरुणाय धर्म्मपतये । वारुणं यवमयं चरुं निर्वपति तदेनं वरुण ऽएव धर्मपतिर्द्धर्म्मस्य पतिं करोति परमता वै सा यो धर्म्मस्य पतिरसद्यो हि परमतां गच्छति तꣳ हि धर्म्मं ऽउपयन्ति तस्माद्वरुणाय धर्म्मपतये ॥ ९ ॥ अथाऽग्नीषोमीयेन पुरोडाशेन प्प्रचरति । तस्याऽनिष्ट ऽएव स्विष्टकृद्भवत्यथैतैर्हविर्भिः प्प्रचरति यदैतैर्हविर्भिः प्प्रचरति ॥ १० ॥ अथैनं दक्षिणे बाहाव-भिपद्य * जपति । 'सविता[1] त्वा सवानाꣳ सुवतामग्निर्गृह-पतीनाꣳ सोमो वनस्प्पतीनाम् । बृहस्प्पतिर्वाच ऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्म्मपती-नाम्' ॥ ११ ॥ 'इमं देवाः[2] । असपत्नꣳ सुवद्ध्व'मितीमं देवा ऽअभ्रातृव्यꣳ सुवद्ध्वमित्येवैतदाह 'महते क्षत्राय[3] महते ज्यैष्ठ्याये'ति नाऽत्र तिरोहितमिवाऽस्ति 'महते जान-राज्यायेति' महते जनानाꣳ राज्यायेत्येवैतदा'हेन्द्रस्येन्द्रि-याये'ति वीर्य्यायेत्येवैतदाह यदा'हेन्द्रस्येन्द्रियाये'तीमममुष्य

* का० श्रौ० सू० १५. ४. १४ ।

(१) शु० सं० अ० ९ क० ३९ । (२) शु० सं० अ० ९ क० ४० । (३) शु० सं० अ० ९ क० ४० । (४) शु० सं० अ० ९ क० ४० । (५) शु० सं० अ० ९ क० ४० ।

पुत्रममुष्यै पुत्रमि'ति तद्यदेवाऽस्य जन्म तत ऽएवैतदाहा ऽस्यै[1] विश' ऽइति यस्यै विशो राजा भव'त्येष वोऽमी[2] राजा सोमोऽस्माकं ब्राह्मणानाथं राजे'ति तदस्मा ऽइदꣳ सर्वमाद्यं करोति ब्राह्मणमेवाऽपोद्धरति तस्माद् ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥ १२ ॥ एता ह वै देवताः सवस्येशते । तस्माद्देवस्वो नाम तदेनमेता ऽएव देवताः सुवते ताभिः सूतः श्वः सूयते ॥ १३ ॥ ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्य्यं वीर्य्यवत्यः सुवान्ता ऽइति तस्माद् द्विनाम्न्यो भवन्ति ॥ १४ ॥ अथाऽऽहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाऽऽहुती ऽएतत्कर्म्म क्रियत ऽएष वै प्प्रजापतिर्य्य ऽएष यज्ञस्तायते यस्मादिमाः प्प्रजाः प्प्रजाता ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्प्रजापतेर्द्दधाति मध्यतः सुवति तस्मादन्तरेणाऽऽहुती ऽएतत्कर्म्म क्रियत ऽआश्राव्याऽऽहाऽग्नये स्विष्टकृते प्प्रेष्येति वषट्कृते जुहोति ॥ १५ ॥ (D)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥२॥

काण्डिका संख्या १०४ ॥



[ यजमानाभिषेकार्थं सप्तदशानामपां ग्रहणम् ]

स वा ऽअपः सम्भरति । तद्यदपः सम्भरति वीर्य्यं वा ऽआपो वीर्य्यमेवैतद्रसमपाथं सम्भरति ॥ १ ॥ औदुम्बरे

(१) शु० सं० अ० ९ क० ४० । (२) शु० सं० अ० ९ क० ४० ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १५,/२; मै० सं० ११. ६. ६; तै० सं० १. ८. ६ ।

पात्रे । अन्नं वा ऽऊर्ग्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्याऽवरुद्ध्यै तस्मा-दौदुम्बरे पात्रे ॥ २ ॥ स सारस्वतीरेव प्प्रथमा † गृह्णाति । 'अपो देवा मधुमतीरगृभ्णन्नि'त्यपो देवा रसवतीरगृह्णन्नि-त्येवैतदा'होर्ज्जस्वती राजस्वश्चितानाꣳ' ऽइति रसवतीरित्ये-वैतदाह यदाहोर्ज्जस्वतीरिति राजस्वश्चितानाꣳ ऽइति याः प्प्र-ज्ञाता राजस्व ऽइत्येवैतदाह 'याभिर्म्मित्रावरुणावभ्यषिञ्चन्नि' त्येताभिर्हि 'मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यराती'रित्येताभिर्हीन्द्रं नाष्ट्रा रक्षाꣳस्यत्यनयꣳस्ताभिरभिषिञ्चति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चत्येता वा ऽएका-ऽआपस्ता ऽएवैतत्सम्भरति ॥३॥ अथाऽद्ध्वर्य्युः । * चतुर्ग्गृहीतमाज्यं गृहीत्वाऽपोऽभ्यवैति तद्या ऽऊर्म्मी व्व्युदैतः पशौ वा पुरुषे वाऽभ्यवेते तौ गृह्णाति ॥४॥ स यः प्प्राङुदैति । तं गृह्णाति 'व्वृष्ण ऽऊर्म्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा व्वृष्ण ऽऊर्म्मिरसि राष्ट्रदा राष्ट्रममुष्मै देही'ति ॥ ५ ॥ अथ यः प्प्रत्यङुदैति । तं गृह्णाति 'व्वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा व्वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देही'ति ताभिरभिषिञ्चति व्वीर्य्यं वा ऽएतदपामुदैति पशौ वा पुरुषे वाऽभ्यवेते व्वीर्य्येणैवैनमेतदभिषिञ्चत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ ६ ॥ अथ

* का० श्रौ० सू० १५. ४. ३६।

(१) शु० सं० अ० १० क० १। (२) शु० सं० अ० १० क० १। (३) शु० सं० अ० १० क० १। (४) शु० सं० अ० १० क० १।

† का० श्रौ० सू० १५. ४. ३७।

(५) शु० सं० अ० अ० १० क० २। (६) शु० सं० अ० १० क० २।

स्यन्दमाना गृह्णाति । 'अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽर्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति वीर्य्येण वा ऽएताः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किञ्चन प्रतिधारयते वीर्य्येणैवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥७॥ अथ याः स्यन्दमानानां प्रतीपꣳ स्यन्दन्ते । ता गृह्णा'त्योजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति वीर्य्येण वा ऽएताः स्यन्दमानानां प्रतीपꣳ स्यन्दन्ते वीर्य्येणैवैनमेतदभिषिञ्चत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ ८ ॥ अथाऽपयतीर्गृह्णाति । 'आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽऽपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चत्येतस्यै वा ऽएषाऽपच्छिद्यैषैव पुनर्भवत्यपि ह वा ऽअस्याऽन्यराष्ट्रीयो राष्ट्रे भवत्यप्यन्यराष्ट्रीयमवहरते तथाऽस्मिन्भूमानं दधाति भूम्नैवैनमेतदाभिषिञ्चत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ ९ ॥ अथ नदीपतिं गृह्णाति । 'अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देही'ति ताभिरभिषिञ्चत्यपां वा ऽएष पतिर्यन्नदीपतिर्विशामेवैनमेतत्पतिं करोत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ १० ॥ अथ निवेष्यं गृह्णाति । 'अपां गर्भोऽसि राष्ट्र-

(१) शु० सं० अ० १० क० ३ । (२) शु० सं० अ० १० क० ३ । (३) शु० सं० अ० १० क० ३ । (४) शु० सं० अ० १० क० ३ । (५) शु० सं० अ० १० क० ३ ।

द्रा राष्ट्रं मे देहि स्वाहाऽपां गर्भोऽसि राष्ट्रदा राष्ट्रम-मुष्मै देही'ति ताभिरभिषिञ्चति गर्भं वा ऽएतद्वाप ऽउप-निवेष्टन्ते विशामेवैनमेतद् गर्भं करोत्येता वा ऽएका-ऽआपस्ता ऽएवैतत्सम्भरति ॥ ११ ॥ अथ यः स्यन्दमा-नानाᳪ स्थावरो ह्रदो * भवति । प्रत्यातापे ता गृह्णाति 'सूर्य्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्य्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति वर्चसैवै-नमेतदभिषिञ्चति सूर्य्यत्वचसमेवैनमेतत्करोति वरुण्या वा-ऽएता ऽआपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते वरुणसवो वा ऽएष यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ १२ ॥ अथ या-ऽआतपति वर्षन्ति । ता गृह्णाति 'सूर्यवर्चसं स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्य्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति वर्चसैवैनमेतदभिषिञ्चति सूर्य्य-वर्चसमेवैनमेतत्करोति मेध्या वा ऽएता ऽआपो भवन्ति या-ऽआतपति वर्षन्त्यप्राप्ता हीमां भवन्त्यथैना गृह्णाति मेध्यमेवैन-मेतत्करोत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति॥१३॥ अथ वैशन्तीर्गृह्णाति । 'मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभि-षिञ्चति विशमेवाऽस्मा ऽएतत्स्थावरामनपक्रमिणीं करो-त्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ १४ ॥

---

* का० श्रौ० सू० १५. ४. ३३ ।

(१) शु० सं० अ० १० क० ४ । (२) शु० सं० अ० १० क० ४ । (३) शु० सं० अ० १० क० ४ ।

अथ कूप्प्या गृह्णाति । 'व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति तद्या ऽइमां परेणाऽऽपस्ता ऽएवैतत्सम्भरत्त्यपामु चैव सर्वत्वाय तस्मादेताभिरभिषिञ्चत्त्येता वा ऽएका-ऽआपस्ता ऽएवैतत्सम्भरति ॥१५॥ [ काण्डस्यार्धम् ॥२३६॥ ]

अथ प्प्रुष्वा गृह्णाति । 'वाशा[2] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मैदत्ते'ति ताभिरभिषिञ्चत्त्यन्नाद्येनैवैनमेतदभिषिञ्चत्त्यन्नाद्यमेवाऽस्मि-न्नेतद्दधातीदं वा ऽअसावादित्य ऽउद्यन्नेव यथाऽयम-ग्निर्न्निर्द्दहेदेवमोषधीरन्नाद्यं निर्द्दहति तदेताऽआपोऽभ्य-वयत्त्यः शमयन्ति न ह वा ऽइहाऽन्नाद्यं परिशिष्यते यदेता ऽआपो नाऽभ्यवेयुरन्नाद्येनैवैनमेतदभिषिञ्च-त्त्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ १६ ॥

अथ मधु गृह्णाति । 'शविष्ठा[3] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभि-षिञ्चत्त्यपां चैवैनमेतदोषधीनां च रसेनाऽभिषिञ्चत्त्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ १७ ॥ अथ गोर्व्विजायमानाया ऽउल्ब्या गृह्णाति 'शक्वरी[4] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्त्येता वा ऽएका-ऽआपस्ता ऽएवैतत्सम्भरति ॥ १८ ॥ अथ पयो गृह्णाति । 'जनभृत[5] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ

( १ ) शु० सं० अ० १० क० ४ । ( २ ) शु० सं० अ० १० क० ४ । ( ३ ) शु० सं० अ० १० क० ४ । ( ४ ) शु० सं० अ० १० क० ४ । ( ५ ) शु० सं० अ० १० क० ४ ।

राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥१९॥ अथ घृतं * गृह्णाति। 'विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'ति ताभिरभिषिञ्चति पशूनामेवैनमेतद्रसेनाऽभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ २० ॥ अथ † मरीचीः। अञ्जलिना सङ्गृह्याऽपिसृजत्यापः 'स्वराज[2] स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते'त्येता वा ऽआपः स्वराजो यन्मरीचयस्ता यत्स्यन्दन्त ऽइवाऽन्योऽन्यस्या ऽएवैतच्छ्रियाऽअतिष्ठमाना ऽउत्तराधरा ऽइव भवन्त्यो यन्ति स्वाराज्यमेवाऽस्मिन्नेतद्दधात्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ २१ ॥ ता वा ऽएताः। सप्तदशापः सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात्सप्तदशापः सम्भरति ॥ २२ ॥ षोडश ता ऽआपो या ऽअभिजुहोति। षोडशाहुतीर्जुहोति ता द्वात्रिंशद् द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च ताश्चतुस्त्रिंशत्त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिं करोति ॥ २३ ॥ अथ यद्धुत्वा-हुत्वा गृह्णाति। वज्रो वा ऽआज्यं वज्रेणैवैतदाज्येन स्पृत्वा-स्पृत्वा स्वीकृत्य गृह्णाति ॥ २४ ॥ अथ यत्सारस्वतीषु न जुहोति। वाग्वै सरस्वती वज्र-

* का० श्रौ० सू० १५. ४. ३५।
(१) शु० सं० अ० १० क० ४।
† का० श्रौ० सू० १५. ४. ३८।
(२) शु० सं० अ० १० क० ४।

ऽआज्यं नेद्वज्ज्रेणाऽऽज्येन व्वाचꣳ हिनसानीति तस्मात्सारस्वतीषु न जुहोति ॥ २५ ॥ अथ यन्न्मरीचिषु न जुहोति । नेदुनद्धेवैतामाहुतिं जुहवानीति तस्म्मान्न्मरीचिषु न जुहोति ॥ २६ ॥ ताः सार्द्धमौदुम्बरे * पात्रे समवनयति । 'मधुमतीर्म्मधुमतीभिः पृच्च्यन्तामि'ति रसत्त्यो रसवतीभिः पृच्च्यन्तामित्त्येवैतदाह 'महि क्षेत्त्रं क्षत्त्रियाय व्वन्वाना' ऽइति तत्परोऽक्षं क्षत्त्रं य्यजमानायाऽऽशिषमाशास्ते यदाह महि क्षत्त्रं क्षत्त्रियाय व्वन्वाना ऽइति ॥२७॥ ता ऽअग्रेण मैत्रावरुणस्य धिष्ण्यꣳ † सादयति । 'अनाधृष्टाः सीदत सहौजस' ऽइत्त्यनाधृष्टाः सीदत रक्षोभिरित्त्येवैतदाह सहौजस ऽइति सवीर्य्या ऽइत्त्येवैतदाह 'महि क्षत्त्रं क्षत्त्रियाय दधतीरि'ति तत्प्रत्त्यक्षं क्षत्त्रं य्यजमानायाऽऽशिषमाशास्ते यदाह महि क्षत्त्रं क्षत्त्रियाय दधतीरिति ॥ २८ ॥ (D)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ अथ यजमानाभिषेकधर्माः ]

( तत्र पार्थहोमः, ताप्यादिपरिधानम्, आविन्मन्त्रवाचनं च )

तं व्वै माध्यन्दिने सवनेऽभिषिञ्चति । एष व्वै प्प्रजापतिर्य्य ऽएष यज्ञस्तायते यस्म्मादिमाः प्प्रजाः प्प्रजाता-

---

* का० श्रौ० सू० १५. ४. ३९ ।

( १ ) शु० सं० अ० १० क० ४ । ( २ ) शु० सं० अ० १० क० ४ ।

† का० श्रौ० सू० १५. ४. ४० ।

( ३ ) शु० सं० अ० १० क० ४ । ( ४ ) शु० सं० अ० १० क० ४ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— काठ० १५. ६; मै० सं० ११, ६. ७,८; तै० सं० १. ८. ११,१२ ।

ऽएतम्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्प्रजापतेर्द्दधाति मध्यतः सुवति ॥ १ ॥ अगृहीते माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्प्यस्यै-तन्निष्केवल्यमेव स्तोत्रं निष्केवल्यं शस्त्रमिन्द्रो वै यजमान-स्तदेनꣳ स्व ऽएवाऽऽयतनेऽभिषिञ्चति तस्म्मादगृहीते माहेन्द्रे ॥ २ ॥ अग्रेण मैत्रावरुणस्य धिष्ण्यꣳ । शार्द्दूल * चर्म्मोपस्तृणाति 'सोमस्य त्विषिरसी'ति यत्र वै सोम-ऽइन्द्रमत्यपवत स यत्ततः शार्द्दूलः समभवत्तेन सोमस्य त्विषिस्तस्म्मादाह सोमस्य त्विषिरसीति 'तवेवं मे त्विषि-र्भ्भूयादिति शार्द्दूलत्त्विषिमेवाऽस्मिन्नेतद्दधाति तस्म्मादाह तवेव मे त्विषिर्भ्भूयादिति ॥ ३ ॥ अथ † पार्त्थानि जुहोति । ‡ पृथी ह वै वैन्यो मनुष्याणां प्रथमो§ऽभिषिषिचे सोऽकामयत सर्व्वमन्नाद्यमवरुन्धीयेति तस्म्मा ऽएतान्न्यजुहवुः स ऽइदꣳ सर्व्वमन्नाद्यमवरुरुधेऽपि ह स्म्माऽस्म्मा ऽआरण्यान्न्पशूनभि ह्वयन्त्यसावेहि राजा त्वा पक्ष्यत ऽइति तथेदꣳ सर्व्वमन्नाद्य-मवरुरुधे सर्व्वꣳ ह वा ऽअन्नाद्यमवरुन्धे यस्यैवं विदुष-ऽएतानि हूयन्ते ॥ ४ ॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्म्माद्द्वादश भवन्ति ॥ ५ ॥ षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्तदेनं मध्यत-

---

* का० श्रौ० सू० १५. ५. १।

( १ ) शु० सं० अ० १० क० ५। ( २ ) शु० सं० अ० १० क० ५।

† का० श्रौ० सू० १५. ५. ३।

‡ 'पृथुर्ह वै' इति 'च' पुस्तके।

§ 'अभिषिषिञ्चे' इति पाठः 'ख' पुस्तके दृश्यते।

ऽएवैतस्य प्प्रजापतेर्द्दधाति मध्यतः सुवति ॥ ६ ॥ स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्प्पतिस्तेषामुत्तमो भवत्त्यथ यान्न्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्प्पतिरिन्द्रियं व्वीर्य्यमिन्द्र ऽएताभ्यामेवैनमेतद्वीर्य्याभ्यामुभयतः परिबृꣳहति ॥ ७ ॥ स जुहोति । यानि पुरस्तादभिषेकस्य जुहो'त्त्यग्नये[1] स्वाहे'ति तेजो वाऽअग्निस्तेजसैवैनमेतदभिषिञ्चति 'सोमाय[2] स्वाहे'ति क्षत्त्रं वै सोमः क्षत्त्रेणैवैनमेतदभिषिञ्चति 'सवित्रे[3] स्वाहे'ति सविता वै देवानां प्रसविता सवितृप्प्रसूत ऽएवैनमेतदभिषिञ्चति 'सरस्वत्यै[4] स्वाहे'ति व्वाग्वै सरस्वती व्वाचैवैनमेतदभिषिञ्चति 'पूष्णे[5] स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति 'बृहस्प्पतये[6] स्वाहे'ति ब्रह्म वै बृहस्प्पतिर्ब्रह्मणैवैनमेतदभिषिञ्चत्त्येतानि पुरस्तादभिषेकस्य जुहोति तान्न्येतान्न्यग्निनामानीत्त्याचक्षते ॥ ८ ॥ अथ जुहोति । यान्न्युपरिष्टादभिषेकस्य 'जुहोतीन्द्राय[7] स्वाहे'ति व्वीर्य्यं वाऽइन्द्रो व्वीर्य्येणैवैनमेतदभिषिञ्चति 'घोषाय[8] स्वाहे'ति व्वीर्य्यं वै घोषो व्वीर्य्येणैवैनमेतदभिषिञ्चति 'श्लोकाय[9] स्वाहे'ति व्वीर्य्यं वै श्लोको व्वीर्य्येणैवैनमेतदभिषिञ्च'त्त्यꣳशाय[10] स्वाहे'ति व्वीर्य्यं वा ऽअꣳशो व्वीर्य्येणैवैनमेतदभिषिञ्चति 'भगाय[11] स्वाहे'ति व्वीर्य्यं वै भगो व्वीर्य्येणैवैनमेतदभिषिञ्च'त्त्यर्य्यम्णे[12]

( १ ) शु० सं० अ० १० क० ५ । ( २ ) शु० सं० अ० १० क० ५ । ( ३ ) शु० सं० अ० १० क० ५ । ( ४ ) शु० सं० अ० १० क० ५ । ( ५ ) शु० सं० अ० १० क० ५ । ( ६ ) शु० सं० अ० १० क० ५ । ( ७ ) शु० सं० अ० १० क० ५ । ( ८ ) शु० सं० अ० ९ क० २४ । ( ९ ) शु० सं० अ० १० क० ५ । ( १० ) शु० सं० अ० १० क० ५ । ( ११ ) शु० सं० अ० १० क० ५ । ( १२ ) शु० सं० अ० १० क० ५ ।

स्वाहे'ति तदेनमस्य सर्व्वस्याऽर्ष्यमणं करोत्येतान्न्युपरिष्टाद-भिषेकस्य जुहोति तान्न्येतान्न्यादित्त्यनामानीत्त्याचक्षते ॥ ९ ॥ अग्रेण मैत्रावरुणस्य धिष्ण्यम् । अभिषेचनीयानि पात्राणि भवन्ति यत्रैता ऽआपोऽभिषेचनीया भवन्ति ॥१०॥ पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति ॥ ११ ॥ औदुम्बरं * भवति । तेन स्वोऽभिषिञ्चत्त्यन्नं वा ऽऊर्ग्गुदुम्बर ऽऊर्ग्गै स्वं य्यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोर्क्स्वं तस्म्मादौ-दुम्बरेण स्वोऽभिषिञ्चति ॥ १२ ॥ नैयग्रोधपादं भवति । तेन मित्र्यो राजन्न्योऽभिषिञ्चति पद्भिर्व्वै न्न्यग्रोधः प्प्रतिष्ठितो मित्रेण वै राजन्न्यः प्प्रतिष्ठितस्तस्म्मान्नैयग्रोध-पादेन मित्र्यो राजन्न्योऽभिषिञ्चति ॥ १३ ॥ आश्वत्थं भवति । तेन व्वैश्योऽभिषिञ्चति स यदेवाऽदोऽश्वत्थे तिष्ठत-ऽइन्द्रो मरुत ऽउपाऽऽमन्त्रयत तस्म्मादाश्वत्थेन व्वैश्योऽभि-षिञ्चत्त्येतान्न्यभिषेचनीयानि पात्राणि भवन्ति ॥ १४ ॥ अथ † पवित्रे करोति । 'पवित्रे[1] स्त्थो व्वैष्णव्व्या'विति सोऽसावेव बन्धुस्तयोर्हिरण्ण्यं प्रवयति ताभ्यामेता-ऽअभिषेचनीया ऽअप ऽउत्त्पुनाति तद्यद्धिरण्ण्यं प्रवय-त्त्यमृतमायुर्हिरण्ण्यं तदा स्वमृतमायुर्द्दधाति तस्म्माद्धि-रण्ण्यं प्रवयति ॥ १५ ॥ स ‡ ऽउत्त्पुनाति । '[2]सवि-

* का० श्रौ० सू० १५. ४, २४ ।

† का० श्रौ० सू० १५. ५, ४ ।

( १ ) शु० सं० अ० १० क० ६ ।

‡ का० श्रौ० सू० १५. ५. ५ ।

( २ ) शु० सं० अ० १० क० ६ ।

तुर्वं प्प्रसव ऽउत्पुनाम्म्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरि'ति सोऽसावेव बन्धु'रनिभृष्टमसि व्वाचो बन्धुस्तपोजा' ऽइत्त्यनाधृष्टा स्त्थ रक्षोभिरित्त्येवैतदाह यदाहाऽनिभृष्टमसीति व्वाचो बन्धुरिति यावद्वै प्प्राणेष्वापो भवन्ति तावद्वाचा वदति तस्म्मादाह व्वाचो बन्धुरिति ॥ १६ ॥ तपोजा ऽइति । अग्नेर्वै धूमो जायते धूमादभ्रम-भ्राद्वृष्टिरग्नेर्व्वा ऽएता जायन्ते तस्म्मादाह तपोजा ऽइति ॥ १७ ॥ 'सोमस्य दात्रमसी'ति । यदा वा ऽएनमेताभि-रभिषुण्वन्त्यथाऽऽहुतिर्भवति तस्म्मादाह सोमस्य दात्रम-सीति 'स्वाहा राजस्व' ऽइति तदेनाः स्वाहाकारेणैवोत्पु-नाति ॥ १८ ॥ ता ऽएतेषु पात्रेषु * व्व्यानयति । 'सधं-मादो द्युम्निनीराप ऽएता' ऽइत्त्यनतिमानिन्न्य ऽइत्त्येवैतदाह यदाह सधमाद ऽइति द्युम्निनीराप ऽएता ऽइति व्वीर्य्यवत्त्य-ऽइत्त्येवैतदाहा'ऽनाधृष्टा ऽअपस्यो व्वसाना' ऽइत्त्यनाधृष्टा स्त्थ रक्षोभिरित्त्येवैतदाह यदाहाऽनाधृष्टा ऽअपस्यो व्वसाना-ऽइति 'पस्त्यासु चक्रे व्वरुणः सधस्त्थमि'ति व्विशो वै पस्त्या विक्षु चक्रे व्वरुणः प्प्रतिष्ठामित्त्येवैतदाहा'ऽपाꣳ शिशु-र्म्मातृतमास्वन्तरि'त्त्यपां व्वा ऽएष शिशुर्भवति यो राजसूयेन यजते तस्म्मादाहाऽपाꣳ शिशुर्म्मातृतमास्वन्तरिति ॥१९॥

---

(१) शु० सं० अ० १० क० ६। (२) शु० सं० अ० १० क० ६। (३) शु० सं० अ० १० क० ६।

* का० श्रौ० सू० १५. ५. ६।

(४) शु० सं० अ० १० क० ७। (५) शु० सं० १० क० ७। (६) शु० सं० अ० १० क० ७। (७) शु० सं० अ० १० क० ७।

अथैनं वासाꣳसि * परिधापयति । तत्तार्प्यमिति वासो भवति तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति 'क्षत्त्रस्योल्बमसी'[1]ति तद्यदेव क्षत्रस्योल्बं तत ऽएवैनमेतज्जनयति ॥ २० ॥ अथैनं पाण्डवं † परिधापयति । 'क्षत्त्रस्य[2] जराय्वसीति' तद्यदेव क्षत्रस्य जरायु तत ऽएवैनमेतज्जनयति ॥२१॥ अथाऽधीवासं ‡ प्रतिमुञ्चति । 'क्षत्त्रस्य[3] योनिरसी'ति तद्यैव क्षत्रस्य योनिस्तस्या ऽएवैनमेतज्जनयति ॥ २२ ॥ अथोष्णीषꣳ सꣳहृत्य । पुरस्तादवगूहति 'क्षत्त्रस्य[4] नाभिरसी'ति तद्यैव क्षत्रस्य नाभिस्तामेवाऽस्मिन्नेतद्दधाति ॥ २३ ॥ तद्धैके । समन्तं परिवेष्टयन्ति नाभिर्वा ऽअस्यैषा समन्तं वा ऽइयं नाभिः पर्य्येतीति वदन्तस्तदु तथा न कुर्य्यात्पुरस्तादेवाऽवगूहेत्पुरस्ताद्धीयं नाभिस्तद्यदेनं वासाꣳसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति तस्मादेनं वासाꣳसि परिधापयति ॥२४॥ तद्धैके । निदधत्येतानि वासाꣳस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्य्यादङ्गानि वा ऽअस्य जनूर्वासाꣳस्यङ्गैर्हैनꣳ सजन्वा तन्वा व्यर्द्धयन्ति वरुणय्यं दीक्षितवसनꣳ स ऽएतेषामेवैकं वाससां परिदधीत तदेनमङ्गैर्जन्न्वा तन्न्वा समर्द्धयति वरुणय्यं दीक्षितवसनं तदेनं

---

* "तार्प्यम्परिधापयति, क्षौमम्, त्रिपाणं वा, घृतोन्नमेके, यज्ञरूपस्यूतम्" (का० श्रौ० सू० १५. ५. ७-११)।

(१) शु० सं० अ० १० क० ८।

† "पाण्डवं च निवस्ते" का० श्रौ० सू० १५ .५. १२।

‡ का० श्रौ० सू० १५. ५. १३,१४।

(२) शु० सं० अ० १० क० ८। (३) शु० सं० अ० १० क० ८। (४) शु० सं० अ० १० क० ८।

व्वरुणण्याद्दीक्षितवसनात्त्प्रमुञ्चति ॥ २५ ॥ स यत्राऽवभृथमभ्यवैति । तदेतदभ्यवहरन्ति तत्सलोम क्रियते सऽएतेषामेवैकं व्वाससां परिधायोदैति तानि व्वशायै वा व्वपायाᳬं हुतायां दद्यादुदवसानीयायां व्वेष्टौ ॥ २६ ॥ अथ * धनुरधितनोति । 'इन्द्रस्य[1] व्वार्त्रघ्नमसी'ति व्वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वा ऽएष ऽइन्द्रो भवति यच्च क्षत्त्रियो यदु च यजमानस्तस्म्मादाहेन्द्रस्य व्वार्त्रघ्नमसीति ॥ २७ ॥ अथ † बाहू व्विमार्ष्टि । 'मित्रस्याऽसि[2] व्वरुणस्याऽसी'ति बाह्वोर्वै धनुर्बाहुभ्यां वै राजन्न्यो मैत्रावरुणस्तस्म्मादाह मित्रस्याऽसि व्वरुणस्याऽसीति तदस्मै प्प्रयच्छति 'त्त्वयाऽयं[3] व्वृत्रं बधेदि'ति त्त्वयाऽयं द्विषन्तं भ्भ्रातृव्व्यं बधेदित्त्येवैतदाह ॥ २८ ॥ अथाऽस्मै तिस्र ऽइषूः प्रयच्छति । स यया प्प्रथमया समर्प्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दृबा नामाऽथ यया व्विद्धः शयित्त्वा जीवति वा म्म्रियते वा सा द्वितीया तदिदमन्तरिक्षꣳ सैषा रुजा नामाऽथ ययाऽपैव राध्नोति सा तृतीया साऽसौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र ऽइषवस्तस्म्मादस्मै तिस्रऽइषूः प्प्रयच्छति ॥ २९ ॥ ‡ ताः प्प्रयच्छति । 'पातैनं[4] प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्य्यञ्चं दिग्भ्यः पाते'ति

* का० श्रौ० सू० १५. ५. १७ ।
(१) शु० सं० अ० १० क० ८ ।
† का० श्रौ० सू० १५. ५. १८, १९ ।
(२) शु० सं० अ० १० क० ८ । (३) शु० सं० अ० १० ८ ।
‡ का० श्रौ० सू० १५. ५. २० ।
(४) शु० सं० अ० १० क० ८ ।

तदस्मै सर्वा ऽएव दिशोऽशरव्या करोति तद्यदस्मै धनुः प्रयच्छति वीर्य्यं वा ऽएतद्राजन्यस्य यद्धनुर्वीर्य्यवन्तमभिषिञ्चानीति तस्माद्वा ऽअस्मा ऽआयुधं प्रयच्छति ॥३०॥ अथैनमाविदो * वाचयति। 'आविर्म्मर्य्या' ऽइत्यनिरुक्तं प्रजापतिर्वा ऽअनिरुक्तस्तदेनं प्रजापतय ऽआवेदयति सोऽस्मै सवमनुमन्यते तेनाऽनुमतः सूयते ॥ ३१ ॥ '[2]आवित्तो ऽअग्निर्ग्गृहपतिरि'ति। ब्रह्म वा ऽअग्निस्तदेनं ब्रह्मणऽआवेदयति तदस्मै सवमनुमन्यते तेनाऽनुमतः सूयते ॥ ३२ ॥ [ अर्धप्रपाठकः ॥६०॥ ] '[3]आवित्त ऽइन्द्रो व्वृद्धश्रवा' ऽइति। क्षत्रं वाऽइन्द्रस्तदेनं क्षत्रायाऽऽवेदयति तदस्मै सवमनुमन्यते तेनाऽनुमतः सूयते ॥३३॥ '[4]आवित्तौ मित्रावरुणौ धृतव्रताविे'ति। प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्यामावेदयति तावस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते ॥ ३४ ॥ '[5]आवित्तः पूषा विश्ववेदा' ऽइति। पशवो वै पूषा तदेनं पशुभ्य ऽआवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते ॥ ३५ ॥ '[6]आवित्ते द्यावापृथिवी विश्वशम्भुवा'विति। तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयति ते ऽअस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते ॥ ३६ ॥ '[7]आवित्तादितिरुरुशर्म्मे'ति। इयं वै पृथिव्यदितिस्तदेनमस्यै पृथिव्या ऽआवेदयति साऽस्मै सव-

---

* का० श्रौ० सू० १५. ५. २१।

( १ ) शु० सं० अ० १० क० ९। ( २ ) शु० सं० अ० १० ९। ( ३ ) शु० सं० अ० १० क० ९। ( ४ ) शु० सं० अ० १० क० ९। ( ५ ) शु० सं० अ० १० क० ९। ( ६ ) शु० सं० अ० १० क० ९। ( ७ ) शु० सं० अ० १० क० ९।

मनुमन्यते तयाऽनुमतः सूयते तद्याभ्य ऽएवैनमेतद्देवताभ्य ऽआवेदयति ता ऽअस्मै सवमनुमन्यन्ते ताभिरनुमतः सूयते ॥ ३७ ॥ (E)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ लम्बकेशपुरुषमुखे लोहशलाकाप्रक्षेपः, सीसनिरसनम्, रुक्मनिधानं च ]

केशवस्य पुरुषस्य । * लोहायसमास्य ऽआविध्य'त्त्यवेष्टा दन्दशूका' ऽइति सर्वान्वा ऽएष मृत्यूनतिमुच्यते सर्वान्विधान्यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युरुर्षो वधस्तमेवैतदतिनयति यद्दन्दशूकान् ॥ १ ॥ अथ यत्केशवस्य पुरुषस्य । न वा ऽएष स्त्री न पुमान्यत्केशवः पुरुषो यदुह पुमाँस्तेन स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं यल्लोहायसं नैते क्रिमयो नाऽक्रिमयो यद्दन्दशूका ऽअथ यल्लोहायसं भवति लोहिता ऽइव हि दन्दशूकास्तस्मात्केशवस्य पुरुषस्य ॥ २ ॥ अथैनं † दिशः समारोहयति । '²प्राचीमारोह गायत्री त्वाऽवतु रथन्तरꣳ साम त्रिवृत्स्तोमो वसन्त ऽऋतुर्ब्रह्म द्रविणम्' ॥ ३ ॥

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७. २. ४; काठ० १५. ७; ८; मै० सं० ११. ६. १०; १०; तै० सं० १. ८. १३ ।

* का० श्रौ० सू० १५. ५. २२ ।

( १ ) शु० सं० अ० १० क० १० ।

† का० श्रौ० सू० १५. ५. २३ ।

( २ ) शु० सं० अ० १० क० १० ।

'दक्षिणामारोह । त्रिष्टुप्प्त्वाऽवतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऽऋतुः क्षत्रं द्रविणम्' ॥ ४ ॥ 'प्रतीचीमारोह । जगती त्वाऽवतु वैरूपᳮ साम सप्तदशस्तोमो वर्षा ऽऋतुर्विड्द्रविणम्' ॥ ५ ॥ 'उदीचीमारोह । अनुष्टुप्त्वाऽवतु वैराजᳮ सामैकविᳮशस्तोमः शरदृतुः फलं द्रविणम्' ॥ ६ ॥ 'ऊर्द्ध्वामारोह । पङ्क्तिस्त्वाऽवतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिᳮशौ स्तोमौ हेमन्तशिशिरावृतू वर्च्चो द्रविणमि'ति ॥ ७ ॥ तद्यदेनं दिशः समारोहयति । ऋतूनामेवैनमेतद्रूपमृतूनेवैतत्संवत्सरᳮ समारोहयति स ऽऋतून्त्संवत्सरᳮ समारुह्य सर्वमेवेदमुपर्युपरि * भवत्यर्वागेवाऽस्मादिदᳮ सर्वं भवति ॥ ८ ॥ शार्दूलचर्म्मणो जघनार्द्धे । सीसं निहितं भवति † तत्पदा प्प्रत्यस्यति 'प्रत्यस्तं नमुचेः शिर' ऽइति नमुचिर्हं वै नामाऽसुर ऽआस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठित ऽउदबाधत स उच्छ्वङ्कस्तस्य पदा शिरः प्प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यसऽइति ॥ ९ ॥ तत्सीसेनाऽपजघान । तस्मात्सीसं मृदु सृतजवᳮ हि सर्वेण हि वीर्य्येणाऽपजघान तस्माद्धिरण्यरूपᳮ सन्न किंयच्चनाऽर्हति सृतजवᳮ हि सर्वेण हि वीर्य्येणाऽपजघान तद्वै स तन्नाष्ट्रा रक्षाᳮस्यपजघान तथो-

(१) शु० सं० अ० १० क० ११। (२) शु० सं० अ० १० क० १२। (३) शु० सं० अ० १० क० १३। (४) शु० सं० अ० १० क० १४।

* 'अर्वागैव' इति पाठः 'ग-च' पुस्तकयोः।

† का० श्रौ० सू० १५. ५. २४।

(५) शु० सं० अ० १० क० १४।

ऽएवैष ऽएतन्नाष्ट्रा रक्षाᳬंस्यतोऽपहन्ति ॥ १० ॥ अथैनᳬं * शार्दूलचर्म्माऽऽरोहयति । 'सोमस्य[1] त्विषिरसी'ति यत्र वै सोम ऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति 'तवेव[2] मे त्विषिर्भूयादि'ति शार्दूलत्विषिमेवाऽस्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥ ११ ॥ अथ † रुक्ममधस्तादुपाऽस्यति । 'मृत्योः[3] पाही'त्यमृतमायुर्हिरण्यं तदमृतऽआयुषि प्प्रतितिष्ठति ॥ १२ ॥ अथ रुक्मः शतवितृण्णो वा भवति । नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वाऽयं पुरुषः शततेजाः शतवीर्य्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्प्राणास्तस्मान्नववितृण्णः ॥ १३ ॥ तमुपरिष्टाच्छीर्ष्णो ‡ निदधाति । 'ओजो[4]ऽसि सहोऽस्यमृतमसी'त्यमृतमायुर्हिरण्यं तदस्मिन्नमृतमायुर्दधाति तद्यद्रुक्मा ऽउभयतो भवतोऽमृतमायुर्हिरण्यं तदमृतेनैवैनमेतदायुषोभयतः परिबृᳬंहति तस्माद्रुक्मा ऽउभयतो भवतः ॥ १४ ॥ अथ $ बाहू ऽउद्गृह्णाति । 'हिरण्यरूपा[5] ऽउषसो विरोक ऽउभाविन्द्रा ऽउदिथः सूर्य्यश्च । आ रोहतं वरुण

* का० श्रौ० सू० १५. ५. २५ ।
(१) शु० सं० अ० १० क० १५ । (२) शु० सं० अ० १० क० १५ ।
† का० श्रौ० सू० १५. ५. ३६. ।
(३) शु० सं० अ० १० क० १५ ।
‡ का० श्रौ० सू० १५. ५. २७ ।
(४) शु० सं० अ० १० क० ५१ ।
$ का० श्रौ० सू० १५. ३. १३ ।
(५) शु० सं० अ० १० क० १६ ।

मित्र गर्त्तं ततश्चक्षाथामदितिं दितिं चे'ति बाहू वै मित्रावरुणौ पुरुषो गर्त्तस्तस्मादाहाऽऽरोहतं वरुण मित्र गर्त्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यतथं स्वं चारणं चेत्त्येवैतदाह ॥ १५ ॥ नैतेनोद्गृह्णीयात् । 'मित्रोऽसि वरुणोऽसी'त्त्येवोद्गृह्णीयाद्बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि वरुणोऽसीत्त्येवोद्गृह्णीयात् ॥ १६ ॥ तद्यदेनमूर्द्ध्वबाहुमभिषिञ्चति । वीर्य्यं वा ऽएतद्राजन्यस्य यद्बाहू वीर्य्यं वा ऽएतदपाथं रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति नेन्म ऽइदं वीर्य्यं वीर्य्यमपाथं रसः सम्भृतो बाहू ब्लिनादिति तस्मादेनमूर्द्ध्वबाहुमभिषिञ्चति ॥ १७ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अथाऽभिषेकः ]

तं वै प्राञ्चं * तिष्ठन्तमभिषिञ्चति । पुरस्ताद् ब्राह्मणोऽभिषिञ्चत्त्यद्ध्वर्य्युर्वा यो वाऽस्य पुरोहितो भवति पश्चादितरे ॥ १ ॥ 'सोमस्य[2] त्वा द्युम्नेनाऽभिषिञ्चामी'ति । वीर्य्येणैतदा'हाऽग्नेर्[3]भ्राजसे'ति वीर्य्येणैवैतदाह 'सूर्य्यस्य[4] वर्चसे'ति वीर्य्येणैवैतदाहे'न्द्रस्[5]येन्द्रियेणे'ति वीर्य्येणैवैतदाह

(१) शु० सं० अ० १० क० १६ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७. ३. १; काठ० १५. ७; ८; मै० सं० ११. ६. ७; तै० सं० १. ८. १२, १३ ।

* का० श्रौ० सू० १५. ५. ३०–३३ ।

( २ ) शु० सं० अ० १० क० १७ । ( ३ ) शु० सं० अ० १० क० १७ । ( ४ ) शु० सं० अ० १० क० १७ । ( ५ ) शु० सं० अ० १० क० १७ ।

'क्षत्राणां[1] क्षत्रपतिरेधी'ति राज्ञामधिराज ऽएधीत्येवैतदा'हा-
ऽतिदि[2]द्यून्पाही'तीषवो वै दिद्यव ऽइषुबधमेवैनमेतद्
तिनयति तस्मादाहाऽतिदिद्यून्पाहीति ॥ २ ॥ इमं देवाः[3] ।
असपत्नꣳ सुवद्ध्वमि'तीमं देवा ऽअभ्रातृव्यꣳ सुवद्ध्वमि-
त्येवैतदाह 'महते[4] क्षत्राय महते ज्यैष्ठ्याये'ति नाऽत्रातिरो-
हितमिवाऽस्ति महते[5] जानराज्याये'ति महते जनानाꣳ राज्या-
येत्येवैतदा'हेन्द्रस्येन्द्रियाये'ति वीर्यायेत्येवैतदाह यदाहेन्द्रस्ये[6]
न्द्रियाये'तीमममुष्य[7] पुत्रममुष्यै पुत्रमि'ति तद्यदेवाऽस्य जन्म
तत ऽएवैतदा'हाऽस्यै[8] विश' ऽइति यस्यै विशो राजा भवत्ये'ष
वोऽमी[9] राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजे'ति तदस्मा-
ऽइदꣳ सर्वमाद्यं करोति ब्राह्मणमेवाऽपोद्धरति तस्माद् ब्रा-
ह्मणोऽनाद्यः सोमराजा हि भवति ॥३॥ * अथैतमभिषेकम् ।
कृष्णविषाणयाऽनुविमृष्टे वीर्यं वा ऽएतदपाꣳ रसः सम्भृतो
भवति येनैनमेतदभिषिञ्चतीदं मे वीर्यꣳ सर्वमात्मानमुप-
स्पृशादिति तस्माद्वा ऽअनुविमृष्टे ॥ ४ ॥ † सोऽनुविमृष्टे ।
'प्र पर्वतस्य वृषभस्य पृष्ठादि'ति यथाऽयं पर्वतोऽतिष्ठावा
यथऽर्षभः पशूनतिष्ठावैवं वा ऽएष ऽइदꣳ सर्वमतितिष्ठ-
त्यर्वागेवाऽस्मादिदꣳ सर्वं भवति यो राजसूयेन यजते

(१) शु० सं० अ० १० क० १७। (२) शु० सं० अ० १० क० १७। (३) शु० सं० अ० ९ क० १८। (४) शु० सं० अ० १० क० १८। (५) शु० सं० अ० १० क० १८। (६) शु० सं० अ० १० क० १८। (७) शु० अ० १० क० १८। (८) शु० सं० अ० १० क० १६। (९) शु० सं० अ० १० क० १८।

* अत्र शतम् ३२००।

† का० श्रौ० सू० १५. ६. ८।

तस्मादाह 'प्र पर्वतस्य व्वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच-ऽइयानाः । ता ऽआवव्वृत्रन्नधरागुदक्ता ऽअहिं बुध्न्यमनु रीयमाणा' ऽइति ॥ ५ ॥ अथैनमन्तरेव शार्दूलचर्म्मणि * विष्णुक्रमान्क्रमयति । 'विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसी'तीमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तं तदिमानेव लोकान्त्समारुह्य सर्वमेवेदमुपर्य्युपरि भवत्यर्वागेवाऽस्मादिदꣳ सर्वं भवति ॥ ६ ॥ अथ ब्राह्मणस्य पात्रे । सꣳस्रवान्त्समवनयति तद् ब्राह्मणः राजानमनुयशः करोति तस्माद् ब्राह्मणो राजानमनुयशः ॥ ७ ॥ तद्योऽस्य पुत्रः प्रियतमो भवति । तस्मा ऽएतत्पात्रं प्रयच्छतीदं मेऽयं वीर्यं पुत्रोऽनुसन्तनव'दिति ॥ ८ ॥ अथ प्रतिपरेत्य † गार्हपत्यमन्वारब्धे जुहोति । 'प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्त्वयममुष्य पिते'ति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्वीर्ये व्व्यतिषजत्य'सावस्य पिते'ति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्वीर्ये व्व्यतिषज्य पुनरेव यथायथं करोति 'वयꣳ स्याम पतयो रयीणाꣳ स्वाहे'त्याशी-

(१) शु० सं० अ० १० क० १९ ।

* का० श्रौ० सू० १५. ६. ९ ।

(२) शु० सं० अ० १० क० १९ । (३) का० श्रौ० सू० १५. ६. १० ।

† का० श्रौ० सू० १५. ६. ११ ।

(४) शु० स० अ० १० क० २० । (५) शु० सं० अ० १० क० २० । (६) शु० सं० अ० १० क० २० ।

रेवैषैतस्य कर्म्मण ऽआशिषमेवैतदाशास्ते ॥ ९ ॥ अथ य-ऽएष सꣳस्रवोऽतिरिक्तो भवति । तमाग्नीध्रीये * जुहो-त्यतिरिक्तो वा ऽएष सꣳस्रवो भवत्यतिरिक्त ऽआग्नीध्रीयो गार्हपत्ये हवीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषोऽतिरिक्त-स्तदतिरिक्त ऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति स जुहोति 'रुद्र यत्ते क्रिवि परं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहे'ति ॥ १० ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥२॥



[ रथोपावहरणम् ]

तद्योऽस्य स्वो भवति । तस्य शतं वा परः शता वा गा ऽउत्तरेणाऽऽहवनीयꣳ सꣳस्थापयति तद्यदेवं करोति ॥ १ ॥ वरुणाद्ध वा ऽअभिषिषिचानात् । इन्द्रियं वीर्य्यमप-चक्राम शश्वद्य ऽएषोऽपाꣳ रसः सम्भृतो भवति येनैन-मेतदभिषिञ्चति सोऽस्येन्द्रियं वीर्य्यं निर्ज्जघान तत्पशु-ष्वन्वविन्दत्तस्मात्पशवो यशो यदेष्वन्वविन्दत्तत्पशुष्वनु-विद्येन्द्रियं वीर्य्यं पुनरात्मन्नधत्त तथो ऽएवैष ऽएतन्नाऽऽ-हैवाऽस्माऽन्विन्द्रियं वीर्य्यमपक्रामति वरुणसवो वा ऽएष यद्राजसूयमिति वरुणोऽकरोदिति त्वेवैष ऽएतत्करोति ॥२॥ अथ रथमुपाऽवहरति । यद्वै राजन्यात्पराग्भवति रथेन

* का० श्रौ० सू० १५. ६. १२ ।

( १ ) शु० स० अ० १० क० २० ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा -- का० श० ७. ३. २; काठ० १५, ७. मै० सं० ११. ६. ९, १३; तै० सं० १. ८. १२, १३ ।

वै तदनुयुङ्क्ते तस्माद्रथमुपाऽवहरति ॥ ३ ॥ * स-ऽउपाऽवहरति । 'इन्द्रस्य वज्रोऽसी'ति वज्रो वै रथ ऽइन्द्रो वै यजमानो द्वयेन वा ऽएष ऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति ॥ ४ ॥ तमन्तर्वेद्यभ्यववर्त्य युनक्ति । 'मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ॥ ५ ॥ तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन चात्वालमग्रेणाऽऽग्नीध्रमुद्यच्छति ॥ ६ ॥ † तमातिष्ठति । 'अव्यथायै त्वा स्वधायै त्वे'त्य-नार्त्यै त्वेत्येवैतदाह यदाहाऽव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदा'हाऽरिष्टो ऽअर्जुन' ऽइत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वा ऽएष ऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहाऽरिष्टो ऽअर्जुन-ऽइति ॥ ७ ॥ अथ दक्षिणायुग्यमुपार्षति । 'मरुतां प्रसवेन जये'ति विशो वै मरुतो विशा वै तत्क्षत्रियो जयति यज्जि-गीषति तस्मादाह मरुतां प्रसवेन जयेति ॥ ८ ॥ अथ मध्ये गवामुद्यच्छति । 'आपाम मनसे'ति मनसा वा ऽइदꣳ सर्वमाप्तं तन्मनसैवैतत्सर्वमाप्नोति तस्मादाहाऽऽपाम मन

* का० श्रौ० सू० १४. ३. १; १५. ६. १५ ।

(१) शु० सं० अ० १० क० २१ । (२) शु० सं० अ० १० क० २१ ।

† का० श्रौ० सू० १५. ६. १७—२० ।

(३) शु० सं० अ० १० क० २१ । (४) शु० सं० अ० १० क० २१ । (५) शु० सं० अ० १० क० २१ । (६) शु० सं० अ० १० क० २१ ।

सेति ॥ ९ ॥ अथ धनुरार्त्न्या गामुपस्पृशति । 'सं॒मिन्द्रि॒येणे॒'तीन्द्रियं वै॒ वी॒र्य्यं॒ गा॒व ऽइन्द्रि॒यमे॒वैतद्वी॒र्य्य॒मात्म॒न्धत्ते॒ऽथाऽऽह जिना॒मीमा॒ः कुर्व॒ ऽइमा ऽइ॒ति ॥ १० ॥ तद्य॒त्स्व॒स्य गो॒षूद्य॒च्छति । यद्वै॒ पुरु॒षात्परा॒ग्भ॒वति य॒शो वा कि॒ञ्चिद्वा स्व॒प्नः हैवाऽस्य तत्प्रत॒मा॒मिवाऽभ्यु॒पक्रामति तत्स्वा॒दे॒वैत॒दिन्द्रि॒यं वी॒र्य्यं पु॒नरात्म॒न्धत्ते त॒स्मात्स्व॒स्य गोषू॒द्यच्छति ॥ ११ ॥ त॒स्मै तावन्मात्रीर्वा भूयसीर्वा प्प्र॒तिद॒दाति । न वा॒ ऽए॒ष॒ क्रूरकर्म्म॒णे भवति यद्य॒जमानः क्रू॒रमिव वा॒ ऽएत॒त्करोति यद्दा॒ह * जिना॒मीमा॒ः कुर्व॒ ऽइमाऽइति त॒थो हाऽस्यैत॒द्क्रूरं कृत॒ं भवति त॒स्मात्तावन्मात्रीर्वा भूयसीर्वा प्प्र॒तिददाति ॥ १२ ॥ अ॒थ द॒क्षिणाना॒यच्छति । सो॒ऽग्रेण यूपं † द॒क्षिणेन वे॒दिं ऽग्नेनैव द॒क्षिणा य॒न्ति ते॒न प्प्र॒तिपद्यते त॒ं जघनेन सद॒ोऽग्रेण शा॒लामुद्यच्छति ॥ १३ ॥ 'मा॒ त ऽइन्द्र॒[2] ते वयम् । तुराषा॒ड्युक्तासो ऽअब्रह्म॒ता वि॒द॒साम । ति॒ष्ठा र॒थमधि॒यं वज्रहस्ता॒ र॒श्मीन्दे॒व यमसे स्व॒श्वानित्युद्यच्छत्ये॒वैत॒याऽभी॒शवो वै॒ र॒श्म॒यस्त॒स्मादा॒हा र॒श्मी॒न्देव यमसे स्व॒श्वानित्य॒थ रथविमोचनी॒यानि जुहोति प्प्रीतो र॒थो वि॒मुच्च्याता ऽइ॒ति त॒स्माद्र॒थविमोचनी॒यानि जुहोति ॥ १४ ॥ ‡ स॒ जुहोति । 'अग्न॒[3]ये गृह॒पतये स्वाहे॒'ति स

( १ ) शु० सं० अ० १० क० २१ ।

* का० श्रौ० सू० ५. ६. २२ ।

† का० श्रौ० सू० ५. ६. २२ ।

( २ ) शु० सं० अ० १० क० २१ ।

‡ "अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रम्" ( का० श्रौ० सू० १५. ६. २३ ) ।

( ३ ) शु० सं० अ० १० क० २३ ।

यदेवाऽऽग्नेयꣳ रथस्य तदेवैतेन प्प्रीणाति व्वहा व्वा ऽआग्नेया रथस्य व्वहानेवैतेन प्प्रीणाति श्रीर्व्वै गार्हपतं यावतो—यावत-ऽईष्टे तच्छ्रियमेवाऽस्यैतद्गार्हपतꣳ राज्यमभिविमुच्च्यते॥१५॥ 'सोमाय व्वनस्प्पतये स्वाहे'ति। द्वयानि वै व्वानस्प्पत्त्यानि चक्राणि रत्थ्यानि चानसानि च तेब्भ्यो न्न्वेवैतदुभयेब्भ्यो-ऽरिष्टिं कुरुते सोमो वै व्वनस्प्पतिः स यदेव व्वानस्प्पत्त्यꣳ रथस्य तदेवैतेन प्प्रीणाति दारूणि वै व्वानस्प्पत्त्यानि रथस्य दारूण्ण्येवैतेन प्प्रीणाति क्षत्रं वै सोमः क्षत्रमेवाऽस्यै तद्रा-ज्ज्यमभिविमुच्च्यते ॥ १६ ॥ 'मरुतामोजसे स्वाहे'ति। स यदेव मारुतꣳ रथस्य तदेवैतेन प्प्रीणाति चत्त्वारोऽश्वा रथः पञ्चमो द्वौ सव्व्यष्ठृसारथी ते सप्त-सप्त-सप्त वै मारुतो गणः सर्व्वमेवैतेन रथं प्रीणाति व्विशो वै मरुतो व्विशमेवा-ऽस्यैतद्राज्ज्यमभिविमुच्यते ॥१७॥ 'इन्द्रस्येन्द्रियाय स्वाहे'ति। स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्प्रीणाति सव्व्यष्ठा व्वा-ऽऐन्द्रो रथस्य सव्व्यष्ठारमेवैतेन प्प्रीणातीन्द्रियं व्वै व्वीर्य्य-मिन्द्र ऽइन्द्रियमेवाऽस्यैतद्वीर्य्यꣳ राज्ज्यमभिविमुच्च्यते ॥ १८ ॥ अथ * व्वाराह्या ऽउपानहा ऽउपमुच्च्यते। अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो व्वराहः सम्बभूव तस्म्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्म्माद्वराहे गावः सञ्जानते स्वमेवैतद्रसमभि सञ्जानते तत्पशूनामेवैतद्रसे प्प्रतितिष्ठति तस्म्माद्वाराह्या ऽउपानहा ऽउपमुञ्चते ॥१९॥

(१) शु॰ सं॰ अ॰ १० क॰ २३। (२) शु॰ सं॰ अ॰ १० क॰ २३। (३) शु॰ सं॰ अ॰ १० क॰ २३।

* का॰ श्रौ॰ सू॰ १५. ६. २४।

अथेमां प्रत्यवेक्षमाणो * जपति । 'पृथिवि मातर्म्मा मा हिᳫं सीर्म्मो ऽअहन्त्वामि'ति व्वरुणाद्ध वा ऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार महद्वा ऽअयमभूद्योऽभ्यषेचि यद्वै माऽयं नाऽवदृणीयादिति व्वरुण ऽउ ह पृथिव्यै व्विभयाञ्चकार यद्वै मेऽयं नाऽवधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रᳫं हिनस्ति न पुत्रो मातरम् ॥२०॥ व्वरुणसवो वा ऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा ऽअयमभूद्योऽभ्यषेचि यद्वै माऽयं नाऽवदृणीयादित्येष ऽउ हाऽस्यै बिभेति यद्वै मेऽयं नाऽवधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रᳫं हिनस्ति न पुत्रो मातरं तस्मादेवं जपति ॥ २१ ॥ † सोऽवतिष्ठति । 'हᳫंसः[२] शुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऽऋतजा ऽअद्रिजा ऽऋतं बृहदि'त्येतामतिच्छन्दसं जपन्नेषा वै सर्वाणि च्छन्दाᳫंसि यदतिच्छन्दास्तथैनं पाप्मा नाऽन्ववतिष्ठति ॥ २२ ॥ तं न सङ्ग्रहीताऽन्ववतिष्ठेत् । नेत्तं लोकमन्ववतिष्ठाद्यᳫं सुषुवाणोऽन्ववाऽस्थादिति तᳫं सरथमेव रथवाहन ऽआदधति ततोऽवाङुपप्रवते तथा तँल्लोकं नाऽन्ववतिष्ठति यᳫं सुषुवाणोऽन्ववाऽस्थात् ॥ २३ ॥ उत्तरेणाऽऽहवनीयं पूर्वाग्निरुद्धृतो

---

* का० श्रौ० सू० १५. ६. २५ ।
( १ ) शु० सं० अ० १० क० २३ ।
† का० श्रौ० सू० १५. ६. २६ ।
( २ ) शु० सं० अ० १० क० २४ ।

भवति । स रथवाहनस्य दक्षिणमन्वनुष्यन्द्द्ध्ठ शतमानौ प्प्रवृत्तावाबध्नाति ॥२४॥ औदुम्बरीᳬ * शाखामुपगूहति । तयोरन्न्यतरमुपस्पृश'तीयदस्या[1]ऽऽयुरस्याऽऽयुर्म्मयि धेहि युङ्ङसि वर्च्चोऽसि वर्च्चो मयि धेही'ति तदायुर्व्वर्च्च ऽआत्मन्धत्ते ॥२५॥ अथौदुम्बरीᳬ † शाखामुपस्पृशति । 'ऊर्ग्गस्यूर्ज्जं[2] मयि धेही'ति तदूर्ज्जमात्मन्धत्ते तस्यैतस्य कर्म्मण ऽएतावेव शतमानौ प्प्रवृत्तौ दक्षिणा तौ ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्म्मात्तौ ब्रह्मणे ददाति ॥ २६ ॥ अग्रेण मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी पयस्या निहिता भवति तामस्य बाहू ऽअभ्युपाऽवहर'तीन्द्र[3]स्य वां वीर्य्यकृतो बाहू ऽअभ्युपाऽवहरामी'ति पशूनां वा ऽएष रसो यत्पयस्या तत्पशूनामेवाऽस्यैतद्रसं बाहू ऽअभ्युपाऽवहरति तद्यन्मैत्रावरुणी भवति मित्रावरुणा ऽउ हि बाहू तस्म्मान्मैत्रावरुणी भवति ॥ २७ ॥ (C)

## चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ११९ ॥



* का० श्रौ० सू० १५. ६, ३१ ।

( १ ) शु० सं० अ० १० क० २५ ।

† का० श्रौ० सू० १५. ६. ३२,३३ ।

( २ ) शु० सं० अ० १० क० २५ । ( ३ ) शु० सं० अ० १० क० २५ ।

( C ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७. ३. ३; काठ० १५. ७. ८; मै० सं० ११. ६. ११,१२; तै० सं० १. ८. १२,१३; तै० ब्रा० १. ७. ९ ।

[ पयस्याप्रचारः ]

मैत्रावरुण्ण्या * पयस्यया प्प्रचरति । तस्या ऽअनिष्ट- ऽएव स्विष्टकृद् भवत्यथाऽस्म्मा ऽआसन्दीमाहरन्त्युपरिसद्यं व्वा ऽएष जयति यो जयत्त्यन्तरिक्षसद्यं तदेनमुपर्य्यासीन- मधस्तादिमाः प्प्रजा ऽउपाऽऽसते तस्म्मादस्म्मा ऽआसन्दी- माहरन्ति सैषा खादिरी व्वितृण्णा भवति येयं † व्वर्द्ध्रव्व्यूता भरतानाम् ॥ १ ॥ तामग्रेण । मैत्रावरुणस्य धिष्ण्यं ‡ निद- धाति 'स्योनाऽसि सुषदाऽसी'ति शिवामेवैतच्छग्ग्मां करोति ॥ २ ॥ अथाऽधीवासमास्तृणाति । 'क्षत्त्रस्य योनिरसी'ति तद्यैव क्षत्त्रस्य योनिस्तामेवैतत्करोति ॥ ३ ॥ अथैनमासा- दयति । 'स्योनामासीद सुषदामासीदे'ति शिवाꣳ शग्ग्मा- मासीदेत्येवैतदाह 'क्षत्त्रस्य योनिमासीदे'ति तद्यैव क्षत्त्रस्य योनिस्तस्यामेवैनमेतद्दधाति ॥ ४ ॥ अथाऽन्तराꣳसेऽभि- मृश्य ‡‡ जपति । 'निषसाद धृतव्रत' ऽइति धृतव्रतो वै राजा न वा ऽएष सर्व्वस्म्मा ऽइव व्वदनाय न सर्व्वस्म्मा- ऽइव कर्म्मणे यदेव साधु व्वदेद्यत्साधु कुर्य्यात्तस्मै व्वा ऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्म्मादाह 'निष- साद धृतव्रत ऽइति 'व्वरुणः पस्त्यास्वे'ति व्विशो वै पस्त्या

* "उत्तरवेदिं हुत्वा पयस्यया प्रचरति प्राक् स्विष्टकृतः" (का० श्रौ० सू० १५. ६. ३५)।

† वर्ध्राश्चर्मरज्जवः, ताभिर्व्यूता सन्नद्धेत्यर्थः ।

‡ का० श्रौ० सू० १५. ७. १–३ ।

( १ ) शु० सं० अ० १० क० २६ । ( २ ) शु० सं० अ० १३. १० क० २६ । ( ३ ) शु० सं० अ० १० क० २६ । ( ४ ) शु० सं० अ० १० क० २६ ।

‡‡ का० श्रौ० सू० १५. ७. ४ ।

( ५ ) शु० सं० अ० १० क० २७; कपि० सं० ७. ३. ४ । ( ६ ) शु० सं० अ० १० क० २७; कपि० सं० ७. ३. ४ ।

विश्वेर्त्त्येवैतदाह 'साम्म्राज्याय सुक्रतुरि'ति राज्यायेत्त्ये-वैतदाह यदाह साम्म्राज्याय सुक्रतुरिति ॥ ५ ॥ अथाऽस्मै * पञ्चाऽक्षान्न्पाणात्रावपति । अभिभूरस्येतास्ते पञ्च दिशः कल्पन्तामि'त्त्येष वा ऽअयानभिभूर्य्यत्कलिरेष हि सर्व्वानया-नभिभवति तस्म्मादाहाऽभिभूरसीत्त्येतास्ते पञ्च दिशः कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्व्वा ऽएव दिशः कल्पयति ॥ ६ ॥ अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डबधमतिनयन्ति तस्म्माद्राजा दण्ड्यो यदेनं दण्डबधमतिनयन्ति ॥ ७ ॥ अथ † व्वरं व्वृणीते । यद्वै ह वै कञ्च सुषुवाणो व्वरं व्वृणीते सोऽस्मै सर्व्वः समृद्ध्यते तस्म्माद्वरं व्वृणीते ॥ ८ ॥ स 'ब्रह्मन्नि'त्त्येव प्प्रथ-ममामन्त्रयते । ब्रह्म प्प्रथममभिव्व्याहराणि ब्रह्मप्प्रसूतां व्वाचं व्वदानीति तस्म्माद् ब्रह्मन्नित्त्येव प्प्रथममामन्त्रयते 'त्वं ब्रह्माऽसी'तीतरः प्प्रत्त्याह 'सविताऽसि सत्त्यप्प्रसव' ऽइति व्वीर्य्यमेवाऽस्मिन्नेतद्दधाति सवितारमेव सत्त्यप्प्रसवं करोति ॥ ९ ॥ ब्रह्मन्नित्त्येव द्वितीयमामन्त्रयते । त्वं ब्रह्माऽसीती-तरः प्प्रत्त्याह 'व्वरुणोऽसि सत्त्यौजा' ऽइति व्वीर्य्यमेवाऽस्मि-न्नेतद्दधाति व्वरुणमेव सत्त्यौजसं करोति ॥ १० ॥ ब्रह्मन्नि-

(१) शु० सं० अ० १० क० २७; कपि० सं० ७. ३. ४ ।

* का० श्रौ० सू० १५. ६. ५ ।

(२) शु० सं० अ० १० क० २८ ।

† का० श्रौ० सू० १५. ७. ७,८ ।

(३) शु० सं० अ० १० क० २८ । (४) शु० सं० अ० १० क० २८ । (५) शु० सं० अ० १० क० २८ ।

त्येव तृतीयमामन्त्रयते। त्वं ब्रह्माऽसीतीतरः प्रत्या[1]'हेन्द्रोऽसि विशौजा' ऽइति वीर्यमेवाऽस्मिन्नेतद्दधातीन्द्रमेव विशौजसं करोति ॥ ११ ॥ ब्रह्मन्नित्येव चतुर्थमामन्त्रयते । त्वं ब्रह्माऽसीतीतरः प्रत्याह '[2]रुद्रोऽसि सुशेव' ऽइति तद्वीर्याण्येवाऽस्मिन्नेतत्पूर्वाणि दधात्यथैनमेतच्छमयत्येव तस्मादेष सर्वस्येशानो मृडयति यदेनꣳ शमयति ॥ १२ ॥ ब्रह्मन्नित्येव पञ्चममामन्त्रयते। त्वं ब्रह्माऽसीतीतरोऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत्परिमितमेवाऽस्मिन्नेतत्पूर्वं वीर्यं दधात्यथाऽत्राऽनिरुक्तं प्रत्याहाऽपरिमितं वा ऽअनिरुक्तं तदपरिमितमेवाऽस्मिन्नेतत्सर्वं वीर्यं दधाति तस्मादत्राऽनिरुक्तं प्रत्याह ॥१३॥ अथ * सुमङ्गलनामानꣳ ह्वयति । '[3]बहुकार श्रेयस्कर भूयस्करे'ति य ऽएवन्नामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति ॥ १४ ॥ अथाऽस्मै ब्राह्मण † स्फ्यं प्रयच्छति । अध्वर्युर्वा यो वाऽस्य पुरोहितो भवती'[4]न्द्रस्य वज्रोऽसि तेन मे रध्ये'ति वज्रो वै स्फ्यः स ऽएतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयाꣳसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान्भवति तदमित्रेभ्य ऽएवैनमेतद् बलीयाꣳसं करोति ॥ १५॥ तꣳ राजा ‡ राजभ्रात्रे प्रयच्छति । 'इन्द्रस्य वज्रोऽसि

(१) शु० सं० अ० १० क० २८। (२) शु० सं० अ० १० क० २८।
* का० श्रौ० सू० १५. ७. १०।
(३) शु० सं० अ० १० क० २८।
† का० श्रौ० सू० १५. ७. ११।
(४) शु० सं० अ० १० क० २८।
‡ का० श्रौ० सू० १५. ७. १२।

तेन मे रद्ध्ये'ति तेन राजा राजभ्भ्रातरमात्मनोऽबलीयाꣳसं कुरुते ॥ १६ ॥ तꣳ राजभ्भ्राता सूताय वा स्त्थपतये वा प्प्रयच्छति । 'इन्द्रस्य व्वज्र्जोऽसि तेन मे रद्ध्येति' तेन राजभ्भ्राता सूतं व्वा स्त्थपतिं व्वाऽऽत्मनोऽबलीयाꣳसं कुरुते ॥ १८ ॥ तꣳ सूतो वा स्त्थपतिर्व्वा ग्रामण्ण्ये प्प्रयच्छति । 'इन्द्रस्य व्वज्र्जोऽसि तेन मे रद्ध्येति' तेन सूतो वा स्त्थपतिर्व्वा ग्रामण्ण्यमात्मनोऽबलीयाꣳसं कुरुते ॥ १८ ॥ तं ग्रामणीꣳ सजाताय प्प्रयच्छति । 'इन्द्रस्य व्वज्र्जोऽसि तेन मे रद्ध्ये'ति तेन ग्रामणीꣳ सजातमात्मनोऽबलीयाꣳसं कुरुते तद्यद्देवꣳ सम्प्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्व्वमसदिति तस्म्मादेवꣳ सम्प्रयच्छन्ते ॥ १९ ॥ अथ * सजातश्च प्प्रातिप्प्रस्त्थाता च । एतेन स्फ्येन पूर्व्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवनं कुरुतोऽत्ता वै शुक्रोऽत्तारमेवैतत्कुरुतꣳ ॥ २० ॥ अथ मन्थिनꣳ पुरोरुचा व्विमितं व्विमिनुतꣳ । आद्यो वै मन्थी तदत्तारमेवैतत्कृत्त्वाऽथाऽस्मा ऽएतदाद्यं जनयतस्तस्म्मान्न्मन्थिनꣳ पुरोरुचा व्विमितं व्विमिनुतः ॥२१॥ अथाऽक्षैर्द्दीव्यन्ति ꣳ । † चतुर्ग्गृहीतमाज्यं गृहीत्वाऽधिदेवने हिरण्ण्यं निधाय जुहो'त्यग्निꣳ पृथुर्द्धर्म्मणस्प्पतिर्ज्जुषाणो ऽअग्निꣳ पृथुर्द्धर्म्मणस्प्पतिराज्यस्य व्वेतु स्वाहे'ति ॥ २२ ॥ अथाऽक्षान्निवपति । 'स्वाहाकृताꣳ सूर्य्यस्य रश्मिभिर्य्यतद्ध्वꣳ सजातानां मध्यमेष्ठ्याये'त्येष वा ऽअग्निꣳ पृथुर्य्यदधिदेवनं

* का० श्रौ० सू० १५. ७. १३।

† का० श्रौ० सू० १५. ७. १५, १६।

( १ ) शु० सं० अ० १० क० २९। ( २ ) शु० सं० अ० १० क० २९।

तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्प्रीणाति तस्य ह वा ऽएषाऽनुमता गृहेषु हन्न्यते यो वा राजसूयेन यजते यो वैतदेवं व्वेदैतेष्वक्षेष्वाह गां * दीव्व्यद्ध्वमिति पूर्वाग्निवाहौ † दक्षिणा ॥ २३ ॥ अथाहाऽग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाऽऽहुतीऽ ऽएतत्कर्म्म क्रियत ऽएष वै प्प्रजापतिर्य्य ऽएष यज्ञस्तायते यस्म्मादिमाः प्प्रजाः प्प्रजाता ऽएतम्व्वेवाऽप्प्येतर्ह्यनु प्प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्प्रजापतेर्द्दधाति मध्यतः सुवति तस्म्मादन्तरेणाऽऽहुती ऽएतत्कर्म्म क्रियतऽआश्राव्व्याऽऽहाऽग्निꣳ स्विष्टकृतं य्यजेति व्वषट्कृते जुहोति ॥ २४ ॥ अथेडामादधाति । उपहूतायामिडायामपऽउपस्स्पृश्श्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्त्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्प्रमीवति स ऽउपाऽवरोहति सोऽन्ते स्तोत्रस्य भवत्त्यन्ते शस्त्रस्य ॥ २५ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ संसृपाहविः, दशपेयः, उपसद्यागश्च ]

व्वरुणाद्ध वा ऽअभिषिषिचानाद्भर्ग्गोऽपचक्राम । व्वीर्य्यं वै भर्ग्ग ऽएष व्विष्णुर्य्यज्ञः सोऽस्म्मादुपचक्राम शश्वद्ध ऽएषोऽपाꣳ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्य

---

* का० श्रौ० सू० १५. ७, १७।

† 'पूर्वाग्निवाहो' इति 'क' पुस्तके दृश्यते।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७. ३. ४; काठ० १५. ८; मै० सं० ११, ६, १२; तै० सं० १. ८. १५।

भर्ग्गं निर्ज्जघान ॥ १ ॥ * तमेताभिर्द्देवताभिरनु समसर्प्पत् । 'सवित्त्रा[1] प्प्रसवित्त्रा सरस्वत्या व्वाचा त्त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणाऽस्मे बृहस्प्पतिना ब्रह्मणा व्वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा व्विष्णुनैव 'दशम्म्या[2] देवतया'ऽन्वविन्दत् ॥ २॥ तद्यदेनमेताभिर्द्देवताभिरनु समसर्प्पत् । तस्म्मात्त्सᳪसृपो नामाऽथ यद्दशमेऽहन्न्प्रसुतो भवति तस्म्माद्दशपेयोऽथो यद्दश-दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्म्माद्वेव दशपेयः ॥ ३ ॥ तदाहुः । दश † पितामहान्त्सोमपान्त्संख्याय प्प्रसर्प्पेत्तथो हाऽस्य सोमपीथमश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्त्येव पितामहान्त्सोमपान्न्विन्दन्ति तस्म्मादेता ऽएव देवताः संख्याय प्प्रसर्प्पेत् ॥ ४ ॥ एताभिर्व्वै देवताभिर्व्वरुण ऽएतस्य सोमपीथमाश्नुत । तथोऽएवैष ऽएताभिरेव देवताभिरेतस्य सोमपीथमश्नुते तस्म्मादेता ऽएव देवताः संख्याय प्प्रसर्प्पेदथ यद्वैवैषोदवसानीयेष्टिः सन्तिष्ठत ऽएतस्याऽभिषेचनीयस्य ॥ ५ ॥ अथैतानि हवीᳪषि ‡ निर्व्वपति। सावित्रं ‡‡ द्वादशकपालं व्वाऽष्टाकपालं

---

* का० श्रौ० सू० १५. ८, १७ ।

(१) शु० सं० अ० १० क० ३० । (२) शु० सं० अ० १० क० ३० ।

† "पितामहदशगणं सोमपानं सङ्ख्याय सर्पणम्" ( का० श्रौ० सू० १५. ८. १६ ) ।

‡ अभिषेचनीयशालात आरम्य दशपेययजनम्प्रति गच्छेत् । प्रतीष्टि-स्तोकं च भवति । तत्र प्रथमं हविरभिषेचनीयशालाया उत्तरतः समीप एवाऽग्नीन् स्थापयित्वा कर्तव्यम् । पुनस्तस्मात् स्थानात् उत्तरदेशेऽग्नीन् स्थापयित्वा द्वितीयम्, तस्योत्तरतस्तथैव तृतीयप्रभृति-दशमहविःपर्यन्तं कुर्यादुत्सृप्योत्सृप्य । अनेन प्रकारेण कुर्वन् दशपेयशलामध्ये दशमं हविः कुर्यात् । तथा च "देवयजनान्तरमेकैकेनोत्सर्पति, शालायामन्त्यम्" ( का० श्रौ० सू० १५. ८. २,३ ) ।

‡‡ "सावित्र-सारस्वत-त्वाष्ट्र-पौष्णेन्द्र-बार्हस्पत्य-वारुणाऽऽग्नेय-सौम्य-वैष्णवानि यथोक्तम्" ( का० श्रौ० सू० १५. ८. ४ ) ।

वा पुरोडाशः सविता वै देवानां प्रसविता सवितृप्रसूत-ऽएव तद्वरुणोऽनुसमसर्प्पत्तथो ऽएवैष ऽएतत्सवितृप्रसूत-ऽएवाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ६ ॥ अथ सारस्वतं चरुं निर्वपति । वाग्वै सरस्वती वाचैव तद्वरुणोऽनुसम सर्प्पत्तथो ऽएवैष ऽएतद्वाचैवाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ७ ॥ अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति । त्वष्टा वै रूपाणामीष्टे त्वष्ट्रैव तद्रूपैर्वरुणोऽनु समसर्प्पत्तथो ऽएवैष ऽएतत्त्वष्ट्रैव रूपैरनुसꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ८ ॥ अथ पौष्णं चरुं निर्वपति । पशवो वै पूषा पशुभिरेव तद्वरुणोऽनुसमसर्प्पत्तथो ऽएवैष ऽएतत्पशुभिरेवाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ९ ॥ अथैन्द्रमेकादशकपालं पुरोडाशं निर्वपति । इन्द्रियं वै वीर्य्यमिन्द्र ऽइन्द्रियेणैव तद्वीर्य्येण वरुणोऽनु समसर्प्पत्तथो एवैष ऽएतदिन्द्रियेणैव वीर्य्येणाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥१०॥ अथ बार्हस्पत्यं चरुं निर्वपति । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणोऽनु समसर्प्पत्तथो ऽएवैष ऽएतद् ब्रह्मणैवाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ११ ॥ अथ वारुणं यवमयं चरुं निर्वपति । स येनैवौजसेमाः प्रजा वरुणोऽगृह्णात्तेनैव तदोजसा वरुणोऽनु समसर्प्पत्तेनो ऽएवैष तदोजसाऽनु सꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ १२ ॥ उपसदो दशम्यो देवताः । तत्र पञ्च * पुण्डरीकाण्युप प्रयच्छति तां द्वादशपुण्डरीका-

* का० श्रौ० सू० १५. ८. ५ ।

ꣳस्रजं * प्रतिमुञ्चते सा दीक्षा तया दीक्षया दीक्षते ॥१३॥
अथ यद् द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य
सर्वं वै संवत्सरः सर्वेणैवैनमेतद्दीक्षयति यानि पुण्डरी-
काणि तानि दिवो रूपं तानि नक्षत्राणाꣳ रूपं ये व्रधका-
स्तेऽन्तरिक्षस्य रूपं यानि बिसानि तान्यस्यै तदेनमेषु
लोकेष्वधि दीक्षयति ॥ १४ ॥ अथ राजानं क्रीत्वा ।
द्वेधोपनह्य परिवहन्ति ततोऽर्द्धमासन्द्यामासाद्य प्रचरन्त्यथ
य ऽएषोऽर्द्धो ब्रह्मणो गृहे निहितो भवति तमासन्द्यामा-
साद्याऽऽतिथ्येन प्रचरति यदातिथ्येन प्रचरन्त्यथोपसद्भिः
प्रचरति यदोपसद्भिः प्रचरति ॥ १५ ॥ अथैतानि हवी-
ꣳषि निर्वपति । आग्नेयमष्टाकपालं पुरोडाशꣳ सौम्यं चरुं
वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्ट्यैवं
यजते ॥ १६ ॥ तदु तथा न कुर्यात् । ह्वलति वा ऽएष
यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य ऽउपसत्पथादेति
तस्मादुपसत्पथादेव नेयात् ॥ १७ ॥ स यदग्निं यजति ।
अग्निनैवैतत्तेजसाऽनु सꣳसर्पन्त्यथ यत्सोमं यजति सोमे-
नैवैतद्राज्ञाऽनु सꣳसर्पन्त्यथ यद्विष्णुं यजति यज्ञो वै विष्णु-
स्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते
॥ १८ ॥ स ऽएष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो
वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं
प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥१९॥ तस्य द्वादश प्रथमगर्भाः
पष्ठौह्यो दक्षिणा । द्वादश वै मासाः संवत्सरस्य संवत्सरः

* का० श्रौ० सू० १५. ८. ८।

प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्प्नोति तं प्रत्यक्ष-माप्प्त्वाऽऽरमन्न्कुरुते ॥ २० ॥ तासां द्वादश गर्ब्भाः । ताश्चतुर्विंशतिश्चतुर्विंशतिर्वै संवत्सरस्याऽर्द्धमासाः संवत्सरः प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्प्नोति तं प्रत्यक्ष-माप्प्त्वाऽऽरमन्न्कुरुते ॥२१॥ ता ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्म्माता ब्रह्मणे ददाति * हिरण्मयीᳫं स्रजमुद्गात्रे रुक्मᳫं होत्रे हिरण्मयौ प्प्राकाशावद्ध्वर्य्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छᳫंसिने वाससी नेष्टापोतृभ्यामन्न्यतरतोयुक्तं यवाचितमच्छावाकाय गामग्नीधे ॥ २२ ॥ ता वा ऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरः प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्प्नोति तं प्रत्यक्षमाप्प्त्वाऽऽरमन्न्कुरुते ॥ २३ ॥ (E)

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ पञ्चबिलसंज्ञकश्चरुः ]

आग्नेयो† ऽष्टाकपालः पुरोडाशो भवति । तं पूर्वार्द्धे ऽआसादयत्यैन्द्र ऽएकादशकपालः पुरोडाशो भवति सौम्म्यो

* "ब्रह्मणे ददात्यंशुवद्दक्षिणा, हिरण्मयीं स्रजमुद्गात्रे, रुक्मं होत्रे, हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे, वशां मैत्रावरुणायर्षभं ब्रह्मणाच्छंसिने, वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय, गामग्नीधे" ( का० श्रौ० सू० १५. ८. २२,२३ )।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७. ४. १।

† का० श्रौ० सू० १५. ९. २।

वा चरुस्तं दक्षिणार्द्ध ऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्द्ध ऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्द्ध ऽआसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य-ऽआसादयत्त्येष चरुः * पञ्चबिलस्तद्यत्पञ्च हवीꣳषि भवन्ति तेषां पञ्चबिलानि तस्माच्चरुः पञ्चबिलो नाम ॥ १ ॥ तद्य-देतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति यदृतून्यत्स्तोमान्न्यच्छन्दाꣳसि तस्म्मादेवैनमेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत्प्र वा पतेत्तस्माद्वा ऽएतेन राजसूययाजी यजते ॥ २ ॥ स यदाग्नेयेनाऽष्टाकपालेन पुरोडाशेन प्प्रचरति । यदेवैनं प्राचीं दिशꣳ समारोहयति यदृतून्यत्स्तोमान्न्यच्छन्दाꣳसि तस्मादेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्त्ये चराववनयति ॥ ३ ॥ अथ यदैन्द्रेणैकादशकपालेन पुरो-डाशेन प्प्रचरति । सौम्म्येन वा चरुणा यदेवैनं दक्षिणां दिशꣳ समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाꣳसि तस्म्मा-देवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्त्ये चरावन-यति ॥ ४ ॥ अथ यद्वैश्वदेवेन चरुणा † प्प्रचरति । यदेवैनं प्रतीचीं दिशꣳ समारोहयति यदृतून्यत्स्तोमान्न्यच्छन्दा-ꣳसि तस्मादेवैनमेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्त्ये चरावनयति ॥ ५ ॥ अथ यन्मैत्रावरुण्ण्या पयस्यया प्प्रचरति । यदेवैनमुदीचीं दिशꣳ समारोहयति यदृतून्य-

* वैशाखशुक्लपक्षे कस्मिंश्चिदहनि वैशाख्यां वा पञ्चबिलस्यानुष्ठानम्, "पञ्चबिल इति आग्ने-यादि-पञ्चहविष्कस्य कर्मणः संज्ञा" अस्यैवापरा संज्ञाऽवेष्टिरिति ।

† का० श्रौ० सू० १५. ९, ४ ।

स्तोमान्न्यच्छन्दाᳫंसि तस्मादेवैनमेतेन निष्क्रीणाति सᳫंस्रवं बार्हस्पत्ये चराववनयति तद्यत्सᳫंस्रवान्न्वार्हस्पत्ये चरावनयति सर्वत ऽएवाऽस्मिन्नेतदन्नाद्यं दधाति तस्मादु दिशो दिश ऽएव राज्ञेऽन्नाद्यमभिह्रियते ॥ ६ ॥ अथ यद्बार्हस्पत्येन चरुणा प्रचरति । यदेवैनमूर्ध्वां दिशᳫं समारोहयति यदृतून्न्यत्स्तोमान्न्यच्छन्दाᳫंसि तस्मादेवैनमेतेन निष्क्रीणाति ॥ ७ ॥ स य ऽएष ऽआग्नेयोऽष्टाकपालᳫं पुरोडाशो भवति । तस्य * हिरण्यं दक्षिणाऽऽग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्वा ऽएष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति ॥ ८ ॥ अथ य ऽएष ऽऐन्द्रऽएकादशकपालᳫं पुरोडाशो भवति । † तस्यर्षभो दक्षिणा स हैन्द्रो यदृषभो यद्यु सौम्म्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्म्यो यद्बभ्रुस्तं ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति ॥ ९ ॥ अथ य ऽएष वैश्वदेवश्चरुर्भवति । तस्य पृषन्न्गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत्पृषतो गोर्विशो वै विश्वे देवा भूमा वै विट् तस्मात्पृषन्न्गौर्दक्षिणा तᳫं होत्रे ददाति होता हि भूमा तस्मात्तᳫं होत्रे ददाति ॥ १० ॥ अथ यैषा मैत्रावरुणी पयस्या भवति । तस्यै वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि वशां न विन्देदपि यैव का

* का० श्रौ० सू० १५. ९. ५ ।

† का० श्रौ० सू० १५. ९. ६ ।

चाऽप्प्रवीता स्यात्सर्व्वा ह्येव वशाऽप्प्रवीता तामद्ध्वर्य्युभ्यां ददाति प्प्राणोदानौ वा ऽअद्ध्वर्य्यू प्प्राणोदानौ मित्रावरुणौ तस्म्मात्तामद्ध्वर्य्युभ्यां ददाति ॥ ११ ॥ अथ य ऽएष बार्हस्प्पत्त्यश्चरुर्भवति । तस्य शितिपृष्ठो गौर्द्दक्षिणैषा वाऽऊर्द्ध्वा बृहस्प्पतेर्द्दिक्तदेष ऽउपरिष्टादर्य्यम्म्णः पन्थास्तस्म्माच्छितिपृष्ठो बार्हस्प्पत्त्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्प्पतिर्व्वै देवानां ब्रह्मैष वा ऽएतस्य ब्रह्मा भवति तस्म्मात्तं ब्रह्मणे ददाति स हैतेनाऽपि विष्ठाब्राज्ज्यन्नाद्यकामो * यजेत तदस्मिन्त्सर्व्वतोऽन्नाद्यं दधाति स हाऽन्नादऽएव भवति ॥ १२ ॥(A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ प्रयुग्घविः ]

स वै † प्प्रयुजाᳬ हविर्व्विर्भियजते । तद्यत्प्रयुजाᳬ हविर्व्विर्भिर्य्यजत ऽऋतून्न्वा ऽएतत्त्सुषुवाणो युङ्क्ते तऽएनमृतवो युक्ता वहन्त्यृतून्न्वा प्प्रयुक्ताननुचरति तस्म्मात्प्रयुजाᳬ हविर्व्विर्भिर्य्यजते ॥ १ ॥ तानि वै द्वादश भवन्ति। द्वादश वै मासाः संवत्त्सरस्य तस्म्माद् द्वादश भवन्ति मासिमासि यजेतेत्त्याहुः को वेद मनुष्यस्य तस्म्मान्न मासि-

* का० श्रौ० सू० १५. ९. ६।

(A) एतद्ब्राह्मणस्था विषया अत्र ( का० श० ७. ४. २ ) द्रष्टव्याः।

† वैशाख्यां पञ्चबिलानन्तरं तस्मिन्नेवाऽहनि प्रथमं हविः, ज्यैष्ठ्यां द्वितीयं हविः, आषाढ्यां तृतीयमित्येवं मासान्तरता। द्वादशोत्तराणि प्रयुग्घवींषि मासान्तराणि" ( का० श्रौ० सू० १५. ९. ७ ) इति।

८०

मासि यजेत शम्म्यापराव्व्याधे शम्म्यापराव्व्याध ऽएव षड्भिर्य्यजते प्प्राङ् यानथ पुनरावृत्तः * शम्म्यापराव्व्याधे शम्म्यापराव्व्याध ऽएव षड्भिर्य्यजते ॥ २ ॥ तदु तथा न कुर्य्यात् । षडेवैतानि पूर्व्वाणि हवीᳬषि निर्व्वपति समानबर्हीᳬषि तासां देवतानाᳬ रूपं स्यथा शिशिरे युक्त्वा प्प्राञ्च ऽआप्प्रावृषं याऽयुस्तत्षडृतून्न्युङ्क्ते त ऽएनᳬ षडृतवो युक्ताः प्प्राञ्च ऽआप्प्रावृषं वहन्ति षडृतून्न्प्रयुक्ताना-प्प्रावृषमनुचरति पूर्व्वाग्निवाहां द्वौ दक्षिणा ॥ ३ ॥ षडेवो-त्तराणि हवीᳬषि निर्व्वपति । समानबर्हीᳬषि तासां देवतानाᳬ रूपं स्यथा पुनरावर्त्तेरन्न्वार्षिकमभि तत्षडृतून्न्युङ्क्ते त ऽएनᳬ षडृतवो युक्ता वार्षिकमभिवहन्ति षडृतून्प्रयुक्ता-न्न्वार्षिकमनुचरति † पूर्व्वाग्निवाहां द्वौ दक्षिणा तद्यत्पूर्व्वा-ग्निवाहो दक्षिणर्त्तून्न्वा ऽएतत्सुषुवाणो युङ्क्ते वहन्ति वा-ऽअनड्वाहस्तस्म्मात्पूर्व्वाग्निवाहो दक्षिणा ॥ ४ ॥ तद्ध स्म्मैतत्पुरा कुरुपञ्चाला ऽआहुः । ऋतवो वा ऽअस्म्मा-न्न्युक्ता वहन्त्यृतून्न्वा प्प्रयुक्ताननुचराम ऽइति यदेषाᳬ राजानो राजसूययाजिन ऽआसुस्तद्धस्म्म तदभ्याहुः ॥५॥ आग्नेयोऽष्टाकपालः पुरोडाशो भवति । सौम्म्यश्चरुः सावित्रो द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो बार्ह-स्प्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडाशो वैश्वानरो द्वादश-कपाल ऽएतानि षट्पूर्व्वाणि हवीᳬषि भवन्ति ॥ ६ ॥

* का० श्रौ० सू० १५. ९. ८ ।
† का० श्रौ० सू० १५. ९. ११ ।

[अर्धप्रपाठकः ६६] * षडेवोत्तरे चरवः । सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुः क्षैत्रपत्यश्चरुर्वारुणश्चरुरादित्यश्चरुरेत ऽउ षडुत्तरे चरवः ॥७॥ अथ श्येनीं विचित्रगर्भामदित्या ऽआलभते । तस्या ऽएषैवाऽऽवृद्याष्ट्रापद्यै वशाया ऽइयं वा ऽअदितिरस्याऽएवैनमेतद् गर्भं करोति तस्या ऽएतादृश्येव श्येनी विचित्रगर्भा दक्षिणा ॥८॥ अथ पृषतीं विचित्रगर्भां मरुद्भ्यऽआलभते । तस्या ऽएषैवाऽऽवृद्विशो वै मरुतो विशामेवैनमेतद् गर्भं करोति तस्या ऽएतादृश्येव पृषती विचित्रगर्भा दक्षिणा ॥ ९ ॥ एतौ † पशुबन्धौ । तदेतावेव सन्तावन्न्यथेवाऽऽलभन्ते यामदित्या ऽआलभन्त ऽआदित्येभ्यस्तामालभन्ते सर्वं वा ऽआदित्याः सर्वस्यैवैनमेतद् गर्भं करोति यां मरुद्भ्य ऽआलभन्ते विश्वेभ्यस्तां देवेभ्यऽआलभन्ते सर्वं वै विश्वे देवाः सर्वस्यैवैनमेतद् गर्भं करोति ॥ १० ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ केशवपनीयातिरात्रधर्माः ]

अभिषेचनीयेनेष्ट्वा । केशान्न वपते तद्यत्केशान्न वपते वीर्यं वा ऽएतदपाᳯं रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याऽभिषिक्तस्य केशान्प्रथमान्प्राप्नोति स यत्केशान्वपे-

* अत्र शतम् ३३०० ।

† वैशाखामावास्यायां सगर्भानूबन्ध्यावत् गर्भिणीभ्यां गोभ्यां भिन्नतन्त्रौ पशुबन्धौ स्वगुणदक्षिणौ कर्तव्याविति ।

(B) एतद्ब्राह्मणस्था विषया अत्र ( का० श० ७. ४. ३,४ ) द्रष्टव्याः ।

तैताᳯ श्रियं जिह्मां विनाशयेद्व्युदुह्यात्तस्मात्केशान्न वपते ॥ १ ॥ संवत्सरं न वपते । संवत्सरसम्मिता वै व्रतचर्य्या तस्मात्संवत्सरं न वपते स ऽएष व्रतविसर्ज्जनीयोपयोगो नाम स्तोमो भवति * केशवपनीयः ॥ २ ॥ तस्यैकविᳯशं प्रातःसवनᳯ । सप्तदशं माध्यन्दिनᳯसवनं पञ्चदशं तृतीयसवनᳯ सहोक्थैः सह षोडशिना सह रात्र्या ॥ ३ ॥ त्रिवृद्राथन्तरः सन्धिर्भवति । एष ऽएवैकविᳯशो य ऽएष तपति स ऽएतस्मादेकविᳯशादुपयुङ्क्ते स सप्तदशमभिप्प्रत्त्यवैति सप्तदशात्पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्प्रतिष्ठायां प्रतितिष्ठति ॥ ४ ॥ तस्य रथन्तरं पृष्ठं भवति । इयं वै रथन्तरमस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठत्त्यतिरात्रो भवति प्प्रतिष्ठा वा ऽअतिरात्रस्तस्मादतिरात्रो भवति ॥ ५ ॥ स वै न्न्येव वर्त्तयते । केशान्न वपते वीर्य्यं वा ऽएतदपाᳯ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याऽभिषिक्तस्य केशान्प्रथमान्प्राप्नोति स यत्केशान्न्वपेतैताᳯ श्रियं जिह्मां विनाशयेद्व्युदुह्यादुथ यन्निवर्त्तयते तदात्मन्न्येवैताᳯ श्रियं नियुनक्ति तस्मान्न्येव वर्त्तयते केशान्न वपते तस्यैषैव व्रतचर्य्या भवति यावज्जीवं नाऽस्यां प्रतितिष्ठति ॥ ६ ॥ आसन्द्या ऽउपनहा ऽउपमुञ्चते । उपानद्भ्यामधि यदस्य यानं भवति रथो वा किञ्चिद्वा सर्वं वा ऽएष ऽइदमुपर्य्युपरि भवत्त्यर्वागेवाऽस्मादिदᳯ सर्वं भवति यो राज-

* का० श्रौ० सू० १५. ९. २१ ।

सूयेन यजते तस्मादस्यैषैव व्रतचर्य्या भवति यावज्जीवं नाऽस्यां प्रतितिष्ठति ॥ ७ ॥ (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अथ चरकसौत्रामणीप्रयोगः ]

( तत्र त्रिपशुबन्धः, सुरानिर्माणम्, पितॄणामुस्थानादिकञ्च )

श्येत ऽआश्विनो भवति । * श्येताविव ह्यश्विनाव-विर्म्मल्हा † सारस्वती भवत्यृषभमिन्द्राय सुत्राम्ण ऽआल-भते दुर्वेदा ऽएवꣳ समृद्धाः पशवो यद्येवꣳ समृद्धान्न विन्देदप्प्यजानेवाऽऽलभेरँस्ते हि सुश्रपतरा भवन्ति स यद्यजानालभेरँल्लोहित ‡ ऽआश्विनो भवति तद्यदेतया यजते ॥ १ ॥ त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्ष ऽआस तस्य त्रीण्ण्येव मुखान्यासुस्तद्यदेवꣳ रूप ऽआस तस्मा-द्विश्वरूपो नाम ॥ २ ॥ तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्न्यस्म्मा ऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्प्रचिच्छेद ॥ ३ ॥ स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक ऽइव बभ्रुरिव हि सोमो राजा ॥ ४ ॥ अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्क ऽइव वदत्यभि-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा – का० श० ७. ५. २; काठ० १५. ८, ९; मै० सं० ११. ६. १३; तै० सं० १. ८. १६ ।

* "उत्तरे शुक्ले सौत्रामणी" का० श्रौ० सू० १५. ९. २२; "सन्तिष्ठते राजसूयः तेनेष्ट्वा सौत्रामण्या यजेत" आप० श्रौ० सू० १८. २२. २०, २१ ।

† का० श्रौ० सू० १५. १०. ४–७ ।

‡ का० श्रौ० सू० १५. १०. ९ ।

माद्यन्निव हि सुरां पीत्वा वदति ॥ ५ ॥ अथ यदन्यस्स्मा-ऽअशनायाऽऽस । ततस्तित्तिरिः समभवत्तस्मात्स विश्व-रूपतम ऽइव सन्त्येव घृतस्तोका ऽइव त्वन्मधुस्तोका-ऽइव त्वत्पर्ण्णेष्वाश्चुतिता ऽएवᳬ रूपमिव हि स तेनाऽश-नमावयत् ॥ ६ ॥ स त्वष्टा चुक्रोध । कुविन्मे पुत्रमबधी-दिति सोऽपेन्द्रमेव सोममाजह्रे स यथाऽयᳬ सोमः प्रसुत ऽएवमपेन्द्र ऽएवाऽऽस ॥ ७ ॥ इन्द्रो ह वा ऽईक्षा-ञ्चक्रे । इदं वै मा सोमादन्तरुर्यन्तीति स यथा बलीयान-बलीयस ऽएवमनुपहूत ऽएव यो द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिᳬस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवाऽस्य न दुद्राव तस्मात्प्राय-श्चित्तिरास स यद्धाऽपि मुखाद्द्रोष्यन्न हैव प्रायश्चित्तिर-भविष्यत् ॥ ८ ॥ चत्वारो वै वर्ण्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रो न हैतेषामेकश्चन भवति यः सोमं वमति स यद्धैतेषामेकश्चित्स्यात्स्याद्धैव प्रायश्चित्तिः ॥ ९ ॥ स यन्नस्तोऽद्रवत् । ततः सिᳬहः समभवदथ यत्कर्ण्णा-भ्यामद्रवत्ततो वृकः समभवदथ यदवाचः प्राणाद-द्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरा-त्प्राणाऽदद्रवत्सा परिस्रुदथ त्रिर्न्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्वेणैव व्यार्द्ध्यत सर्वᳬ हि सोमः ॥ १० ॥ स सोमातिपूतो मङ्कुरिव चचार । तमेतयाऽऽ-श्विनावभिषज्यतां तᳬ सर्वेणैव समर्द्धयताᳬ सर्वᳬ हि सोमः स वसीयानेवेष्ट्वाऽभवत् ॥ ११ ॥ ते देवा ऽअब्रुवन् ।

सुत्रा तं व्रतैनमत्राऽऽसतामिति तस्मात्सौत्रामणी नाम ॥ १२ ॥ स हैतयाऽपि सोमातिपूतं भिषज्ज्येत् । सर्वेण वा ऽएष व्यृद्ध्यते यꣳ सोमोऽतिपवते सर्वꣳ हि सोमस्तꣳ सर्वेणैव समर्द्धयति सर्वꣳ हि सोमः स व्वसीयानेवेष्ट्वा भवति तस्मादु हैतयाऽपि सोमातिपूतं भिषज्ज्येत् ॥ १३ ॥ तद्यदेतया राजसूययाजी यजते । सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा ऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत्सौत्रामण्यनया मेऽपीष्टमसदनयाऽपि सूया ऽइति तस्माद्वा ऽएतया राजसूययाजी यजते ॥ १४ ॥ अथ यदाश्विनो भवति । अश्विनौ वा ऽएनमभिषज्ज्यतां तथो ऽएवैनमेष ऽएतदश्विभ्यामेव भिषज्ज्यति तस्मादाश्विनो भवति ॥ १५ ॥ अथ यत्सारस्वतो भवति । व्वाग्वै सरस्वती व्वाचा वा ऽएनमश्विनावभिषज्ज्यतां तथोऽएवैनमेष ऽएतद्वाचैव भिषज्ज्यति तस्मात्सारस्वतो भवति ॥१६॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनमेतद्भिषज्ज्यति तस्मादैन्द्रो भवति ॥१७॥ एतेषु पशुषु । * सिꣳहलोमानि व्वृकलोमानि शार्दूललोमानीत्त्यावपत्त्येतद्वै ततः समभवद्यदेनꣳ सोमोऽत्त्यपवत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतान्यावपति ॥ १८ ॥ तदु तथा न कुर्य्यात् । उल्कया ह स नखिन्या पशूननु प्लुवति य ऽएतानि पशुष्वावपति तस्मादु परिस्रुत्येवाऽऽवपेत्तथा होल्कया नखिन्या पशून्नाऽनु प्लुवति

* का० श्रौ० सू० १५. ९. २५ ।

तथो ऽएवैनꣳ समर्द्धयति कृत्स्नं करोति तस्मादु परिस्रुत्येवाऽऽवपेत ॥ १९ ॥ अथ पूर्वेद्युः * परिस्रुतꣳ सन्दधा'त्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे'ति सा यदा परिस्रुद्भवत्यथैनया प्रचरति ॥ २० ॥ द्वावग्नी † ऽउद्धरन्ति । उत्तरवेदावेवोत्तरमुद्धते दक्षिणं नेत्सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति तस्माद् द्वावग्नी ऽउद्धरन्त्युत्तरवेदावेवोत्तरमुद्धते दक्षिणमथ यदा वपाभिः प्रचरत्यथैतया परिस्रुता प्रचरति ॥ २१ ॥ तां दर्भैः ‡ पावयति । पूतासदिति 'वायुः पूतः[2] पवित्रेण प्रत्यङ् सोमो ऽअतिस्रुतः । इन्द्रस्य युज्यः सखे'ति तत्कुवलसक्तून्कर्कन्धुसक्तून्बदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत्रिर्न्निरष्ठीवत्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतानावपति ॥ २२ ॥ अथ ग्रहान्गृह्णाति । एकं वा त्रीन्वैकस्त्वेव ग्रहीतव्य ऽएका हि पुरोरुग्भवत्येकाऽनुवाक्यैका याज्या तस्मादेक ऽएव ग्रहीतव्यः ॥ २३ ॥ स ‡‡ गृह्णाति । 'कुविदङ्ग[3] यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमऽउक्तिं यजन्ति । उपयामगृहीतोस्यश्विभ्यां त्वा सरस्वत्यै

---

* का० श्रौ० सू० १५. ९. २४ ।

( १ ) शु० सं० अ० १० क० ३१ ।

† का० श्रौ० सू० १५. १०. ७ ।

‡ का० श्रौ० सू० १५. १०. ९ ।

( २ ) शु० सं० अ० १० क० ३१ ।

‡‡ का० श्रौ० सू० १५. १०. १०,११ ।

( ३ ) शु० सं० अ० १० क० ३२ ।

त्वेन्द्राय त्वा सुत्राम्ण' ऽइति यद्यु त्रीन्गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादुथाऽऽहाऽश्विभ्याथं सरस्वत्या ऽइन्द्राय सुत्राम्णेऽनुब्रूहीति ॥ २४ ॥ सोऽन्वाह । 'युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती ऽइन्द्रं कर्म्मस्वावतमि'त्याश्राव्याऽऽहाऽश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजेति ॥ २५ ॥ स यजति । 'पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳ सनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगि'ति द्विर्होता वषट्करोति द्विरध्वर्य्युर्ज्जुहोत्याहरति भक्षं यद्यु त्रीन्गृह्णीयादेतस्यै वाऽनुहोममितरौ हूयेते ॥ २६ ॥ अथ कुम्भः । शतवितृण्णो वा भवति नववितृण्णो वा स यदि शतवितृण्णः शताऽऽयुर्वा ऽअयं पुरुषः शततेजाः शतवीर्य्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्प्राणास्तस्मान्नववितृण्णः ॥ २७ ॥ तꣳ * शिक्योदुतम् । उपर्युपर्य्याहवनीयं धारयन्ति स या परिशिष्टा परिस्रुद्भवति तामासिञ्चति तां विक्षरन्तीमुपतिष्ठते पितृणाथं सोमवतां तिसृभिर्ऋग्भिः पितृणां बर्हिषदां तिसृभिर्ऋग्भिः पितृणामग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्यदेवमुपतिष्ठते यत्र वै सोम ऽइन्द्रमत्त्यपवत स यत्पितृनगच्छत्तया वै पितरस्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेवमुपतिष्ठते ॥ २८ ॥ अथैतानि † हवीꣳषि निर्व-

(१) शु० सं० अ० १० क० ३३ । (२) शु० सं० अ० १० क० ३४ ।

* का० श्रौ० सू० १५. १०. १६ ।

† का० श्रौ० सू० १५. १०. १७ ।

पति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं व्वारुणं यवमयं चरुमैन्द्रमेकादशकपालं पुरोडाशम् ॥ २९ ॥ स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्प्रसूत ऽएवैतद्भिषज्ज्यति तस्मात्सावित्रो भवति ॥ ३० ॥ अथ यद्वारुणो भवति । व्वरुणो वा ऽआर्प्पयिता तद्य ऽएवाऽऽर्प्पयिता तेनैवैतद्भिषज्ज्यति तस्माद्वारुणो भवति ॥ ३१ ॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्ज्यति तस्मा-दैन्द्रो भवति ॥ ३२ ॥ स यदि हैतयाऽपि सोमातिपूतं भिषज्ज्येत् । इष्ट्वा ऽअनुयाजा भवन्त्यव्व्यूढे स्रुचावथैतैर्ह-विर्बिभः प्प्रचरति पश्चार्द्धे सोमोऽतिपवते पश्चार्द्धेवैनमेतेन मेधेनाऽपि दधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्व्व-पेदुथ यदा व्वपाभिः प्प्रचरत्यथैतेनाऽश्विनेन द्विकपालेन पुरोडाशेन प्प्रचरति ॥ ३३ ॥ तदु तथा न कुर्य्यात् । ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य-ऽएवं करोति तस्माद्यत्रैवैतेषां पशूनां व्वपाभिः प्प्रचरन्ति तदेवैतैर्हविर्बिभः प्प्रचरेयुर्न्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्व्वपेत् ॥ ३४ ॥ तस्य नपुंसको * गौर्द्दक्षिणा । न वा-ऽएष स्त्री न पुमान्न्यन्नपुंसको गौर्य्यदह पुमाँस्तेन न स्त्री यदु स्त्री तेनो न पुमाँस्तस्मान्नपुंसको गौर्द्दक्षिणा-ऽश्वा वा रथवाही सा हि न स्त्री न पुमान्न्यदश्वा रथवाही

* का० श्रौ० सू० १५. १०. १८ ।

यदुहरथं व्वहति तेन न स्त्री यदु स्त्री तेनो न पुमाँस्तस्मा-
दुश्वा रथवाही दक्षिणा ॥ ३५ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ त्रैधातवीष्टिः ]

ऐन्द्रावैष्णवं * द्वादशकपालं पुरोडाशं निर्व्वपति । तद्य-
देतया † यजते ऽव्वृत्रे ह वा ऽइदमग्रे सर्व्वमास यदृचो
यद्यजूꣳषि यत्सामानि तस्मा ऽइन्द्रो व्वज्ज्रं प्राऽजिही-
र्षीत् ॥ १ ॥ स ह व्विष्णुमुवाच । ऽव्वृत्राय वै व्वज्ज्रं प्रहरि-
ष्याम्म्यनु मा तिष्ठस्वेति तथेति ह व्विष्णुरुवाचाऽनु त्त्वा
स्त्थास्ये प्प्रहरेति तस्मा ऽइन्द्रो व्वज्ज्रमुद्ययाम स ऽउद्य-
ताद्वज्ज्राद्वृत्रो बिभयाञ्चकार ॥ २ ॥ स होवाच । अस्ति वा-
ऽइदं व्वीर्य्यं तन्नु ते प्प्रयच्छानि मा नु मे प्प्रहार्षीरिति तस्मै
यजूꣳषि प्प्राऽयच्छत्तस्मै द्वितीयमुद्ययाम ॥३॥ स होवाच ।
अस्ति वा ऽइदं व्वीर्य्यं तन्नु ते प्प्रयच्छानि मा नु मे प्प्रहा-
र्षीरिति तस्मा ऽऋचः प्राऽयच्छत्तस्मै तृतीयमुद्ययाम ॥४॥ स
होवाच । अस्ति वा ऽइदं व्वीर्य्यं तन्नु ते प्प्रयच्छानि मा नु मे
प्प्रहार्षीरिति तस्मै सामानि प्प्राऽयच्छत्तस्मादप्प्येतर्ह्येवमेवै-
तैर्व्वेदैर्य्यज्ञं तन्वते यजुर्ब्भिरेवाऽग्रेऽथऽर्ग्भिरथ सामभिरेवꣳ

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ७. ५. १; काठ० १५. ८, ९; मै० सं० ११. ६. १३; तै० सं० ८. १६, १७ ।

* "द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालाः" इत्यादि—( तै० सं० २. ४. ११. ११ ) ।

† आख्यायिकेयं ( तै० सं० २. ४. १२ ) अनुवाकेऽपि श्रुतः ।

ह्यस्म्मा ऽएतत्प्रा ऽयच्छत् ॥५॥ तस्य यो योनिराशय ऽआस । तमनुपरामृश्श्य सँल्लुप्प्या ऽच्छिनत्त्सैषेष्टिरभवत्तद्यदेतस्मिन्ना-शये त्रिधातुरिवैषा विद्या ऽऽशेत तस्म्मात्त्रैधातवी नाम ॥६॥ अथ यदैन्द्रा*वैष्णवꣳ हविर्ब्भवति । इन्द्रो हि व्वज्ज्रमुदय-च्छद्विष्णुरन्न्वतिष्ठत ॥७॥ अथ यद् द्वादशकपालो भवति । द्वादश वै मासाः संव्वत्सरस्य संव्वत्सरसम्मितैषेष्टिस्तस्म्माद् द्वादशकपालो भवति ॥ ८ ॥ तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवा ऽग्रे पिण्डमधिश्श्रयति तद्यजुषाꣳ रूपमथ यवमयं तदृचाꣳ रूपमथ व्रीहिमयं तत्साम्नाꣳ रूपं तदेतत्त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिन-ऽउदवसानीयेष्टिर्ब्भवति ॥ ९ ॥ सर्व्वान्न्वा ऽएष यज्ञक्रतू-नवरुन्धे । सर्व्वा ऽइष्टीरपि दर्व्विहोमान्न्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सोऽस्म्मात्पराङिव भवत्येता-वान्न्वै सर्व्वो यज्ञो यावानेष त्रयो व्वेदस्तस्यैतद्रूपं क्रियत ऽएष योनिराशयस्तदेतेन त्रयेण व्वेदेन पुनर्य्यज्ञमारभते तथाऽस्या-ऽयातयामा यज्ञो भवति तथो ऽअस्म्मान्न पराङ् भवति ॥ १० ॥ सर्व्वान्न्वा ऽएष यज्ञक्रतूनवरुन्धे । सर्व्वा ऽइष्टीरपि दर्व्विहोमान्न्यो राजसूयेन यजते देवस्रष्टो वा ऽएषेष्टिर्य्य-त्त्रैधातव्व्यनया मेऽपीष्टमसदनया ऽपि सूया ऽइति तस्म्माद्वा-ऽएषा राजसूययाजिन ऽउदवसानीयेष्टिर्ब्भवति ॥ ११ ॥ अथो यः सहस्रं व्वा भूयो वा दद्यात् । तस्य ह्या ऽप्प्युदवसा-नीया स्याद्रिरिचान ऽइव व्वा ऽएष भवति यः सहस्रं व्वा

* का० श्रौ० सू० १५. ७. ३०, ३१ ।

भूयो वा ददात्येतद्वै सहस्रं व्वाचः प्प्रजातं यदेष त्रयो
व्वेदस्तत्सहस्रेण रिरिचानं पुनराप्प्याययति तस्मादु ह
तस्याऽप्प्युदवसानीया स्यात् ॥ १२ ॥ अथो ये दीर्घसत्र-
मासीरन् । संव्वत्सरं व्वा भूयो वा तेषाꣳ हाऽप्प्युदवसानीया
स्यात्सर्वं वै तेषामाप्तं भवति सर्वं जितं ये दीर्घसत्रमासते
संव्वत्सरं व्वा भूयो वा सर्वमेषां तस्मादु ह तेषामप्प्युदव-
सानीया स्यात् ॥ १३ ॥ अथो हैनयाऽप्प्यभिचरेत् । एतया
वै भद्रसेनमाजातशत्रवमारुणिरभि चचार क्षिप्प्रं किलाऽऽ-
स्तृणुतेति ह स्माऽऽह याज्ञवल्क्योऽपि ह व्वा ऽएनयेन्द्रो
व्वृत्रस्याऽऽस्थानमच्छिनदपि ह व्वा ऽएनयास्थानं छिनत्ति
य ऽएनयाऽभिचरति तस्मादु हैनयाऽप्प्यभिचरेत् ॥ १४ ॥
अथो हैनयाऽपि भिषज्येत् । यं न्वेवैकयर्चा भिषज्ये-
देकेन यजुषैकेन साम्ना तं न्वेवाऽगदं कुर्य्यात्किमु यं
त्रयेण व्वेदेन तस्मादु हैनयाऽपि भिषज्येत् ॥ १५ ॥ तस्यै
त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे
ददाति न वै ब्रह्मा प्प्रचरति न स्तुतेन शꣳसत्यथ स यशो
न वै हिरण्येन किञ्चन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि
शतमानानि ब्रह्मणे ददाति ॥ १६ ॥ तिस्रो † धेनूर्होत्रे ।
भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे
॥ १७ ॥ त्रीणि व्वासाꣳस्यध्वर्यवे । तनुते व्वा ऽअध्वर्यु-
र्यज्ञं तन्वते व्वासाꣳसि तस्मात्त्रीणि व्वासाꣳस्यध्वर्यवे

† का० श्रौ० सू० १५. ७. ३०, ३३ ।

* गामग्नीधे ॥ १८ ॥ ता वा ऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसम्मितैषेष्टिस्तस्माद् द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥(E)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

माध्यन्दिनीये शथपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१३१॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

सवनाम † पञ्चमं काण्डं समाप्तम् ॥ ५ ॥



* का० श्रौ० सू० १५. १०. २४ ।

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ७. ५. ३ ।

† अस्मिन् काण्डे कण्डिका संख्या ४७१ ।

# अथोखासम्भरणं नाम षष्ठं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः—उखासम्भरणम्, विष्णुक्रम-वात्सप्रोपस्थाने, वनीवाहनं च ।



## [ अथ हिरण्यगर्भकर्तृकसृष्टिवर्णनम् ]

( तत्र विराडुत्पत्तिः, पृथिव्याद्युत्पत्तिवर्णनं च )

॥ ओ३म् ॥ * असद्वा ऽइदमग्र ऽआसीत् । तदाहुः किं † तदसदासीदित्यृषयो वाऽव तेऽग्रेऽसदासीत्तदाहुः के त ऽऋषय ऽइति प्प्राणा वा ऽऋषयस्ते यत्पुराऽस्मात्सर्व्वस्म्मादिदमिच्छन्तः श्रमेण तपसाऽरिषँस्तस्म्मादृषयः ॥ १ ॥ स योऽयं मध्ये प्प्राणः । एष ऽएवेन्द्रस्तानेष प्प्राणान्मध्यत ऽइन्द्रियेणैन्ध यदैन्ध तस्म्मादिन्ध ऽइन्धो ह वै तमिन्द्र ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्त ऽइद्धाः सप्त नाना पुरुषानसृजन्त ॥२॥ तेऽब्रुवन् । न वा ऽइत्थः सन्तः शक्ष्यामः प्प्रजनयितुमिमान्त्सप्त पुरुषानेकं पुरुषं करवामेति त ऽएतान्त्सप्त पुरुषानेकं पुरुषमकुर्व्वन्यदूर्द्ध्वं नाभेस्तौ द्वौ समौब्जन्यदवाङ्नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्प्रतिष्ठैक ऽआसीत् ॥ ३ ॥ अथ यैतेषाᳬं सप्तानां पुरुषाणाᳬं श्रीः । यो रस ऽआसीत्तमूर्द्ध्वᳬं समुदौहँस्तदस्य

---

* "नैवेह किञ्चनाऽग्र आसीत्" इत्यादि—बृ० उप० ब्रा० १०. ६. ५; छान्दोग्यब्राह्मणे तु "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" इत्यादि ( ८. २. १–४ ) ।

† ऋ० सं० १०. १२९. १–१७ ।

शिरोऽभवद्यच्छ्रियꣳ समुदौहँस्तस्माच्छिरस्तस्मिन्नेतस्मिन्प्राणा ऽअश्रयन्त तस्माद्वेवैतच्छिरोऽथ यत्प्राणा ऽअश्रयन्त तस्मादु प्राणाः श्रियोऽथ यत्सर्वस्मिन्नश्रयन्त तस्मादु शरीरम् ॥ ४ ॥ स ऽएव पुरुषः प्रजापतिरभवत्। स यः सः पुरुषः प्रजापतिरभवदयमेव स योऽयमग्निश्चीयते ॥ ५ ॥ स वै सप्त पुरुषो भवति। सप्त पुरुषो ह्ययं पुरुषो यच्चत्वार ऽआत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्याऽऽत्मा त्रयः पक्षपुच्छान्यथ यदेकेन पुरुषेणाऽऽत्मानं वर्द्धयति तेन वीर्य्येणाऽयमात्मा पक्षपुच्छान्युद्यच्छति ॥ ६ ॥ अथ यश्चितेऽग्निर्निधीयते। ये वै तेषाꣳ सप्तानां पुरुषाणाꣳ श्रीर्यो रसस्तमेतदूर्ध्वꣳ समुदूहन्ति तदस्यैतच्छिरस्तस्मिन्नेतस्मिन्त्सर्वे देवाः श्रिता ऽअत्र हि सर्वेभ्यो देवेभ्यो जुह्वति तस्माद्वेवैतच्छिरः ॥ ७ ॥ सोऽयं पुरुषः प्रजापतिरकामयत। भूयान्त्स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याꣳ सैवाऽस्मै प्रतिष्ठाऽभवत्तस्मादाहुर्ब्रह्माऽस्य सर्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति प्रतिष्ठा ह्येषा यद् ब्रह्म तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत ॥ ८ ॥ सोऽपोऽसृजत। वाच ऽएव लोकाद्वागेवाऽस्य साऽसृज्यत सेदꣳ सर्वमाप्नोद्यदिदं किञ्च यदाप्नोत्तस्मादापो यदवृणोत्तस्माद्वाः * ॥ ९ ॥ सोऽकामयत।

* सा वाक् सर्वव्यापकत्वात् 'आपः' उच्यन्ते, जगदावरणाच्चासां वाः शब्दवाच्यत्त्वम्। वृणोतेरुत्पन्नो 'वाः' शब्द इति ( सा० भा० ६. १. १. ९ )।

आभ्योऽद्भ्योऽधि प्प्रजायेयेति सोऽनया त्रय्या विद्यया सहाऽपः प्प्राऽऽविशत्तत ऽआण्डꣳ समवर्त्तत तदभ्यमृशद-स्त्वित्यस्तु भूयोऽस्त्वित्येव तदब्रवीत्ततो ब्रह्मैव प्प्रथमम-सृज्यत त्रय्येव विद्या तस्मादाहुर्ब्रह्माऽस्य सर्वस्य प्प्रथम-जमित्यपि हि तस्मात्पुरुषाद् ब्रह्मैव पूर्वमसृज्यत तदस्य तन्मुखमेवाऽसृज्यत तस्मादनूचानमाहुरग्निकल्प ऽइति मुखꣳ ह्येतदग्नेर्यद् ब्रह्म ॥ १० ॥ अथ यो गर्भोऽन्तरा-ऽऽसीत्। सोऽग्निरसृज्यत स यदस्य सर्वस्याऽग्रमसृज्यत तस्मादग्रिरग्रिर्ह* वै तमग्निरित्याचक्षते परोऽक्षं परोऽक्ष-कामा हि देवा ऽअथ यदश्रु सङ्क्षरितमासीत्सोऽश्रुरभव-दश्रुर्ह वै तमश्व ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यदरसदिव स रासभोऽभवदथ यः कपाले रसो लिप्त ऽआसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्व्यभवत् ॥ ११ ॥ सोऽकामयत। आभ्योऽद्भ्यो-ऽधीमां प्रजनयेयमिति ताꣳ संक्लिश्याऽप्प्सु प्प्राऽविद्ध्यत्तस्यै यः पराङ् रसोऽत्यक्षरत्स कूर्म्मोऽभवदथ यदूर्द्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्द्ध्वमद्भ्योऽधि जायते सेयꣳ सर्वाऽप ऽएवाऽनु-व्यैत्तदिदमेकमेव रूपꣳ समदृश्यताऽप ऽएव ॥ १२ ॥ सोऽकामयत। भूय ऽएव स्यात्प्रजायेतेति सोऽश्राम्म्यत्स तपोऽतप्प्यत स श्रान्तस्तेपानः फेनमसृजत सोऽवेदन्न्यद्वा-ऽएतद्रूपं भूयो वै भवति श्राम्म्याण्ण्येवेति स श्रान्तस्तेपानो मृदꣳ शुष्काऽपमूषसिकतꣳ शर्क्करामश्मानमयो हिरण्ण्य-

* 'तस्मादग्निरग्निर्ह वै' इति पाठः 'क' पुस्तके दृश्यते।

मोषधिवनस्पत्यस्सृजत तेनेमां पृथिवीं प्राऽच्छादयत् ॥ १३ ॥ ता वा ऽएता नव सृष्टयः । इयमसृज्यत तस्मा-दाहुस्त्रिवृदग्निरितीयꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयते ॥ १४ ॥ अभूद्वा ऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्सेयꣳ सर्वा कृत्स्ना मन्यमाना गायद्यदगाय-त्तस्मादियं गायत्र्यथो ऽआहुरग्निरेवाऽस्यै पृष्ठे सर्वꣳ कृत्स्नो मन्यमानोऽगायद्यदगायत्तस्मादग्निर्गायत्र ऽइति तस्मादु हैतद्यः सर्वꣳ कृत्स्नो मन्यते गायति वैव गीते वा रमते ॥ १५ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वाय्वन्तरिक्षादिसृष्टिः ]

सोऽकामयत प्रजापतिः । भूय ऽएव स्यात्प्रजा-येतेति सोऽग्निना पृथिवीं मिथुनꣳ समभवत्तत ऽआण्डꣳ समवर्त्तत तदभ्यमृशत्पुष्यत्विति पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् ॥ १ ॥ स यो गर्भोऽन्तराऽऽसीत् । स वायुरसृज्य-ताऽथ यदश्रु सङ्क्षरितमासीत्तानि वयाꣳस्यभवन्नथ यः कपाले रसो लिप्त ऽआसीत्ता मरीचयोऽभवन्नथ यत्कपाल-मासीत्तदन्तरिक्षमभवत् ॥ २ ॥ सोऽकामयत । भूय ऽएव स्यात्प्रजायेतेति स वायुनाऽन्तरिक्षं मिथुनꣳ समभवत्तत-ऽआण्डꣳ समवर्त्तत तदभ्यमृशद्यशो बिभृहीति ततोऽसावा-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. १. १ ।

दित्योऽसृज्ज्यतैष वै यशोऽथ यदश्रु सङ्क्षरितमासीत्सोऽ-
श्मा पृश्निरभवदश्रुर्ह वै तमश्मेत्याचक्षते परोऽक्षं परो-
ऽक्षकामा हि देवा ऽअथ यः कपाले रसो लिप्त ऽआसीत्ते
रश्मयोऽभवन्नथ यत्कपालमासीत्सा द्यौरभवत् ॥ ३ ॥
सोऽकामयत। भूय ऽएव स्यात्प्रजायेतेति स ऽआदित्येन
दिवं मिथुनꣳ समभवत्तत ऽआण्डꣳ समवर्त्तत तदुभ्य-
मृशद्रेतो बिभृहीति ततश्चन्द्रमा ऽअसृज्ज्यतैष वै रेतोऽथ
यदश्रु सङ्क्षरितमासीत्तानि नक्षत्राण्यभवन्नथ यः कपाले
रसो लिप्त ऽआसीत्ता ऽअवान्तरदिशोऽभवन्नथ यत्कपाल-
मासीत्ता दिशोऽभवन् ॥४॥ स ऽइमाँल्लोकान्त्सृष्ट्वाऽकामयत।
ताः प्रजाः सृजेय या म ऽएषु लोकेषु स्युरिति ॥ ५ ॥ स
मनसा वाचं मिथुनꣳ समभवत्। सोऽष्टौ द्रप्सान्गर्भ्यं-
भवत्तेऽष्टौ वसवोऽसृज्ज्यन्त तानस्यामुपाऽऽदधात् ॥ ६ ॥ स
मनसैव। वाचं मिथुनꣳ समभवत्स ऽएकादश द्रप्सान्ग-
र्भ्यंभवत्त ऽएकादश रुद्रा ऽअसृज्ज्यन्त तानन्तरिक्ष ऽउपा-
ऽऽदधात् ॥७॥ स मनसैव। वाचं मिथुनꣳ समभवत्स द्वादश
द्रप्सान्गर्भ्यंभवत्ते द्वादशाऽऽदित्या ऽअसृज्ज्यन्त तान्दिव्यु-
पाऽऽदधात् ॥ ८ ॥ स मनसैव। वाचं मिथुनꣳ समभवत्स
गर्भ्यंभवत्स विश्वान्देवानसृजत तान्दिक्षूपाऽऽदधात् ॥ ९ ॥
अथो ऽआहुः। अग्निमेव सृष्टं वसवोऽन्वसृज्ज्यन्त तानस्या-
मुपाऽऽदधाद्वायुꣳ रुद्रास्तानन्तरिक्ष ऽआदित्यमादित्यास्ता-
न्दिवि विश्वे देवाश्चन्द्रमसं तान्दिक्षूपाऽऽदधादिति ॥ १० ॥
अथो ऽआहुः। प्रजापतिरेवेमाँल्लोकान्त्सृष्ट्वा पृथिव्यां

प्रत्यतिष्ठत्तस्मा ऽइमा ऽओषधयोऽन्नमपच्च्यन्त तदाश्नात्स गर्ब्भ्यभवत्स ऽऊर्द्ध्वेब्भ्य ऽएव प्प्राणेब्भ्यो देवानसृजत येऽवाञ्चः प्प्राणास्तेब्भ्यो मर्त्याः प्प्रजा ऽइत्यतो यतमथाऽसृजत तथाऽसृजत प्रजापतिस्त्वेवेदꣳ सर्वमसृजत यदिदं किञ्च ॥ ११ ॥ स प्प्रजाः सृष्ट्वा । सर्वमाजिमित्वा व्व्यस्रꣳसत तस्मादु हैतद्यः सर्वमाजिमेति व्व्येव स्रꣳसते तस्माद्विस्रस्तात्प्राणो मद्ध्यत ऽउदक्रामत्तस्मिन्नेनमुत्क्रान्ते देवा ऽअजहुः ॥१२॥ सोऽग्निमब्रवीत् । त्वं मा सन्धेहीति किं मे ततो भविष्यतीति त्वया माऽऽचक्षान्तै यो वै पुत्राणार्द्धꣳ राद्ध्यते तेन पितरं पितामहं पुत्रं पौत्रमाचक्षते त्वया माऽऽचक्षान्ता ऽअथ मा सन्धेहीति तथेति तमग्निः समदधात्तस्मादेतं प्रजापतिꣳ सन्तमग्निरित्याचक्षत ऽआह वा ऽएनेन पितरं पितामहं पुत्रं पौत्रं चक्षते य ऽएवं वेद ॥ १३ ॥ तमब्रवीत् । कस्मिँस्त्वोपधास्यामीति हित ऽएवेत्यब्रवीत्प्राणो वै हितं प्राणो हि सर्वेब्भ्यो भूतेब्भ्यो हितस्तद्यदेनꣳ हित ऽउपाऽऽदधात्तस्मादाहोपधास्याम्म्युपदधाम्म्युपाऽधामिति ॥ १४ ॥ तदाहुः । किꣳ हितं किमुपहितमिति प्प्राण ऽएव हितं वागुपहितं प्राणे हीयं वागुपेव हिता प्प्राणस्त्वेव हितमङ्गान्न्युपहितं प्राणे हीमान्न्यङ्गान्न्युपेव हितानि ॥ १५ ॥ सोऽस्यैष चित्य ऽआसीत् । चेतव्व्यो ह्यस्याऽऽसीत्तस्माच्चित्यश्चित्य ऽउ ऽएवाऽयं य्यजमानस्य भवति चेतव्व्यो ह्यस्य भवति तस्माद्वेव चित्यः ॥ १६ ॥ तदेता वा ऽअस्य ताः । पञ्च तन्वो व्व्यस्रꣳसन्त लोम-

त्वङ्माᳬंसमस्त्थि मज्जा ता ऽएवैताः पञ्च चितयस्तद्यत्पञ्च चितीश्चिनोत्येताभिरेवैनं तत्तनूभिश्चिनोति यच्चिनोति तस्म्माच्चितयः ॥ १७ ॥ स यः स प्प्रजापतिर्व्व्यस्रᳬसत । संवत्त्सरः सोऽथ या ऽअस्यैताः पञ्च तन्न्वो व्व्यस्रᳬसन्तर्त्तवस्ते पञ्च वा ऽऋतवः * पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोत्यृतुभिरेवैनं तच्चिनोति यच्चिनोति तस्म्माच्चितयः ॥ १८ ॥ स यः स संवत्त्सरः प्प्रजापतिर्व्व्यस्रᳬसत । अयमेव स वायुर्य्योऽयं पवतेऽथ या ऽअस्य ता ऽऋतवः पञ्च तन्न्वो व्व्यस्रᳬसन्त दिशस्ताः पञ्च वै दिशः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोति दिग्भिरेवैनं तच्चिनोति यच्चिनोति तस्म्माच्चितयः ॥ १९ ॥ अथ यश्चितेऽग्निर्न्निधीयते । असौ स ऽआदित्त्यः स ऽएष ऽएवैषोऽग्निश्चित ऽएतावन्नु तद्यदेनमग्निः समदधात् ॥ २० ॥ †
अथो ऽआहुः । प्प्रजापतिरेव व्विस्रस्तो देवानब्रवीत्त्सं मा धत्तेति ते देवा ऽअग्निमब्रुवँस्त्वयीमं पितरं प्रजापतिं भिषज्ज्यामेति स वा ऽअहमेतस्म्मिन्त्सर्व्वस्मिन्नेव व्विशानीति तथेति तस्म्मादेतं प्रजापतिᳬ सन्तमग्निरित्याचक्षते ॥ २१ ॥ तं देवा ऽअग्नावाहुतिभिरभिषज्ज्यन् । ते यां-य्यामाहुतिमजुहवुः सा सैनं पक्केष्टका भूत्त्वाऽप्प्यपद्यत तद्यदिष्ट्वात्त्समभवँस्तस्म्मादिष्टकास्तस्म्मादग्निनेष्टकाः पचन्त्याहुतीरेवैनास्तत्कुर्व्वन्ति ॥ २२ ॥ सोऽब्रवीत् । यावद्यावद्वै जुहुथ

* "हेमन्तशिशिरयोः समासेन" इत्यादि ( ऐ० ब्रा० १, १, १ ) श्रुतः ।

† अत्र शतम् २४०० ॥

तावत्तावन्न्मे कं भवतीति तद्यदस्म्मा ऽइष्टे कमभवत्त-स्म्मादिष्टकाः ॥ २३ ॥ तद्ध स्माऽऽहाऽऽक्ताक्ष्यः । य ऽएव यजुष्मतीर्भूयसीरिष्टका विद्यात्सोऽग्निं चिनुयाद्भूय ऽएव तत्पितरं प्रजापतिं भिषज्यतीति ॥ २४ ॥ अथ ह स्माऽऽह ताण्ड्यः । क्षत्रं वै यजुष्मत्य ऽइष्टका विशो लोकम्पृणा-ऽअत्ता वै क्षत्रियोऽन्नं विड्यत्र वा ऽअत्तुरन्नं भूयो भवति तद्राष्ट्रं समृद्धं भवति तदेधते तस्म्माल्लोकम्पृणा ऽएव भूय-सीरुपदध्यादित्येतदुह तयोर्व्वचोऽन्न्या त्वेवाऽत स्थितिः ॥२५॥ स ऽएष पिता पुत्रः । यदेषोऽग्निमसृजत तेनैषोऽग्नेः पिता यदेतमग्निः समदधात्तेनैतस्याऽग्निः पिता यदेष देवानसृजत तेनैष देवानां पिता यदेतं देवाः समदधुस्तेनैतस्य देवाः पितरः ॥ २६ ॥ उभयꣳ हैतद्भवति । पिता च पुत्रश्च्च प्रजापतिश्च्चाऽग्निश्च्चाऽग्निश्च्च प्रजापतिश्च्च प्रजापतिश्च्च देवाश्च्च देवाश्च्च प्रजापतिश्च्च य ऽएवं वेद ॥ २७ ॥ स ऽउपदधाति । '[1] तया देवतये'ति वाग्वै सा देवताऽ'ङ्गि-रस्वदि[2]'ति प्राणो वा ऽअङ्गिरा 'ध्रुवा[3] सीदे'ति स्थिरा सीदेत्येतदथो प्रतिष्ठिता सीदेति वाचा चैवैनमेतत्प्राणेन च चिनोति * वाग्वा ऽअग्निः प्राण ऽइन्द्र ऽऐन्द्राग्नोऽग्निर्यावान-ग्निर्यावत्त्यस्य मात्रा तावतैवैनमेतच्चिनोतीन्द्राग्नी वै सर्वे दे-वाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्त्यस्य मात्रा तावतैवैनमेत-

(१) शु० सं० अ० १४ क० १४। (२) शु० सं० अ० १४ क० १४। (३) शु० सं० अ० १४ क० १४।

* ऐ० ब्रा० २. ४. २. ४।

च्चिनोति ॥ २८ ॥ तदाहुः ।। कस्मादस्या ऽअग्निश्चचीयत ऽइति यत्र वै सा देवता व्यस्रꣳसत तदिमामेव रसेनाऽनु व्यक्षरत्तं यत्र देवाः समस्कुर्वꣳस्तदेनमस्या ऽएवाऽधि समभरन्त्सैषैकैवेष्टकेयमेवेयꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चचीयते सेयं चतुः स्रक्तिर्दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तय ऽइष्टका भवन्तीमाꣳ ह्यनु सर्वा ऽइष्टकाः ॥ २९ ॥ तदाहुः । यदेवमेकेष्टकोऽथ कथं * पञ्चेष्टक ऽइतीयं न्वेव प्रथमा मृन्मयीष्टका तद्यत्किञ्चाऽत्र मृन्मयमुपदधात्येकैव सेष्टकाऽथ यत्पशुशीर्षाण्युपदधाति सा पश्विष्टकाऽथ यद्रुक्मपुरुषा ऽउपदधाति यद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्टकाऽथ यत्स्रुचा ऽउपदधाति यदुलूखलमुसले याः समिध ऽआदधाति सा वानस्पत्येष्टकाऽथ यत्पुष्करपर्णमुपदधाति यत्कूर्मं यद्दधि मधु घृतं यत्किञ्चाऽत्राऽन्नमुपदधाति सैवाऽन्नं पञ्चमीष्टकैवमु पञ्चेष्टकः ॥ ३० ॥ तदाहुः । कतरत ऽइष्टकायाः शिर ऽइति यत ऽउपस्पृश्य यजुर्वदतीत्यु हैक ऽआहुः स स्वयमातृण्णाया ऽएवाऽर्द्धादुपस्पृश्य यजुर्वदेत्तथो हाऽस्यैताः सर्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति न तथा कुर्य्यादङ्गानि वा ऽअस्यैतानि परूꣳषि यदिष्टका यथा वा ऽअङ्गेऽङ्गे पर्वन्पर्वञ्छिरः कुर्य्यात्तादृक्तद्यो वाऽवचितेऽग्निर्निधीयते तदेवैतासाꣳ सर्वासाꣳ शिरः ॥ ३१ ॥ तदाहुः । कति पशवोऽग्ना ऽउपधीयन्त ऽइति पञ्चेति न्वेव ब्रूयात्पञ्च

* तै० सं० ४. ७. ५, ६ ।

ह्येतान्पशूनुपदधाति ॥ ३२ ॥ अथो ऽएक ऽइति ब्रूयात् । अविरितीयं वा ऽअविरियꣳ हीमाः सर्वाः प्रजा ऽअवतीयमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते तस्मादेक ऽइति ब्रूयात् ॥ ३३ ॥ अथो द्वाविति ब्रूयात् । अवी ऽइतीयं चाऽसौ चेमे हीमाः सर्वाः प्रजा ऽअवतो यन्मृदियं तद्यदापोऽसौ तन्मृच्चाऽऽपश्चेष्टका भवन्ति तस्माद्द्वाविति ब्रूयात् ॥ ३३ ॥ अथो गौरिति ब्रूयात् । इमे वै लोका गौर्यद्धि किञ्च गच्छतीमाँस्तल्लोकान्गच्छतीम ऽउ लोका ऽएषोऽग्निश्चितस्तस्माद्गौरिति ब्रूयात् ॥ ३४ ॥ तदाहुः । कस्मै कामायाऽग्निश्चीयत ऽइति सुपर्णो मा भूत्वा दिवं वहादित्यु हैक ऽआहुर्न तथा विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजापतिरभवन्नेतद्रूपं कृत्वा प्रजापतिर्देवानसृजतै तद्रूपं कृत्वा देवा ऽअमृता ऽअभवँस्तद्यदेवैतेन प्राणा ऽअभवन्यत्प्रजापतिर्यद्देवास्तदेवैतेन भवति ॥ ३५ ॥ (B)

## प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



### [ अब्रादीनामष्टरूपतादि ]

प्रजापतिर्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात्पुरुषात्तप्तादापो जायन्ते ॥ १ ॥ आपोऽब्रुवन् । क्व वयं भवामेति तप्यध्वमित्यब्रवीत्ता ऽअतप्यन्त ताः फेनमसृजन्त तस्मादपां

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. १. २ ।

तप्तानां फेनो जायते ॥२॥ फेनोऽब्रवीत् । क्वाऽहं भवानीति तप्यस्वेत्यब्रवीत्सोऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥३॥ मृदब्रवीत् । क्वाऽहं भवानीति तप्यस्वेत्यब्रवीत्साऽतप्यत सा सिकता ऽअसृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवत्येतावन्नु तद्यत्क्वाऽहं भवानि क्वाऽहं भवानीति ॥४॥ [ अर्धप्रपाठकः ॥५५॥ ] सिकताभ्यः शर्करामसृजत । तस्मात्सिकताः शर्करैवाऽन्ततो भवति शर्कराया ऽअश्मानं तस्माच्छर्कराऽश्मैवाऽन्ततो भवत्यश्मनोऽयस्तस्मादश्मनोऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातः हिरण्यसङ्काशमिवैव भवति ॥ ५ ॥ तद्यदसृज्यताऽक्षरत् । तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वोऽक्षरत्सैवाऽष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥ अभूद्वा ऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायाऽदीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥७॥ तद्यानि तानि भूतानि । ऋतवस्तेऽथ यः स भूतानां पतिः संवत्सरः सोऽथ या सोषाः पत्न्यौषसी तानीमानि भूतानि च भूतानां च पतिः संवत्सर ऽउषसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत सोऽरोदीत् ॥ ८ ॥ तं प्रजापतिरब्रवीत् । कुमार ! किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीदनपहतपाप्मा वा ऽअस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नामकुर्य्यात्पाप्मा

नमेवाऽस्य तदुपहन्त्यपि द्वितीयमपि तृतीयमभिपूर्वमेवाऽस्य
तत्पाप्मानमपहन्ति ॥ ९ ॥ तमब्रवीद्रुद्रोऽसीति । तद्यदस्य
तन्नामाऽकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः
सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्म्मि धेह्येव मे नामेति ॥ १० ॥
तमब्रवीत्सर्वोऽसीति । तद्यदस्य तन्नामाऽकरोदापस्तद्रूप-
मभवन्नापो वै सर्वोऽद्भ्यो हीदꣳ सर्वं जायते सोऽब्र-
वीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥ ११ ॥
तमब्रवीत्पशुपतिरसीति । तद्यदस्य तन्नामाऽकरोदोषधय-
स्तद्रूपमभवन्नोषधयो वै पशुपतिस्तस्माद्यदा पशव ऽओष-
धीर्लभन्तेऽथ पतीयन्ति सोऽब्रवीज्ज्यायान्न्वा ऽअतोऽस्मि
धेह्येव मे नामेति ॥ १२ ॥ तमब्रवीदुग्रोऽसीति । तद्यदस्य
तन्नामाऽकरोद्वायुस्तद्रूपमभवद्वायुर्वा ऽउग्रस्तस्माद्यदा बल-
वद्वात्युग्रो वातीत्याहुः सोऽब्रवीज्ज्यायान्न्वा ऽअतोऽस्मि
धेह्येव मे नामेति ॥ १३ ॥ तमब्रवीदशनिरसीति । तद्यदस्य
तन्नामाऽकरोद्विद्युत्तद्रूपमभवद्विद्युद्वा ऽअशनिस्तस्माद्यं वि-
द्युद्धन्त्यशनिरवधीदित्याहुः सोऽब्रवीज्ज्यायान्न्वा ऽअतो-
ऽस्मि धेह्येव मे नामेति ॥ १४ ॥ तमब्रवीद्भवोऽसीति ।
तद्यदस्य तन्नामाऽकरोत्पर्ज्जन्न्यस्तद्रूपमभवत्पर्ज्जन्यो वै भवः
पर्ज्जन्याद्धीदꣳ सर्वं भवति सोऽब्रवीज्ज्यायान्न्वा ऽअतोऽस्मि
धेह्येव मे नामेति ॥ १५ ॥ तमब्रवीन्महान्देवोऽसीति ।
तद्यदस्य तन्नामाऽकरोच्चन्द्रमास्तद्रूपमभवत्प्रजापतिर्वै चन्द्र-
माः प्रजापतिर्वै महान्देवः सोऽब्रवीज्ज्यायान्न्वा ऽअतोऽ-
स्मि धेह्येव मे नामेति ॥ १६ ॥ तमब्रवीदीशानोऽसीति ।

तद्यदस्य तन्नामाऽकरोदादित्यस्तद्रूपमभवदादित्यो वा ऽईशा न ऽआदित्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान्न्वा ऽअस्मि मामेतᳪ परो नाम धा ऽइति ॥ १७ ॥ तान्न्येतान्न्यष्टा-वग्निरूपाणि । कुमारो नवमᳪ सैवाऽग्नेस्त्रिवृत्ता ॥ १८ ॥ यद्वेवाऽष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मादाहु-र्गायत्रोऽग्निरिति सोऽयं कुमारो रूपाण्ण्यनु प्प्राऽऽविशन्न वा ऽअग्निं कुमारमिव पश्यन्त्येतान्न्येवाऽस्य रूपाणि पश्यन्त्ये-तानि हि रूपाण्ण्यनु प्प्राऽऽविशत् ॥ १९ ॥ तमेतᳪ संवत्सर-ऽएव चिनुयात् । संवत्सरे*ऽनुब्रूयाद् द्वयोरित्यु हैक ऽआहुᳪ संवत्सरे वै तद्रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत तस्माद् द्वयोरेव चिनुयाद् द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात्संवत्सरेऽनुब्रूयाद्यद्वाऽवरेतᳪ सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्द्धमानᳪ शेते तस्मात्संवत्सर-ऽएव चिनुयात्संवत्सरेऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मानमेवाऽस्य तदपहन्ति चित्रनामानं करोति चित्रो-ऽसीति सर्वाणि हि चित्राण्ण्यग्निᳪ ॥ २० ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



* ऐं॰ आ॰ ५. ३. ३. ४ ।

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का॰ श॰ ८. १. ३ ।

[ अथ पुरुषाश्वादिपञ्चपश्वालम्भनविधिः ]

( तत्र चतुर्विंशतिसामिधेन्यादिः, इष्टकोपधानादिकं च )

प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स योऽयं कुमारो रूपाण्यनु प्प्रविष्ट ऽआसीत्तमन्वैच्छत्सोऽग्निरवेदनु वै मा पिता प्प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्न्मऽएष न वेदेति ॥ १ ॥ स ऽएतान्पञ्च पशूनपश्श्यत् । * पुरुषमश्वं गामविमजं यदपश्श्यत्तस्स्मादेते पशवः ॥ २ ॥ स ऽएतान्पञ्च पशून्प्राऽऽविशत् । स ऽएते पञ्चपशवोऽभवत्तमु वै प्प्रजापतिरन्न्वेवैच्छत् ॥ ३ ॥ स ऽएताः न्पञ्च पशूनपश्श्यत् । यदपश्श्यत्तस्स्मादेते पशवस्तेष्वेतमपश्श्यत्तस्स्माद्वेवैते पशवः ॥ ४ ॥ स ऽऐक्षत । इमे वा ऽअग्निरिमानेवाऽऽत्मानमभिसंस्करवै यथा वा ऽअग्निः समिद्धो दीप्प्यत ऽएवमेषां चक्षुर्दीप्प्यते यथाऽग्नेर्धूम ऽउदयतऽएवमेषामूष्मोदयते यथाऽग्निरभ्याहितं दहत्येवं बप्सति यथाऽग्नेर्भस्स्म सीदत्येवमेषां पुरीषꣳ सीदतीमे वा ऽअग्निरिमानेवाऽऽत्मानमभिसंस्करवा ऽइति तान्नाना देवताभ्यऽआलिप्प्सत वैश्वकर्म्मणं पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजꣳ ॥ ५ ॥ स ऽऐक्षत । नाना वा ऽइदं देवताभ्य ऽआलिप्प्सेऽग्नेर्वहूꣳ रूपाणि कामये हन्तैनानग्निभ्यः कामायाऽऽलभा ऽइति तानग्निभ्यः कामायाऽऽलभत तद्यदग्निभ्य ऽइति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्रीतान्पर्य्यग्निकृतानु-

* का० श्रौ० सू० १६. १. ५ ।

दीचो नीत्वा समज्ञपयत् ॥६॥ स ऽऐक्षत । या वै *श्रीरब्भ्यधासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्ण्येवोपदधा ऽइति स शीर्षाण्ण्येवोत्कृत्योपाऽऽधत्ताऽथेतराणि कुसिन्धान्न्यप्प्सु प्प्राऽप्लावयदजेन यज्ञः समस्थापयन्नेद्दमे यज्ञो विकृष्टोऽसदित्यात्मा वै यज्ञो नेद्दमेऽयमात्मा विकृष्टोऽसदित्त्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याऽग्नेरन्तं न पर्य्यैत् ॥ ७ ॥ सऽऐक्षत । यमिममात्मानमप्प्सु प्प्राऽपिप्लवं तमन्न्विच्छानीति तमन्न्वैच्छत्तद्यदेषामप्प्सु प्प्रविद्धानां प्रत्त्यतिष्ठत्ता ऽअपः समभरदथ यदस्यां तां मृदं तदुभयः सम्भृत्य मृदं चाऽपश्चेष्टकामकरोत्तस्म्मादेतदुभयमिष्टका भवति मृच्चाऽऽपश्च ॥ ८ ॥ स ऽऐक्षत । यदि वा ऽइदमित्त्थमेव सदात्मानमभिसंस्करिष्ष्ये मर्त्यः कुणपोऽनपहतपाप्प्मा भविष्यामि हन्त्तैनदग्निना पचानीति तदग्निनाऽपचत्तदेनदमृतमकरोदेतद्वै हविरमृतं भवति यदग्निना पचन्ति तस्म्मादग्निनेष्टकाः पचन्त्त्यमृता ऽएवैनास्तत्कुर्वन्ति ॥ ९ ॥ तद्यदिष्ट्वा पशुनाऽऽपश्यत् । तस्म्मादिष्टकास्तस्म्मादिष्ट्वैव पशुनेष्टकाः कुर्य्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्न्यदेव ॥ १० ॥ तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्ण्यथ यानि तानि कुसिन्धान्न्येतास्ताः पञ्च चितयस्तद्यत्पशुशीर्षाण्ण्युपधाय चितीश्चिनोत्त्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥११॥ तऽएते सर्वे पशवो यदग्निः । तस्म्मादग्नौ पशवो रमन्ते पशु-

* 'श्रीरभ्युध्यासिषम्' इति पाठः 'क' पुस्तके ।

भिरेव तत्पशवो रमन्ते तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयतेऽग्निर्ह्येष यत्पशवस्ततो वै प्रजापतिरग्निरभवत् ॥ १२ ॥ तद्धैक ऽआहुः । अत्रैवैतैः सर्व्वैः पशुभिर्यजेत यद्वाऽएतैरत्र सर्व्वैः प्रजापतिरयक्ष्यत तद्देवाऽग्नेरन्तं पर्य्यैष्यत्तद्यदेतैरत्र सर्व्वैर्यजेत तद्देवाऽग्नेरन्तं परीयादिति न तथा कुर्य्याद्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भरेदेतानि वा ऽएतत्कुसिन्धान्येताश्चिचतीः सम्भरति तस्मात्तथा न कुर्य्यात् ॥ १३ ॥ यद्वेवैतान्पशूनालभते । आयतनमेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वाऽआयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥ १४ ॥ पुरुषोऽश्वोगौरविरजो भवन्ति । एतावन्तो वै सर्व्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥ १५ ॥ पञ्च भवन्ति । पञ्च ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य ऽएतत्पञ्चाऽऽयतनानि निदधाति तदेनं पश्यन्नग्निरुपाऽऽवर्त्तते ॥१६॥ तद्यदग्निभ्यऽइति बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्कामायेति यथा तं काममाप्नुयाद्यजमानो यत्काम ऽएतत्कर्म्म कुरुते ॥ १७ ॥ पुरुषं प्रथममालभते । पुरुषो हि प्रथमः पशूनामथाऽश्वं पुरुषꣳ ह्यन्वश्वोऽथ गामश्वꣳ ह्यनु गौरथाऽविं गाꣳ ह्यन्वविरथाऽजमविꣳ ह्यन्वजस्तदेनान्यथापूर्व्वं यथाश्रेष्ठमालभते ॥ १८ ॥ तेषां विषमा रशनाः स्युः । पुरुषस्य वर्षिष्ठाऽथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाꣳ रशनाः करोत्यपापवस्यसाय सर्व्वास्त्वेव समाः स्युः सर्व्वाः सदृश्यः

सर्वे ह्येते समाः सर्वे सदृशा ऽअग्नयो ह्युच्चयन्ते ऽन्नᳪ ह्युच्चयन्ते तेन समास्तेन सदृशाः ॥ १९ ॥ तदाहुः । कथमस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेषु त्वेवाऽऽप्यत ऽइयं प्रथमा मृन्मयीष्टकाऽथ यत्पशुमालभन्ते तेन पश्विष्टकाऽऽप्यतेऽथ यद्रूपामभितो * हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाऽऽप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाऽऽप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनाऽन्नं पञ्चमीष्टकाऽऽप्यत ऽएवमु हाऽस्यैषोऽग्निः पञ्चेष्टकः सर्वः पशुष्वारब्धो भवति ॥ २० ॥ तेषां चतुर्विंᳪशतिः सामिधेन्यः । चतुर्विंᳪशत्यर्द्धमासो वै संवत्सरः संवत्सरोऽग्निरुर्यावानग्निरुर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २१ ॥ यद्वेव चतुर्विंᳪशतिः । चतुर्विंᳪशत्यक्षरा वै गायत्री गायत्रोऽग्निरुर्यावानग्निरुर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २२ ॥ यद्वेव चतुर्विंᳪशतिः । चतुर्विंᳪशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्य्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निरुर्यावानग्निरुर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ २३ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्राणमेवाऽस्य गायत्रीभिः समिन्ध ऽआत्मानं त्रिष्टुभिर्म्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्ययमात्माऽभितः प्राणाः भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरु-

---

* "जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाऽभिघारयति" ( आप० श्रौ० सू० १६. १७ ) ।

परिष्टाद्भूयाᳬंसो हीमे पुरस्तात्प्राणाः कनीयाᳬंस ऽउपरिष्टात् ॥ २४ ॥ * सोऽन्वाह । 'समास्त्वाग्न ऽऋतवो वर्द्धयन्त्वि'ति प्रजापतिं विस्रस्तं यत्राऽग्निः समदधात्तमब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्म्मा समिन्त्स्वेति ॥ २५ ॥ स ऽएता ऽअपश्यत् । समास्त्वाऽग्न ऽऋतवो वर्द्धयन्त्वि'ति समाश्च त्वाऽग्न ऽऋतवश्च वर्द्धयन्त्वित्त्येत'त्संवत्सरा ऽऋषयो यानि सत्त्ये'ति संवत्सराश्च त्वर्षयश्च सत्त्यानि च वर्द्धयन्त्वित्त्येत'त्सं दिव्व्येन दीदिहि रोचनेने'-त्त्यसौ वा ऽआदित्त्यो दिव्व्यᳬं रोचनं तेन सन्दीदिहीत्त्येत'द्विश्वा ऽआभाहि प्प्रदिशश्चतस्र' ऽइति सर्वा ऽआभाहि प्प्रदिशश्चतस्र ऽइत्त्येतत् ॥ २६ ॥ ता ऽएता ऽएकव्व्याख्यानाः । एतमेवाऽभि यथैऽतमेव संस्कुर्य्यादेतᳬं सन्दध्यादेतं जनयेत्ता ऽआग्नेय्यः प्प्राजापत्त्या यदग्निरपश्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिᳬं समैन्ध तेन प्प्राजापत्त्याः ॥२७॥ द्वादशा † ऽऽप्प्रियः । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदाप्प्रीणाति ॥ २८ ॥ यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जगत्त्यस्याᳬं हीदᳬं सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदा-

* समिध्यमान-समिद्धवत्यन्तरेण "समास्त्वाग्न" इति नव दधाति" ( का० श्रौ० सू० १६. १. ११ )।

( १ ) शु० सं० अ० २७ क० १। ( २ ) शु० सं० अ० २७ क० १। ( ३ ) शु० सं० अ० २७ क० १। ( ४ ) शु० सं० अ० २७ क० १।

† अथात आप्रियः । आप्रियः कस्मात् ? आप्नोतेः, प्रीणातेर्वा । 'आप्रीभिराप्रीणाति' इति च ब्राह्मणम् ( निरु० ८. १. ४. )।

प्प्रीणाति ॥ २९ ॥ यद्वेव द्वादश। द्वादशाक्षरा वै जगती जगती सर्व्वाणि च्छन्दाᳫँसि सर्व्वाणि च्छन्दाᳫँसि प्प्रजापतिः प्प्रजापतिरग्निरुर्य्यावानग्निरुर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदाप्प्रीणाति ॥३०॥ ता * ऽएता 'ऽऊर्द्ध्वा ऽअस्य समिधो भवन्ती'ति। प्रजापतिं विस्रस्तं यत्राऽग्निः समदधात्तमब्रवीद्या मत्सम्मिता ऽआप्प्रियस्ताभिर्म्माऽऽप्प्रीणीहीति ॥ ३१ ॥ सऽएता ऽअपश्यत्। 'ऊर्द्ध्वा ऽअस्य समिधो भवन्ती'त्यूर्द्ध्वा ह्येतस्य समिद्धस्य समिधो भव'न्त्यूर्द्ध्वा शुक्रा शोचीᳫँष्यग्नेरि'त्यूर्द्ध्वानि ह्येतस्य शुक्राणि शोचीᳫँष्यर्चीᳫँषि भवन्ति 'द्युमत्तमे'ति वीर्य्यवत्तमेत्येत'त्सुप्प्रतीकस्ये'ति सर्व्वतो वाऽअग्निः सुप्प्रतीकः 'सूनोरिति' यदेनं जनयति तेनाऽस्यैष सूनुः ॥ ३२ ॥ ता ऽएता ऽएकव्व्याख्यानाः। एतमेवाऽभि यथैतमेव संस्कुर्य्यादेतद्ध सन्दद्ध्यादेतं जनयेत्ता ऽआग्नेय्यः प्प्राजापत्त्या यदग्निरपश्यत्तेनाऽऽग्नेय्यो यत्प्रजापतिमाप्प्रीणात्तेन प्प्राजापत्त्याः ॥३३॥ ता विषमा विषमपदाः। विषमाक्षरा विषमाणि हि च्छन्दाᳫँस्यथो यान्न्यस्याऽध्यात्ममङ्गानि विषमाणि तान्न्यस्यैताभिराप्प्रीणाति ॥ ३४ ॥ वैश्वानरः पशुपुरोडाशः। वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाऽऽप्त्यै ॥ ३५ ॥ यद्वेव वैश्वानरः। ऋतवो हैते यदेताश्चितयोऽग्नयो वा ऽऋतव ऽऋतवः संवत्सरः संवत्सरो

* "आप्रियो द्वादशोर्ध्वा अस्येति" ( का० श्रौ० सू० १६. १. १२ )।

( १ ) शु० सं० अ० २७ क० ११। ( २ ) शु० सं० अ० २७ क० ११। ( ३ ) शु० सं० अ० २७ क० ११। ( ४ ) शु० सं० अ० २७ क० ११। ( ५ ) शु० सं० अ० २७ क० ११।

वैश्वानरो यदग्नय ऽइति स्यादिति तद्रेचयेद् द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानर ऽआग्नेय्यो याज्यानुवाक्या ऽअग्निरूपाणामुपाऽऽप्त्यै कामवत्यः कामानामुपाऽऽप्त्यै ॥३६॥ तद्धैके। इत्त्येवैतानि पशुशीर्षाणि विरवोपदधत्युभयेनैते पशव ऽइति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्त्रीतानि हि तानि तद्ध तथाऽऽषाढः सौश्रोमते यस्योपदधुः स ह क्षिप्र ऽएव ततो ममार ॥ ३७ ॥ हिरण्मयान्त्यु हैके कुर्वन्ति। अमृतेष्टका ऽइति वदन्तस्ता ह ता ऽअनृतेष्टका न हि तानि पशुशीर्षाणि ॥ ३८ ॥ मृन्मयान्त्यु हैके * कुर्वन्ति । उत्सन्ना वा ऽएते पशवो यद्वै किञ्चोत्सन्नमियं तस्य सर्वस्य प्रतिष्ठा तद्यत्रैते पशवो गतास्तत ऽएनानधि सम्भराम ऽइति न तथा कुर्याद्यो वा ऽएतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यैत ऽउत्सन्नाः स्युः स ऽएतानेव पञ्च पशूनालभेत यावदस्य वशः स्यात्तान्हैतान्प्रजापतिः प्रथम ऽआलेभे श्यापर्णः सायकायनोऽन्तमोऽथ ह स्मैतानेवाऽन्तरेणाऽऽलभन्तेऽथैतर्हीमौ द्वावेवाऽऽलभ्येते प्राजापत्यश्च वायव्यश्च तयोरतो ब्राह्मणमुच्यते ॥ ३९ ॥ (A)

## द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ ११० ॥



* का० श्रौ० सू० १६. १. ३६–४१ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. २. १; कठ० सं० १८. १६, १७; कपि० २९. ४. ४; मै० सं० ११. १२. ५, ६; तै० सं० ४. १. ७, ८ ।

[ अथ प्राजापत्यादिपश्वनुष्ठानसम्प्रदायः ]

( तत्र प्राजापत्यपशुः, वायव्यपशुः, पश्वालम्भकालः, उखासम्भरणविधिश्च )

प्राजापत्यं चरका ऽआलभन्ते । प्रजापतिरग्निं चित्वाऽग्निरभवत्तद्यदेतमालभते तदेवाऽग्नेरन्तं पश्येतीति ॥ १ ॥ श्यामो * भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रजननं तदस्य प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्रजापतिः ॥ २ ॥ तस्यैकविꣳशतिः सामिधेन्यः । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएष प्रजापतिः प्रजापतिरग्निरुर्ष्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ३ ॥ यद्वेवैकविꣳशतिः । एकविꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशः पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्धे ॥ ४ ॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चाऽन्वाह । तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचꣳ † हिरण्यगर्भवत्याघारमाघारयति प्रजापतिर्वै ‡ हिरण्यगर्भः प्रजापतिरग्निर्द्वादशाऽप्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं प्राजापत्यः पशुपुरोडाशो य ऽएव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः ॥ ५ ॥ अथैतं वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिः

* का० श्रौ० सू० १६. १. ३३।

† का० श्रौ० सू० १६. १. ३५, ३७।

‡ तै० सं० १. ७. ६,६।

प्प्रजाः सृष्ट्वाऽनुव्व्यैक्षत तस्याऽत्त्यानन्देन रेतः परापतत्त्सोऽजः शुकूलस्तूपरो लप्प्सुद्यभवद्रसो वै रेतो षा वाऽनु वै रसस्तावानात्मा तद्यदेतमालभते तदेवाऽग्नेरन्तं पर्य्येति शुकूलो भवति शुकूलꣳ हि रेतस्तूपरो भवति तूपरꣳ हि रेतो व्वायवे भवति प्प्राणो वै व्वायुर्न्नियुत्त्वते भवत्त्युदानो वै नियुतः प्प्राणोदानावेवाऽस्मिन्नेतद्दधाति ॥ ६ ॥ षद्वेवैतं व्वायवे नियुत्त्वते। शुक्लं तूपरमालभते प्प्रजापतिं व्विस्रस्तं रुषत्र देवाः समस्कुर्व्वन्त्स षोऽस्म्मात्त्प्राणो मद्ध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशुनाऽऽदधुस्तथैवाऽस्मिन्नयमेतद्दधाति व्वायवे भवति प्प्राणो वै व्वायुर्न्नियुत्त्वते भवत्त्युदानो वै नियुतः प्प्राणोदानावेवाऽस्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि व्वायुस्तूपरो भवति तूपरो हि व्वायुः ॥ ७ ॥ तस्य सप्तदश सामिधेन्न्यः। सप्तदशो वै संव्वत्सरो द्वादशमासाः पञ्चऽर्त्तवः संव्वत्सरः प्प्रजापतिः प्प्रजापतिरग्निरुर्षावानग्निरुर्षावत्त्यस्य मात्रा तावत्तैवैनमेतत्त्समिन्धे ॥ ८ ॥ षद्वेव सप्तदश। सप्तदशो वै पुरुषो दश प्प्राणाश्च्चत्त्वार्य्यङ्गान्न्यात्मा पञ्चदशो ग्रीवाः षोडश्श्यः शिरः सप्तदशं पुरुषः प्प्रजापतिः प्प्रजापतिरग्निरुर्षावानग्निरुर्षावत्त्यस्य मात्रा तावत्तैवैनमेतत्त्समिन्धे ॥ ९ ॥ उभयीर्ग्गायत्रीश्च्च त्रिष्टुभश्च्चाऽन्न्वाह। तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं द्वादशाऽऽप्प्रियस्तासामुक्तो बन्धुरुक्तम्वेवाऽन्वृचं *प्राजापत्त्यः पशुपुरोडाशोऽत्रो स काम ऽउपाऽऽप्तऽइति ह स्म्माऽऽह माहित्थिर्य्य चरकाः प्प्राजापत्त्ये पशा-

* का० श्रौ० सू० १६. १. ३९।

वाहुरिति ॥ १० ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः
पशुपुरोडाशोऽर्द्धꣳ ह प्रजापतेर्वायुरर्द्धं प्रजापतिस्तद्यदुभौ
वायव्यौ स्यातामुभौ वा प्राजापत्यावर्द्धꣳ हैवाऽस्य
कृतꣳ स्यान्नार्द्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः
पशुपुरोडाशस्तेन हैवैतꣳ सर्वं कृत्स्नं प्रजापतिꣳ संस्करो-
ति ॥ ११ ॥ यद्वेव वायव्यः पशुर्भवति । प्राजापत्यः
पशुपुरोडाशः प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन्त्स
यो ऽस्मात्प्राणो मध्यत ऽउदक्रामत्तमस्मिन्नेतेन पशु-
नाऽऽदधुरथाऽस्यैतेन पुरोडाशेनाऽऽत्मानꣳ समस्कुर्वन्त्स
यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश-
मासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये
को हि प्रजापतिः ॥ १२ ॥ तद्यद्वपां* पुरस्ताज्जुहोति । य ऽएवा-
ऽयं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्चर-
न्ति मध्यतो ह्ययमात्माऽथ यद्धविषोपरिष्टाच्चरन्ति य ऽएवा-
ऽयमुपरिष्टात्प्राणस्तमस्मिन्नेतद्दधाति शुक्रवत्यो याज्यानुवा-
क्याः स्युः शुक्ररूपाणामुपाऽऽप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं
तस्योपाऽऽप्त्यै ॥ १३ ॥ तदु वा ऽआहुः । वपाया ऽएव शुक्र-
वत्यौ स्यातामेतावद्वै पशौ शुक्रं यद्वपा शुक्रवत्यौ नियुत्वत्यौ
हविषो यदेव नियुत्वद्रूपं तस्योपाऽऽप्त्या ऽइति ॥ १४ ॥
यद्वेवैतं पशुमालभते । एतस्मिन्न्वह पशौ सर्वेषां पशूनाꣳ
रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी
पुरुषो यत्तूपरः केसरवाँस्तदश्वस्य रूपं तूपरो हि केसरवा-

* कद्वत्यौ याज्यानुवाक्याः प्राजापत्यस्य ( का० श्रौ० सू० १६. १. ४०–४३ ) ।

नश्वो यदष्टाशफस्तद्गोरूपमष्टाशफो हि गौरथ यदस्याऽवेरिव शफास्तदवे रूपं यदजस्तदजस्य तद्यदेतमालभते तेन हैवाऽस्यैते सर्वे पशव ऽआलब्धा भवन्त्यतो यतमदस्य कर्म्मोपकल्पेतै ते वा पञ्चपशव ऽएष वा प्राजापत्य ऽएष वा नियुत्वतीयः ॥ १५ ॥ तं * पौर्णमास्यामालभेत । अमावास्यायामालभेतेत्यु हैक ऽआहुरसौ वै चन्द्रः प्रजापतिः स ऽएताᳬं रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं तदिति ॥ १६ ॥ तद्वै पौर्णमास्यामेव । असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्यामालभन्ते यत्रैनं देवा ऽआलभन्ते तदेनमालभा ऽइति तस्मात्पौर्णमास्यां यद्वेव पौर्णमास्यां पौर्णमासी ह वाऽव प्रथमा व्युवास तस्माद्वेव पौर्णमास्याम् ॥ १७ ॥ तद्वै फाल्गुन्यामेव । एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखत ऽएव तत्संवत्सरमारभते ॥ १८ ॥ स वा ऽइष्ट्वैव पौर्णमासेन । अथ पशुमालभेर्त पौर्णमासेन वा ऽइन्द्रो वृत्रं पाप्मानᳬं हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभत तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानᳬं हत्वाऽपहतपाप्मैतत्कर्म्माऽऽरभते ॥ १९ ॥ तद्वा † ऽउपाᳬंशु भवति । एतद्वैतैः प्रजापतिः पशुभिः कर्म्मैयेष तद्वाऽत्राऽनद्धेवैवासाऽनिरुक्तमिव तस्मादुपाᳬंशुः ॥ २० ॥ यद्वेवोपाᳬंशु । प्राजापत्यं वा ऽएतत्कर्म्म प्रजापतिᳬं ह्येतेन कर्म्मणाऽऽरभतेऽनिरुक्तो

* का० श्रौ० सू० १६. १. ५-७।
† का० श्रौ० सू० १६. १. २५, २६।

वै प्प्रजापतिः ॥ २१ ॥ यद्वेवोपाᳩंशु । रेतो वा ऽअत्र यज्ञ ऽउपाᳩंशु वै रेतः सिच्च्यते वपा पशुपुरोडाशो हविरेतावान्न्हि पशुः ॥२२॥ अष्टकायामुखाᳩं * सम्भरति । प्राजापत्त्यमेतदहर्य्यदष्टका प्प्राजापत्त्यमेतत्कर्म्म यदुखा प्प्राजापत्त्य ऽएव तदहन्न्प्राजापत्त्यं कर्म्म करोति ॥ २३ ॥ यद्वेवाऽष्टकायाम् । पर्वैतत्संवत्त्सरस्य यदष्टका पर्वैतदग्नेर्य्यदुखा पर्व्वण्ण्येव तत्पर्व्व करोति ॥ २४ ॥ यद्वेवाऽष्टकायाम् । अष्टका वा ऽउखा निधिर्द्वा ऽउर्द्धी तिरश्ची † रास्ना तद्भ्चतुश्चतस्र ऽऊर्द्धास्तदष्टावष्टकायामेव तदष्टकां करोति ॥ २५ ॥ ‡ अमावास्यायां दीक्षते । अमावास्यायै वा ऽअधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥ २६ ॥ यद्वेवाऽमावास्यायाᳩं । रेतो वा ऽएतद्भूतमात्मानꣳ सिञ्चत्युखायां य्योनौ यद्दीक्षते तस्म्मा ऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोकमभिजायते तस्म्मादाहुः कृतं लोकंपुरुषोऽभि जायत ऽइति ॥ २७ ॥ स यत्कनीयः संवत्त्सराद्दीक्षितः स्यात् । अलोका ऽइष्टकाऽउपदद्ध्यादिष्टका लोकानतिरिच्च्येरन्नथ यद्भूयसो लोकान्न्कृत्त्वेष्टका नाऽनूपदद्ध्याल्लोका ऽइष्टका ऽअतिरिच्च्येरन्नथ यदमावास्यायां दीक्षित्त्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथाऽस्याऽऽपूर्य्यमाणपक्षे सर्व्वोऽग्निश्चीयते ॥ २८ ॥

* का० श्रौ० सू० १६. २. १ ।

† का० श्रौ० सू० १६. ३. ३१ ।

‡ अत्र शतम् ३५००; का० श्रौ० सू० १६. ४. २७ ।

तदाहुः । यद्यावन्त्य ऽएतस्याऽग्नेरिष्टकास्तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्न्यूर्द्धानि क्रयादहानि कथमस्यते लोका ऽअनूपहिता भवन्तीति यद्वा ऽअमावास्यायां दीक्षित्वाऽमावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथ यान्न्यूर्द्धानि क्रयादहानि तस्मिन्नवकाशेऽद्धूरर्षुरग्निं चिनोति क्वो हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याऽहोरात्राणि तावत्य ऽएतस्याऽग्नेरिष्टका ऽउप च त्रयोदशो मासस्त्रयोदशो वा ऽएष मासो यान्न्यूर्द्धानि क्रयादहानि तद्वा ऽअमुस्त्रयोदशस्य मास ऽइष्टकास्ताभिरस्य ते लोका ऽअनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥ २९ ॥ एतद्द वै यैव प्रथमा पौर्णमासी । तस्यां पशुमालभते या प्रथमाऽष्टका तस्यामुखाꣳ सम्भरति या प्रथमाऽमावास्या तस्यां दीक्षत ऽएतद्वै यान्न्येव संवत्सरस्य प्रथमान्न्यहानि तान्न्यस्य तदारभते तानि च तदाप्नोत्यथाऽतः सम्पदेव ॥ ३० ॥ तदाहुः । कथमस्यैतत्कर्म्म संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाऽग्निना सम्पद्यत ऽइत्येतेषां वै पञ्चानां पशूनां चतुर्विꣳशतिः सामिधेन्यो द्वादशाऽऽप्रियस्तत्षट्त्रिꣳशदेकादशाऽनुयाजा * ऽएकादशोपयजस्तदष्टा पञ्चाशत् ॥३१॥ ततो याऽष्टाचत्त्वारिꣳशत् । साऽष्टाचत्त्वारिꣳशदक्षरा जगतीयं वै जगत्यस्याꣳ हीदꣳ सर्वं जगदियमु वा ऽअग्निरस्यै हि सर्वोऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावत्तद्

* आप० श्रौ० सू० ७. २७, ११ ।

भवति ॥ ३२ ॥ षड्ढेवाऽष्टाचत्त्वारिꣳशत् । अष्टाचत्त्वारिꣳशदक्षरा वै जगती जगती सर्वाणि च्छन्दाꣳसि सर्वाणिच्छन्दाꣳसि प्प्रजापतिः प्प्रजापतिरग्निरुर्वावानग्निरुर्वावित्त्यस्य मात्रा तावत्तद्द् भवति ॥ ३३ ॥ अथ षानि दुश । सा दुशाक्षरा विराड्विराडग्निर्द्दश दिशो दिशोऽग्निर्द्दश प्प्राणाः प्प्राणा ऽअग्निरुर्वावानग्निरुर्वावित्त्यस्य मात्रा तावत्तद्द् भवति ॥ ३४ ॥ वपा पशुपुरोडाशः । तत्त्षष्टिः षष्टिर्म्मासस्याऽहोरात्राणि तन्न्मासमाप्नोति मास ऽआप्त ऽऋतुमाप्नोत्त्यृतुः संवत्त्सरं तत्त्संवत्त्सरमग्निमाप्नोति ये च संवत्त्सरे कामा ऽअथ यदुतोऽन्न्यद्यदेव संवत्त्सरेऽन्नं तत्तत् ॥ ३५ ॥ अथैतस्य प्प्राजापत्त्यस्य । एकविꣳशतिः सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तत्त्रयस्त्रिꣳशदेकादशाऽनुयाजाऽएकादशोपयज तत्त्पञ्च पञ्चाशद्वपा पशुपुरोडाशो हविस्तदष्टापञ्चाशत्त्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति द्वावाघारौ तत्त्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्त्यथ यदुतोन्न्यद्यदेव संवत्त्सरेऽन्नं तत्तत् ॥ ३६ ॥ अथैतस्य नियुत्त्वतीयस्य । सप्तदश सामिधेन्न्यो द्वादशाऽऽप्प्रियस्तदेका न त्रिꣳशदेकादशानुयाजा ऽएकादशोपयजस्तदेकपञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद् द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्त्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति वनस्प्पतिश्च वसाहोमश्च तत्त्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्त्यथ यदुतोऽन्न्यद्यदेव संवत्त्सरेऽन्नं तत्तदेवमु हाऽस्यैतत्कर्म्म संवत्त्सरमग्निमाप्नो-

त्ययेवᳫं संवत्सरेणाऽग्निना सम्पद्यते ॥ ३७ ॥ तदाहुः । नैतस्य पशोः समिष्टयजूᳫंषि जुहुयान्न हृदयशूलेनाऽवभृथमभ्यवेयादारम्भो वा ऽएषोऽग्नेः पशुर्व्यवसर्गो देवतानाᳫं समिष्टयजूᳫंषि सᳫंस्थाऽवभृथो नेदारम्भे देवता व्यवसृजानि नेद्यज्ञᳫं सᳫंस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याऽग्नेरन्तं न पर्यैत्तस्मात्सᳫंस्थापयेद्यद्वेव सᳫंस्थापयति प्राण ऽएष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यदु वै प्राणस्याऽन्तरियात्तत ऽएवं म्रियेत तस्मात्समेव स्थापयेदथाऽतो व्रतानामेव ॥ ३८ ॥ तदाहुः । नैतेन पशुनेष्ट्वोपरि शयीत* न माᳫंसमश्नीयान्न मिथुनमुपेयात्पूर्वदीक्षा वा ऽएष पशुरनवक्लृप्तं वै तद्यदीक्षित ऽउपरि शयीत यन्माᳫंसमश्नीयाद्यन्मिथुनमुपेयादिति नेत्वेवैषा † दीक्षा नेव हि मेखलाऽस्ति न कृष्णाजिनमिष्टकां वा ऽएतां कुरुते तस्मादु काममेवोपरि शयीतैतदु सर्वमन्नं यदेते पशवस्तदस्याऽत्राऽऽसमारब्धं भवति तद्यानि कानि चाऽमधुनोऽशनानि तेषामस्य सर्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥ तदाहुः । दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽसद् ब्रह्मण ऽआदिष्टदक्षिणां दद्याद् ब्रह्मा वै सर्वो यज्ञस्तदस्य सर्वो यज्ञो भिषज्जायितो भवतीति न

* "मैथुनं वर्जयेदापयस्यायाः, मांसोपर्यासने चेच्छन्" (का० श्रौ० सू० १६. १. ८, ९) ।

† 'मेखलया दीक्षयति' 'कृष्णाजिनेन दीक्षयति' इति दीक्षाविधानादत्रोभयोरभावादियं दीक्षा न भवतीति ( तै० सं० ६. १. ३. १४ ४ ) स्पष्टम् ।

तथा कुर्यादिष्टकां वा ऽएतां कुरुते तद्यथेष्टकामिष्टकायां दद्यात्तादृक्तदमुर्ह्येव दद्याद्यदस्योपकल्पेत ॥४०॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ चितीनामृषिदेवतासम्बन्धेनोत्पत्तिप्रकारः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाᳬ स्वयमातृण्णां चितिमपश्यत्तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥ तमग्निरब्रवीत् । उपाऽहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकया ह तदुवाचैषा वाऽव पश्विष्टका यद्दूर्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णाया ऽअनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्या ऽअनन्तर्हिता ऽओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष ऽएतयोपैत् ॥ २ ॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऽऊर्ध्वमिच्छतेति तेषां चेतयमानानामिन्द्राग्नी च विश्वकर्म्मा चाऽन्तरिक्षं द्वितीयाᳬ स्वयमातृण्णां चितिमपश्यँस्तस्मात्तामिन्द्राग्निभ्यां च विश्वकर्म्मणा चोपदधाति ॥ ३ ॥ तान्वायुरब्रवीत् । उपाऽहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद् द्वितीयायै स्वयमातृण्णाया ऽअनन्तर्हिता दिश्या ऽउपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. २. २ ।

वायुरनन्तर्हितो ह्येष ऽएताभिरुपैत् ॥ ४ ॥ तेऽब्रुवन् । चेतयद्ध्वमेवेति चितिमिच्छतेति वाऽव तदब्रुवन्नित ऽऊर्द्ध्वमिच्छतेति तेषां चेतयमानानां परमेष्ठी दिवं तृतीयाᳬस्वयमातृण्णां चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति ॥ ५ ॥ तमसावादित्योऽब्रवीत् । उपाऽहमायानीति केनेति लोकम्पृणयेति तथेत्येष वाऽव लोकम्पृणाऽऽत्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णानन्तर्हितालोकम्पृणाया ऽउपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येष ऽएतयोपैत् ॥ ६ ॥ तदेता वाऽव षड् देवताᳬ । इदᳬ सर्वमभवन्न्यदिदं किञ्च ते देवाश्चर्षयश्चाऽब्रुवन्निमा वाऽव षड् देवता ऽइदᳬ सर्वमभून्नुप तज्जानीत यथा वयमिहाऽप्यसामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथा वयमिहाऽप्यसामेति तेषां चेतयमानानां देवा द्वितीयां चितिमपश्यन्नृषयश्चतुर्थीम् ॥ ७ ॥ तेऽब्रुवन् । उप वयमायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्द्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तेन देवा ऽउपाऽयँस्तदेषा द्वितीया चितिरथ यदूर्द्ध्वमन्तरिक्षादर्वाचीनं दिवस्तेनर्षय ऽउपायँस्तदेषा चतुर्थी चितिᳬ ॥ ८ ॥ ते यदब्रुवन् । चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितयᳬ ॥ ९ ॥ प्रजापतिᳬ प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्याऽआर्षेयं देवा द्वितीयां चितिमपश्यन्देवा ऽएव तस्याऽआर्षेयमिन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यँस्त-

ऽएव तस्या ऽआर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषय ऽएव तस्या ऽआर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्या ऽआर्षेयꣳ स यो हैतदेवं चितीनामार्षेयं वेदाऽऽर्षेयवत्यो हाऽस्य बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ सावित्रहोमः ]

एतद्वै देवा ऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तेषां चेतयमानानाꣳ सवितैतानि सावित्राण्यपश्यद्यत्सविताऽपश्यत्तस्मात्सावित्राणि स ऽएता मष्टागृहीतामाहुतिमजुहोत्ताꣳ हुत्वेमामष्टधाविहितामषाढामपश्यत्पुरैव सृष्टाꣳ सतीम् ॥१॥ ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाऽव तदब्रुवन्यच्चेतयमाना ऽअपश्यँस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वाऽपश्यत्तस्मादिष्टका ॥२॥ [ अर्धप्रपाठकः ५२ ॥ ] तां वा ऽएताम् । एकाꣳ * सतीमष्टागृहीतामष्टाभिर्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा विहिता ॥ ३ ॥ तामूर्ध्वामुद्गृह्णन् जुहोति । इमांꣳ तदूर्ध्वाꣳ रूपैरुद्गृह्णाति तस्मादियमूर्ध्वा रूपैः ॥४॥ ताꣳ सन्ततां जुहोति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइह रक्षाꣳसि नाष्ट्रा

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. २. ३ ।
* "यजुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहोति" ( आप० श्रौ० सू० १६. १. ४ ) ।

नाऽन्ववेयुरिति त ऽएतꣳ सन्ततहोममपश्यन् रक्षसां नाष्ट्राणामनन्ववायनाय तस्मात्सन्ततां जुहोति ॥५॥ यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्तात्प्रीणाति तमिष्ट्वा प्प्रीत्वाऽथैनꣳ सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ६ ॥ यद्वेवैतामाहुतिं जुहोति । सवितैषोऽग्निस्तमेतयाऽऽहुत्या पुरस्ताद्रेतो भूतꣳ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारꣳ रेतो भूतꣳ सिञ्चति तस्मात्सावित्राणि तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ७ ॥ स्रुवश्चाऽत्र स्रुक्च प्प्रयुज्येते । वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्प्राणेन चैतदग्रे देवाः कर्म्माऽऽन्वैच्छꣳस्तस्मात्स्रुवश्च स्रुक्च ॥ ८ ॥ यद्वेव स्रुवश्च स्रुक्च । यो वै स प्प्रजापतिरासीदेष स स्रुवः प्प्राणो वै स्रुवः प्प्राणः प्प्रजापतिरथ या सा वागासीदेषा सा स्रुग्योषा वै वाग्योषा स्रुगथ यास्ता ऽआपऽआयन्वाचो लोकादेतास्ता यामेतामाहुतिं जुहोति ॥ ९ ॥ ताꣳ सन्ततां जुहोति । सन्तता हि ता ऽआप ऽआयन्नथ यः स प्प्रजापतिस्त्रय्या विद्यया सहाऽपः प्प्राऽऽविशदेष स यैरेतद्यजुर्भिर्ज्जुहोति ॥ १० ॥ तद्यानि त्रीणि प्प्रथमानि । इमे ते लोका ऽअथ यच्चतुर्थं यजुस्त्रयी सा विद्या जगती सा भवति जगती सर्वाणि च्छन्दाꣳसि सर्वाणि च्छन्दाꣳसि त्रयी विद्याऽथ यानि चत्वार्युत्तमानि दिशस्तानीमे च वै लोका दिशश्च प्प्रजापतिरथैषा त्रयी

द्विया ॥ ११ ॥ स * जुहोति । 'युञ्जानः प्रथमं मन' ऽइति प्रजापतिर्वै युञ्जानः स मन ऽएतस्मै कर्म्मणेऽयुङ्क्त तद्यन्मन ऽएतस्मै कर्म्मणेऽयुङ्क्त तस्मात्प्रजापतिर्युञ्जानः ॥ १२ ॥ 'तत्त्वाय सविता धिय' ऽइति । मनो वै सविता प्राणा धियो 'ऽग्नेर्ज्योतिर्निचाय्ये'त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत 'त्पृथिव्या ऽअध्याभरदि'ति पृथिव्यै ह्येनदध्याभरति ॥ १३ ॥ 'युक्तेन मनसा वयमि'ति । मनऽएवैतदेतस्मै कर्म्मणे युङ्क्ते न ह्ययुक्तेन मनसा किञ्चन सम्प्रति शक्नोति कर्त्तुं 'देवस्य सवितुः सव' ऽइति देवेन सवित्रा प्रसूता ऽइत्येत 'त्स्वर्ग्याय शक्त्येति' यथैतेन कर्म्मणा स्वर्ग्गं लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्ग्गं लोकमेति ॥ १४ ॥ 'युक्त्वाय सविता देवानि'ति । मनो वै सविता प्राणा देवाः 'स्वर्यतो धिया दिवमि'ति स्वर्ग्गं ह्येनां लोकं यतो धियैतस्मै कर्म्मणे युयुजे 'बृहज्ज्योतिः

* चयनं चिकीर्षन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं सम्पाद्य पुरुषाश्वगोऽव्यजानालभ्याजेन यागं विधाय पुरुषादि-पञ्चपशूनां शिरांसि घृतेनाऽभ्यज्य प्रथमचितावुपधानार्थं क्वचित् संस्थाप्य तेषां कबन्धान्यजशेषं च मृद्युक्ते तडागादिजले प्रक्षिपेत् । उखानिर्माणार्थं इष्टकानिर्माणार्थं च मृदं जलं तत एवाऽऽदेयम् । ततः फाल्गुनकृष्णाष्टम्यामुखानिर्माणम् । तदर्थमाहवनीयदक्षिणाग्नी उद्धृत्याऽऽहवनीयात्प्राक् कृते चतुष्कोणे गर्त्ते ततस्तडागान्मृत्पिण्डमानीय भूसमं स्थापयेत् । पिण्डाहवनीयान्तराले सच्छिद्रां बल्मीकमृदं निदध्यात् । आहवनीयाद्दक्षिणप्रान्तेऽश्वगर्दभाजाः प्राङ्मुखाः प्रागपराः मुञ्जरसनाबद्धा स्थाप्याः । आहवनीयोत्तरे वैणव्युभयतस्तीक्ष्णा कल्माषी हिरण्मयी वाऽभ्रिः स्थाप्या । ततः 'अष्टागृहीतं जुहोति सन्ततमुद्गृह्णन् युञ्जान इति' ( म० भा० का० श्रौ० सू० १६. २. ७ ) ।

( १ ) शु० सं० अ० ११ क० १ । ( २ ) शु० सं० अ० ११ क० १ । ( ३ ) शु० सं० अ० ११ क० १ । ( ४ ) शु० सं० अ० ११ क० १ । ( ५ ) शु० सं० अ० ११ क० २ । ( ६ ) शु० सं० अ० ११ क० २ । ( ७ ) शु० सं० अ० ११ क० २ । ( ८ ) शु० सं० अ० ११ क० ३ । ( ९ ) शु० सं० अ० ११ क० ३ । ( १० ) शु० सं० अं० ११ क० ३ ।

करिष्यत' ऽइत्यसौ वा ऽआदित्यो बृहज्ज्योतिरेष ऽउ-
ऽएषोऽग्निरेतम्वेते संस्करिष्यन्तो भवन्ति 'सवि[1]ता प्प्रसुवाति
तानी'ति सवितृप्प्रसूता ऽएतत्कर्म्म करवन्नित्त्येतत् ॥ १५ ॥
'युञ्[2]जते मन ऽउत युञ्जते धिय' ऽइति । मनश्चैवैतत्प्राणां-
श्चैतस्म्मै कर्म्मणे युङ्क्ते 'व्विप्[3]प्रा व्विप्रस्ये'ति प्रजापतिर्वै
व्विप्प्रो देवा व्विप्प्रा 'बृह[4]तो व्विपश्चित' ऽइति प्प्रजापतिर्वै
बृहन्विपश्चि'द्वि हो[5]त्रा दध' ऽइति यद्वा ऽएष चीयते
तदेष होत्रा व्विधत्ते चिते ह्येतस्मिन् होत्रा ऽअधिविधीयन्ते
'वयुना[6]विदि'त्येष हीदं वयुनमविन्द'देक ऽइ[7]दि'त्येको ह्येष-
ऽइदꣳ सर्वं[8] वयुनमविन्द'न्महीं देवस्य सवितुः परिष्टुति-
रि'ति महती देवस्य सवितुः परिष्टुतिरित्त्येतत् ॥ १६ ॥
'युजे वां[9] ब्रह्म पूर्व्व्यं नमोभिरि'ति । प्राणो वै ब्रह्म पूर्व्व्य-
मन्नं नमस्तत्तदेषैवाऽऽहुतिरन्नमेतयैव तदाहुत्त्यै तेनाऽन्नेन
प्प्राणानेतस्मै कर्म्मणे युङ्क्ते 'व्वि[10]श्लोक ऽएतु पत्थ्येव
सूरेरि'ति यथोभयेषु देवमनुष्येषु कीर्त्तिश्लोको यजमानस्य
स्यादेवमेतदाह 'शृण्व[11]न्तु व्विश्वे ऽअमृतस्य पुत्रा' ऽइति
प्प्रजापतिर्वा ऽअमृतस्तस्य व्विश्वे देवाः पुत्रा 'ऽआये धा[12]मानि
दिव्व्यानि तस्त्थुरि'तीमे वै लोका दिव्व्यानि धामानि
तद्य ऽएषु लोकेषु देवास्तानेतदाह ॥ १७ ॥ 'यस्[13]य प्प्रयाण-

(१) शु० सं० अ० ११ क० ३ । (२) शु० सं० अ० ११ क० ४ । (३) शु० सं० अ० ११ क० ४ । (४) शु० सं० अ० ११ क० ४ । (५) शु० सं० अ० ११ क० ४ । (६) शु० सं० अ० ११ क० ४ । (७) शु० सं० अ० ११ क० ४ । (८) शु० सं० अ० ११ क० ४ । (९) शु० सं० अ० ११ क० ५ । (१०) शु० सं० अ० ११ क० ५ । (११) शु० सं० अ० ११ क० ५ । (१२) शु० सं० अ० ११ क० ५ । (१३) शु० सं० अ० ११ क० ६ ।

मन्ववन्न्य ऽइद्युयुरि'ति । प्रजापतिर्व्वा ऽएतदग्रे कर्म्माऽकरोत्त-त्ततो देवा ऽअकुर्व'न्देवा देवस्य महिमानमोजसे'ति यज्ञो वै महिमा देवा देवस्य यज्ञं व्वीर्य्यमोजसेत्त्येत'द्यः [2]पार्त्थि-वानि व्विममे स ऽएतश' ऽइति यद्वै किञ्चाऽस्यां तत्पार्त्थिवं तदेष सर्वं व्विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति '[3]रजाᳬंसि देवः सविता महित्त्वने'तीमे वै लोका रजाᳬंस्यसावादित्त्यो देवः सविता तानेष महिम्ना व्विमिमीते ॥ १८ ॥ 'देव [4]सवितः प्प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये'ति । असौ वा ऽआदित्त्यो देवः सविता यज्ञो भगस्तमेतदाह प्प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति '[5]दिव्व्यो गन्धर्व्वः केतपूः केतं नः पुनात्वि'त्त्यसौ वा ऽआदित्त्यो दिव्व्यो गन्धर्व्वोऽन्नं केतोऽन्नपूरन्नं नः पुनात्विवित्त्येत'[6]द्वाचस्प्पतिर्व्वाचं नः स्वद-त्वि'ति व्वाग्वा ऽइदं कर्म्म प्प्राणो व्वाचस्प्पतिः प्प्राणो न-ऽइदं कर्म्म स्वदत्त्वित्त्येतत् ॥ १९ ॥ '[7]इमं नो देव सवित-र्य्यज्ञं प्रणये'ति । असौ वा ऽआदित्त्यो देवः सविता यद्दु वा ऽएष यज्ञियं कर्म्म प्प्रणयति तदुनार्त्तᳬं स्वस्त्युदृचम-श्नुते 'देव्वाव्व्यमि'ति यो देवानवदित्त्येत'[8]त्सखिविदᳬं सत्रा-जितं धनजितᳬं स्वर्ज्जितमि'ति य ऽएतत्सर्वं व्विन्दादित्त्ये-तदृचे'[9]त्यृचां स्तोमᳬं समर्द्धय गायत्रेण रथन्तरं बृहद्गायत्र-वर्त्तनी'ति सामानि '[10][11]स्वाहे'ति यजूᳬंषि सैषा त्रयी व्विद्या

( १ ) शु० सं० अ० ११ क० ६ । ( २ ) शु० सं० अ० ११ क० ६ । ( ३ ) शु० सं० अ० ११ क० ६ । ( ४ ) शु० सं० अ० ११ क० ७ । ( ५ ) शु० सं० अ० ११ क० ७ । ( ६ ) शु० सं० अ० ११ क० ७ । ( ७ ) शु० सं० अ० ११ क० ८ । ( ८ ) शु० सं० अ० ११ क० ८ । ( ९ ) शु० सं० अ० ११ क० ८ । ( १० ) शु० सं० अ० ११ क० ८ । ( ११ ) शु० सं० अ० ११ क० ८ ।

प्रथमं जायते यथैवाऽदोऽमुत्राऽजायतैवमथ यः सोऽग्नि-
रसृज्यतैष स योऽत ऽऊर्द्ध्वमग्निश्चीयते ॥ २० ॥ तान्ये-
तान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्नि-
र्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतं
सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो
दिशोऽग्निर्नव प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्य मात्रा
तावतैवैनमेतद्रेतो भूतं सिञ्चति तानि दश भवन्त्या-
हुतिर्दशमी दशाक्षरा विराड्विराडग्निर्दश दिशो दिशो-
ऽग्निर्दश प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य
मात्रा तावत्तद्भवति ॥ २१ ॥ एतस्यामाहुत्यां हु-
तायाम् । अग्निर्देवेभ्य ऽउदक्रामत्ते देवा ऽअब्रुवन्पशुर्वा-
ऽअग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाऽविर्भवि-
ष्यतीति तं पशुभिरन्वैच्छन्त्स स्वाय रूपायाऽविरभव-
त्तस्मादु हैतत्पशुः स्वाय रूपायाऽविर्भवति गौर्वा गवेऽश्वो
वाऽश्वाय पुरुषो वा पुरुषाय ॥ २२ ॥ तेऽब्रुवन् । यद्यह
सर्वैरन्वेषिष्यामो यातयामा ऽअनुपजीवनीया भविष्यन्ति
यद्यु ऽअसर्वैरसर्वमनुवेत्स्याम ऽइति त ऽएतमेकं पशुं द्वाभ्यां
पशुभ्यां प्रत्यपश्यन्नासभं गोश्चाऽवेश्च तद्यदेतमेकं
पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यँस्तस्मादेष ऽएकः सन्द्वि-
रेताः ॥ २३ ॥ अनद्धा पुरुषं पुरुषात् । एष ह वा ऽअनद्धा-
पुरुषो यो न देवानवति न पितॄन्न मनुष्यास्तँस्सर्वैरह
पशुभिरन्वैच्छन्नो यातयामा ऽअनुपजीवनीया ऽअभवन्
॥ २४ ॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य

मात्रा तावतैवैनमेतदुन्विच्छति ते पञ्च सम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥ २५ ॥ ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्यऽउदक्रामत्स मुञ्जं प्राऽऽविशत्तस्मात्स सुषिरस्तस्माद्वेवाऽन्तरतो धूमरक्त ऽइव सैषा योनिरग्नेर्य्यन्मुञ्जोऽग्निरिमे पशवो न वै योनिर्ग्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्ज्जायमानो जायाता ऽइति ॥ २६ ॥ त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्व्वतो वा ऽअश्वाभिधानी मुखं परिशेते सर्व्वतो योनिर्ग्गर्भं परिशेते योनिरूपमेतत्क्रियते ॥ २७ ॥ ते प्राञ्चस्तिष्ठन्ति । अश्वः * प्रथमोऽथ रासभोऽथाऽजऽएवꣳ ह्येतेऽनुपूर्वं यद्वै तदश्रु सङ्क्षरितमासीदेष सोऽश्वोऽथ यत्तदुरसदिवैष रासभोऽथ यः स कपाले रसो लिप्तऽआसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाहरिष्यन्तो भवन्त्येतेभ्यो वा ऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्य ऽएवैनमेतज्जनयति ॥ २८ ॥ ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा ऽअबिभयुर्य्यद्वै नो यज्ञं दक्षिणतो रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतं वज्रमपश्यन्नमुमेवाऽऽदित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्त ऽएतेन वज्रेण दक्षिणतो रक्षाꣳसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैतद्यजमान ऽएतेन वज्रेण

* का० श्रौ० सू० १६. २. ४ ।

दक्षिणतो रक्षाᳪंसि नाष्ट्रा ऽअपहत्त्याऽभयेऽनाष्ट्र ऽएतं स्वज्ञं तनुते ॥२९॥ दक्षिणत ऽआहवनीयो भवति। *उत्तरत-ऽएषाऽग्निरुपशेते व्वृषा वा ऽआहवनीयो योषाऽग्निर्द-क्षिणतो वै व्वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि व्वृषा योषामुपशेते ॥ ३० ॥ सा व्वैणवी स्यात्। अग्नि-र्द्देवेभ्य ऽउदक्रामत्स व्वेणुं प्राऽऽविशत्तस्मात्स सुषिरᳪं स-ऽएतानि व्वर्म्माण्यभितोऽकुरुत पर्व्वाण्यननुप्प्रज्ञानाय यत्र-यत्र निर्द्ददाह तानि कल्माषाण्यभवन् ॥ ३१ ॥ सा कल्माषी स्यात्। सा ह्याग्नेयी यदि कल्माषीं न व्विन्देदप्प्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाऽऽग्नेयी सैषा योनिरग्नेर्यद्वेणुरग्नि-रियं मृन्न वै योनिर्ग्गर्भᳪं हिनस्त्यहिᳪंसायै योनेर्व्वै जाय-मानो जायते योनेर्ज्जायमानो जायाता ऽइति ॥ ३२ ॥ प्रादेशमात्री स्यात्। प्रादेशमात्रᳪं हीदमभि व्वाग्वदत्त्य-रत्निमात्री त्त्वेव भवति बाहुर्व्वा ऽअरत्निर्बाहुना वै व्वीर्य्यं क्रियते व्वीर्य्यसम्मितैव तद्भवति ॥ ३३ ॥ अन्यतः †क्ष्णु-त्स्यात्। अन्यतरतो हीदं व्वाचᳪं क्ष्णुतमुभयतᳪं क्ष्णुत्त्वेव भवत्त्युभयतो हीदं व्वाचᳪं क्ष्णुतं यदेनया देवं च व्वदति मानुषं चाऽथो यत्सत्त्यं चाऽनृतं च तस्मादुभयतᳪंक्ष्णुत् ॥ ३४ ॥ यद्देवोभयतᳪंक्ष्णुत्। अतो वा ऽअग्नेर्व्वीर्य्यं यतोऽस्यै क्ष्णुतमुभयत ऽएवाऽस्यामेतद्वीर्य्यं दधाति ॥ ३५ ॥ यद्देवोभयतᳪंक्ष्णुत्। एतद्वा ऽएनं देवा ऽअनु-

* का० श्रौ० सू० १६. २. ५।

† "उभयतः क्ष्णूमन्यतरः क्ष्णूं वा" ( आप० श्रौ० सू० १६. १. ७ )।

विद्येभ्यो लोकेभ्योऽखनँस्तथैवैनमयमेतदनुविद्येभ्यो लोकेभ्यः खनति ॥ ३६ ॥ स यदिति खनति । तदेनमस्माँल्लोकात्खनत्यथ यदूर्ध्वोच्चरति तदमुष्माल्लोकादथ यदन्तरेण सञ्चरति तदन्तरिक्षलोकात्सर्वेभ्य ऽएवैनमेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥ * तामादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गायत्रेण च्छन्दसाऽङ्गिरस्वदि'ति सवितृप्रसूत ऽएवैनामेतदेताभिर्देवताभिरादत्ते गायत्रेण च्छन्दसाऽथोऽअस्यां गायत्रं छन्दो दधाति 'पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे'ति पशवो वै पुरीषं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्येत'त्त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति तदेनां त्रैष्टुभेन च्छन्दसाऽऽदत्तेऽथोऽअस्यां त्रैष्टुभं छन्दो दधाति ॥ ३८ ॥ 'अभ्रिरसी'ति । अभ्रिर्ह्येषा तदेनः सत्येनाऽऽदत्ते 'नार्यसीति' वज्रो वा ऽअभ्रिर्योषा नारी न वै योषा कञ्चन हिनस्ति शमयत्येवैनामेतदहिंसायै 'त्वया वयमग्निः शकेम खनितुः सधस्थ ऽए'तीदं वै सधस्थं त्वया वयमग्निः शकेम खनितुमस्मिन्त्सधस्थऽइत्येत'ज्जागतेन च्छन्दसाऽङ्गिरस्वदि'ति तदेनां जागतेन छन्दसाऽऽदत्तेऽथो ऽअस्यां जागतं छन्दो दधाति ॥ ३९ ॥ त्रिभिरादत्ते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-

* का० श्रौ० सू० १६. २. ८ क०।

(१) शु० सं० अ० ११ क० ९। (२) शु० सं० अ० ११ क० ९। (३) शु० सं० अ० ११ क० ९। (४) शु० सं० अ० ११ क० १०। (५) शु० सं० अ० ११ क० १०। (६) शु० सं० अ० ११ क० १०। (७) शु० सं० अ० ११ क० १०।

वैनामेतद्वादत्ते त्रिभिरादायाऽथैनां * चतुर्त्थेनाऽभिमन्त्रयत- ऽएतद्वा ऽएनां देवास्त्रिभिरादायाऽथाऽस्यां चतुर्त्थेन वीर्य्यं मदधुस्तथैवैनामयमेतत्त्रिभिरादायाऽथाऽस्यां चतुर्त्थेन वीर्य्यं दधाति ॥ ४० ॥ 'हस्त ऽआधाय सवितेति'। हस्ते ह्यस्या- ऽऽहिता भवति 'बिभ्रदभ्रिमिति' बिभर्त्ति ह्येनाॅं 'हिरण्य- यीमिति' हिरण्मयी ह्येषा या छन्दोम 'ग्नेर्ज्योतिर्न्निचाय्ये'- त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत 'त्पृथिव्या ऽअध्याभरदि'ति पृथिव्यै ह्येनदध्याभर'त्यानुष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति तदेना- मानुष्टुभेन च्छन्दसाऽऽदत्तेऽथो ऽअस्यामानुष्टुभं छन्दो दधाति तान्न्येतान्न्येव छन्दाॅंस्येषाऽभ्रिरारम्भायैवेयं वैणवी क्रियते ॥ ४१ ॥ ताॅं हैके † हिरण्मयीं कुर्वन्ति । हिरण्य- यीति वा ऽअभ्युक्तेति न तथा कुर्य्याद्यद्वा ऽएषा छन्दाॅं- सि तेनैषा हिरण्ययममृतॅं हिरण्ययममृतानि च्छन्दाॅंसि ॥ ४२ ॥ तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्वा वाग् वागि- त्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यत्तद्वागित्येकमक्षरं सैवैषा- ऽनुष्टुबुत्तमा सा साऽथ यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्वाणि यजूॅंषि सर्वयैवैतद्वाचाऽग्निं खनति सर्वया वाचा सम्भरति तस्माच्चतुर्भिः ॥ ४३ ॥ यद्वेव चतुर्भिः । चतस्रो वै दिशश्चतसृषु तद्दिक्षु वाचं दधाति तस्माच्चत-

---

* का० श्रौ० सू० १२. २. ८ ख।

(१) शु० सं० अ० ११ क० ११। (२) शु० सं० अ० ११ क० ११। (३) शु० सं० अ० ११ क० ११। (४) शु० सं० अ० ११ क० ११। (५) शु० सं० अ० ११ क० ११। (६) शु० सं० अ० ११ क० ११।

† का० श्रौ० सू० १६. २. ६।

सृषु दिक्षु व्वाग्वदति छन्दोभिश्च यजुर्भिश्चाऽऽदत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवाऽन्तरदिशः सर्व्वासु तद्दिक्षु व्वाचं दधाति तस्मात्सर्व्वासु दिक्षु व्वाग्वदति ॥ ४४ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वादि-पञ्चपशूनामभिमन्त्रणादि ]

हस्त ऽएषाऽग्निर्ब्भवत्यथ पशूनभिमन्त्रयते। एतद्वाऽएषु देवा ऽअन्वेषिष्यन्तः पुरस्ताद्वीर्य्यमदधुस्तथैवैष्वय-मेतदन्वेषिष्यन्पुरस्ताद्वीर्य्यं दधाति॥ १ ॥ † सोऽश्वमभिमन्त्रयते। 'प्रतूर्त्तं व्वाजिन्नाद्रवे'ति यद्वै क्षिप्रं तत्तूर्त्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्त्तं 'व्वरिष्ठामनु संव्वतमि'तीयं व्वै व्वरिष्ठा संव्वदिमामनु संव्वतमित्येत'द्दिवि ते जन्म परम-मन्तरिक्षे तव नाभिः पृथिव्व्यामधि योनिरिदि'ति तदेनमेता देवताः करोत्यग्निं व्वायुमादित्यं तदश्वे व्वीर्य्यं दधाति ॥ २ ॥ अथ रासभम्। 'युञ्जाथाᳫं रासभं य्युवमि'त्यद्व्वर्य्यु चैतद्यजमानं चाहा'ऽस्मिन्न्यामे व्वृषण्वसू' ऽइत्यस्मिन्न्कर्म्मणि व्वृषण्वसू ऽइत्येत'दग्निं भरन्तमस्मयुमि'त्यग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे व्वीर्य्यं दधाति ॥ ३ ॥ अथाऽजम्। 'योगे-योगे तवस्तरं व्वाजे-वाजे हवामह'

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. १; कठ० १५. ११. १६, १; मै० सं० ११. ७. १; तै० सं० ४. १. १।

† का० श्रौ० सू० १६. २. ९।

(१) शु० सं० अ० ११ क० १२। (२) शु० सं० अ० ११ क० १२। (३) शु० सं० अ० ११ क० १२। (४) शु० सं० अ० ११ क० १३। (५) शु० सं० अ० ११ क० १३। (६) शु० सं० अ० ११ क० १३। (७) शु० सं० अ० ११ क० १४।

ऽइत्यन्नं वै व्वाजः कर्म्मणि-कर्म्मणि तवस्तरमन्नेऽन्ने हवामह ऽइत्येत'[1]त्सखाय ऽइन्द्रमूतय ऽइतीन्द्रियवन्तमूतयऽइत्येतत्तदजे व्वीर्य्यं दधाति ॥ ४ ॥ त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैष्वेतद्वीर्य्यं दधाति ॥ ५ ॥ अथैनान्प्राच ऽउत्क्रमयति । तदेनमेतैः पशुभिरन्विच्छति नोपस्पृशत्त्यग्निरेष यत्पशवो नेन्माऽयमग्निर्हिनसदिति ॥ ६ ॥ सो*ऽश्वमुत्क्रमयति । 'प्रतूर्व्वन्नेह्यव[2]क्रामन्नशस्तीरि'ति पाप्मा वा ऽअशस्तिस्त्वरमाण ऽएह्यवक्रामन् पाप्मानमित्येत'[3]द्रुद्रस्य गाणपत्यं मयोभूरेही'ति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्त्येतत्तदेनमश्वेनाऽन्विच्छति ॥ ७ ॥ अथ रासभम् । उर्व्वन्तरिक्षं व्वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्नि'ति यथैव यजुस्तथा बन्धुः 'पूष्णा[5] सयुजा सहे'तीयं वै पूषाऽनया सयुजा सहेत्त्येतत्तदेनक्ष रासभेनाऽन्विच्छति ॥ ८ ॥ अथाऽजम् । 'पृथिव्याः [6]सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे'ति पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवदाभरेत्त्येतत्तदेनमजेनाऽन्विच्छति ॥ ९ ॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् षडृतवः संव-

(१) शु० सं० अ० ११ क० १४।

* का० श्रौ० सू० १६. २. १०।

(२) शु० सं० अ० ११ क० १५। (३) शु० सं० अ० ११ क० १५। (४) शु० सं० अ० ११ क० १५। (५) शु० सं० अ० ११ क० १५। (६) शु० सं० अ० ११ क० १६।

त्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१०॥ (B)

## तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०४ ॥



### [ पिण्डम्प्रति ब्रह्मादीनामभिगमनादि ]

प्रदीप्ता ऽएतेऽग्नयो भवन्ति । अथ मृदमच्छयन्तीमे वै लोका ऽएतेऽग्नयस्ते यदा प्प्रदीप्ता ऽअथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्म्माऽन्वैच्छँ-स्तद्यदेतानग्नीनतीत्य मृदमाहरंति तदेनं पुरेभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥ प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥ २ ॥ ते * प्प्रयन्ति । 'अग्निं पुरीष्यमङ्गिरस्वदुच्छेम' ऽइत्त्यग्निं पशव्यमग्निवदुच्छेम ऽइत्त्येतत् ॥ ३ ॥ † अथाऽनड्वापुरुषमीक्षते । 'अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम' ऽइत्त्यग्निं पशव्यमग्निवद्भरिष्याम ऽइत्त्येतत्तदेनमनड्वापुरुषेणाऽन्विच्छति ॥ ४ ॥ अथ ‡ वल्मीकवपा सुषिरा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ८. ३. २; कठ० सं० १८. १६, १-३; मै० सं० ११. ७. २; तै० सं० ४. १. २ ।

* का० श्रौ० सू० १६. २. ११ ।

( १ ) शु० सं० अ० ११ क० १५ ।

† का० श्रौ० सू० १६. २. १३ ।

( २ ) शु० सं० अ० ११ क० १६ ।

‡ का० श्रौ० सू० १६. २. १४ ।

ऽव्यद्धे निहिता भवति । तामन्वीक्षत ऽइयं वै वल्मीक-वपेयमु वा ऽइमे लोका ऽएतद्वा ऽएनं देवा ऽएषु लोकेषु विग्राहमैच्छँस्तथैवैनमयमेतदेषु लोकेषु विग्राहमिच्छति ॥ ५ ॥ 'अन्वग्निरुषसामग्रमख्यदि'ति । तदेनमुषःस्वै-च्छ'न्नन्वहानि प्रथमो जातवेदा' ऽइति तदेनमहःस्वैच्छ-न्ननु सूर्यस्य पुरुत्रा च रश्मीनि'ति तदेनꣳ सूर्यस्य रश्मिष्वैच्छ'न्ननु द्यावापृथिवी ऽआततन्थे'ति तदेनं द्यावा-पृथिव्योरैच्छँस्तमविन्दँस्तथैवैनमयमेतद्विन्दति तं रुग्द्वा परापश्यत्यथ तामवाऽस्यत्यागच्छन्ति मृदम् ॥६॥ * अथा-ऽश्वमभिमन्त्रयते। एतद्वै देवा ऽअब्रुवन्पाप्मानमस्याऽपह-नामेति श्रमो वै पाप्मा श्रममस्य पाप्मानमपहनामेति तस्य श्रमं पाप्मानमपाऽघ्नँस्तथैवाऽस्याऽयमेतच्छ्रमं पाप्मा-नमपहन्ति ॥ ७ ॥ 'आगत्य वाज्यद्ध्वानमि'ति । आगतो ह्यस्याऽद्ध्वा भवति 'सर्वा मृधो विधूनुत' ऽइति पाप्मा वै मृधः सर्वान्पाप्मनो विधूनुत ऽइत्येतत्तस्मादु हैतदश्वः † स्यत्वा 'विधूनुतेऽग्निꣳ सधस्थे महति चक्षुषा निचि-कीषतऽइतीदं वै महत्सधस्थमग्निमस्मिन्महति सधस्थे चक्षुषा दिदृक्षत ऽइत्येतत् ॥ ८ ॥ अथैनमाक्रमयति । एतद्वा ऽएष ऽएतं देवेभ्योऽनुविद्य प्राऽब्रवीद्यथाऽयमिहेवे-

(१) शु॰ सं॰ अ॰ ११ क॰ १७। (२) शु॰ सं अ॰ ११ क॰ १७। (३) शु॰ सं॰ अ॰ ११ क॰ १७। (४) शु॰ सं॰ अ॰ ११ क॰ १७।

* का॰ श्रौ॰ सू॰ १६. २. १६।

† 'स्यन्त्वा' इति पाठः 'ग च' पुस्तकयोः।

(५) शु॰ सं॰ अ॰ ११ क॰ १८। (६) शु॰ सं॰ अ॰ ११ क॰ १८। (७) शु॰ सं॰ अ॰ ११ क॰ १८।

त्येवम् ॥ ९ ॥ यद्वेवाऽऽक्रमयति । एतद्वै देवा ऽअबिभयु-
र्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्म्मा-
ऽएतं वज्ज्रमुपरिष्टादभिगोप्तारमकुर्वन्नमुमेवाऽऽदित्त्यमसौ
वा ऽआदित्त्य ऽएषोऽश्वस्तथैवाऽऽस्म्माऽअयमेतं वज्ज्रमुपरि-
ष्टादभिगोप्तारं करोति ॥ १० ॥ * '[1]आक्रम्म्य वाजिन् ।
पृथिवीमग्निमिच्छ रुचा त्वमि'ति चक्षुर्वै रुगाक्रम्म्य त्वं
वाजिन्न्पृथिवीमग्निमिच्छ चक्षुषेत्त्येत'[2]द्भूम्म्या ऽवृत्त्वाय
नो ब्रूहि यतः खनेम तं वयमि'ति भूमेस्तत्स्पाशयित्त्वाय नो
ब्रूहि यत ऽएनं खनेमेत्त्येतत् ॥ ११ ॥ अथैनमुन्म्मृशति † ।
एतद्वा ऽएनं देवाः प्प्रोचिवाꣳसं वीर्य्येण समार्द्धयँस्तथैवैनम-
यमेतत्त्प्रोचिवाꣳसं वीर्य्येण समर्द्धयति '[3]द्यौस्ते पृष्ठं पृथिवी
सधस्त्थमात्त्माऽन्तरिक्षꣳ समुद्रो योनिरि'तीत्त्थमसीत्त्थमसी-
त्त्येवैतदाह '[4]विख्याय चक्षुषा त्वमभितिष्ठ पृतन्न्यत' ऽइति
विख्याय चक्षुषा त्वमभितिष्ठ सर्वान्न्पाप्प्मन ऽइत्त्येतन्नो-
पस्प्पृशति वज्ज्रो वा ऽअश्वो नेन्न्माऽयं वज्ज्रो हिनसदिति
॥ १२ ॥ अथैनमुत्क्रमयति ‡ । एतद्वै देवा ऽअब्रुवन्न्किमि-
ममभ्युत्क्रमिष्याम ऽइति महत्सौभगमिति तं महत्सौ-
भगमभ्युदक्रमयँस्तथैवैनमयमेतन्न्महत्सौभगमभ्युत्क्रमय-
'[5]त्युत्क्राम महते सौभगाये'त्युत्क्राम महते सौभगमित्त्येत-

* का० श्रौ० सू० १६. २. १७ ।
( १ ) शु० सं० अ० ११ क० १९ । ( २ ) शु० सं० अ० ११ क० १९ ।
† का० श्रौ० सू० १६. २. १८ ।
( ३ ) शु० सं० अ० ११ क० २० । ( ४ ) शु० सं० अ० ११ क० २० ।
‡ का० श्रौ० सू० १६. २. १९ ।
( ५ ) शु० सं० अ० ११ क० २१ ।

त्तस्मादु हैतदश्वः पशूनां भगितमो'ऽस्म्मादास्त्थानादि'ति यत्रैतत्तिष्ठसीत्त्येतद् 'द्रविणोदा' ऽइति द्रविणꣳ ह्येभ्यो ददाति 'वाजिन्निति' वाजी ह्येष 'वयꣳ स्याम सुमतौ पृथिव्व्या ऽअग्निं खनन्त ऽउपस्त्थे ऽअस्या' ऽइति वयमस्यै पृथिव्व्यै सुमतौ स्यामाऽग्निमस्या ऽउपस्त्थे खनन्त-ऽइत्त्येतत् ॥ १३ ॥ अथैनमुत्क्रान्तमभिमन्त्रयते * । एतद्वा-ऽएनं देवाः प्प्रोचिवाꣳसं रुयथा ददिवाꣳसं वन्देतैवमुपाऽस्तु-वन्नुपाऽमहयँस्तथैवैनमयमेतदुपस्तौत्त्युपमहय'त्त्युदक्रमीदि'-त्युद्ध्यक्रमीद् 'द्रविणोदा' ऽइति द्रविणꣳ ह्येभ्यो ददाति 'वाज्ज्यर्वे'ति वाजी च ह्येषोऽर्वाचा'ऽकः सुलोकꣳ सुकृतं पृथिव्व्यामि'त्त्यकरः सुलोकꣳ सुकृतं पृथिव्व्यामित्त्येत-'त्ततः खनेम सुप्प्रतीकमग्निमि'ति तत ऽएनं खनेमेत्त्ये-तत्सुप्प्रतीकमिति सर्वतो वा ऽअग्निः सुप्प्रतीकः 'स्वो रुहाणा ऽअधि नाकमुत्तममि'ति स्वर्ग्गो वै लोको नाकः स्वर्ग्गं लोकꣳ रोहन्तोऽधि नाकमुत्तममित्त्येतत्तं दक्षिणतोप-सङ्क्रमयति यत्रेतरौ पशू भवतस्ते दक्षिणतः प्प्राञ्चस्ति-ष्ठन्ति स य ऽएवाऽमुत्र दक्षिणत स्त्थानस्य बन्धुः सोऽत्र ॥१४॥ अथोपविश्श्य मृदमभिजुहोति। एतद्वै देवा ऽअब्रुवँश्चे-

(१) शु० सं० अ० ११ क० २१। (२) शु० सं० अ० ११ क० २१। (३) शु० सं० अ० ११ क० २१। (४) शु० सं० अ० ११ क० २१। (५) शु० सं० अ० ११ क० २१।

* का० श्रौ० सू० १६. २. २०।

(६) शु० सं० अ० ११ क० २२। (७) शु० सं० अ० ११ क० २२। (८) शु० सं० अ० ११ क० २२। (९) शु० सं० अ० ११ क० २२। (१०) शु० सं० अ० ११ क० २२।

तयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्ते चेतयमाना-ऽएतामाहुतिमपश्श्यँस्तामजुहवुस्ताꣳ हुत्त्वेमाँल्लोकानुखाम-पश्श्यन् ॥ १५ ॥ तेऽब्रुवन् । चेतयद्ध्वमेवेति चितिमिच्छ-तेति वाऽव तदब्रुवँस्ते चेतयमाना ऽएतां द्वितीयामाहुति-मपश्श्यँस्तामजुहवुस्ताꣳ हुत्त्वा विश्श्वज्ज्योतिषोऽपश्श्यन्नेता देवता ऽअग्निं व्वायुमादित्त्यमेता ह्येव देवता व्विश्श्वज्ज्योति-स्तथैवैतद्यजमान ऽएते ऽआहुती हुत्त्वेमाँश्च लोकानुखां पश्श्यत्त्येताश्च देवता व्विश्श्वज्ज्योतिषो व्व्यतिषक्ताभ्भ्यां जुहोतीमाँश्च तल्लोकानेताश्च देवता व्व्यतिषजति ॥ १६ ॥ यद्द्वेवैते ऽआहुती जुहोति । मृदं च तदपश्च प्प्रीणाति ते ऽइष्ट्वा प्प्रीत्त्वाऽथैने सम्भरति व्व्यतिषक्ताभ्भ्यां जुहोति मृदं च तदपश्च व्व्यतिषजति ॥ १७ ॥ आज्ज्येन * जुहोति । व्वज्ज्रो वा ऽआज्ज्यं व्वज्ज्रमेवाऽस्म्मा ऽएतदभि-गोप्तारं करोत्त्यथो रेतो वा ऽआज्ज्यꣳ रेत ऽएवैतत्त्सिञ्चति स्त्रुवेण व्वृषा वै स्त्रुवो व्वृषो वै रेतः सिञ्चति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वृषा वै रेतः सिञ्चति ॥ १८ ॥ 'आ त्त्वा जिघर्म्मि मनसा घृतेने'ति । आत्त्वा जुहोमि मनसा च 'घृतेन' चेत्त्येत'त्प्रतिक्षियन्तं भुवनानि व्विश्श्वे'ति प्प्रत्त्यङ् ह्येष सर्व्वाणि भुवनानि क्षियति 'पृथुं तिरश्च्चा व्वयसा बृहन्तमि'ति पृथुर्व्वा ऽएष तिर्य्यङ्व्वयसो बृहन्धूमेन 'व्व्यचिष्ठमन्नै रभसं दृशानमि'त्त्यवकाशवन्तमन्नैरन्नादं दीप्प्यमानमित्त्येतत् ॥१९॥

* का० श्रौ० सू० १६. २. २२ क।

(१) शु० सं० अ० ११ क० २३। (२) शु० सं० अ० ११ क० २३। (३) शु० सं० अ० ११ क० २३। (४) शु० सं० अ० ११ क० २३। (५) शु० सं० अ० ११ क० २३।

'आ विश्वतः प्रत्यञ्चं जिघर्म्मी'ति । आ सर्वतः प्रत्यञ्चं जुहोमीत्येतद् 'रक्षसा मनसा[2] तज्जुषेते'त्यहीड़मानेन मनसा तज्जोषयेतेत्येत 'न्मर्य्यश्री स्पृहयद्वर्णो[3] ऽअग्नि'रि'ति मर्य्यश्रीर्ह्येष स्पृहयद्वर्णोऽग्नि'र्नाऽभिमृशे[4] तन्न्वा जर्भुराण' ऽइति न ह्येषोऽभिमृशे तन्न्वा दीप्यमानो भवति ॥ २० ॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चत्याग्नेयीभ्यामग्निमेवैतद्रेतो भूतꣳ सिञ्चति ते यदाग्नेय्यौ तेनाऽग्निरथ यत्त्रिष्टुभौ तेनेन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चतीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति ॥ २१ ॥ * अश्वस्य † पदे जुहोति । अग्निरेष यदश्वस्तथो हाऽस्यैते ऽअग्निमत्येवाऽऽहुती हुते भवतः ॥ २२ ॥ अथैनं परिलिखति । मात्रामेवाऽस्मा ऽएतत्करोति यथैतावानसीत्येवम् ॥ २३ ॥ यद्वेवैनं परिलिखति । एतद्वै देवा ऽअबिभयुर्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्माऽएतां पुरं पर्य्यश्रयꣳस्तथैवाऽस्मा ऽअयमेतां पुरं परिश्रयत्यभ्र्या वज्ज्रो वा ऽअभ्रिर्वज्ज्रमेवाऽस्मा ऽएतदभिगोप्तारं करोति सर्वतः परिलिखति सर्वत ऽएवाऽस्मा ऽएतं

---

(१) शु० सं० अ० ११ क० २४। (२) शु० सं० अ० ११ क० २४। (३) शु० सं० अ० ११ क० २४। (४) शु० सं० अ० ११ क० २४।

* अत्र शतम् ३६००।

† का० श्रौ० सू० १६. २. २२. ख।

व्रज्ञमभिगोप्तारं करोति त्रिष्कृत्वः * परिलिखति त्रिवृत-मेवाऽस्मा ऽएतं व्रज्ञमभिमोप्तारं करोति ॥ २४ ॥ 'परि-वाजपतिः कविः । परि त्वाऽग्ने पुरं व्वयं, त्वमग्ने द्युभिरि'त्य-ग्निमेवाऽस्मा ऽएतदुपस्तुत्य व्वर्म्म करोति परिवतीभिः परीव हि पुर ऽआग्नेयीभिरग्निपुरामेवाऽस्मा ऽएतत्करोति सा हैषाऽग्निपुरा दीप्यमाना तिष्ठति तिसृभिस्त्रिपुर-मेवाऽस्मा ऽएतत्करोति तस्मादु हैतत्पुरां परमः रूपं यत्त्रिपुरः स वै व्वर्षीयसा-व्वर्षीयसा च्छन्दसा परां-परां लेखां व्वरीयसीं करोति तस्मात्पुरां परा-परा व्वरीयसी लेखा भवन्ति लेखा हि पुरः ॥ २५ ॥ अथैनमस्यां खनति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तस्मा ऽइमामेवाऽऽत्मानम कुर्व्वन्गुप्त्या ऽआ-त्माऽऽत्मानं गोप्स्यतीति सा समंबिला स्यात्तदस्येयमात्मा भवति यद्वेव समम्बिला योनिर्व्वा ऽइयः रेत ऽइदं यद्वै रेतसो योनिमतिरिच्च्यतेऽमुया तद्भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं यत्समम्बिलं चतुःस्त्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्य ऽएवैनमेतद्दिग्भ्यः खनति ॥ २६ ॥ (c)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



* का० श्रौ० सू० १६. २. २३ ।

( १ ) शु० सं० अ० ११ क० २५—२७ ।

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. २; कठ० सं० १९. १. ३; कपि० सं० ३०. १; मै० सं० ११. ७. २; तै० सं० ४. १. २ ।

[ मृत्खननम्, कृष्णाजिनास्तरणम्, पुष्करपर्णनिधानादिकं च ]

अथैनमतः * खनत्येव । एतद्वा ऽएनं देवा ऽअनुविद्याऽखनँस्तथैवैनमयमेतदनुविद्य खनति 'देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्यां पूष्णो हस्ताब्भ्यां पृथिव्व्याः सधस्स्थादग्निं पुरीष्यमङ्गिरस्वत्त्खनामी'ति सवितृप्प्रसूत ऽएवैनमेतदेताभिर्देवताभिः पृथिव्व्या ऽउपस्स्थादग्निं पशव्व्यमग्निवत्त्खनति ॥ १ ॥ 'ज्योतिष्मन्तं त्वाऽग्ने सुप्प्रतीकमि'ति । ज्योतिष्मान्वा ऽअयमग्निः सुप्प्रतीको 'ऽजस्रेण भानुना दीद्यतमि'त्यजस्रेणाऽर्चिषा दीप्प्यमानमित्येत'च्छिवं प्रजाब्भ्योऽहिंसन्तं पृथिव्व्याः सधस्स्थादग्निं पुरीष्यमङ्गिरस्वत्त्खनाम' ऽइति शिवं प्रजाब्भ्योऽहिंसन्तं पृथिव्व्या ऽउपस्स्थादग्निं पशव्व्यमग्निवत्त्खनाम ऽइत्त्येतत् ॥ २ ॥ द्वाब्भ्यां खनति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्त्यस्य मात्रा तावतैवैनमेतत्त्खनत्यथो द्वयछ ह्येवैतद्रूपं मृच्चाऽऽपश्च ॥३॥ स वै खनामि खनाम ऽइति खनति । खनामीति वा ऽएतं प्रजापतिरखनत्त्खनाम ऽइति देवास्तस्मात्त्खनामि खनाम ऽइति ॥ ४ ॥ स वा ऽअब्भ्या खनन् । वाचा खनामि खनामऽइत्याह वाग्वा ऽअभ्रिरारम्भायैवेयं वैणवी क्रियते वाचा वा ऽएतमब्भ्या देवा ऽअखनँस्तथैवैनमयमेतद्वाचैवाऽब्भ्या

* का० श्रौ० सू० १६. २. २४ ।

( १ ) शु० सं० अ० ११ क० २८ । ( २ ) शु० सं० अ० ११ क० २८ । ( ३ ) शु० सं० अ० ११ क० २८ । ( ४ ) शु० सं० अ० ११ क० २८ । ( ५ ) शु० सं० अ० ११ क० २८ ।

खनति ॥ ५ ॥ अथैनं कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳬसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरति तत्तूष्णीमुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्वै यज्ञोऽनिरुक्तो वै प्रजापति रुत्तरतस्तस्योपरि बन्धुः प्राचीनग्रीवे तद्धि देवत्रा ॥ ६ ॥ अथैनं * पुष्करपर्णे सम्भरति । योनिर्वै पुष्करपर्णं योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति तन्मन्त्रेणोपस्तृणाति वाग्वै मन्त्रो वाक् पुष्करपर्णम् ॥ ७ ॥ 'अपां[1] पृष्ठमसि योनिरग्नेरि'ति । अपाᳬ ह्येतत्पृष्ठं योनिर्ह्येतदग्नेः 'समुद्रमभितः[2] पिन्वमानमि'ति समुद्रो ह्येतदभितः पिन्वते 'वर्द्धमानो[3] महाँ२॥ ऽआ च पुष्कर' ऽइति वर्द्धमानो महीयस्व पुष्कर ऽइत्येत'द्दिवो मात्रया वरिम्णा प्रथस्वे'त्यनुविमाष्टर्यसौ वा ऽआदित्य ऽएषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्यौर्भू त्वैनं यच्छेत्येवैतदाह ॥ ८ ॥ तदुत्तरं कृष्णाजिनादुप स्तृणाति । यज्ञो वै कृष्णाजिनमियं वै कृष्णाजिनमियमु वै यज्ञोऽस्याᳬ हि यज्ञस्तायते द्यौष्पुष्करपर्णमापो वै द्यौरापः पुष्करपर्णमुत्तरो वा ऽअसावस्यै ॥९॥ [ अर्धप्रपाठकः ॥५७॥ ] अथैने ऽअभिमृशति † । संज्ञामेवाऽऽभ्यामेतत्करोति 'शर्म्म च[4]

---

* का० श्रौ० सू० १६. २. २५,२६ ।

(१) शु० सं० अ० ११ क० २९ । (२) शु० सं० अ० ११ क० २९ । (३) शु० सं० अ० ११ क० २९ ।

† का० श्रौ० सू० १६. २. २७ ।

(४) शु० सं० अ० ११ क० ३० ।

स्त्थो वर्म्म च स्त्थ' ऽइति शर्म्म च ह्यस्यैते वर्म्म 'चाऽच्छिद्रे[1] बहुले ऽउभे' ऽइत्यच्छिद्रे ह्येते बहुले ऽउभे 'व्यचस्वती[2] संवसाथामि'त्यवकाशवती संवसाथामित्त्येत'त्कृतमग्निं[3] पुरीष्यमि'ति विभृतमग्निं पशव्यमित्त्येतत् ॥१०॥ 'संवसाथाꣳ[4] स्वर्विदा । समीची ऽउरसात्त्मने'ति संवसाथामेनꣳ स्वर्विदा समीची ऽउरसा चाऽऽत्त्मना चेत्त्येत'दग्निमन्तर्भरिष्यन्ती[5] ज्योतिष्मन्तमजस्रमिदि'त्त्यसौ वा ऽआदित्य ऽएषोऽग्निः स ऽएष ज्योतिष्मानजस्रस्तमेते ऽअन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्तमजस्रमिदिति ॥ ११ ॥ द्वाभ्यामभिमृशति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्त्यस्य मात्रा तावतैवाऽऽभ्यामेतत्त्संज्ञां करोत्त्यथो द्वयꣳ ह्येवैतद्रूपं कृष्णाजिनं च पुष्करपर्णं च ॥ १२ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ मृत्पिण्डाभिमर्शनादि ]

अथ मृत्पिण्डमभिमृशति * । 'पुरीष्योऽसी'[6]ति पशव्योऽसीत्त्येत 'द्विश्वभरा'[7] ऽइत्त्येष हीदꣳ सर्वं बिभर्त्त्य'थर्वा[8] त्वा प्रथमो निरमन्थदग्न' ऽइति प्राणो वा ऽअथर्वा प्राणो

(१) शु० सं० अ० ११ क० ३० । (२) शु० सं० अ० ११ क० ३० । (३) शु० सं० अ० ११ क० ३० । (४) शु० सं० अ० ११ क० ३१ । (५) शु० सं० अ० ११ क० ३१ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ३. १; कठ० सं० १६. १. ३; कपि० सं० ३०. १; मै० सं० १. ७. २, ३; तै० सं० ४. १. २–४ ।

* का० श्रौ० सू० १६. २. २८ ।

(६) शु० सं० अ० ११ क० ३२ । (७) शु० सं० अ० ११ क० ३२ । (८) शु० सं० अ० ११ क० ३२ ।

वा ऽएतमग्रे निरमन्थत्तद्यो ऽसावग्रे ऽग्निरसृज्यत सोऽसीति तदाह तमेवैनमेतत्करोति ॥ १ ॥ अथैनं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरत 'स्त्वामग्ने पुष्करा-दध्यथर्वा निरमन्थते' त्यापो वै पुष्करं प्राणोऽथर्वा प्प्राणो वा ऽएतमग्रेऽद्भ्यो निरमन्थ 'न्मूर्ध्नो विश्वस्य वाघत' ऽइत्यस्य सर्वस्य मूर्ध्न ऽइत्येतत् ॥ २ ॥ 'तमु त्वा दध्यङ् ऋषिः पुत्र ऽईधे ऽअथर्वण' ऽइति वाग्वै दध्यङ्ङाथर्वणः स-ऽएनं तत ऽऐन्ध 'व्वृत्रहणं पुरं दरामि' ति पाप्मा वै व्वृत्रः पाप्महनं पुरन्दरमित्येतत् ॥ ३ ॥ 'तमु त्वा पाथ्यो व्वृषा । समीधे दस्युहन्तममि' ति मनो वै पाथ्यो व्वृषा स ऽएनं तत ऽऐन्ध 'धनञ्जयः रणे रण' ऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ गायत्रीभिः । प्राणो गायत्री प्प्राणमेवाऽस्मि-न्नेतद्दधाति तिसृभिस्त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवाऽस्मिन्नेतद्दधाति तासां नव पदानि नव वै प्प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवाऽस्मिन्नेतद्दधाति ॥ ५ ॥ अथैते त्रिष्टुभा ऽउत्तरे भवतः । आत्मा वै त्रिष्टु-बात्मानमेवाऽस्यैताभ्याᳪं संस्करोति 'सीद होतः स्व ऽउ लोके चिकित्वा' नित्ययग्निर्वै होता तस्यैष स्वो लोको यत्कृ-ष्णाजिनं चिकित्वानिति विद्वानित्येत 'त्सादया यज्ञᳪं सुकृ-तस्य योनावि' ति कृष्णाजिनं वै सुकृतस्य योनि 'र्देवावीर्दे-

(१) शु० सं० अ० ११ क० ३२। (२) शु० सं० अ० ११ क० ३२। (३) शु० सं० अ० ११ क० ३३। (४) शु० सं० अ० ११ क० ३३। (५) शु० सं० अं० ११ क० ३४। (६) शु० सं० अ० ११ क० ३४। (७) शु० सं० अ० ११ क० ३५। (८) शु० सं० अ० ११ क० ३५। (९) शु० सं० अ० ११ क० ३५।

वान्हविषा यजासी'ति देवꣳ सन्देवानवन्हविषा यजासी'ति * देवꣳ सन्देवानवन्हविषा यजासीत्येत'दग्ने बृहद्यजमाने वयोधा' ऽइति यजमानायाऽऽशिषमाशास्ते ॥ ६ ॥ 'नि होता होतृषदने विदान' ऽइति । अग्निर्वै होता कृष्णाजिनꣳ होतृषदनं विदान ऽइति विद्वानित्येत'त्त्वेषो दीदिवाँ२॥ ऽअसदत्सुदक्ष' ऽइति त्वेषो दीप्यमानोऽसदत्सुदक्षऽइत्येत'ददब्धव्रतप्रमतिर्वसिष्ठ' ऽइत्यदब्धव्रत प्रमतिर्ह्येष वसिष्ठꣳ 'सहस्रम्भरꣳ शुचिजिह्वो ऽअग्निरि'ति सर्वं वै सहस्रꣳ सर्वम्भरꣳ शुचिजिह्वोऽग्निरित्येतद् द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुꣳ ॥ ७॥ अथैषा बृहत्युत्तमा भवति । बृहतीं वा ऽएष सञ्चितोऽभिसम्पद्यते याद्दग्वै योनौ रेतꣳ सिच्यते ताद्दग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष सञ्चितो बृहतीमभि सम्पद्यते ॥ ८ ॥ 'सꣳ सीदस्व महाँ२॥ ऽअसी'ति । इदमेवैतद्रेतꣳ सिक्तꣳ सꣳ सादयति तस्माद्योनौ रेतꣳ सिक्तꣳ सꣳ सीदति 'शोचस्व देववीतम' ऽइति दीप्यस्व देववीतम ऽइत्येत'द्विधूममग्ने ऽअरुषं मियेध्य सृज प्रशस्त दर्शतमि'ति यदा वा ऽएष समिध्यतेऽथैष धूममरुषं विसृजते दर्शतमिति ददृश ऽइव ह्येषꣳ ॥ ९ ॥ ताꣳ षट् सम्पद्यन्ते । षडृतवꣳ संवत्सरꣳ संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा

* 'देवः सन्देवानवन्हविषा यजासि' एष ग्रन्थः 'क' पुस्तके नाऽस्ति ।

( १ ) शु० सं० अ० ११ क० ३५ । ( २ ) शु० सं० अ० ११ क० ३६ । ( ३ ) शु० सं० अ० ११ क० ३६ । ( ४ ) शु० सं० अ० ११ क० ३६ । ( ५ ) शु० सं० अ० ११ क० ३६ । ( ६ ) शु० सं० अ० ११ क० ३७ । ( ७ ) शु० सं० अ० ११ क० ३७ । ( ८ ) शु० सं० अ० ११ क० ३७ ।

तावत्तद् भवति यद्वेव संवत्सरमभि सम्पद्यते तद् बृहती-मभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्णमास्यो द्वादशाऽष्टका द्वादशाऽमावास्यास्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा बृहती तं दक्षिणत ऽउदञ्चमाहरति दक्षिणतो वा ऽउदग्योनौ रेतः सिच्यत ऽएषो ऽअस्यैतर्हि योनि-रविच्छेदमाहरति रेतसोऽविच्छेदाय ॥ १० ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ उदकनिनयनादि ]

अथ तत्राऽप * ऽउपनिनयति । यद्वा ऽअस्यै क्षतं यद्वि-लिष्टमद्भिर्वै तत्सन्धीयतेऽद्भिरेवाऽस्या ऽएतत्क्षतं विलिष्टꣳ सन्तनोति सन्दधाति ॥ १ ॥ 'अपो देवीरुप सृज । मधु-मतीरक्ष्माय प्रजाभ्य' ऽइति रसो वै मधु रसवतीरयक्ष्म-त्वाय प्रजाभ्य ऽइत्येत'त्तासामास्थानादुज्जिहतामोषधयः सुपिप्पला' ऽइत्यपां वा ऽआस्थानादुज्जिहत ऽओषधयः सुपि-प्पलाः ॥ २ ॥ अथैनां वायुना † सन्दधाति । यद्वाऽअस्यै क्षतं यद्विलिष्टं वायुना वै तत्सन्धीयते वायुनैवाऽस्याऽएतत्क्षतं विलिष्टꣳ सन्तनोति सन्दधाति ॥ ३ ॥ [काण्डस्यार्धम् ॥ २६५ ॥]

---

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ४. २ । कठ० सं० १६. ३; कपि० सं० ३०. ३; मै० सं० ११. ७. ४; तै० सं० ४. १. ३ ।

* का० श्रौ० सू० १६. ३. १ ।

(१) शु० सं० अ० ११ क० ३८ ।

(२) शु० सं० अ० ११ क० ३८ ।

† का० श्रौ० सू० १६. ३. २ ।

'सं ते वायुर्म्मातरिश्वा दधात्त्वि'ति। अयं वै वायुर्म्मातरिश्वा योऽयं पवत 'ऽउत्तानायां हृदयं यद्विकस्तमि'त्युत्तानाया ह्यस्या ऽएतद्धृदयं विकस्तं 'यो देवानां चरसि प्प्राणथेने'त्येष हि सर्व्वेषां देवानां चरति प्प्राणथेन 'कस्मै देव वषडस्तु तुभ्य-मि'ति प्प्रजापतिर्वै कस्तस्म्मा ऽएवैतदिमां वषट्करोति नो हैतावत्त्यन्न्याहुतिरस्ति यथैषा ॥ ४ ॥ अथैनां दिग्भिः सन्दधाति। यद्वा ऽअस्यै क्षतं यद्विलिष्टं दिग्भिर्वै तत्सं-धीयते दिग्भिरेवाऽस्या ऽएतत्क्षतं विलिष्टꣳ सन्तनोति, सन्दधाति स-ऽइमां चेमां च दिशौ सन्दधाति तस्म्मादेते दिशौ सꣳहिते-ऽअथेमां चेमां च तस्म्माद्वेवैते सꣳहित्त ऽइत्त्यग्रेऽथेति ऽअथेत्त्यथेति तद्दक्षिणावृत्तद्धि देवत्राऽनयाऽनया वै भेषजं क्रियतेऽनयैवैनामेतद्भिषज्ज्यति ॥ ५ ॥ अथ कृष्णाजिनं च पुष्करपर्ण्णं च समुद्गृह्णाति। योनिर्वै पुष्करपर्ण्णं योन्न्या तद्रेतः सिक्तꣳ समुद्गृह्णाति तस्म्माद्योन्न्या रेतः सिक्तꣳ * समुद्गृह्यते 'सुजातो ज्ज्योतिषा सह शर्म्म वरूथमासद-त्स्व'रिति सुजातो ह्येष ज्ज्योतिषा सह शर्म्म चैतद्वरूथं च श्वश्चाऽऽसीदति ॥६॥ अथैनमुपनह्यति। योनौ तद्रेतो युनक्ति तस्म्माद्योनौ रेतो युक्तं न निष्पद्यते योक्त्रेण योक्त्रेण हि योग्ग्यं युञ्जन्ति मौञ्जेन त्रिवृता तस्योक्तो बन्धुः ॥७॥ तत्प-र्य्यस्यति। 'वासो ऽअग्ने विश्वरूपꣳ संव्व्ययस्व विभाव-

---

(१) शु० सं० अ० ११ क० ३९। (२) शु० सं० अ० ११ क० ३९। (३) शु० सं० अ० ११ क० ३९। (४) शु० सं० अ० ११ क० ३९।

* का० श्रौ० सू० १६. ३. ४।

(५) शु० सं० अ० ११ क० ४०। (६) शु० सं० अ० ११ क० ४०।

सवि'ति वरुण्ण्या वै यज्ञे रज्जुरवरुण्ण्यमेवैनदेतत्कृत्वा यथा वासः परिधापयेदेवं परिधापयति ॥ ८ ॥ अथैनमादायोत्तिष्ठति । असौ वा ऽआदित्य ऽएषोऽग्निरमुं तदादित्यमुत्थापय'त्युदु तिष्ठ स्वध्वरे'त्यध्वरो वै यज्ञ ऽउदु तिष्ठ सुयज्ञियेत्येत'द्वा नो देव्या धिये'ति या ते दैवी धीस्तया नोऽवेत्येतद्'दृशे च भासा बृहता सुशुक्वनिरि'ति दर्शनाय च भासा बृहता सुशुक्वनिरित्येतदाग्ने 'याहि सुशस्तिभि'रिति ये वोढारस्ते सुशस्तय ऽआऽग्ने याहि वोढृभिरित्येतत् ॥ ९ ॥ अथैनमित ऽऊर्द्ध्वं * प्राञ्चं प्रगृह्णाति । असौ वाऽआदित्य ऽएषोऽग्निरमुं तदादित्यमित ऽऊर्द्ध्वं प्राञ्चं दधाति तस्मादसावादित्य ऽइत ऽऊर्द्ध्वः प्राङ् धीयत'ऽऊर्द्ध्व ऽऊ षु ण ऽऊतये तिष्ठा देवो न सविते'ति यथैव यजुस्तथा बन्धु'रूर्द्ध्वो वाजस्य सनिते'त्यूर्द्ध्वो वा ऽएष तिष्ठन्वाजमन्नः सनोति 'यदञ्जिभिर्वाघद्भिर्विह्वयामह' ऽइति रश्मयो वा ऽएतस्याऽञ्जयो वाघतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपाऽवहरति तमुपाऽवहृत्योपरिनाभि धारयति तस्योपरि बन्धुः ॥१०॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

(१) शु० सं० अ० ११ क० ४१। (२) शु० सं० अ० ११ क० ४१। (३) शु० सं० अ० ११ ४१। (४) शु० सं० अ० ११ क० ४१।

* का० श्रौ० सू० १६. ३ ७।

(५) शु० सं० अ० ११ क० ४२। (६) शु० सं० अ० ११ क० ४२। (७) शु० सं० अ० ११ क० ४२।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ४. २; कठ० सं० १६. ३; कपि० सं० ३०. ३; मै० सं० ११. ७. ४; तै० सं० ४. १. ४।

[ अश्वादिपञ्चपशूनामभिमन्त्रणादि ]

हस्त ऽएष भवत्त्यथ पशूनभिमन्त्रयते । एतद्वा ऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्य्यमदधुस्तथैवैष्वयमेतत्त्सम्भरिष्यन्पुरस्ताद्वीर्य्यं दधाति ॥ १ ॥ सोऽश्वमभिमन्त्रयते । * 'स[1] जातो गर्ब्भो ऽअसि रोदस्योरि'तीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्ब्भोऽ'ग्ने चारुर्विभृत[2] ऽओषधीष्वि'ति सर्वासु ह्येष चारुर्विभृत ऽओषधिषु 'चित्रः[3] शिशुः परितमाᳫंस्यक्तूनि'ति चित्रो वा ऽएष शिशुः परेण तमाᳫंस्यक्तूनतिरोचते 'प्र मातृ[4]भ्यो ऽअधि कनिक्रदद्गा' ऽइत्त्योषधयो वा ऽएतस्य मातरस्ताभ्य ऽएष कनिक्रदत्प्रैति तदश्वे वीर्य्यं दधाति ॥ २ ॥ अथ रासभः । 'स्थिरो[5] भव वीड्वङ्ग ऽआशुर्ब्भव वाज्यर्वन्नि'ति स्थिरश्च भव वीड्वङ्गश्चाऽऽशुश्च भव वाजी चार्वन्नित्येत'त्पृथु[6]र्ब्भव सुषदस्त्वमग्नेः पुरीषवाहण' ऽइति पृथुर्ब्भव सुशीमस्त्वमग्नेः पशव्यवाहन ऽइत्त्येतत्तद्रासभे वीर्य्यं दधाति ॥ ३ ॥ अथाऽजः । 'शिवो[7] भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर' ऽइत्त्यङ्गिरा वा ऽअग्निराग्नेयोऽजः शमयत्त्येवैनमेतदहिᳫंसायै 'मा[8] द्यावापृथिवी ऽअभिशोचीर्म्माऽन्तरिक्षं मा वनस्पतीनि'त्त्येतत्त्सर्वं मा हिᳫंसीरित्त्येतत्तदजे वीर्य्यं दधाति ॥४॥

* का० श्रौ० सू० १६. ३. ८ ।

( १ ) शु० सं० अ० ११ क० ४३ । ( २ ) शु० सं० अ० ११ क० ४३ । ( ३ ) शु० सं० अ० ११ क० ४३ । ( ४ ) शु० सं० अ० ११ क० ४३ । ( ५ ) शु० सं० अ० ११ क० ४४ । ( ६ ) शु० सं० अ० ११ क० ४४ । ( ७ ) शु० सं० अ० ११ क० ४५ । ( ८ ) शु० सं० अ० ११ क० ४६ ।

त्रिभिरभिमन्त्रयते। त्रिवृदग्निरूर्ध्वानग्निरूर्ध्वावत्त्यस्य मात्रा तावतैष्वेवैतद्वीरूर्ध्वं दधाति ॥ ५ ॥ अथैनमेतेषां पशूनामुपरिष्टात् प्रगृह्णाति। तदेनमेतैः पशुभिः सम्भरति नोपस्पृशति वज्रो वै पशवो रेत ऽइदं नेदिदꣳ रेतो वज्रेण हिनसानीत्त्यथो ऽअग्निरयं पशव ऽइमे नेदयमग्निरिमान्पशून्हिनसदिति ॥ ६ ॥ तमश्वस्योपरिष्टात्प्रगृह्णाति *। 'प्रैतु वाजी कनिक्रददि'ति प्रैतु वाजी कनिक्रद्यमान ऽइत्त्येत'न्नानदद्रासभः पत्वे'ति तदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधाति 'भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरे'ति भरन्नग्निं पशव्यं मो ऽअस्म्मात् कर्म्मणः पुरा पादीत्त्येतत्तदेनमश्वेन सम्भरति ॥ ७ ॥ अथ रासभस्य। 'वृषाऽग्निं वृषणं भरन्नि'ति वृषा वा ऽअग्निर्वृषा रासभः स वृषा वृषाणं भरत्यपां 'गर्भꣳ समुद्रियमि'त्त्यपाꣳ ह्येष गर्भः समुद्रियस्तदेनꣳ रासभेन सम्भरति ॥ ८ ॥ अथाऽपाऽऽदत्ते। 'अग्न ऽआ याहि वीतय' ऽइत्त्यवितव ऽइत्त्येतत्तदेनं ब्रह्मणा यजुषैतस्म्माच्छौद्राद्वर्णादपाऽऽदत्ते ॥ ९ ॥ अथाऽजस्य। 'ऋतꣳ सत्त्यमृतꣳ सत्त्यमि'त्त्ययं वा ऽअग्निर्ऋतमसावादित्त्यः सत्त्यं यदि वाऽसावृतमयꣳ सत्त्यमुभयम्वेतदयमग्निस्तस्म्मादाहर्त्तꣳ सत्त्यमृतꣳ सत्त्यमिति तदेनमजेन

* का० श्रौ० सू० १६. ३. ९, १०।

(१) शु० सं० अ० ११ क० ४६। (२) शु० सं० अ० ११ क० ४६। (३) शु० सं० अ० ११ क० ४६। (४) शु० सं० अ० ११ क० ४६। (५) शु० सं० अ० ११ क० ४६। (६) शु० सं० अ० ११ क० ४६। (७) शु० सं० अ० ११ क० ४७।

सम्भरति ॥ १० ॥ त्रिभिः सम्भरति । त्रिवृदग्निर्यावा-वानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत्सम्भरति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् तस्योक्तो बन्धुः ॥ ११ ॥ अथैतान्पशूनावर्त्तयन्ति । तेषामजः प्रथम-ऽएत्यथ रासभोऽथाऽश्वोऽथैतो यतामश्वः प्रथम ऽएत्यथ रासभोऽथाऽजः क्षत्रं वा ऽअन्वश्वो वैश्यं च शूद्रं चाऽनु रासभो ब्राह्मणमजः ॥ १२ ॥ तद्यदितो यताम् । अश्वः प्रथम ऽएति तस्मात्क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्त्यथ यदमुत आयतामजः प्रथम ऽएति तस्माद् ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चा-दनुयन्त्यथ यन्नैवेतो यतां नाऽमुतो रासभः प्रथम-ऽएति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च वैश्यं च शूद्रं च पश्चादन्वितस्तस्मादेवं यन्त्यपापवस्यसाया-ऽथो ब्रह्मणा चैवैतत्क्षत्रेण चैतौ वर्णावभितः परिगृह्णीते-ऽनपक्रमिणौ कुरुते ॥ १३ ॥ अथाऽनद्धा*पुरुषमीक्षते । 'अग्निं पुरीष्यमङ्गिरस्वद्भराम' ऽइत्यग्निं पशव्यमग्निव-द्भराम ऽइत्येतत्तदेनमनद्धापुरुषेण सम्भरति ॥ १४ ॥ तमजस्योपरिष्टात्प्रगृह्णन्नेति । आग्नेयो वा ऽअजः स्वेनै-वैनमेतदात्मना स्वया देवतया सम्भरत्यथो ब्रह्म वा-ऽअजो ब्रह्मणैवैनमेतत्सम्भरति ॥ १५ ॥ अथैनमुपाऽवह-रति † । 'ओषधयः प्रति मोदध्वमग्निमेतꣳ शिवमायन्त-

* का० श्रौ० सू० १६. ३. १२ ।
( १ ) शु० सं० अ० ११ क० ४७ ।
† का० श्रौ० सू० १६. ३. १३ ।
( २ ) शु० सं० अ० ११ क० ४७ ।

मभ्यत्र युष्मा' इत्येतद्वैतस्मादायत ओषधयो बिभ्यति यद्वै नोऽयं न हिंस्यादिति ताभ्य एवैनमेतच्छमयति प्रत्येनं मोदध्वं शिवो वोऽभ्यैति न वो हिंसिष्यतीति 'व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जही'ति व्यस्यन्विश्वा अनिराश्चामीवाश्च निषीदन्नोऽप सर्वं पाप्मानं जहीत्येतत् ॥ १६ ॥ 'ओषधयः प्रतिगृभ्णीत । पुष्पवतीः सुपिप्पला' इत्येतद्वैतासां समृद्धं रूपं यत्पुष्पवत्यः सुपिप्पलाः समृद्धा एनं प्रतिगृह्णीतेत्येत'दयं वो गर्भ ऋत्वियः प्रत्नं सधस्थमासददि'त्ययं वो गर्भ ऋतव्यः सनातनं सधस्थमासददित्येतत् ॥ १७ ॥ द्वाभ्यामुपावहरति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपावहरति तं दक्षिणत उदञ्चमुपावहरति तस्योक्तो बन्धुरुद्धतमवोक्षितं भवति यत्रैनमुपावहरत्युद्धते वा अवोक्षितेऽग्निमादधति सिकता उपकीर्णा भवन्ति तासामुपरि बन्धुः ॥ १८ ॥ परिश्रितं भवति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एतां पुरं पर्यश्रयंस्तथैवास्मा अयमेतां पुरं परिश्रयत्यथो योनिर्वा इयं रेत इदं तिर इव वै योनौ रेतः सिच्यते योनिरूपमेतत्क्रियते तस्मादपि स्वया जायया तिर इवैव चिचरिषति ॥ १९ ॥ अथैनं

(१) शु० सं० अ० ११ क० ४७ । (२) शु० सं० अ० ११ क० ४८ । (३) शु० सं० अ० ११ क० ४८ ।

* विष्यति तद्यदेवाऽस्याऽत्रोपनद्धस्य सꣳ शुच्च्यति तामेवाऽस्म्मादेतच्छुचं बहिर्द्धा दधात्त्यथो ऽएतस्या ऽएवैनमेतद्योनेः प्प्रजनयति ॥ २० ॥ 'वि [1]पाजसा पृथुना शोशुचान' ऽइति । वि पाजसा पृथुना दीप्प्यमान ऽइत्त्येतद् '[2]बाधस्व द्विषो रक्षसो ऽअमीवा' ऽइति बाधस्व सर्व्वान्न्पाप्प्मान ऽइत्त्येत'त्सुश[3]र्म्मणो बृहतः शर्म्मणि स्यामग्नेरहꣳ सुहवस्य प्प्रणीताविʼत्त्याशिषमाशास्ते ॥ २१ ॥ अथाऽजलोमान्न्याच्छिद्य । उदीचः प्प्राचः पशून्न्प्रसृजत्त्येषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्प्राच्च्येतस्यां तद्दिशि पशून्दधाति तस्म्मादुभये देवमनुष्याः पशूनुपजीवन्ति ॥ २२ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ मृत्पिण्डे पलाशपर्णक्वथितोदकसेचनम्, अजलोमाधिश्रयणादिकं च ]

पर्ण्णकषायनिष्पक्वा ऽएता ऽआपो भवन्ति । स्त्थेम्म्नेन्न्वेव यद्वेव पर्ण्णकषायेण सोमो वै पर्ण्णश्चन्द्रमा ऽउ वै सोम ऽएतदु वा ऽएकमग्निरूपमेतस्यै वाऽग्निरूपस्योपाऽऽप्त्यै

* का० श्रौ० सू० १६. ३. १४ ।

(१) शु० सं० अ० ११ क० ४९ । (२) शु० सं० अ० ११ क० ४९ । (३) शु० सं० अ० ११ क० ४९ ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ४. ३, ४; कठ० सं० १६. ४; कपि० सं० ३०. ३; मै० सं० ११. ७. ४,५; तै० सं० ४. १. ४ ।

॥ १ ॥ ता ऽउप * सृजति । 'आपो हि ष्ठा मयोभुव' ऽइति यां वै देवतामृगभ्यनूक्ता यां रुयजुः सैव देवता सर्क्सो देवता तद्यजुस्ता हैता ऽआप ऽएवैष त्रिचस्तद्या- ऽअमूराप ऽएकꣳ रूपꣳ समदृश्यन्त ता ऽएतास्तदेवैतद्रूपं करोति ॥ २ ॥ अथ फेनं जनयित्वाऽन्ववदधाति । यदेव तत्फेनो द्वितीयꣳ रूपमसृज्यत तदेवैतद्रूपं करोत्यथ यामेव तत्र मृदꣳ संश्यौति सैव मृद्यत्ततृतीयꣳ रूपमसृज्यतैतेभ्यो वा ऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्य ऽएवैनमेतज्जनयति ॥ ३ ॥ † अथाऽजलोमैः सꣳ सृजति । स्थेम्ने न्वेव यद्वेवाऽजलोमैरेतद्वा ऽएनं देवाः पशुभ्योऽधि समभरँस्त- थैवैनमयमेतत्पशुभ्योऽधि सम्भरति तद्यदजलोमैरेवाऽजेहि सर्वेषां पशूनाꣳ रूपमथ यल्लोम लोम हि रूपम् ॥ ४ ॥ 'मित्रः सꣳ सृज्य[२] । पृथिवीं भूमिं च ज्योतिषा सहे'ति प्राणो वै मित्रः प्राणो वा ऽएतदग्रे कर्म्माऽकरो'त्सुजातं[३] जातवेदसमयक्ष्माय त्वा सꣳ सृजामि प्रजाभ्य ऽइति यथैव यजुस्तथा बन्धुः ॥ ५ ॥ अथैतत्त्रतयं पिष्टं भवति । शर्क्कराऽश्मायोरसस्तेन ‡ सꣳ सृजति स्थेम्ने न्वेव यद्वेव तेनैतावती वा ऽइयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति ॥ ६ ॥ 'रुद्राः सꣳ सृज्य । पृथिवीं

* का० श्रौ० सू० १६. ३. १५ ।

(१) शु० सं० अ० ११ क० ५०—५२ ।

† का० श्रौ० सू० १६. ३. १७ ।

(२) शु० सं० अ० ११ क० ५३ । (३) शु० सं० अ० ११ क० ५३ ।

‡ का० श्रौ० सू० १६. ३. १८ ।

बृहज्ज्योतिः समीधिर' ऽइत्यसौ वा ऽआदित्य ऽएषोऽग्नि-रेतद्वै त[१]'द्रुद्राः सᳫँ सृज्य पृथिवीं बृहज्ज्योतिः समीधिरे। तेषां भानुरजस्र ऽइच्छुक्रो देवेषु रोचत' ऽइत्येष वा ऽएषां भानुरजस्रः शुक्रो देवेषु रोचते ॥ ७ ॥ द्वाभ्याᳫँ सᳫँ सृजति। द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्सᳫँ सृजति ॥ ८ ॥ अथ * पप्रयौति। सᳫँसृ[२]ष्टां वसुभी रुद्रैरि'ति सᳫँसृष्टा ह्येषा वसुभिश्च रुद्रैश्च भवति यन्मित्रेण तद्वसुभिर्यद्रुद्रैस्तत्तद्रुद्रै'र्धीरैः क[३]र्म्मण्यां मृदमि'ति धीरा हि ते कर्म्मण्यो ऽइयं मृ'द्धस्ता[४]भ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु तामि'ति वाग्वै सिनीवाली सैनाᳫँ हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् ॥ ९ ॥ 'सिनी[५]वाली सुकपर्दा सुकुरीरा स्वौपशे'ति। योषा वै सिनीवाल्येतदु वै योषायै समृद्धᳫँ रूपं यत्सुकपर्दा सुकुरीरा स्वौपशा समर्द्धयत्येवैनामेत'त्सा तु[६]भ्यमदिते मह्योखां दधातु हस्तयोरि'तीयं वा ऽअदितिर्म्महास्यै तदाह ॥ १० ॥ 'उखाँ कृणोतु। शक्त्या बाहुभ्यामदितिर्द्धिये'ति शक्त्या च हि करोति बाहुभ्यां च धिया च माता पुत्रं यथोपस्थे साऽग्निं बिभर्त्तु गर्भ ऽए'ति यथा माता पुत्र-मुपस्थे बिभृयादेवमग्निं गर्भे बिभर्त्त्वित्येतत् ॥ ११ ॥

---

( १ ) शु० सं० अ० ११ क० ५४।

* का० श्रौ० सू० १६. ३. १९।

( २ ) शु० सं० अ० ११ क० ५५। ( ३ ) शु० सं० अ० ११ ५५। ( ४ ) शु० सं० अ० ११ क० ५५। ( ५ ) शु० सं० अ० ११ क० ५६। ( ६ ) शु० सं० अ० ११ क० ५६ ( ७ ) शु० सं० अ० ११ क० ५७। ( ८ ) शु० सं० अ० ११ क० ५७।

त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रयौति द्वाभ्याꣳ सꣳ सृजति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति त्रिभिरप ऽउपसृजति तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्यमात्रा तावत्तद्भवत्यथो ऽअष्टाक्षरा वाऽइयमग्रेऽसृज्ज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति ॥ १२ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ उखाया अधस्तान्मृत्पिण्डदानविध्यादि ]

अथ * मृत्पिण्डमपाऽऽदत्ते । यावन्तं निधयेऽलं मन्यते 'मखस्य शिरोऽसीति' यज्ञो वै मखस्तस्यैतच्छिर ऽआहवनीयो वै यज्ञस्य शिर ऽआहवनीयमु वा ऽएतं चेष्यन्भवति तस्मादाह मखस्य शिरोऽसीति ॥ १ ॥ यद्वेवाऽऽह मखस्य शिरोऽसीति । जायत ऽएष ऽएतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाता ऽइति ॥ २ ॥ तं † प्रथयति । 'वसवस्त्वा[2] कृण्वन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वदित्ययꣳ हैष लोको निधिस्तमेतद्वसवो गायत्रेण च्छ-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ५. १; काठ० सं० १६. ४; कपि० सं० ३० ४; मै० सं० ११. ७. ५; तै० सं० ४. १. ४।

* का० श्रौ० सू० १६. ३. २२।

(१) शु० सं० अ० ११ क० ५७।

† का० श्रौ० सू० १६. ३. २५।

(२) शु० सं० अ० ११ क० ५८।

न्दसाऽकुर्वँस्तथैवैनमयमेतद्गायत्रेण च्छन्दसा करोत्त्यङ्गिरस्व-द्दिति प्प्राणो वा ऽअङ्गिरा 'ध्रुवा[1]ऽसी'ति स्स्थिराऽसीत्त्येतद्दथो प्प्रतिष्ठिताऽसीति 'पृथिव्व्य[2]सी'ति पृथिवी ह्येष निधि'र्द्धारया[3] मयि प्प्रजाꣳ रायस्प्पोष गौपत्त्यꣳ सुवीर्य्यꣳ सजातान्यज-मानाये'त्त्येतद्वै वसव ऽइमं लोकं कृत्त्वा तस्मिन्नेतामाशिष-माशासत तथैवैतद्यजमान ऽइमं लोकं कृत्त्वा तस्मिन्नेतामा-शिषमाशास्ते तां प्रादेशमात्रीं कृत्त्वाऽथाऽस्यै सर्व्वतस्तीरमुन्न-यति ॥३॥ अथ पूर्व्वमुद्धिमादधाति। 'रुद्रास्[4]त्वा कृण्ण्वन्तु त्रैष्टु-भेन च्छन्दसाऽङ्गिरस्वदि'त्त्यन्तरिक्षꣳ ह्येष ऽउद्धिस्तमेतद्रुद्रा-स्त्रैष्टुभेन च्छन्दसा कुर्व्वँस्तथैवैनमयमेत'त्त्रैष्टुभेन [5]च्छन्दसा करोत्त्यङ्गिरस्वदि'ति प्प्राणो वा ऽअङ्गिरा 'ध्रुवा[6]ऽसी'ति स्स्थि-राऽसीत्त्येतद्दथो प्प्रतिष्ठिताऽसीत्त्यन्तरिक्षमसीत्त्यन्तरिक्षꣳ ह्येष ऽउद्धि'र्द्धारया मयि प्प्रजाꣳ रायस्प्पोषं गौपत्त्यꣳ सुवीर्य्यꣳ सजातान्न्यजमानाये'त्त्येतद्वै रुद्रा ऽअन्तरिक्षं कृत्त्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमानोऽन्तरिक्षं कृत्त्वा तस्मिन्नेतामाशिषमाशास्ते ताꣳ संलिप्प्य सꣳश्ल-क्ष्णय॥ ४ ॥ * अथोत्तरमुद्धिमादधाति । '[8]आदित्त्यास्त्वा कृण्ण्वन्तु जागतेन च्छन्दसाऽङ्गिरस्वदि'ति द्यौर्ह्येष ऽउद्धि-स्तमेतदादित्त्या जागतेन च्छन्दसाऽकुर्व्वँस्तथैवैनमयमेतज्जाग-

(१) शु० सं० अ० ११ क० ५८। (२) शु० सं० अ० ११ क० ५८। (३) शु० सं० अ० ११ क० ५८। (४) शु० सं० अ० ११ क० ५८। (५) शु० सं० अ० ११ क० ५८। (६) शु० सं० अ० ११ क० ५८। (७) शु० सं० अ० ११ क० ५८।

* का० श्रौ० सू० १६. ३. २७।

(८) शु० सं० अ० ११ क० ५८।

तेन च्छन्दसा करोत्त्यङ्गिरस्वदिति प्प्राणो वा ऽअङ्गिरा 'ध्रुवाऽसी'ति स्स्थिराऽसीऽत्त्येतदथो प्प्रतिष्ठिताऽसीति 'द्यौरसी'ति द्यौर्ह्येष ऽउद्धि'द्धारया मयि प्प्रजाᳬ रायस्प्पोषं गौपत्त्यᳬ सुवीर्य्यᳬ सजातान्न्यजमानाये'त्त्येतद्वा ऽआदित्त्या दिवं कृत्त्वा तस्यामेतामाशिषमाशासत तथैवैतद्यजमानो दिवं कृत्त्वा तस्यामेतामाशिषमाशास्ते ॥ ५ ॥ अथैतेन चतुर्त्थेन यजुषा * करोति । 'विश्वे त्त्वा देवा वैश्वानराᳬ कृण्ण्वन्त्वानुष्टुभेन च्छन्दसाऽङ्गिरस्वदि'ति दिशो हैतद्यजुरेतद्वै विश्वेदेवा वैश्वानरा ऽएषु लोकेषूखायामेतेन चतुर्त्थेन यजुषा दिशोऽदधुस्तथैवैतद्यजमान ऽएषु लोकेषूखायामेतेन चतुर्त्थेन यजुषा दिशो दधात्त्यङ्गिरस्वदिति प्प्राणो वा ऽअङ्गिरा 'ध्रुवाऽसी'ति स्स्थिराऽसीत्त्येतदथो प्प्रतिष्ठिताऽसीति 'दिशोऽसी'ति दिशो ह्येतद्यजु'द्धारयाँ मयि प्प्रजाᳬ रायस्प्पोषं गौपत्त्यᳬ सुवीर्य्यᳬ सजातान्न्यजमानाये'त्त्येतद्वै विश्वे देवा वैश्वानरा दिशᳬ कृत्त्वा तास्वेतामाशिषमाशासत तथैवैतद्यजमानो दिशᳬ कृत्त्वा तास्वेतामाशिषमाशास्ते ॥६॥ तेनैतेनाऽन्तरतश्च बाह्यतश्च करोति । तस्म्मादेषां लोकानामन्तरतश्च बाह्यतश्च दिशोऽपरिमितमेतेन करोत्त्यपरिमिता हि दिशᳬ ॥ ७ ॥ तां प्रादेशमात्त्रीं-

(१) शु० सं० अ० ११ क० ५८। (२) शु० सं० अ० ११ क० ५८। (३) शु० सं० अ० ११ क० ५८।

* का० श्रौ० सू० १६. ३. २८।

(४) शु० सं० अ० ११ क० ५८। (५) शु० सं० अ० ११ क० ५८। (६) शु० सं० अ० ११ क० ५८। (७) शु० सं० अ० ११ क० ५८।

मेवोर्द्ध्वां करोति। प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोति ॥८॥ सा यदि वर्षीयसी प्रादेशात्स्यात्। एतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन वर्षीयसीम् ॥ ९ ॥ स यद्येकः पशुः स्यात्। एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा वीर्यं वा ऽइषुर्वीर्यसम्मितैव तद्भवति पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥१०॥ अथ तिरश्चीᳬं रास्नां पर्य्यस्यति। दिशो हैव सैतद्वै देवा ऽइमाँल्लोकानुखां कृत्वा दिग्भिरदृᳬंहन्दिग्भिः पर्य्यतन्वँस्तथैवैतद्यजमान ऽइमाँ-ल्लोकानुखां कृत्वा दिग्भिर्दृᳬंहति दिग्भिः परितनोति ॥११॥ तामुत्तरे * वितृनीये पर्य्यस्यति। अत्र हैषां लोकाना-मन्ताः समायन्ति तदेवैनाँस्तद् दृᳬंहति ॥ १२ ॥ '[1]अदित्यै रास्नाऽसी'ति। वरुण्या वै यज्ञे रज्जुरवरुण्यामेवैनामेत-द्रास्नां कृत्वा पर्य्यस्यति ॥ १३ ॥ अथ चतस्र ऽऊर्द्ध्वाः करोति। † तूष्णीमेव दिशो हैव ता ऽएतद्वै देवा ऽइमाँ-ल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृᳬंहँस्तथैवैतद्यजमान-ऽइमाँल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृᳬंहति ॥ १४ ॥ ता ऽएता ऽएतस्यै भवन्ति। एतद्वा ऽएता ऽएतामस्त-भ्नुवँस्तथैवैनामेतत्स्तभ्नुवन्ति तद्यदुत ऽऊर्द्ध्वं तदेतया तिरश्च्या दृढमथ यदतोऽर्वाक्तदेताभिः ॥ १५ ॥ तासा-

* का० श्रौ० सू० १६. ३. २९।

(१) शु० सं० अ० ११ क० ५९।

† का० श्रौ० सू० १६. ३. ३०।

मग्रेषु * स्तनानुन्नयन्ति । एतद्वै देवा ऽइमाँल्लोकानुखां कृत्वैतैस्तनैः सर्वान्कामानदुहत तथैवैतद्यजमान ऽइमाँल्लोकानुखां कृत्वैतैस्तनैः सर्वान्कामान्दुहे ॥ १६ ॥ सैषा गौरेव । इमे वै लोका ऽउखेमे लोका गौस्तस्या ऽएतदूधो यैषा तिरश्ची रास्ना सा वितृतीये भवति वितृतीये हि गोरूधः ॥ १७ ॥ तस्यै स्तनानुन्नयति । ऊधसस्तस्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः ॥ १८ ॥ ताꣳ हैके † द्विस्तनां कुर्वन्ति । अथोऽअष्टस्तनां न तथा कुर्य्याद्ये वै गोः कनीयस्तनाः पशवो ये भूयस्तना ऽअनुपजीवनीयतरा वा ऽअस्यैतेऽनुपजीवनीयतराꣳ हैनां ते कुर्वतेऽथो ह ते न गां कुर्वते शुनीं वाऽविं वा वडवां वा तस्मात्तथा न कुर्य्यात् ॥ १९ ॥ अथाऽस्यै ‡ बिलमभिपद्यते । 'अदितिष्टे बिलं गृभ्णात्वि'ति वाग्वा ऽअदितिरेतद्वा ऽएनां देवाः कृत्वा वाचाऽदित्या निरष्ठापयँस्तथैवैनामयमेतत्कृत्वा वाचाऽदित्या निष्ठापयति ॥ २० ॥ तां ‡‡ परिगृह्य निदधाति । 'कृत्वाय[२] सा महीमुखामिति कृत्वाऽयसा महतीमुखामि'त्येत'न्मृन्मयीं[३] योनिमग्नय' ऽइति मृन्मयी ह्येषा योनिरग्नेः 'पुत्रेभ्यः प्रायच्छददितिः श्रपयानि'त्ये'तद्वाऽएनामदितिः कृत्वा

* "स्तनानिवाऽग्रेषून्नयति" ( का० श्रौ० सू० १६. ४. १ ) ।

† का० श्रौ० सू० १६. ३. २ ।

‡ का० श्रौ० सू० १६. ३. ३ ।

( १ ) शु० सं० अ० ११ क० ५९ ।

‡‡ का० श्रौ० सू० १६. ४. ४ ।

( २ ) शु० सं० अ० ११ क० ५९ । ( ३ ) शु० सं० अ० ११ क० ५९ । ( ४ ) शु० सं० अ० ११ क० ५९ ।

देवेभ्यः पुत्रेभ्यः श्रपणाय प्प्राऽयच्छत्तथैवैनामयमेतत्कृत्वा देवेभ्यः श्रपणाय प्प्रयच्छति ॥ २१ ॥ ता हैके * तिस्रः कुर्वन्ति । त्रयो वा ऽइमे लोका ऽइमे लोका ऽउखा ऽइति वदन्तोऽथो ऽअन्न्योऽन्न्यस्यै प्प्रायश्चित्त्यै यदीतरा भेत्स्यतेऽथेतरस्यां भरिष्यामो यदीतराऽथेतरस्यामिति न तथा कुर्य्याद्यो वा ऽएष निधिः प्प्रथमोऽयः स लोको यः पूर्व्व ऽउद्धिरन्तरिक्षं तद्य ऽउत्तरो द्यौः साऽथ यदेतच्चतुर्त्थं यजुर्द्दिशो हैव तदेतावद्वा ऽइदꣳ सर्व्वं यावदिमे च लोका दिशश्च स यदत्रोपाऽऽहरेदति तद्रेचयेद्यदु वै यज्ञेऽतिरिक्तं क्रियते यजमानस्य तद् द्विषन्तं भ्रातृव्यमभ्यतिरिच्च्यते यदु भिन्नायै प्प्रायश्चित्तिरुत्तरस्मिँस्तदन्वाख्याने ॥ २२ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ ११४ ॥



[ अषाढेष्टकादिनिर्माणम्, अश्वशकृद्भिर्धूपनञ्च ]

तस्या ऽएतस्या ऽअषाढां पूर्वां करोति । इयं वाऽअषाढेऽयमु वा ऽएषां लोकानां प्रथमाऽसृज्यत तामे-

---

* का० श्रौ० सू० १६. ४. ५ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ; ८. ५. १; २; कठ० सं० १६. ५. ६; मै० सं० ११. ७. ६; तै० सं० ४. १. ५ ।

तस्या ऽएव मृदः करोत्येषाᳬ ह्येव लोकानामियं महिषी करोति महिषी हीयं तद्यैव प्रथमा वित्ता सा महिषी ॥ १ ॥ पादमात्री भवति। प्रतिष्ठा वै पाद ऽइयमु वै प्रतिष्ठा त्र्यालिखिता भवति त्रिवृद्धीयम् ॥२॥ अथोखां करोति। इमाँ-स्तल्लोकान्करोत्यथ विश्वज्ज्योतिषः करोत्येता देवता ऽअग्निं वायुमादित्यमेता ह्येव देवता विश्वज्ज्योतिस्ता ऽएतस्या-ऽएव मृदः करोत्येभ्यस्तल्लोकेभ्य ऽएतान्देवान्निर्म्मिमीते यजमानः करोति त्र्यालिखिता भवन्ति त्रिवृतो ह्येते देवा-ऽइत्यधिदेवतम् ॥ ३ ॥ अथाऽध्यात्मम्। आत्मैवोखा वागषाढा तां पूर्वां करोति पुरस्ताद्धीयमात्मनो वाऽक्का-मेतस्या ऽएव मृदः करोत्यात्मनो ह्येवेयं वाङ्महिषीं करोति महिषी हि वाक्त्र्यालिखिता भवति त्रेधाविहिता हि वागृचो यजूᳬषि सामान्यथो यदिदं त्रयं वाचो रूपमुपाᳬशु व्यन्तरामुच्चैः ॥ ४ ॥ अथोखां करोति। आत्मानं तत्करोत्यथ विश्वज्ज्योतिषः करोति प्रजा वै विश्वज्ज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैत-त्करोति ता ऽएतस्या ऽएव मृदः करोत्यात्मनस्तत्प्रजां निर्म्मिमीते यजमानः करोति यजमानस्तदात्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितांतदात्मनःप्रजांकरोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति त्र्यालिखिता भवन्ति त्रिवृद्धिः प्रजातिः पिता माता पुत्रोऽथो गर्भ ऽउल्बं जरायु ॥ ५ ॥ ता ऽएता यजुष्कृतायै करोति। अयजुष्कृ-ताया ऽइतराऽनिरुक्ता ऽएता भवन्त्यनिरुक्ता ऽइतराः परि-

मिता ऽएता भवन्त्यपरिमिता ऽइतराः ॥ ६ ॥ प्रजापति-रेषोऽग्निः । उभयम्वेतत्प्रजापतिर्न्निरुक्तश्चाऽनिरुक्तश्चाप-रिमितश्चाऽपरिमितश्च तद्या यजुष्कृतायै करोति यदे-वाऽस्य निरुक्तं परिमितᳪ रूपं तदस्य तेन संस्करोत्यथ या ऽअयजुष्कृतायै यदेवाऽस्याऽनिरुक्तमपरिमितᳪ रूपं तदस्य तेन संस्करोति स ह वा ऽएतᳪ सर्व्वं कृत्स्नं प्रजापतिᳪ संस्करोति य ऽएवं विद्वानेतदेवं करोत्यथोप-शयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥ ७ ॥ अथैनां * धूपयति । स्थेम्ने ऽन्वेवाऽथो कर्म्मणः प्रकृततायै यद्वेव धूपयति शिर ऽएतद्यज्ञस्य यदुखा प्राणो धूमः शीर्षᳪस्तत्प्राणं दधाति ॥ ८ ॥ † अश्वशकैर्द्धूपयति । प्राजा-पत्यो वा ऽअश्वः प्रजापतिरग्निर्नो वा ऽआत्माऽऽत्मानᳪ हिनस्त्यहिᳪसायै तद्वै शक्नेव तद्धि जग्धं यातयाम तथो ह नैवाऽश्वᳪ हिनस्ति नेतरान्पशून् ॥ ९ ॥ '[1]वसवस्त्वा धूपयन्तु । गायत्रेण च्छन्दसाऽङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टु-भेन च्छन्दसाऽङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टु-भेन च्छन्दसाऽङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयत्वि'त्येताभिरेवैनामेतद्देवताभिर्द्धूपयति ॥१०॥ सप्ताऽश्वशकानि भवन्ति । सप्त यजूᳪषि सप्ततय ऽएता

(१) शु० सं० अ० ११ क० ६० ।

* का० श्रौ० सू० १६. ४. ८ ।

† अत्र शतम् २७०० ।

देवताः सप्त शीर्षन्प्राणा यदु वा ऽअपि बहु कृत्वः सप्त सप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥ ११ ॥ (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अथोखादिस्थापनार्थमवटखननम् ]

( तत्र उखादीनां स्थापनम्, पचनम्, उपावहरणादिकञ्च )

अथैनमस्यां * खनति। एतद्वै देवा ऽअविभयुर्यद्वै न-ऽइममिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्मा ऽइमामेवा-ऽऽत्मानमकुर्वन्गुप्त्या ऽआत्माऽऽत्मानं गोप्स्यतीति ॥ १ ॥ तं वा ऽअदित्या खनति। इयं वा ऽअदितिर्नो वा-ऽआत्माऽऽत्मानᳪं हिनस्त्यहिᳪंसायै यदन्यया देव तया खनेद्धिᳪंस्याद्धैनम् ॥ २ ॥ 'अदितिष्ट्वा देवी विश्वदेव्यावती। पृथिव्याः सधस्थे ऽअङ्गिरस्वत्खनत्ववटे' त्यवटो ह्येष देवत्राऽत्र सा वैणव्यभिरुत्सीदति चतुः-स्त्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्वाभ्य-ऽएवैनमेतद्दिग्भ्यः खनत्यथ पचनमवधायाऽषाढामवदधाति तूष्णीमेव ताᳪं हि पूर्वां करोति ॥ ३ ॥ अथोखामवधाति। 'देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सध-स्थे ऽअङ्गिरस्वद्दधतूख' ऽइति देवानाᳪं हैतामग्रे पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्व-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ५. ३; कठ० सं० १६. ६; मै० सं० ११. ७. ६; तै० सं० ४. १. ५।

* का० श्रौ० सू० १६. ४. ९।

( १ ) शु० सं० अ० ११ क० ६१। ( २ ) शु० सं० अ० ११ क० ६१।

द्दधुस्ताभिरेवैनामेतद्दधाति ता ह ता ऽओषधय ऽएवौषधयो वै देवानां पत्न्य ऽओषधिभिर्हीदꣳ सर्वꣳ हितमोषधिभिरेवैनामेतद्दधात्यथ विश्वज्ज्योतिषोऽवदधाति तूष्णीमेवाऽथ पचनमवधायाऽभीन्धे ॥४॥ * धिषणास्त्वा देवीः। विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वदभीन्धतामुख ऽइति धिषणा हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीधिरे ताभिरेवैनामेतदभीन्धे सा ह सा वागेव वाग्वै धिषणा वाचा हीदꣳ सर्वमिद्धं वाचैवैनामेतदभीन्धेऽथैतानि त्रीणि यजूꣳष्यीक्षमाण ऽएव जपति ॥ ५ ॥ 'वरूत्रीष्ट्वा देवीः। विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वच्छ्रपयन्तूख' ऽइति वरूत्रीहैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयाञ्चक्रुस्ताभिरेवैनामेतच्छ्रपयति तानि ह तान्यहोरात्राण्येवाहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदꣳ सर्वं वृतमहोरात्रैरेवैनामेतच्छ्रपयति ॥ ६ ॥ 'ग्नास्त्वा देवीः। विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत्पचन्तूख' ऽइति ग्ना हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि च्छन्दाꣳस्येव च्छन्दाꣳसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति छन्दोभिरेवैनामेतत्पचति ॥ ७ ॥ 'जनयं-

* का० श्रौ० सू० १६. ४. १२-१४।

(१) शु० सं० अ० ११ क० ६१। (२) शु० सं० अ० ११ क० ६१। (३) शु० सं० अ० ११ क० ६१।

(४) शु० सं० अ० ११ क० ६१।

स्त्वाऽच्छिन्नपत्रा देवीः । विश्ववदेव्यावतीः पृथिव्याः सध-स्थे ऽअङ्गिरस्वत्पचन्तूख' ऽइति जनयो हैतामग्रेऽच्छिन्नपत्रा देवीर्विश्ववदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत्पेचु-स्ताभिरेवैनामेतत्पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतीᳫंषि नक्षत्रैरेवैनामे-तत्पचति ॥ ८ ॥ स वै खनत्येकेन । * अवदधात्ये-केनाऽभीन्ध ऽएकेन श्रपयत्येकेन द्वाभ्यां पचति तस्माद् द्विः संवत्सरस्याऽन्नं पच्यते तानि षट् सम्पद्यन्ते षडृतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ९ ॥ † अथ 'मित्रस्य[1] चर्षणीधृत' ऽइति । मैत्रेण यजुषोपनयाचरति यावत्क्रियच्चोपनयाचरति न वै मित्रः कं चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैष ऽएतां न हिनस्ति नो ऽएतमेषा तां द्विवै-वोपवपेद्विवोद्वपेदुहह्याग्नेयम् ॥ १० ॥ ताᳫं ‡ सावित्रेण यजु-षोद्वपति । सविता वै प्रसविता सवितृप्रसूत ऽएवै-नामेतदुद्वपति 'देवस्त्वा[2] सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्ये'ति सर्वमु ह्येतत्सविता ॥ ११ ॥ अथैनां पर्यावर्त्तयति । 'अव्यथमाना[3] पृथिव्यामाशा दिश-

* का० श्रौ० सू० १६. ४. १० ।
† का० श्रौ० सू० १६. ४. १५ ।
( १ ) शु० सं० अ० ११ क० ६२ ।
‡ का० श्रौ० सू० १६. ४. १८–२० ।
( २ ) शु० सं० अ० ११ क० ६३ । ( ३ ) शु० सं० अ० ११ क० ६३ ।

ऽआपृणे'त्यव्व्यथमाना त्वं पृथिव्व्यामाशा दिशो रसेना-ऽऽपूरयेत्त्येतत् ॥ १२ ॥ * अथैनामुद्यच्छति । 'उत्थाय बृहती भवे'त्युत्थाय हीमे लोका बृहन्त 'ऽउदु तिष्ठ ध्रुवा त्वमि'त्युदु तिष्ठ स्त्थिरा त्वं प्रतिष्ठितेत्त्येतत् ॥ १३ ॥ तां परिगृह्य निदधाति । 'मित्त्रैतां त ऽउखां परिददाम्म्यभि-त्त्या ऽएषा मा भेदी'त्त्ययं व्वै व्वायुर्म्मित्त्रो योऽयं पवते तस्म्मा-ऽएवैनामेतत्परिददाति गुप्त्यै ते हेमे लोका मित्त्रगुप्तास्त-स्म्मादेषां लोकानां न किञ्चन मीयते ॥ १४ ॥ अथै-नामाच्छृणत्ति । स्त्थेम्म्ने न्वेवाऽथो कर्म्मणः प्प्रकृततायै यद्वेवाऽऽच्छृणत्ति शिर ऽएतद्यज्ञस्य यदुखा प्प्राणः पयः शीर्षंस्तत्प्राणं दधात्त्यथो योषा वा ऽउखा योषायां तत्पयो दधाति तस्म्माद्योषायां पयः ॥ १५ ॥ अजायै † पयसा-ऽऽच्छृणत्ति । प्रजापतेर्व्वै शोकादजा समभवन्प्रजापतिर-ग्निर्न्नो वा ऽआत्त्माऽऽत्मानꣳ हिनस्त्यहिꣳसायै यद्वेवाऽजाया-ऽअजा ह सर्व्वा ऽओषधीरत्ति सर्व्वासामेवैनामेतदोषधीनाꣳ रसेनाऽऽच्छृणत्ति ॥ १६ ॥ 'व्वसवस्त्वाऽऽच्छृन्दन्तु । गायत्रेण च्छन्दसाऽङ्गिरस्वद्रुद्रास्त्वाऽऽच्छृन्दन्तु त्रैष्टुभेन च्छन्दसाऽङ्गि-रस्वदादित्त्यास्त्वाऽऽच्छृन्दन्तु जागतेन च्छन्दसाऽङ्गिरस्व-द्विश्वे त्वा देवा व्वैश्वानरा ऽआच्छृन्दन्त्वाऽनुष्टुभेन च्छन्द-साऽङ्गिरस्वदि'त्त्येताभिरेवैनामेतद्देवताभिराच्छृणत्ति स व्वै

* का० श्रौ० सू० १६. ४. २१–२२ ।

( १ ) शु० सं० अ० ११ क० ६४ । ( २ ) शु० सं० अ० ११ क० ६४ । ( ३ ) शु० सं० अ० ११ क० ६४ ।

† का० श्रौ० सू० १६. ४. २३ ।

( ४ ) शु० सं० अ० ११ क० ६५ ।

यभिरेव देवताभिः करोति ताभिर्द्धूपयति ताभिराच्छृणत्ति यो वाऽव कर्म्म करोति स ऽएव तस्योपचारं वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्द्धूपयति ताभिराच्छृणत्ति ॥ १७ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ दीक्षणीयाहविः, औदुग्रभणहोमः, मुञ्जतृणावस्तरणादिकञ्च ]

भूयाᳬंसि हवीᳬंषि भवन्ति । अग्निचित्त्यायां यदु चाऽनग्निचित्त्यायामतीनि ह कर्म्माणि सन्ति यान्ययन्न्यत्कर्म्माऽति तान्न्यतीनि तेषामग्निचित्त्या राजसूयो वाजपेयोऽश्वमेधस्तद्यत्तान्न्यन्न्यानि कर्म्माण्ण्यति तस्मात्तान्न्यतीतानि ॥ १ ॥ आग्नावैष्णव ऽएकादशकपालः । तदध्वरस्य दीक्षणीयं वैश्वानरो द्वादशकपाल ऽआदित्त्यश्च चरुस्ते ऽअग्नेः ॥ २ ॥ स यदाग्नावैष्णवमेव निर्व्वपेत् । नेतरे हविषी ऽअध्वरस्यैव दीक्षणीयं कृतᳬं स्यान्नाऽग्नेरथ यदितरे ऽएव हविषी निर्व्वपेन्नाऽऽग्नावैष्णवमग्नेरेव दीक्षणीयं कृतᳬं स्यान्नाऽध्वरस्य ॥ ३ ॥ उभयानि निर्व्वपति । अध्वरस्य चाऽग्नेश्चोभयᳬं ह्येतत्कर्म्माऽध्वरकर्म्म चाऽग्निकर्म्म चाऽध्वरस्य पूर्व्वमथाऽग्नेरुपायि ह्येत-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ५. २; कठ० सं० १६. ५; ६; मै० सं० ११. ७. ६; तै० सं० ४. १–५।

त्कर्म्म यदग्निकर्म्म ॥ ४ ॥ स य ऽएष ऽआग्नावैष्णवः ।
तस्य तदेव ब्राह्मणं यत्पुरश्चरणे वैश्वानरो द्वादशकपालो
वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाऽऽप्त्यै द्वादश-
कपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानरः ॥५॥ यद्वे-
वैतं वैश्वानरं निर्व्वपति । वैश्वानरं वा ऽएतमग्निं जनयिष्य-
न्भवति तमेतत्पुरस्ताद्दीक्षणीयायाꣳ रेतो भूतꣳ सिञ्चति
यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतमत्र
वैश्वानरꣳ रेतो भूतꣳ सिञ्चति तस्मादेषोऽमुत्र वैश्वानरो
जायते ॥ ६ ॥ यद्वेवैते हविषी निर्व्वपति । क्षत्रं वै वैश्वानरो
विडेष ऽआदित्यश्चरुः क्षत्रं च तद्विशं च करोति वैश्वानरं
पूर्व्वं निर्व्वपति क्षत्रं तत्कृत्वा विशं करोति ॥ ७ ॥ एक-
ऽएष भवति । एकदेवत्य ऽएकस्थं तत्क्षत्रमेकस्थाꣳ
श्रियं करोति चरुरितरो बहुदेवत्यो भूमा वा ऽएष तण्डु-
लानां यच्चरुर्भूमो ऽएष देवानां यदादित्या विशि तद्भूमानं
दधातीत्यधिदेवतम् ॥ ८ ॥ अथाध्यात्मम् । शिर ऽएव
वैश्वानर ऽआत्मैष ऽआदित्यश्चरुः शिरश्च तदात्मानं च
करोति वैश्वानरं पूर्व्वं निर्व्वपति शिरस्तत्कृत्वाऽऽत्मानं करोति
॥ ९ ॥ एक ऽएष भवति । एकमिव हि शिरश्चरुरितरो
बहुदेवत्यो भूमा वा ऽएष तण्डुलानां यच्चरुर्भूमो ऽएषो-
ऽङ्गानां यदात्माऽऽत्मँस्तदङ्गानां भूमानं दधाति ॥ १० ॥ घृत-
ऽएष भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन
स्वेन रसेन प्रीणात्युपाꣳश्वेतानि हवीꣳषि भवन्ति रेतो
वा ऽअत्र यज्ञ ऽउपाꣳशु वै रेतः सिच्यते ॥११॥ अथौदग्र-

भणानि जुहोति। औद्ग्रभणैर्वै देवा ऽआत्मा‌ऽऽनमस्म्माल्लोका-त्स्वर्ग्गं लोकमभ्युदगृह्णत यदुदगृह्णत तस्म्मादौद्ग्रभणानि तथैवैतद्यजमान ऽऔद्ग्रभणैरेवाऽऽत्मानमस्म्माल्लोकात्स्वर्ग्गं लोकमभ्युदगृह्णीते ॥ १२ ॥ तानि वै भूयाᳫंसि भवन्ति । अग्निचित्यायां यदु चाऽनग्निचित्यायां तस्योक्तो बन्धुरुभयानि भवन्ति तस्योक्तोऽध्वरस्य पूर्वाण्यथाऽग्नेस्तस्यो ऽएवोक्तः ॥ १३ ॥ पश्चाऽध्वरस्य जुहोति । पाङ्क्तो यज्ञो यावान्न्यज्ञो यावत्यस्य मात्रा तावतैवैनमेतद्भूतो भूतᳫं सिञ्चति सप्ताऽग्नेः सप्तचितिकोऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भूतो भूतᳫं सिञ्चति तान्न्युभयानि द्वादश सम्पद्यन्ते द्वादश-मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १४ ॥ स जुहोति । '[1]आकूतिमग्निं प्रयुजᳫं स्वाहे'त्याकूताद्वा ऽएतदग्ग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्प्रयुङ्क्ते ॥१५॥ '[2]मनो मेधामग्निं प्रयुजᳫं स्वाहे'ति। मनसो वा ऽएतदग्ग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्प्रयुङ्क्ते ॥ १६ ॥ 'चित्तं विज्ञातमग्निं प्रयु[3]जᳫं स्वाहे'ति । चित्ताद्वा ऽएतदग्ग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्प्रयुङ्क्ते ॥ १७ ॥ 'वा[4]चो विधृतिमग्निं प्रयुजᳫं स्वाहे'ति । वाचो वा ऽएतदग्ग्रे कर्म्म समभवत्तामेवैतदेतस्मै कर्म्मणे

---

* का० श्रौ० सू० १६. ४. ३०।

(१) शु० सं० अ० ११ क० ६६। (२) शु० सं० अ० ११ क० ६६। (३) शु० सं० अ० ११ क० ६६। (४) शु० सं० अ० ११ क० ६६।

प्प्रयुङ्क्ते ॥ १८ ॥ 'प्रजापतये मनवे स्वाहे'ति । प्रजापतिर्वै मनुः स हीदꣳ सर्वममनुत प्प्रजापतिर्वा ऽएतदग्ग्रे कर्म्मा-ऽकरोत्तमेवैतदेतस्म्मै कर्म्मणे प्प्रयुङ्क्ते ॥ १९ ॥ 'अग्नये वैश्वानराय स्वाहे'ति । संवत्त्सरो वा ऽअग्निर्वैश्वानरः संवत्त्सरो वा ऽएतदग्ग्रे कर्म्माऽकरोत्तमेवैतदेतस्म्मै कर्म्मणे प्प्रयुङ्क्ते ॥ २० ॥ अथ सावित्रीं जुहोति । सविता वा-ऽएतदग्ग्रे कर्म्माऽकरोत्तमेवैतदेतस्म्मै कर्म्मणे प्प्रयुङ्क्ते 'विश्वो देवस्य नेतुर्म्मर्त्तो व्वुरीत सख्यम् । विश्वो राय-ऽइषुध्यति द्युम्म्नं व्वृणीत पुष्यसे स्वाहे'ति यो देवस्य सवितुः सख्यं व्वृणीते स द्युम्म्नं च पुष्टिं च व्वृणीत ऽएष वा ऽअस्य सख्यं व्वृणीते य ऽएतत्त्कर्म्म करोति ॥ २१ ॥ तान्न्यु हैक ऽउखायामेवैतान्न्यौद्ग्रभणानि जुह्वति कामेब्भ्यो वा ऽएतानि हूयन्त ऽआत्त्मो ऽएष यजमानस्य यदुखाऽऽत्त्म-न्न्यजमानस्य सर्वान्न्कामान्न्प्रतिष्ठापयाम ऽइति न तथा कुर्य्यादेतस्य वै यज्ञस्य सꣳस्थितस्यैतासामाहुतीनां योरस-स्तदेतदार्च्चिरूर्ध्वमुद्दीप्यते तद्यत्त्सꣳस्थिते यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृणक्ति तदेनामेष यज्ञ ऽआरोहति तं रुयज्ञं बिभर्त्ति तस्म्मा-त्त्सꣳस्थित ऽएव यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृञ्ज्यात् ॥२२॥ [अर्धप्रपाठकः ५०॥] मुञ्जकुलायेनाऽवस्तीर्ण्णा भवति। आदी-प्प्याऽदितिन्न्वेव यद्वेव मुञ्जकुलायेन योनिरेषाऽग्नेरूर्ध्वन्न्मुञ्जो न वै योनिर्ग्गर्ब्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो

(१) शु० सं० अ० ११ क० ६६ । (२) शु० सं० अ० ११ क० ६६ । (३) शु० सं० अ० ११ क० ६७ ।

जायते ष्योनेर्ज्जायमानो जायाता ऽइति ॥ २३ ॥ शणकुलायमन्तरं * भवति । आदीप्प्याऽदितिन्न्वेव षद्देव शणकुलायं प्रजापतिर्र्ष्यस्यै ष्योनेरसृज्ज्यत तस्या † ऽउमा ऽउल्बमासञ्छणा जरायु तस्स्मात्ते पूतयो जरायु हि ते न वै जरायु गर्ब्भंꣳ हिनस्त्त्यहिꣳसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता ऽइति ॥ २४ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ उखाया आहवनीयेऽधिश्रयणम्, प्रवृञ्जनम्, समिदाधानश्च ]

तां तिष्ठन्न्प्रवृणक्ति । इमे वै लोका ऽउखा तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठन्न्वै व्वीर्र्यवत्तमꣳ ॥ १ ॥ उदङ् प्राङ् तिष्ठन् । उदङ्वै प्राङ् तिष्ठन्न्प्रजापतिꣳ प्प्रजा ऽअसृजत ॥ २ ॥ षद्देवोदङ् प्राङ् तिष्ठन् । एषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्प्राची ॥ ३ ॥ षद्देवोदङ् प्राङ् तिष्ठन् । एतस्याꣳ ह दिशि स्वर्ग्गस्य लोकस्य द्वारं तस्स्मादुदङ् प्राङ् तिष्ठन्नाहुतीर्ज्जुहोत्त्युदङ् प्राङ् तिष्ठन्दक्षिणा नयति द्वारैव तत्स्वर्ग्गस्य लोकस्य व्वित्तं प्रपादयति ॥ ४ ॥ 'मा सु[1] भित्त्था मा सु रिष' ऽइति । षथैव षजुस्तथा बन्धु'रम्बे[2] धृष्णु व्वीरयस्व स्वि'ति ष्योषा वा ऽउखाऽम्बेति वै ष्योषाया ऽआमन्त्रणꣳ स्विव व्वीरयस्वा'ऽग्निश्[3]चेदं करि-

* का० श्रौ० सू० १६. ४. ३१ ।

† "क्षौमवस्त्रोपादानभूतास्तृणविशेषा उमाः" 'अतसी स्यादुमा क्षुमा' इत्यमरः २. ९. ३० ।

( १ ) शु० सं० अ० ११ क० ६८ । ( २ ) शु० सं० अ० ११ क० ६८ । (३) शु० सं० अ० ११ क० ६८ ।

ष्यथ' ऽइत्यग्निश्च ह्येतत्करिष्यन्तौ भवतः ॥ ५ ॥ दृꣳह-स्व देवि पृथिवि स्वस्तय' ऽइति । यथैव यजुस्तथा बन्धु'रासुरी माया स्वधया कृताऽसी'ति प्राणो वा ऽअसु-स्तस्यैषा माया स्वधया कृता 'जुष्टं देवेभ्य ऽइदमस्तु हव्यमि'ति या ऽएवैतस्मिन्नग्नावाहुतीर्होष्यन्भवति ता-ऽएतदाहाऽथो ऽएषैव 'हव्यमरिष्टा त्वमुदिहि यज्ञे-ऽअस्मिन्नि'ति यथैवाऽरिष्टानार्तैतस्मिन्न्यज्ञ ऽउदियादेव-मेतदाह ॥ ६ ॥ द्वाभ्यां प्रवृणक्ति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेत-त्प्रवृणक्ति गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबेतावान्वै पशुर्यावान्प्राणश्चाऽऽत्मा च तद्यावान्प-शुस्तावतैवैनामेतत्प्रवृणक्त्यथो ऽअग्निर्वै गायत्रीन्द्रस्त्रिष्टुबै-न्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृण-क्तीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवनामेतत्प्रवृणक्ति तयोः सप्तपदानि सप्तचितिको-ऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥७॥ तां षदाग्निः सन्तपति । अथैनाम-र्चिरारोहति योषा वा ऽउखा वृषाऽग्निस्तस्माद्यदा वृषा योषाꣳ सन्तपत्यथाऽस्याꣳ रेतो दधाति ॥ ८ ॥ तद्धैके । यदि चिरमर्चिरारोहत्यङ्गारानेवावपन्त्युभयेनैषोऽग्निरिति न तथा कुर्यादस्त्यथन्त्वान्वाव पशुर्जायतेऽथ तं नाऽग्र ऽएवाऽ-

(१) शु० सं० अ० ११ क० ६९। (२) शु० सं० अ० ११ क० ६९। (३) शु० सं० अ० ११ क० ६९। (४) शु० सं० अ० ११ क० ६९।

ऽस्स्थन्न्वन्तमिव न्न्यृषन्ति रेत ऽइवैव दधति रेत ऽउ ऽएतद-नुस्थिकं रुषदर्च्चिस्तस्मादेनामर्च्चिरेवाऽऽरोहेत् ॥ ९ ॥ तां रुषदार्च्चिरारोहति । अथाऽस्मिन्त्समिधमादधाति रेतो वा-ऽएनामेतदुपद्यत ऽएषोऽग्निस्तस्मिन्नेताथं रेतसि सम्भूतिं दधाति ॥ १० ॥ सा कार्म्मुकी स्यात् । देवाश्च्चाऽसुराश्च्चो-भये प्प्राजापत्त्या ऽअस्पर्द्धन्त ते देवा ऽअग्निमनीकं कृत्त्वा-ऽसुरानब्भ्यायँस्तस्याऽर्च्चिषः प्प्रगृहीतस्याऽसुरा ऽअग्रं प्राऽऽवृ-श्च्चँस्तदस्यां प्रत्त्यतिष्ठत्त्स क्रमुकोऽभवत्तस्मात्त्स स्वादू रसो हि तस्मादु लोहितोऽर्च्चिर्हि स ऽएषोऽग्निरेव यत्क्रमुको ऽग्निमेवाऽस्मिन्नेतत्त्सम्भूतिं दधाति ॥ ११ ॥ प्रादेशमात्री भवति । प्रादेशमात्रो वै गब्भों व्विष्णुरात्त्मसम्मितामेवाऽस्मि-न्नेतत्त्सम्भूतिं दधाति ॥ १२ ॥ घृते न्न्युत्ता भवति । अग्नि-र्र्वास्यै योनेरसृज्ज्यत तस्यै घृतमुल्बमासीत्तस्मात्तत्प्रत्त्युद्दी-प्प्यत ऽआत्त्मा ह्यस्यैष तस्मात्तस्य न भस्स्म भवत्त्यात्त्मैव तदात्त्मानमप्प्येति न वा ऽउल्बं गब्र्भं हिनस्त्य हिंसाया-ऽउल्बाद्धै जायमानो जायत ऽउल्बाज्जायमानो जायाता ऽइति ॥ १३ ॥ * तामादधाति । '[1]द्रुन्नः सर्प्पिरासुतिरि'ति द्रुवन्नः सर्प्पिरशन ऽइत्त्येत'[2]त्प्रत्नो होता व्वरेण्य' ऽइति सनातनो होता व्वरेण्य ऽइत्त्येत'[3]त्सहसस्पुत्रो ऽअद्भुत' ऽइति बलं वै सहो बलस्य पुत्रोऽद्भुत ऽइत्त्येतत्तिष्ठन्नादधाति स्वाहाकारेण

---

* का० श्रौ० सू० १६. ४. ३५ ।

( १ ) शु० सं० अ० ११ क० ७० । ( २ ) शु० सं० अ० ११ क० ७० । ( ३ ) शु० सं० अ० ११ क० ७० ।

तस्योपरि बन्धुः ॥ १४ ॥ तद्वा ऽआत्मैवोखा । योनि-र्मुञ्जाः शणा जरायूल्बं घृतं गर्ब्भः समित् ॥१५॥ बाह्योखा भवति । अन्तरे मुञ्जा बाह्यो ह्यात्माऽन्तरा योनिर्ब्बाह्ये मुञ्जा भवन्त्यन्तरे शणा बाह्या हि योनिरन्तरं जरायु बाह्ये शणा भवन्त्यन्तरं घृतं बाह्यꣳ हि जराय्वन्तरमुल्बं बाह्यं घृतं भवत्यन्तरा समिद्बाह्यꣳ ह्युल्बमन्तरो गर्ब्भ ऽएतेब्भ्यो वै जायमानो जायते तेब्भ्य ऽएवैनमेतज्जनयति ॥ १६ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ समिधां वैकङ्कतत्वविध्यादि ]

अथ वैकङ्कतीमादधाति । प्रजापतिर्य्यां प्प्रथमामाहुति-मजुहोत्स हुत्वा यत्र न्न्यमृष्ट ततो विकङ्कतः समभवत्सैषा* प्प्रथमाहुतिर्य्यद्विकङ्कतस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणा-ति 'परस्या ऽअधि संवतोऽवराँ२॥ ऽअब्भ्यातर । यत्राऽहम-स्मि ताँ२॥ ऽअवे'ति यथैव यजुस्तथा बन्धुः ॥ १ ॥ अथौदु-म्बरीमादधाति । देवाश्चाऽसुराश्चोभये प्प्राजापत्या ऽअस्प्प-र्द्धन्त ते ह सर्व्वे ऽएव वनस्पतयोऽसुरानब्भ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवा ऽअसुरान् जित्वा तेषां वनस्प्पतीन-वृञ्जत ॥ २ ॥ ते होचुः । हन्त यैषु वनस्प्पतिषूर्ग्ग्यो रस-ऽउदुम्बरे तं दधाम ते यद्यपक्रामेयुर्य्यातयामा ऽअपक्रामे-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ६. २; कठ० सं० १९. ७; कपि० ३०. ७; मै० सं० ११. ७. ७; तै० सं० ४. १. ९।

* का० श्रौ० सू० १६. ४. ३६।

(१) शु० सं० अ० ११ क० ७१।

युर्र्यथा धेनुर्दुग्धा यथाऽनड्वानूहिवानिति तद्येषु वनस्पतिषूर्ग्यो रस ऽआसीदुदुम्बरे * तमदधुस्तयैतदूर्जा सर्वान्वनस्पतीन्प्रति पच्यते तस्मात्स सर्वदाऽऽर्द्रः सर्वदा क्षीरी तदेतत्सर्वमन्नं यदुदुम्बरः सर्वे वनस्पतयः सर्वेणैवैनमेतदन्नेन प्रीणाति सर्वैर्वनस्पतिभिः समिन्धे ॥ ३ ॥ 'परमस्याः परावत' ऽइति । या परमा परावदित्येत'द्रोहिदश्वऽइहागही'ति रोहितो हाऽग्नेरश्वः 'पुरीष्यः पुरुप्रिय' ऽइति पशव्यो बहुप्रिय ऽइत्येतदग्ने त्वं तरा मृध' ऽइत्यग्ने त्वं तर सर्वाः पाप्मन ऽइत्येतत् ॥ ४ ॥ अथाऽपरशुवृक्णमादधाति । जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्वस्मा ऽअन्नाय जायतऽएतद्वैकमन्नं † यदपरशुवृक्णं तेनैनमेतत्प्रीणाति 'यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्ये'ति यथैव यजुस्तथा बन्धुस्तद्यत्किञ्चाऽपरशुवृक्णं तदस्मा ऽएतत्स्वदयति तदस्मा ऽअन्नं कृत्वाऽपिदधाति ॥ ५ ॥ अथाऽधः शयमादधाति ‡ । जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्वस्मा ऽअन्नाय जायत ऽएतद्वैकमन्नं यदधः शयं तेनैनमेतत्प्रीणाति 'यदत्त्युपजिह्विका यद्वम्रो ऽअतिसर्पती'त्युपजिह्विका वा हि त-

* का० श्रौ० सू० १६. ४. ३७ ।

(१) शु० सं० अ० ११ क० ७२ । (२) शु० सं० अ० ११ क० ७२ । (३) शु० सं० अ० ११ क० ७२ । (४) शु० सं० अ० ११ क० ७२ ।

† का० श्रौ० सू० १६. ४. ३८ ।

(५) शु० सं० अ० ११ क० ७३ ।

‡ का० श्रौ० सू० १६. ४. ३९ ।

(६) शु० सं० अ० ११ क० ७४ ।

दुत्ति वम्म्रो वाऽतिसर्प्पति 'सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्ये'ति यथैव यजुस्तथा बन्धुस्तद्यत्किञ्चाऽधः शयं तदस्म्मा ऽएतत्स्वदयति तदस्म्मा ऽअन्नं कृत्वाऽपिदधाति ॥ ६ ॥ अथैता ऽउत्तराः * पालाश्यो भवन्ति । ब्रह्म वै पलाशो ब्रह्मणैवैनमेतत्समिन्धे यद्वेव पालाश्यः सोमो वै पलाश ऽएषो ह परमाहुतिर्यत्सोमाहुतिस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणाति ॥ ७ ॥ 'अहरहरप्प्रयावं भरन्त' ऽइति । अहरहरप्प्रमत्ता ऽआहरन्त ऽइत्त्येतद्'श्वायेव तिष्ठते घासमस्म्मा' ऽइति यथाऽश्वाय तिष्ठते घासमित्त्येत'द्रायस्प्पोषेण समिषा मदन्त' ऽइति रय्या च पोषेण च समिषा मदन्त इत्त्येत'दग्ने मा ते प्प्रतिवेशा रिषामे'ति यथैवाऽस्य प्प्रतिवेशो न रिष्येदेवमेतदाह ॥ ८ ॥ 'नाभा पृथिव्याः समिधाने ऽअग्नावि'ति । एषा ह नाभिः पृथिव्यै यत्रैष ऽएतत्समिद्ध्यते 'रायस्प्पोषाय बृहते हवामह' ऽइति रय्यै च पोषाय च बृहते हवामह ऽइत्त्येत'दिरम्मदमि'तीरया ह्येष मत्तो 'बृहदुक्थमि'ति बृहदुक्थो ह्येष 'यजत्रमि'ति यज्ञियमित्त्येत'ज्जेतारमग्निं पृतनासु सासहिमि'ति जेता ह्यग्निः पृतना ऽउ सासहिः ॥ ९ ॥ 'याः

---

( १ ) शु० सं० अ० ११ क० ७४ ।

* का० श्रौ० सू० १६. ४. ४० ।

( २ ) शु० सं० अ० ११ क० ७५ । ( ३ ) शु० सं० अ० ११ क० ७५ । ( ४ ) शु० सं० अ० ११ क० ७५ । ( ५ ) शु० सं० अ० ११ क० ७५ । ( ६ ) शु० सं० अ० ११ क० ७६ । ( ७ ) शु० सं० अ० ११ क० ७६ । ( ८ ) शु० सं० अ० ११ क० ७६ । ( ९ ) शु० सं० अ० ११ क० ७६ । ( १० ) शु० सं० अ० ११ क० ७६ । ( ११ ) शु० सं० अ० ११ क० ७६ ।

सेना ऽअभीत्वरीः । दुच्छ्ष्ट्राभ्यां मलिम्लूञ्ज्ये जनेषु मलि-
म्लवो यो ऽअस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो ऽअस्मान्धिप्प्साच्च सर्वं तं मस्म्मसा कुर्वि'ति
॥ १० ॥ एतद्वै देवाः । यश्चैनानद्वेड् यं चाऽद्विषुस्तमस्म्मा-
ऽअन्नं कृत्वाऽप्प्यदधुस्तेनैनमप्प्रीणन्नन्नमहैतस्याऽभवदुदहदु
देवानां पाप्प्मानं तथैवैतद्यजमानो यश्चैनं द्वेष्टि यं च द्वेष्टि
तमस्म्मा ऽअन्नं कृत्वाऽपिदधाति तेनैनं प्रीणात्त्यन्नमहैतस्य
भवति दुहत्त्यु यजमानस्य पाप्प्मानम् ॥ ११ ॥ ता ऽएता-
ऽएकादशाऽऽदधाति । अक्षत्रियस्य वा पुरोहितस्य वा सर्वं
वै तद्यदेकादशाऽसर्वं तद्यदक्षत्रियो वा पुरोहितो वा ॥१२॥
द्वादश * क्षत्रियस्य वा पुरोहितस्य वा। सर्वं वै तद्यद् द्वादश
सर्वं तद्यत्क्षत्रियो वा पुरोहितो वा ॥ १३ ॥ स पुरोहिस्या-
ऽऽदधाति । 'संशितं मे ब्रह्म सशितं वीर्यं बलम् ।
सशितं क्षत्रं जिष्णु यस्याऽहमस्म्मि पुरोहित' ऽइति
तदस्य ब्रह्म च क्षत्रं च सच्छ्श्यति ॥ १४ ॥ अथ क्षत्रि-
यस्य । 'उदेषां बाहू ऽअतिरमुद्वर्चो ऽअथो बलम् । क्षिणोमि
ब्रह्मणा मित्राऽनुन्नयामि स्वाँ२॥ ऽअहमि'ति यथैव क्षिणुया-
दमित्राऽनुन्नयेत्स्वानेवमेतदाहोभे त्वेवैते ऽआदध्यादयं वा
ऽअग्निर्ब्रह्म च क्षत्रं चेममेवैतदग्निमेताभ्यामुभाभ्याᳪ
समिन्धे ब्रह्मणा च क्षत्रेण च ॥ १५ ॥ तास्त्रयोदश सम्प-
द्यन्ते । त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्यावान-

(१) शु० सं० अ० ११ क० ७७-७९ ।
* का० श्रौ० सू० १६. ४. ४१,४२ ।
(२) शु० सं० अ० ११ क० ८२ । (३) शु० सं० अ० ११ क० ८३ ।

ग्निरुर्षावत्त्यस्य मात्रा तावत्तैवैनमेतदुन्नेन प्प्रीणाति ॥ १६ ॥ प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गब्भों व्विष्णुरन्नमेतदात्मसम्मितेनैवैनमेतदुन्नेन प्प्रीणाति षदु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति षद्भूयो हिनस्ति तद्यत्कनीयो न तदवति तिष्ठन्नादधाति तस्योपरि बन्धुः स्वाहाकारेण रेतो वा ऽइदꣳ सिक्तमयमग्निस्तस्मिन्नयत्काष्ठान्न्यस्वाहाकृतान्न्यब्भ्यादध्याद्विथꣳस्याद्वैनं ता षत्समिधस्तेन नाऽऽहुतयो षदु स्वाहाकारेण तेनाऽन्नमन्नꣳ हि स्वाहाकारस्तथो हैनं न हिनस्ति ॥ १७ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ भस्मोद्वपनम्, व्रतपरिग्रहः, उखाभेदे प्रायश्चित्तादिकं च ]

अथ व्विष्णुक्रमान्क्रान्त्वा । वात्सप्प्रेणोपस्थायाऽस्तमितेऽआदित्ये भस्मैव प्रथममुद्वपत्त्येतद्वा ऽएनमेतेनाऽन्नेन प्प्रीणात्त्येताभिः समिद्भिस्तस्याऽन्नस्य जग्धस्यैष पाप्प्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्प्मन्न्वाचं व्विसृजते व्वाचं व्विसृज्य समिधमादधाति रात्र्या ऽएवैनमेतददुन्नेन प्प्रीणाति रात्रीꣳ रात्रीमप्प्रयावं भरन्त ऽइति तस्योक्तो बन्धू रात्र्या ऽएवैतामरिष्टिꣳ स्वस्तिमाशास्ते तद्यत्किञ्चाऽतो रात्र्योपसमादधात्त्याहुतिकृतꣳ हैवाऽस्मै

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ६. २,३; कठ० सं० १६. ७; कपि० ३०. ७; मै० सं० ११. ७. ७; तै० सं० ४. १. ९ ।

तदुपसमादधाति ॥१॥ अथ प्प्रातरुदित ऽआदित्त्ये। भस्मैव प्प्रथममुद्वपत्त्येतद्वा ऽएनमेतेनाऽन्नेन प्प्रीणात्त्येतया समिधा यच्च रात्र्योपसमा दधाति तस्याऽन्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्म्मिन्नपहतपाप्प्मन्न्वाचं व्विसृजते व्वाचं व्विसृज्ज्य † समिधमादधात्त्यह्न ऽएवैनमेतदन्नेन प्प्रीणा'त्त्यहर्(१)रप्प्रयावं भरन्त' ऽइति तस्योक्तो बन्धुरह्न ऽएवैतामरिष्टिᳬ स्वस्तिमाशास्ते तद्यत्किञ्चाऽतोऽह्नोपसमादधात्त्याहुतिकृतᳫ हैवाऽस्मै तदुपसमादधाति ॥२॥ अहोरात्रे वा ऽअभिवर्त्तमाने संव्वत्सरमाप्प्नुतᳫ संत्सर ऽइदᳫ सर्व्वमाह्नायैवैतामरिष्टिᳬ स्वस्तिमाशास्ते ॥ ३ ॥ अथ यदाऽस्मै व्रतं प्प्रयच्छन्ति । अथ व्रते * न्न्यज्ज्य समिधमादधाति न व्रते न्न्यञ्ज्यादित्त्यु हैक ऽआहुराहुतिं तज्जुहुयादनवक्लृप्तं वै तद्यद्दीक्षित ऽआहुतिं जुहुयादिति ॥ ४ ॥ स वै न्न्यञ्ज्यादेव। दैवो वा ऽअस्यैष ऽआत्त्मा मानुषोऽयᳫ स यन्न न्न्यञ्ज्यान्न हैतं दैवमात्त्मानं प्रीणीयादथ यन्न्यनक्ति तथो हैतं दैवमात्त्मानं प्रीणाति सा यत्त्समित्तेन नाऽऽहुतिर्य्यद्द व्रते न्न्यक्ता तेनाऽन्नमन्नᳫ हि व्रतᳫ ॥ ५ ॥ स वै समिधमाधायाऽथ व्रतयति दैवो वाऽस्यैष ऽआत्त्मा मानुषोऽयं देवा ऽउ वा ऽअग्रेऽथ मनुष्यास्तस्म्मात्त्समिधमाधायाऽथ व्रतयति ॥ ६ ॥ 'अन्नपते-

† का० श्रौ० सू० १६. ४. ४०।

(१) शु० सं० अ० ११ क० ८३।

* का० श्रौ० सू० १६. ६. ८।

ऽन्नस्य नो देही'ति[1]। अशनपतेऽशनस्य नो देहीत्त्येतद्'न-मीवस्य शुष्मिण'[2] ऽइत्त्यनशनायस्य शुष्मिण ऽइत्त्येत'त्प्र-प्रदातारं तारिष'[3] ऽइति यजमानो वै दाता प्रयजमानं तारिष ऽइत्त्येत'दूर्ज्जं नो धेहि द्विपदे चतुष्पद'[4] ऽइत्त्याशि-षमाशास्ते यदु भिन्नायै प्रायश्चित्तिमाहोत्तरस्मिँस्तदन्न्वा-ख्यान ऽइति ॥ ७ ॥ यद्येषोखा * भिद्येत। याभिन्ना न वा स्थाल्युरुबिली स्यात्तस्यामेनं पर्य्यावपेदाच्छेति वा ऽएषोखा या भिद्यतेऽनार्त्ता वा ऽइयं देवताऽनार्त्तायामिममनार्त्तं बिभ-राणीति तत्रोखायै कपालं पुरस्तात्प्रास्यति तथो हैष ऽएतस्यै स्वायै योनेर्न्न च्च्यवते ॥ ८ ॥ अथ मृदमा-हृत्य। उखां चोपशयां च † पिष्ट्वा सꣳसृज्योखां करोत्त्येतयै-वाऽऽवृताऽनुपहरन्न्यजुस्तूष्णीमेव पक्त्वा पर्य्यावपति कर्म्मणि-रेव तत्र प्रायश्चित्तिः पुनस्तत्कपालमुखायामुपसमस्योखां ‡ चोपशयां च पिष्ट्वा सꣳसृज्य निदधाति प्रायश्चित्तिभ्यः ॥ ९ ॥ अथ यद्येष ऽउख्योऽग्निरनुगच्छेत्। गार्हपत्यं ह्यत्र स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुद्धृत्त्योपसमाधायोखां $ प्रवृञ्ज्यादेतयैवाऽऽवृताऽनु-पहरन्न्यजुस्तूष्णीमेव तां रुयदाग्निरारोहति ॥ १० ॥ अथ

(१) शु० सं० अ० ११ क० ८३। (२) शु० सं० अ० ११ क० ८३। (३) शु० सं० अ० ११ क० ८३। (४) शु० सं० अ० ११ क० ८३।

* का० श्रौ० सू० १६. ७. ८।
† का० श्रौ० सू० १६. ७. ९।
‡ का० श्रौ० सू० १६. ७. ११।
$ का० श्रौ० सू० १६. ७. ६।

* प्रायश्चित्ती करोति। सर्वेभ्यो वा ऽएष ऽएतं कामेभ्य ऽआधत्ते तद्यद्वाऽस्याऽत्र कामानां व्यवच्छिद्यतेऽग्नावनुगते तद्वैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोत्यङ्कुरप्रायश्चित्तिं चाऽग्निप्रायश्चित्तिं चाऽङ्कुरस्य पूर्वामथाऽग्नेस्तस्योक्तो बन्धुः॥ ११॥ स समिधाज्यस्योपहत्य। आसीन ऽआहुतिं जुहोति † 'विश्वकर्म्मणे स्वाहे'त्यथोपोत्थाय ‡ समिधमादधाति 'पुनस्त्वाऽऽदित्या[1] रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैरि'त्येतास्त्वा देवताः पुनः समिन्धतामित्येतद् 'घृतेन[2] त्वं तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामा' ऽइति घृतेनाऽऽह त्वं तन्वं वर्द्धयस्व येभ्य ऽउ त्वां कामेभ्यो यजमान ऽआधत्त तेऽस्य सर्वे सत्याः सन्त्वित्येतत् ॥ १२॥ अथ यदि ‡‡ गार्हपत्योऽनुगच्छेत्। अरणी वाऽव स गच्छत्यरणिभ्याᳬ हि सऽआहृतो भवत्यरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति॥ १३॥ अथ यदि $ प्रसुत ऽआहवनीयोऽनुगच्छेत्। गार्हपत्यं वाऽव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्याद्वैनं प्राञ्चः साङ्काशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति यस्तस्मिन्काले ऽङ्कुरः स्यात्तामङ्कुरप्रायश्चित्तिं कुर्य्यात्समान्यग्निप्रायश्चित्तिः

* का० श्रौ० सू० १६. ७. २५,२६।
† का० श्रौ० सू० १६. ७. ७।
‡ का० श्रौ० सू० १६. ७. २।
(१) शु० सं० अ० १२ क० ४४। (२) शु० सं० अ० १२ क० ४४।
‡‡ का० श्रौ० सू० १६. ७. ३।
$ का० श्रौ० सू० १६. ७. ४।

॥ १४ ॥ अथ * यद्याग्नीध्रीयोऽनु गच्छेत् । गार्हपत्यं वाऽव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्याद्देवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय प्रायश्चित्ती करोत्यथ यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः ॥१५॥ (D)

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥
कण्डिकासंख्या १००॥



[ रुक्मप्रतिमोकविध्यादि, उखाया आसन्द्यां निधानम्, उख्याग्नेः परिग्रहश्च ]

रुक्मं † प्रतिमुच्य बिभर्त्ति । सत्यꣳ हैतद्यद्रुक्मꣳ सत्यं वा ऽएतं रुषन्तुमर्हति सत्येनैतं देवा ऽअबिभरुꣳ सत्येनैवैनमेतद्बिभर्त्ति ॥१॥ तद्यत्तत्सत्यम् । असौ स ऽआदित्यꣳ स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतꣳ हिरण्यममृतमेष परिमण्डलो भवति परिमण्डलो ह्येषऽएकविꣳशति निर्बाध ऽएकविꣳशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वा ऽएतस्य निर्बाधा बाह्यत ऽउ वाऽएतस्य रश्मयꣳ ॥ २ ॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वा ऽआदित्य ऽएष रुक्मो नो हैतमग्निं मनुष्यो

---

* का० श्रौ० सू० १६. ७. ५ ।

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ६. ४; कपि० सं० २५. १; तै० सं० ४. २. ३ ।

† का० श्रौ० सू० १६. ५. १ ।

मनुष्यरूपेण यन्तुमर्हत्येतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ ३ ॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । रेतो वा ऽइदꣳ सिक्तमयमग्निस्तेजो वीर्यꣳ रुक्मोऽस्मिँस्तद्रेतसि तेजो वीर्यं दधाति ॥ ४ ॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएतमन्तिकाद्गोप्तारमकुर्वन्नमुमेवाऽऽदित्यमसौ वा ऽआदित्य ऽएष रुक्मस्तथैवाऽस्मा ऽअयमेतमन्तिकाद्गोप्तारं करोति ॥ ५ ॥ कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वा ऽएतं यन्तुमर्हति यज्ञेनैतं देवा ऽअबिभरुर्यज्ञेनैवैतमेतद्बिभर्त्ति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दाꣳसि वा ऽएतं यन्तुमर्हन्ति छन्दोभिरेतं देवा ऽअबिभरुश्छन्दोभिरेवैनमेतद्बिभर्त्ति ॥ ६ ॥ अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति । ऋक्सामयोर्हैते रूपे ऽऋक्सामे वा ऽएतं यन्तुमर्हत ऽऋक्सामाभ्यामेतं देवा ऽअबिभरुर्ऋक्सामाभ्यामेवैनमेतद्बिभर्त्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बन्धुः ॥ ७ ॥ * तमुपरिनाभि बिभर्त्ति । असौ वा ऽआदित्य ऽएष रुक्म ऽउपरि नाभ्यु वा ऽएषः ॥ ८ ॥ यद्वेवोपरिनाभि । अवाग्वै नाभे रेतः प्रजातिस्तेजो वीर्यꣳ रुक्मो नेन्मे रेतः प्रजातिं तेजो वीर्यꣳ रुक्मः प्रदहादिति ॥ ९ ॥ यद्वेवोपरिनाभि । एतद्वै पशोर्मेध्यतरं यदुपरिनाभि पुरीषसꣳहिततरं यदवाङ्नाभेस्तद्यदेव पशोर्मेध्यतरं तेनैनमेतद्बिभर्त्ति ॥ १० ॥

* अत्र शतम् ३९०० ।

यद्वेवोपरिनाभि । यद्वै प्प्राणस्याऽमृतमूर्द्ध्वं तन्नाभेरूर्द्ध्वैः प्प्राणै-रुच्चरत्त्यथ यन्म्मर्त्त्यं पराक्तन्नाभिमत्त्येति तद्यदेव प्प्राणस्या-ऽमृतं तदेनमेतदभिसम्पादयति तेनैनमेतद्विभर्त्ति ॥ ११ ॥ अथैनमासन्द्या * बिभर्त्ति । इयं व्वा ऽआसन्द्यस्याꣳ हीदꣳ सर्व्वमासन्नमियं व्वा ऽएतं ऽयन्तुमर्हत्त्यनयैतं देवा ऽअबि-भरुरनयैवैनमेतद्विभर्त्ति ॥ १२ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन बिभर्त्त्यथो सर्व्वे ऽएते व्वनस्प्पतयो यदुदुम्बरः सर्व्वे वा ऽएतं व्वनस्प्पतयो यन्तुम-र्हन्ति सर्व्वैरेतं व्वनस्प्पतिभिर्द्देवा ऽअबिभरुः सर्व्वैरेवैनमेतद्वन-स्प्पतिभिर्व्विभर्त्ति ॥ १३ ॥ प्रादेशमात्र्यूर्द्ध्वा भवति । प्रादेश-मात्रो वै गर्ब्भो व्विष्णुर्य्योनिरेषा गर्ब्भसम्मितां तद्योनिं करोत्त्यरत्त्निमात्री तिरश्ची बाहुर्व्वा ऽअरत्त्निर्बाहु नो वै व्वीर्य्यं क्रियते व्वीर्य्यसम्मितैव तद्भवति व्वीर्य्यं व्वा ऽएतं ऽयन्तुमर्हति व्वीर्य्येणैतं देवा ऽअबिभरुर्व्वीर्य्येणैवैनमेतद्विभर्त्ति ॥१४॥ चतुः स्रक्तयः पादा भवन्ति । चतुः स्रक्तीन्न्यनूच्च्यानि चतस्रो वै दिशो दिशो वा ऽएतं ऽयन्तुमर्हन्ति दिग्भिरेतं देवा-ऽअबिभरुर्द्दिग्भिरेवैनमेतद्विभर्त्ति मौञ्जीभी रज्जुभिर्व्व्युता भवति त्रिवृद्धिस्तस्योक्तो बन्धुर्म्मृदा दिग्धा तस्यो ऽएवो-क्तोऽथो ऽअनतिदाहाय ॥१५॥ अथैनꣳ शिक्येन बिभर्त्ति । इमे वै लोका ऽएषोऽग्निर्द्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्त्थातुं ऽयच्छक्नुवन्ति तस्म्माच्छिक्यं दिग्भिरे-वैनमेतद्विभर्त्ति षडुद्यामं भवति षड्ढि दिशो मौञ्जं

* का० श्रौ० सू० १६. ५. २ ।

त्रिवृत्तस्योक्तो बन्धुर्म्मृदा दिग्धं तस्यो ऽएवोक्तोऽथो ऽअनतिदाहाय ॥ १६ ॥ तस्याऽप ऽएव प्प्रतिष्ठा । अप्सु हीमे लोकाः प्प्रतिष्ठिता ऽआदित्य ऽआसञ्जनमादित्त्ये हीमे लोका दिग्भिरासक्ताः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ १७ ॥ यद्वेवैनः शिक्येन बिभर्त्ति । संवत्त्सर ऽएषोऽग्निर्ऋतवः शिक्यमृतुभिर्हि संवत्त्सरः शक्नोति स्त्थातुं यच्छक्नोति तस्म्माच्छिक्यमृतुभिरेवैनमेतद्बिभर्त्ति षड्द्यामं भवति षड्ढ्यृतवः ॥ १८ ॥ तस्याऽहोरात्रे ऽएव प्प्रतिष्ठा । अहोरात्रियोर्ह्ययः संवत्त्सरः प्प्रतिष्ठितश्चन्द्रमा ऽआसञ्जनं चन्द्रमसि ह्ययः संवत्त्सर ऽऋतुभिरासक्तः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति तस्य ह वा ऽएष संवत्त्सरभृतो भवति य ऽएवं व्वेद संवत्त्सरोपासितो हैव तस्य भवति य ऽएवं न व्वेदेत्त्यधिदेवतम् ॥ १९ ॥

# ❀ शतपथस्यार्धम् ❀

कण्डिकाः ३८१२ ॥



अथाऽध्यात्मम् । आत्मैवाऽग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैनमेतद्बिभर्त्ति षडुद्यामं भवति षड्ढि प्राणाः ॥ २० ॥ तस्य मन एव प्रतिष्ठा । मनसि ह्ययमात्मा प्रतिष्ठितोऽन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्तः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ २१ ॥ अथैनमुखया बिभर्त्ति । इमे वै लोका उखेमे वा एतं लोका यन्तुमर्हन्त्येभिरेतं लोकैर्देवा अबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्त्ति ॥ २२ ॥ सा यदुखा नाम । एतद्वै देवा एतेन कर्म्मणैतयाऽऽवृतेमां लोकानुदखनन्यदुदखनँस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोऽक्षं परोऽक्षमा हि देवाः ॥ २३ ॥ तद्वा उखेति द्वे अक्षरे । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्बिभर्त्ति सो एव कुम्भी सा स्थाली तत्षट् षड्ऋतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ २४ ॥ अथैनमिण्ड्वाभ्यां *परिगृह्णाति । असौ वा आदित्य एषोऽग्निरहोरात्रे इण्ड्वे अमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥ २५ ॥ यद्वेवैनमिण्ड्वाभ्यां † परिगृह्णाति । असौ वा आदित्य एषोऽग्निरिमा उ लोकाविण्ड्वे अमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोकाभ्यां

* "तल्लोखाधारणसाधनभूतः परिमण्डलः पदार्थविशेष 'इण्ड्व' इत्युच्यते" ।
† का० श्रौ० सू० १६. ५. ३ ।

परिगृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती तस्योक्तो बन्धुर्म्मृदा दिग्धे तस्यो ऽएवोक्तोऽथो ऽअनतिदाहाय ॥ २६ ॥ अथाऽतः सम्पदेव। आसन्दी चोखा च शिक्यं च रुक्मपाशश्चाऽग्निश्चच रुक्मश्च तत्षट् षड्तवः संवत्सरः संवत्सरोऽग्निरुर्ष्यावानग्निरुर्ष्यावत्यस्य मात्रा तावत्तद्भवतीण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निरुर्ष्यावानग्निरुर्ष्यावत्यस्य मात्रा तावत्तद्भवति ॥ २७ ॥ अथ सर्वसम्पत्। चत्वारः पादाश्चचत्वाऽर्ष्यनूच्च्यानि * शिक्यं च रुक्मपाशश्च षदु किश्व रज्जव्यः शिक्यं तदनूखाऽग्नी रुक्मस्तत्त्रयोदश त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निरुर्ष्यावानग्निरुर्ष्यावत्यस्य मात्रा तावत्तद्भवति ॥ २८ ॥ (A)

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ रुक्मप्रतिमुञ्चनादि ]

तं तिष्ठन्प्रतिमुञ्चते। असौ वा ऽआदित्य ऽएष रुक्मस्तिष्ठतीव वा ऽअसावाऽऽदित्योऽथो तिष्ठन्वै वीर्य्यवत्तर ऽउदङ् प्राङ् तिष्ठँस्तस्योक्तो बन्धुः ॥१॥ 'दृशानो रुक्मऽउर्व्या व्यद्यौदि'ति। दृश्यमानो ह्येष रुक्म ऽउर्व्या विद्योतते 'दुर्म्मर्षमायुः[2] श्रिये रुचान' ऽइति दुर्म्मरं वा-

* "मौञ्जं त्रिवृद्रज्जव्यं भवति" ( का० श्रौ० सू० १७. २. ६ )।
(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ७. १।
( १ ) शु० सं० अ० ११ क० १। ( २ ) शु० सं० अ० ११ क० १।

ऽएतस्याऽऽयुः श्रियो ऽएष रोचते'ऽग्निरमृतो ऽअभवद्वयोभि-
रि'तिसर्वैर्वा ऽएष वयोभिरमृतोऽभव'द्यदेनं द्यौरजनयदि'ति
द्यौर्वा ऽएतमजनय'त्सुरेता' ऽइति सुरेता ह्येषा यस्या ऽएष
रेतः ॥ २ ॥ अथैनमिण्ड्वाभ्यां * परिगृह्णाति । नक्तोषासा
समनसा विरूपे ऽइत्यहोरात्रे वै 'नक्तोषासा समनसा
विरूपे धापयेते शिशुमेकं समीची' ऽइति यद्वै किञ्चा-
ऽहोरात्रयोस्तेनैतमेव समीची धापयेते 'द्यावा क्षामा रुक्मो-
ऽअन्तर्विभाती'ति हरन्नेतद्यजुर्जपतीमे वै द्यावापृथिवी
द्यावा क्षामा ते ऽएष यन्नन्तरा विभाति तस्मादेतद्धरन्यजु-
र्जपति 'देवा ऽअग्निं धारयन्द्रविणोदा' ऽइति परिगृह्य
निदधाति प्राणा वै देवा द्रविणोदास्त ऽएतमग्र ऽएवमधार-
यँस्तैरेवैनमेतद्धारयति ॥ ३ ॥ अथ † शिक्यपाशं प्रतिमु-
ञ्चते । 'विश्वा रूपाणि प्रतिमुञ्चते कविरि'त्यसौ वा-
ऽआदित्यः कविर्विश्वा रूपा शिक्यं 'प्रासावीद्भद्रं द्विपदे
चतुष्पद' ऽइत्युद्यन्वा ऽएष द्विपदे चतुष्पदे च भद्रं प्रसौति
'वि नाकमख्यत्सविता वरेण्य' ऽइति स्वर्गो वै लोको
नाकस्तमेष ऽउद्यन्नेवाऽनुविपश्यय'त्यनु प्रयाणमुषसो
विराजती'त्युषा वा ऽअग्रे व्युच्छति तस्या ऽएष व्युष्टिं

(१) शु० सं० अ० ११ क० १। (२) शु० सं० अ० १२ क० १। (३) शु० सं० अ० १२ क० १।

* का० श्रौ० सू० १६. ५. ३-५।

(४) शु० सं० अ० १२ क० २। (५) शु० सं० अ० १२ क० २। (६) शु० सं० अ० १२ क० २।

† का० श्रौ० सू० १६. ५. ६।

(७) शु० सं० अ० १२ क० ३। (८) शु० सं० अ० १२ ३। (९) शु० सं० अ० १२ क० ३। (१०) शु० सं० अ० १२ क० ३।

बिराजन्ननूदेति ॥ ४ ॥ अथैनमतो * विकृत्या विकरोति । इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥ ५ ॥ 'सुपर्णोऽसि गरुत्मानि'ति । वीर्यं वै सुपर्णो गरुत्मान् वीर्यमेवैनमेतदभि संस्करोति 'त्रिवृत्ते शिर' इति त्रिवृत्तमस्य स्तोमं शिरः करोति 'गायत्रं चक्षुरि'ति गायत्रं चक्षुः करोति 'बृहद्रथन्तरे पक्षावि'ति बृहद्रथन्तरे पक्षौ करोति 'स्तोम आत्मे'ति स्तोममात्मानं करोति पञ्चविंशं 'छन्दाᳬस्यङ्गानी'ति च्छन्दाᳬसि वा एतस्या-ऽङ्गानि 'यजूᳬषि नामे'ति यदेनमग्निरित्याचक्षते तदस्य यजूᳬषि नाम 'साम ते तनूर्वामदेव्य'मित्यात्मा वै तनू-रात्मा ते तनूर्वामदेव्यमित्येत'द्यज्ञायज्ञियं पुच्छमि'ति यज्ञायज्ञियं पुच्छं करोति 'धिष्ण्याः शफा' इति धिष्ण्यैर्वा-ऽएषोऽस्मिँल्लोके प्रतिष्ठितः 'सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पते'ति तदेनᳬ सुपर्णं गरुत्मन्तं कृत्वाऽऽह देवान्गच्छ स्वर्गं लोकं पतेति ॥ ६ ॥ तं वा एतम् । अत्र पक्षपुच्छवन्तं विकरोति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेत-मत्र पक्षपुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवान् जायते ॥ ७ ॥ तᳬ हैके । एतया † विकृत्याऽभिमन्त्र्याऽन्यां

* का० श्रौ० सू० १६. ५. ७ ।

(१) शु० सं० अ० १२ क० ४ । (२) शु० सं० अ० १२ क० ४ । (३) शु० सं० अ० १२ क० ४ । (४) शु० सं० अ० १२ क० ४ । (५) शु० सं० अ० १२ क० ४ । (६) शु० सं० अ० १२ क० ४ । (७) शु० सं० अ० १२ क० ४ । (८) शु० सं० अ० १२ क० ४ । (९) शु० सं० अ० १२ क० ४ । (१०) शु० सं० अ० १२ क० ४ । (११) शु० सं० अ० १२ क० ४ ।

† का० श्रौ० सू० १६. ५. ९ ।

चितिं चिन्वन्ति * द्रोणचितं वा रथचक्रचितं वा कङ्क-चितं वा प्र ऽउगचितं वोभयतः प्र ऽउगं वा समुह्यपुरीषं वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्ता-दृक्तत्तस्मादेनꣳ सुपर्णचितमेव चिनुयात् ॥ ८ ॥ तमे-तया विकृत्या । इत ऽऊर्ध्वं प्राञ्चं प्रगृह्णात्यसौ वा ऽआदित्य-ऽएषोऽग्निरमुं तदादित्यमित ऽऊर्ध्वं प्राञ्चं दधाति तस्मा-दसावादित्य ऽइत ऽऊर्ध्वः प्राङ् धीयते परोबाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपाऽवहरति तमुपाऽवहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ९ ॥ अथ † विष्णुक्रमान्क्र-मते । एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त यद्विष्णु-र्भूत्वाऽक्रमन्त तस्माद्विष्णुक्रमास्तथैवैतद्यजमानो विष्णु-र्भूत्वेमाँल्लोकान्क्रमते ॥ १० ॥ स यः स विष्णुर्यज्ञः सः । स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामेतमेव तद्देवा-ऽआत्मानं कृत्वेमाँल्लोकानक्रमन्त तथैवैतद्यजमान ऽएतमे-वाऽऽत्मानं कृत्वेमाँल्लोकान्क्रमते ॥ ११ ॥ उदङ् प्राङ् तिष्ठन् । एतद्वै तत्प्रजापतिर्विष्णुक्रमैरुदङ् प्राङ् तिष्ठ-न्प्रजा ऽअसृजत तथैवैतद्यजमानो विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजाः सृजते ॥ १२ ॥ '[1]विष्णोः क्रमोऽसी'ति । विष्णुर्हि भूत्वा क्रमते '[2]सपत्नहे'ति सपत्नान्हाऽत्र हन्ति

---

* द्रोणश्चतुरस्रस्तदाकारा चितिर्द्रोणचित्, रथचक्रं वृत्तम् तदाकारा वृत्ता चिती रथचक्रचित्, कङ्को-वकस्तदाकारा चितिः कङ्कचित्, प्रउगः शकटाङ्गम् तस्याग्रभागस्त्र्यस्रि तदाकारा चितिः प्रउग-चित्, उभयतस्त्र्यस्रयाकारा मध्यस्थूला चितिः उभयतः प्रउगचित्, अन्यत आनीय समूह्यः-समू-हीकृतः पुञ्जीकृतः पुरीषो मृत्तिका तदिव चितिः समुह्यपुरीषचिदित्युच्यते ( शु० सू० वृ० ४. १. ) इति ।

† का० श्रौ० सू० १६. ५. ११–१३ ।

(१) शु० सं० अ० १२ क० ५ ।; (२) शु० सं० अ० १२ क० ५ ।

‘गायत्रं[1] छन्द ऽआरोहे’ति गायत्रं छन्द ऽआरोहति ‘पृथिवी[2]-
मनु विक्रमस्वे’ति पृथिवीमनु विक्रमते प्प्रहरति पादं क्रमत-
ऽऊर्द्ध्वमग्निमुद्गृह्णात्यूर्द्ध्वो हि रोहति ॥ १३ ॥ ‘विष्णोः[3]
क्रमोऽसी’ति । विष्णुर्हि भूत्वा क्रमते‘ऽभि[4]मातिहे’त्यभि-
मातीर्हाऽत्र हन्ति ‘त्रैष्टुभं[5] छन्द ऽआरोहे’ति त्रैष्टुभं छन्द-
ऽआरोह‘त्यन्त[6]रिक्षमनु विक्रमस्वे’त्यन्तरिक्षमनु विक्रमते
प्प्रहरति पादं क्रमत ऽऊर्द्ध्वमग्निमुद् गृह्णात्यूर्द्ध्वो हि रोहति
॥ १४ ॥ ‘विष्णोः[7] क्रमोऽसी’ति । विष्णुर्हि भूत्वा क्रम-
ते‘ऽरा[8]तीयतो हन्ते’त्यरातीयतो हाऽत्र हन्ति ‘जा[9]गतं छन्द
ऽआरोहे’ति जागतं छन्द ऽआरोहति ‘दिवं[10]मनु विक्रम-
स्वे’ति दिवमनु विक्रमते प्प्रहरति पादं क्रमत ऽऊर्द्ध्वमग्नि-
मुद् गृह्णात्यूर्द्ध्वो हि रोहति ॥ १५ ॥ ‘विष्णोः क्र[11]मोऽसी’ति ।
विष्णुर्हि भूत्वा क्रमते ‘शत्रूय[12]तो हन्ते’ति शत्रूयतो हाऽत्र
ह‘न्त्या[13]नुष्टुभं छन्द ऽआरोहे’त्यानुष्टुभं छन्द ऽआरोहति
‘दिशो[14]ऽनु विक्रमस्वे’ति सर्वा दिशोऽनु वीक्षते न प्प्रहरति
पादं नेदिमाँल्लोकानतिप्प्रणश्यानीत्यूर्द्ध्वमेवाऽग्निमुद् गृह्णाति
सꣳ ह्यारोहति ॥ १६ ॥ (B)

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

(१) शु० सं० अ० १२ क० ५। (२) शु० सं० अ० १२ क० ५। (३) शु० सं० अ० १२ क० ५। (४) शु० सं० अ० १२ क० ५। (५) शु० सं० अ० १२ क० ५। (६) शु० सं० अ० १२ क० ५। (७) शु० सं० अ० १२ क० ५। (८) शु० सं० अ० १२ क० ५। (९) शु० सं० अ० १२ क० ५। (१०) शु० सं० अ० १२ क० ५। (११) शु० सं० अ० १२ क० ५। (१२) शु० सं० अ० १२ क० ५। (१३) शु० सं० अ० १२ क० ५। (१४) शु० सं० अ० १२ क० ५।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ७. २; कठ० १६. ८; मै० सं० ११. ८; तै० सं० ४. १. १०।

## [ विष्णुक्रमः ]

अथैनमिति * प्रगृह्णाति । एतद्वै देवा ऽअकामयन्त पर्ज्जन्यो रूपꣳ स्यामेति त ऽएतेनाऽऽत्मना पर्ज्जन्यो रूपमभवँस्तथैवैतद्यजमान ऽएतेनाऽऽत्मना पर्ज्जन्यो रूपं भवति ॥ १ ॥ 'अक्रन्ददग्निस्तनयन्निव द्यौरि'ति । क्रन्दतीव हि पर्ज्जन्यस्तनय'न्क्षामा रेरिहद्वीरुधः समञ्जन्नि'ति क्षमा वै पर्ज्जन्यो रेरिह्यमाणो वीरुधः समनक्ति 'सद्यो जज्ञानो वि हीमिद्धो ऽअख्य'दिति सद्यो वा ऽएष जज्ञानऽइदꣳ सर्वं विख्यापयत्या रोदसी भानुना भात्यन्तरि'तीमे वै द्यावापृथिवी रोदसी ते ऽएष भानुना भाति परोबाहु प्रगृह्णाति परोबाहु हि पर्ज्जन्यः ॥ २ ॥ अथैन†मुपाऽवहरति । एतद्वै योऽस्मिँल्लोके रसो यदुपजीवनं तेनैतत्सहोर्द्ध्वऽइमाँल्लोकान्रोहत्यग्निर्वा ऽअस्मिँल्लोके रसोऽग्निरुपजीवनं तद्यत्तावदेव स्यान्न हाऽस्मिँल्लोके रसो नोपजीवनꣳ स्यादथ यत्प्रत्यवरोहत्यस्मिन्नेवैतल्लोके रसमुपजीवनं दधाति ॥ ३ ॥ यद्वेव प्रत्यवरोहति । एतद्वा ऽएतदिमाँल्लोकानित ऽऊर्द्ध्वो रोहति ‡ स स पराङिव रोह ऽइयमु वै प्रतिष्ठा तद्यत्तावदेव स्यात्प्रहाऽस्माल्लोकाद्यजमानश्च्यवेताऽथ यत्प्रत्यवरोहतीमामेवैतत्प्रतिष्ठामभिप्रत्यैतस्यामेवैतत्प्रतिष्ठायां प्रतिति-

---

* का० श्रौ० सू० १६. ५. १४ ।

(१) शु० सं० अ० १२ क० ६ । (२) शु० सं० अ० १२ क० ६ । (३) शु० सं० अ० १२ क० ६ । (४) शु० सं० अ० १२ क० ६ ।

† का० श्रौ० सू० १६. ५. १५ ।

‡ 'स पराङिव' इति पाठः 'ज' पुस्तके ।

ष्ठति ॥ ४ ॥ यदेव प्रत्यवरोहति। एतद्वा ऽएतदिमाँल्लोकानित ऽऊर्द्ध्वो जयति स स पराङिव जयो यो वै पराङेव जयत्यन्न्ये वै तस्य जितमन्न्ववस्यन्त्यथ य ऽउभयथा जयति तस्य तत्र कामचरणं भवति तद्यत्प्रत्यवरोहतीमानेवैतल्लोकानितश्चोर्द्ध्वानमुतश्चाऽर्वाचो जयति ॥ ५ ॥ 'अग्नेऽभ्यावर्त्तिन्[1]। अभि मा निवर्त्तस्वाऽग्ने ऽअङ्गिरः पुनरूर्ज्जा सह रय्येत्ये'तेन मा सर्व्वेणाऽभि निवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्व ऽऊर्द्ध्वो रोहति तद्यावत्कृत्व ऽऊर्द्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति तमुपाऽवहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ६ ॥ अथैन * मभिमन्त्रयते। आयुर्वा ऽअग्निरायुरेवैतदात्मन्धत्त 'ऽआ त्वा[2]हार्षमि'त्याह्वेनः हर'न्त्यन्तरभू'[3]रित्यायुरेवैतदात्मन्धत्ते 'ध्रुवस्तिष्ठाऽविचाचलिरि'त्यायुरेवैतद् ध्रुवमन्तरात्मन्धत्ते 'विशस्त्वा सर्वा वाञ्छन्त्वि'त्यन्नं वै विशोऽन्नं त्वा सर्वं वाञ्छत्वित्येत'न्मा त्वद्राष्ट्रमधिभ्रशदि[6]'ति श्रीर्वै राष्ट्रं मा त्वच्छ्रीरभिभ्रशदित्येतत् ॥७॥ [ अर्धप्रपाठकः ५१॥ ] अथ † शिक्यपाशञ्च रुक्मपाशं चोन्मुञ्चते। वारुणो वै पाशो वरुणपाशादेव तत्प्रमुच्यते वारुण्यर्चा स्वेनैव तदात्मना स्वया

(१) शु० सं० अ० १२ क० ७–१०।

* का० श्रौ० सू० १५. ५. १६।

(२) शु० सं० अ० १२ क० ११। (३) शु० सं० अ० १२ क० ११। (४) शु० सं० अ० १२ क० ११। (५) शु० सं० अ० १२ क० ११। (६) शु० सं० अ० १२ क० ११।

† का० श्रौ० सू० १५. ५. १७ क।

देवतया वरुणपाशात्प्रमुच्यत 'ऽउदुत्तमं वरुणपाशमस्मदवाधमं वि मध्यमꣳ श्रथाये'ति यथैव यजुस्तथा बन्धु'रथा वयमादित्य व्रते तवाऽनागसो ऽअदितये स्यामे'तीयं वाऽअदितिरनागसस्तुभ्यं चाऽस्यै च स्यामेत्येतत् ॥८॥ अथैनमिति * प्रगृह्णाति । एतद्वा ऽएनमदो विकृत्येत ऽउर्ध्वं प्राञ्चं प्रगृह्णाति तं तत ऽइति प्रगृह्णाति तद्यत्तावदेवाऽभविष्यदत्र हैवैष व्यरꣳस्यताऽथ यदेनमिति प्रगृह्णाति तस्मादेष ऽइतीत्वाऽथेति पुनरैति ॥ ९ ॥ 'अग्रे बृहन्नुषसामूर्द्ध्वो ऽअस्थादि'ति । अग्रे ह्येष बृहन्नुषसामूर्द्ध्वस्तिष्ठति 'निर्जगन्वान्तमसो ज्योतिषाऽगादि'ति निर्जगन्वान्वा ऽएष रात्र्यै तमसोऽह्ना ज्योतिषै'त्यग्निर्भानुना रुशता स्वङ्ग' ऽइत्यग्निर्वा ऽएष भानुना रुशता स्वङ्ग 'ऽआ जातो विश्वा सद्मान्यप्रा' ऽइतीमे वै लोका विश्वा सद्मानि तानेष जातऽआपूरयति परोबाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपाऽवहरतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति जगत्या जगती हेमाँल्लोकानमुतोऽर्वाचो व्यश्नुते ॥ १० ॥ † 'हꣳसः शुचिषदि'ति । असौ वा ऽआदित्यो हꣳसः शुचिषद्वसुरन्तरिक्षसदिति वायुर्वै 'वसुरन्तरिक्ष-

---

( १ ) शु० सं० अ० १२ क० १२ । ( २ ) शु० सं० अ० १२ क० १२ ।
* का० श्रौ० सू० १६. ५. १७ ख ।
( ३ ) शु० सं० अ० १२ क० १३ । ( ४ ) ० सं० अ० १२ क० १३ । ( ५ ) शु० सं० अ० १२ क० १३ । ( ६ ) शु० स० अ० १२ क० ११ ।
† का० श्रौ० सू० १६. ५. १८, १९ ।
(७) शु० सं० अ० १२ क० १४ । (८) शु० सं० अ० १२ क० १४ ।

सद्धोता वेदिषदि'त्यग्निर्वै होता वेदिषदतिथिरिति सर्वेषां वा ऽएष भूतानामतिथिर्दुरोणसदि'ति विषमसदित्येत'न्नृषदि'ति प्प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्प्राणोऽग्निस्तमेतदाह 'वरसदि'ति सर्वेषु ह्येष व्वरेषु सन्नऽ'ऋतसदि'ति सत्यसदित्येत'द्व्योमसदि'ति सर्वेषु ह्येष व्व्योमसु सन्नो'ऽब्जा गोजा' ऽइत्यब्जाश्च ह्येष गोजाश्च'र्त्तजा' ऽइति सत्यजा ऽइत्येत'दद्रिजा' ऽइत्यद्रिजा ह्येष'ऋतमि'ति सत्यमित्येत'द् बृहदि'ति निदधाति बृहद्ध्येष तद्यदेष तदेनमेतत्कृत्वा निदधाति ॥ ११ ॥ द्वाभ्यामक्षराभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतन्निदधाति ॥ १२ ॥ अथैनमुपतिष्ठते । एतद्वा ऽएनमेतल्लघूयतीव यदेनेन सहेति चेति चेमाँल्लोकान्क्रमते तस्मा ऽएवैतन्निह्नुतेऽहिꣳसायै ॥ १३ ॥ यद्वेवोपतिष्ठते * । एतद्वै देवा ऽअबिभयुर्य्यद्वै नोऽयमिमाँल्लोकानन्तिकान्न हिꣳस्यादिति तदेभ्य ऽएवैनमेतल्लोकेभ्योऽशमयꣳस्तथैवैनमयमेतदेभ्यो लोकेभ्यः शमयति ॥ १४ ॥ 'सीद त्वं मातुः । अस्या ऽउपस्थेऽन्तरग्ने रुचा त्वꣳ शिवो भूत्वा मह्यमग्ने ऽअथो सीद शिवस्त्वमि'ति

(१) शु० सं० अ० १२ क० १४। (२) शु० सं० अ० १२ क० १४। (३) शु० सं० अ० १२ क० १४। (४) शु० सं० अ० १२ क० १४। (५) शु० सं० अ० १२ क० १४। (६) शु० सं० अ० १२ क० १४। (७) शु० सं० अ० १२ क० १४। (८) शु० सं० अ० १२ क० १४। (९) शु० सं० अ० १२ क० १४। (१०) शु० सं० अ० १२ क० १४।

* का० श्रौ० सू० १५. ५. २१, २२।

(११) शु० सं० अ० १२ क० १५–१७।

शिवः-शिव ऽइति शमयत्येवैनमेतदहिᳲसायै तथो हैष ऽइमाँल्लोकाञ्छान्तो न हिनस्ति ॥ १५ ॥ त्रिभिरुपतिष्ठते । त्रय ऽइमे लोका ऽअथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवाऽस्मा ऽएतन्निह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति ॥ १६ ॥ (C)

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ वात्सप्रोपस्थानम् ]

अथ * वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापतिर्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणाऽऽयुष्यमकरोत्तथैवैतद्यजमानो विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणाऽऽयुष्यं करोति ॥ १ ॥ स हैष दाक्षायणहस्तः । यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्तदस्मै जातायाऽऽयुष्यं करोति तथो ह स सर्वमायुरेत्यथ यं कामयेत वीर्यवान्त्स्यादिति विकृत्यैनं पुरस्तादभिमन्त्रयेत तथो ह स वीर्यवान्भवति ॥ २ ॥ 'दिवस्[1]परि प्रथमं जज्ञे ऽअग्निरि'ति । प्राणो वै दिवः प्राणादु वा ऽएष प्रथममजायता'ऽस्मद्[2] द्वितीयं परि जातवेदा' ऽइति यदेनमदो द्वितीयं पुरुषविधोऽजनय'त्तृतीयमप्स्वि[3]'ति यदेनमदु-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ७. २, ३; कठ० १६. ८; कपि० १५. १; मै० सं० ११. ८; तै० सं० ४. १. १० ।

* का० श्रौ० सू० १५. ५. २१ ।

( १ ) शु० सं० अ० १२ क० १८ । ( २ ) शु० सं० अ० १२ क० १८ । ( ३ ) शु० सं० अ० १२ क० १८ ।

स्तृतीयमद्भ्योऽजनय'[1]न्नृमणा ऽअजस्रमि'ति प्रजापतिर्वै नृमणा ऽअग्निरजस्र 'ऽइन्धान[2] ऽएनं जरते स्वाधीरि'ति यो वा ऽएनमिन्धे स ऽएनं जनयते स्वाधीः ॥ ३ ॥ 'विद्मा[3] ते ऽअग्ने त्रेधा त्रयाणी'ति । अग्निर्वायुरादित्य-ऽएतानि हाऽस्य तानि त्रेधा त्रयाणि 'विद्मा[4] ते धाम विभृता पुरुत्रे'ति यदिदं बहुधा विह्रियते 'विद्मा[5] ते नाम परमं गुहा यदि'ति यविष्ठ ऽइति वा ऽअस्य तन्नाम परमं गुहा 'विद्मा तमुत्सं[6] यत ऽआ जगन्थे'त्यापो वा ऽउत्सो-ऽद्भ्यो वा ऽएष प्रथममाजगाम ॥ ४ ॥ 'समुद्रे[7] त्वा नृमणा ऽअप्स्वन्तरि'ति प्रजापतिर्वै नृमणा ऽअप्सु त्वा प्रजापतिरित्येत'[8]न्नृचक्षा ऽईधे दिवो ऽअग्न ऽऊधन्नि'ति प्रजापतिर्वै नृचक्षा ऽआपो दिव ऽऊध'स्तृतीये[9] त्वा रजसि तस्थिवांसमि'ति द्यौर्वै तृतीयं रजो'ऽपामुपस्थे[10] महिषा ऽअवर्द्धन्नि'ति प्राणा वै महिषा दिवि त्वा प्राणा-ऽअवर्द्धन्नित्येतत् ॥ ५ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाऽभि ता ऽआग्नेय्यस्त्रिष्टुभस्ता यदाग्नेय्यस्तेना-ऽग्निरथ यत्त्रिष्टुभो यदेकादश तेनेन्द्र ऐन्द्राग्नोऽग्निर्यां-वानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठत ऽइन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा

(१) शु० सं० अ० १२ क० १८। (२) शु० सं० अ० १२ क० १८। (३) शु० सं० अ० १२ क० १९। (४) शु० सं० अ० १२ क० १९। (५) शु० सं० अ० १२ क० १९। (६) शु० सं० अ० १२ क० १९। (७) शु० सं० अ० १२ क० २०। (८) शु० सं० अ० १२ क० २०। (९) शु० सं० अ० १२ क० २०। (१०) शु० सं० अ० १२ क० २०।

तावत्तैवैनमेतदुपतिष्ठते ॥ ६ ॥ यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिरिमं लोकमसृजत वात्सप्रेणाऽग्निं विष्णुक्रमैर्वै प्रजापतिरन्तरिक्षमसृजत वात्सप्रेण वायुं विष्णुक्रमैर्वै प्रजापतिर्दिवमसृजत वात्सप्रेणाऽऽदित्यं विष्णुक्रमैर्वै प्रजापतिर्दिशोऽसृजत वात्सप्रेण चन्द्रमसं विष्णुक्रमैर्वै प्रजापतिर्भूतमसृजत वात्सप्रेण भविष्यद्विष्णुक्रमैर्वै प्रजापतिर्वित्तमसृजत वात्सप्रेणाऽऽशां विष्णुक्रमैर्वै प्रजापतिरहरसृजत वात्सप्रेण रात्रिं विष्णुक्रमैर्वै प्रजापतिः पूर्वपक्षानसृजत वात्सप्रेणाऽपरपक्षान्विष्णुक्रमैर्वै प्रजापतिरर्द्धमासानसृजत वात्सप्रेण मासान्विष्णुक्रमैर्वै प्रजापतिर्ऋतूनसृजत वात्सप्रेण संवत्सरं तद्यद्विष्णुक्रमवात्सप्रे भवतऽएतदेव तेन सर्वं सृजते ॥ ७ ॥ यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्वै प्रजापतिः स्वर्गं लोकमभिप्प्राऽयात्सऽएतदवसानमपश्यद्वात्सप्रं तेनाऽवास्यदुप्प्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यते तथैवैतद्यजमानो विष्णुक्रमैरेव स्वर्गं लोकमभिप्प्रयाति वात्सप्रेणाऽवस्यति ॥ ८ ॥ स वै विष्णुक्रमाङ्क्रान्त्वा । अथ तदानीमेव वात्सप्रेणोपतिष्ठते यथा प्रयायाऽथ तदानीमेव विमुञ्चेत्तादृक्तद्देवानां वै विधामनु मनुष्यास्तस्मादु हेदमुत मानुषो ग्रामः प्रयायाऽथ तदानीमेवाऽवस्यति ॥ ९ ॥ तद्वा ऽअहोरात्रेऽएव विष्णुक्रमा भवन्ति । अहोरात्रे वात्सप्रमहोरात्रेऽएव तद्यात्यहोरात्रे क्षेम्यो भवति तस्मादु हेदमुत मानुषो ग्रामोऽहोरात्रे या स्वाऽहोरात्रे क्षेम्यो

भवति ॥ १० ॥ स वा ऽअर्द्धमेव संवत्सरस्य विष्णुक्रमान्क्रमते । अर्द्धं वात्सप्रेणोपतिष्ठते मद्ध्ये ह संवत्सरस्य स्वर्गो लोकः स यत्कनीयोऽर्द्धात्क्रमेत न हैतथ्ठ स्वर्गं लोकमभिप्राप्नुयादथ यद् भूयोऽर्द्धात्पराङ् हैतथ्ठ स्वर्गं लोकमतिप्रणश्येदथ यदर्द्धं क्रमतेऽर्द्धमुपतिष्ठते तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चते ॥ ११ ॥ ताभ्यां वै विपर्य्यासमेति । यथा महान्तमध्वानं विमोकथ्ठ समश्नुवीत तादृक्तस्य वै पुरस्ताच्चोपरिष्टाच्चोभे विष्णुक्रमवात्सप्रे समस्यत्यहर्वै विष्णुक्रमा रात्रिर्वात्सप्रमेतद्वा ऽइदथ्ठ सर्वं प्रजापतिः प्रजनयिष्यँश्च प्रजनयित्वा चाऽहोरात्राभ्यामुभयतः पर्य्यगृह्णात्तथैवैतद्यजमान ऽइदथ्ठ सर्वं प्रजनयिष्यँश्च प्रजनयित्वा चाऽहोरात्राभ्यामुभयतः परिगृह्णाति ॥ १२ ॥ तदाहुः । यदहर्विष्णुक्रमा रात्रिर्वात्सप्रमथोभेऽएवाऽहन्भवतो न रात्र्यां कथमस्याऽपि रात्र्यां कृते भवतऽइत्येतद्वा ऽएने ऽअदो दीक्षमाणः पुरस्तादपराह्ण ऽउभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैने ऽएतत्सन्निवपस्यन्नुपरिष्टात्पूर्वाह्ण ऽउभे समस्यत्यहर्हैतद्यत्पूर्वाह्ण ऽएवमु हाऽस्योभेऽएवाऽहन्कृते भवत ऽउभे रात्र्याथ्ठ ॥ १३ ॥ स यदहः सन्निवपस्यन्त्स्यात् । तदहः * प्रातरुदित ऽआदित्ये भस्मैव प्रथममुद्वपति भस्मोदुप्य वाचं विसृजते वाचं विसृज्य समिधमादधाति समिधमाधाय भस्माऽपोऽभ्यवहरति यथैव तस्याऽभ्यवहरणं तथाऽपाऽऽदाय भस्मनः प्रत्येत्यो-

* का० श्रौ० सू० १६. ६. १ ।

खायामोप्प्युपतिष्ठतेऽथ प्प्रायश्चित्ती करोति ॥ १४ ॥ स * यदि विष्णुक्रमीयमहः स्यात् । विष्णुक्रमान्क्रान्त्वा वात्त्सप्प्रेणोपतिष्ठेताऽथ यदि वात्त्सप्प्रीयं वात्त्सप्प्रेणोपस्त्थाय विष्णुक्रमान्क्रान्त्वा वात्त्सप्प्रमन्ततः कुर्य्यान्न विष्णुक्रमानन्ततः कुर्य्याद्यथा प्प्रयाय न विमुञ्चेत्तादृक्तदथ यद्वात्त्सप्प्रमन्ततः करोति प्रतिष्ठा वै वात्त्सप्प्रं स्यथा प्प्रतिष्ठापयेदवसाययेत्तादृक्तत्तस्मादु वात्त्सप्प्रमेवाऽन्ततः कुर्य्यात् ॥ १५ ॥ (D)

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



## [ अथ वनीवाहनम् ]

( तत्र गार्हपत्यचयनीयाग्निप्रणयनम्, उख्याग्नेः स्थापनादिविधिश्च )

वनीवाह्येताग्निं बिभ्रदित्याहुः । देवाश्चाऽसुराश्चोभये प्प्राजापत्त्या ऽअस्प्पर्द्धन्त ते देवाश्चक्रमचरञ्छालमसुरा ऽआसँस्ते देवाश्चक्रेण चरन्त ऽएतत्कर्म्माऽपश्यँश्चक्रेण हि वै देवाश्चरन्त ऽएतत्कर्म्माऽपश्यँस्तस्मादुनस ऽएव पौरोडाशेषु यजूंष्युनसोऽग्नौ ॥ १ ॥ स यो † वनीवाह्यते । देवान्कर्म्मणेति दैवः हाऽस्य कर्म्म कृतं भवत्यथ यो

---

* का० श्रौ० सू० १६. ६. ५ ।

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ७. ४; कठ० १६. ९; मै० सं० ११. ७. ९; तै० सं० ४. २. २ ।

† "प्रागनः कृत्वेत्यारभ्य वासेऽवहरत्येतदन्तं कर्म वनीवाहनमित्युच्यते" ( का० श्रौ० सू० १६. ६. १५–२२ ) ।

न वनीवाह्यतेऽसुरान्कर्म्मणेत्यसुरर्षं हाऽस्य कर्म्म कृतं भवति ॥ २ ॥ तद्धैक ऽआहुः । स्वयं वा ऽएष वनीवाहितो विष्णुक्रमैर्वा ऽएष प्प्रयाति वात्सप्रेणाऽवस्यतीति न तथा विद्याद्दैवं वा ऽअस्य तत्प्रयाणं यद्विष्णुक्रमा दैवमवसानं यद्वात्सप्रमथाऽस्येदं मानुषं प्रयाणं यदिदं प्रयाति मानुषमवसानं यदवस्यति ॥ ३ ॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्यच्च देवा यच्च मनुष्यास्तद्यद्विष्णुक्रमवात्सप्रे भवतो यद्देवाऽस्य दैवं रूपं तदस्य तेन संस्करोत्यथ यद्वनीवाह्यते यद्देवाऽस्य मानुषं रूपं तदस्य तेन संस्करोति स ह वा ऽएतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य ऽएवं विद्वान्वनीवाह्यते तस्मादु * वनीवाह्येतैव ॥ ४ ॥ स यदहः प्प्रयास्यन्त्स्यात् । तदहरुत्तरतोऽग्नेः † प्प्रागनऽउपस्थाप्याऽथाऽस्मिन्त्समिधमादधात्येतद्वा ऽएनं देवाऽएष्यन्तं पुरस्तादन्नेनाऽप्रीणन्नेतया समिधा तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्प्रीणात्येतया समिधा ॥ ५ ॥ 'समिधाऽग्निं दुवस्यते'ति । समिधाऽग्निं नमस्यतेत्येतद् 'घृतैर्बोधयताऽतिथिमास्मिन्हव्या जुहोतने'ति घृतैरह बोधयताऽतिथिमो ऽअस्मिन्हव्यानि जुहुतेत्येतद्धुह्ववत्येत्यायैह्येनमेतद्बोधयति ॥ ६ ॥ अथैनमुद्यच्छति ‡ । 'उदु त्वा विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरि'ति विश्वे वा ऽएत-

* 'वनीवाह्येतैव' इति पाठः 'ख' पुस्तके ।
† का० श्रौ० सू० १६. ६. १५ ।
( १ ) शु० सं० अ० १ क० ३० । ( २ ) शु० सं० अ० १ क० ३० ।
‡ का० श्रौ० सू० १६. ६. १६ ।
( ३ ) शु० सं० अ० १२ क० ३१ ।

मग्रे देवाश्चित्तिभिरुदभरन्नेतद्ध्येषां तदा चित्तमासीत्तथैवै- नमयमेतच्चितिभिरुद्धरत्त्येतद्ध्यस्य तदा चित्तं भवति 'स नो भव शिवस्त्वꣳ सुप्प्रतीको विभावसुरि'ति यथैव यजुस्तथा बन्धुस्तं दक्षिणत ऽउदञ्चमादधाति तस्योक्तो बन्धुꣳ स्थाल्यां गार्हपत्यꣳ समुप्प्याऽपरमादधाति स यदि काम- येतोपाधिरोहेत्पाश्श्वर्वतो वा व्रजेत् ॥ ७ ॥ अथाऽनड्वाहौ* युनक्ति। दक्षिणमग्रेऽथ सव्व्यमेवं देवत्रेतरथा मानुषे स यां काञ्च दिशं रुपास्यन्त्स्यात्प्राङेवाऽग्रे प्प्रयायात्प्राची हि दिगग्नेꣳ स्वामेव तद्दिशमनु प्प्रयाति ॥ ८ ॥ 'प्रेदग्ने[2] ज्ज्योति- ष्माञ्ज्याहि। शिवेभिरर्च्चिभिष्ट्वमि'ति प्रेदग्ने त्वं ज्ज्योतिष्मा- न्न्याहि शिवेभिरर्च्चिभिर्द्दीप्प्यमानैरित्त्येतद् 'बृहद्भि[3]र्भानु- भिर्भासन्न्मा हिꣳ सीस्तन्न्वा प्प्रजा' ऽइति बृहद्भिरर्च्चि- भिर्द्दीप्प्यमानैर्म्मा हिꣳसीरात्मना प्प्रजा ऽइत्त्येतत् ॥ ९ ॥ स यदाक्ष † ऽउत्सर्ज्जेत्। अथैतद्यजुर्ज्जपेर्द्दसुर्य्या वा ऽएषा व्वाग्याऽक्षस्य तामेतच्छमयति तामेतद्देवत्रा करोति ॥ १० ॥ यद्वेवैतद्यजुर्ज्जपति। यस्मिन्न्वै कस्मिँश्चाऽऽहितेऽक्ष ऽउत्स- र्ज्जति तस्यैव सा व्वाग्भवति तद्यदग्नावाहितेऽक्ष ऽउत्सर्ज्ज- त्यग्नेरेव सा व्वाग्भवत्त्यग्निमेव तद्देवा ऽउपाऽस्तुवन्नुपाऽमहयँ- स्तथैवैनमयमेतदुपस्तौत्त्युपमहय'त्त्यक्र[4]न्ददग्निस्तनयन्निव द्यौ-

(१) शु० सं० अ० १२ क० ३१।

* का० श्रौ० सू० १६. ६. १८।

(२) शु० सं० अ० १२ क० ३२। (३) शु० सं० अ० १२ क० ३२।

† का० श्रौ० सू० १६. ६. २०।

(४) शु० सं० अ० १२ क० ३३।

रि’ति तस्योक्तो बन्धुः ॥११॥ स यदि पुरा * वसत्यै विमुञ्चेत । अनस्येवाऽग्निः स्यादथ यदा वसत्यै विमुञ्चेत प्रागन ऽउपस्थाप्योत्तरत ऽउद्धत्यावोक्षति यत्रैनमुपाऽवहरति तं दक्षिणत ऽउदञ्चमुपाऽवहरति तस्योक्तो बन्धुः ॥१२॥ अथाऽस्मिन्त्समिधमादधाति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरिष्टादन्नेनाऽप्रीणन्नेतया समिधा तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणात्येतया समिधा ॥१३॥ ‘प्र [1]प्रायमग्निर्भरतस्य शृण्व’ ऽइति । प्रजापतिर्वै भरतः स हीदꣳ सर्वं बिभर्त्ति ‘[2]वियत्सूर्यो न रोचते बृहद्भा’ ऽइति वियत्सूर्य ऽइव रोचते बृहद्भा ऽइत्येत‘[3]दभियः पूरुं पृतनासु तस्थावि’ति पूरुर्ह नामाऽसुररक्षसमास तमग्निः पृतनास्वभितष्ठौ ‘दीदाय[4] दैव्यो ऽअतिथिः शिवो न’ ऽइति दीप्यमानो दैवोऽतिथिः शिवो न ऽइत्येतत्स्थितवत्या वसत्यै ह्येनं तत्स्थापयति ॥ १४ ॥ अथाऽतः सम्पदेव । समिधं प्रथमेनाऽऽदधात्युद्यच्छत्येकेन प्रयात्येकेनाऽक्षमेकेनाऽनुमन्त्रयते समिधमेव पञ्चमेनाऽऽदधाति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १५ ॥ (A)

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ ८ ॥

---

* का० श्रौ० सू० १६. ६. २१ ।

(१) शु० सं० अ० १२ क० ३४ । (२) शु० सं० अ० १२ क० ३४ । (३) शु० सं० अ० १२ क० ३४ । (४) शु० सं० अ० १२ क० ३४ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा-- का० श० ६. ८. १; कठ० सं० १६. १०; मै० सं० ११. ७. १०; तै० सं० ४. २. ३ ।

[ भस्मापोऽभ्यवहरणम्, उपस्थानम्, द्विविधप्रायश्चित्तविधिश्च ]

अथाऽतोभस्मन ऽएवाऽभ्यवहरणस्य । देवा वाऽएतदग्रे भस्मोदवपँस्तेऽब्रुवन्न्यदि वा ऽइदमित्थमेव सदात्मानमभि संस्करिष्यामहे मर्त्याः कुणपा ऽअनपहतपाप्मानो भविष्यामो यद्यु परावप्स्यामो यदत्राऽऽग्नेयं बहिर्द्धा तदग्नेः करिष्याम ऽउप तज्जानीत यथेदं करवामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथेदं करवामेति ॥ १ ॥ ते चेतयमानाः । एतदपश्यन्नप ऽएवैनदभ्यवहरामापो वा ऽअस्य सर्वस्य प्रतिष्ठा तद्यत्राऽस्य सर्वस्य प्रतिष्ठा तदेनत्प्रतिष्ठाप्य यदत्राऽऽग्नेयं तदद्भ्योऽधि जनयिष्याम ऽइति * तदपोऽभ्यवाऽहरँस्तथैवैनदयमेतदपोऽभ्यवहरति ॥ २ ॥ 'आपो[१] देवीः । प्रतिगृभ्णीत भस्मैतत्स्योने कृणुद्ध्वँ सुरभा ऽउ लोक' ऽइति जग्धं वा ऽएतद्यातयाम भवति तदेतदाह स्वभिष्ठऽएनल्लोके कुरुद्ध्वमिति 'तस्मै नमन्तां[२] जनय' ऽइत्यापो वै जनयोऽद्भ्यो हीदँ सर्वं जायते 'सुपत्नीरि[३]'त्यग्निना वा ऽआपः सुपत्न्यो 'मातेव पुत्रं[४] बिभृताप्स्वेनदि'ति यथा माता पुत्रमुपस्थे बिभृयादेवमेनद्बिभृतेत्येतत् ॥ ३ ॥ 'अप्स्वग्ने[५] सधिष्टवे'ति । अप्स्वग्ने योनिष्टवेत्येत'त्सौषधी-

---

* का० श्रौ० सू० १६. ६. २६ ।

(१) शु० सं० अ० १२ क० ३५ । (२) शु० सं० अ० १२ क० ३५ । (३) शु० सं० अ० १२ क० ३५ । (४) शु० सं० अ० १२ क० ३५ । (५) शु० सं० अ० १२ क० ३६ ।

रनुरुद्ध्यस' इत्योषधीर्ह्येषोऽनुरुद्ध्यते 'गर्भे सञ्जायसे पुनरि'ति गर्भे ह्येष सञ्जायते पुन'र्गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भोऽअपामसी'ति तदेनमस्य सर्वस्य गर्भं करोति ॥ ४ ॥ * त्रिभिरभ्यवहरति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनदेतदभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां वाग्रेऽथैकेन द्विस्तु कृत्वोऽभ्यवहरति तद्ये द्विपादः पशवस्तैरेवैनदेतदभ्यवहरति ॥ ५ ॥ अथापाऽऽदत्ते । † तद्यदत्राग्नेयं तदेतदद्भ्योऽधि जनयत्यनयाऽनया वै भेषजं क्रियतेऽनयैवैनमेतत्सम्भरति 'प्रसद्य भस्मना योनिमपश्च पृथिवीमग्न' इति प्रसन्नो ह्येष भस्मना योनिमपश्च पृथिवीं च भवति 'सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासद' इति सङ्गत्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदइत्येत'त्पुनरासद्य सदनं पुनरूर्जा सह रय्ये'त्येतेन मा सर्वेणाऽभिनिवर्त्तस्वेत्येतत् ॥ ६ ॥ चतुर्भिरपाऽऽदत्ते । तद्ये चतुष्पादः पशवस्तैरेवैनमेतत्सम्भरत्यथोऽअन्नं वै पशवोऽन्नेनैवैनमेतत्सम्भरति त्रिभिरभ्यवहरति तत्सप्त सप्तचितिकोऽग्निः सप्तर्त्तवः सम्वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥७॥ अपाऽऽदाय

(१) शु० सं० अ० १२ क० ३६। (२) शु० सं० अ० १२ क० ३६। (३) शु० सं० अ० १२ क० ३७।

* का० श्रौ० सू० १६. ६. २७,२८।

† का० श्रौ० सू० १६. ६. २९।

(४) शु० सं० अ० १२ क० ३८। (५) शु० सं० अ० १२ क० ३८। (६) शु० सं० अ० १२ क० ३९–४१।

भस्मनः प्प्रत्येत्य । * उखायामोप्प्योपतिष्ठत ऽएतद्वा ऽएतद्यथायथं करोति यदग्निमपोऽभ्यवहरति तस्म्मा ऽएवैतन्निह्नुतेऽहिंसाया ऽआग्नेयीभ्यामग्नय ऽएवैतन्निह्नुते बुद्धवतीभ्यां यथैवाऽस्यैतदग्निर्व्वचो निबोधेत् ॥ ८ ॥ 'बोधा[1] मे ऽअस्य व्वचसो यविष्ठ्ये'ति । बोध मेऽस्य व्वचसो यविष्ठेत्येत'म्मंहिष्ठस्य[2] प्प्रभृतस्य स्वधाव' ऽइति भूयिष्ठस्य प्प्रभृतस्य स्वधाव ऽइत्त्येत'त्पीयति त्त्वो ऽअनु[3] त्त्वो गृणाती'ति पीयत्त्येकोऽन्न्वेको गृणाति 'व्वन्दारुष्टे तन्न्वं व्वन्दे ऽअग्न' ऽइति व्वन्दिता तेऽहं तन्न्वं व्वन्देऽग्न ऽइत्त्येत'त्सं[4] बोधि सूरिर्म्मघवा व्वसुपते व्वसुदावन् । युयोद्ध्यस्मद् द्वेषाथ्ंसी'ति यथैवाऽस्म्माद् द्वेषाथ्ंसि युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ९ ॥ तानि नव भवन्ति । नव दिशो दिशोऽग्निर्न्नव प्प्राणाः प्प्राणाऽअग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावत्तद्भवति ॥ १० ॥ अथ प्प्रायश्चित्ती करोति । सर्व्वेभ्यो वा ऽएष ऽएतं कामेभ्य ऽआधत्ते तद्यदेवाऽस्याऽत्र कामानां व्व्यवच्छिद्यतेऽग्नावपोऽभ्यवह्नियमाणे तदेवैतत्सन्तनोति सन्दधात्युभे प्प्रायश्चित्ती करोति ये ऽएवाऽग्नावनुगते तस्योक्तो बन्धुः ॥ ११ ॥ तानि दश भवन्ति । दशाक्षरा विराड्विराडग्निर्द्दश

---

* का० श्रौ० सू० १६. ६. ३० ।

(१) शु० सं० अ० १२ क० ४२ । (२) शु० सं० अ० १२ क० ४२ । (३) शु० सं० अ० १२ क० ४२ । (४) शु० सं० अ० १२ क० ४२ । (५) शु० सं० अ० १२ क० ४३ ।

दिशो दिशोऽग्निर्दिश प्राणाः प्राणा ऽअग्निरुर्र्वावानग्निरुर्र्वा वत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥ (B)

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ५३०॥

इत्यष्टमोऽध्यायः ॥ ७ ॥

उखासम्भरणं नाम षष्ठं * काण्डं समाप्तम् ॥ ६ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ८. १; कठ० सं० १६. १०; कपि० २५. १०; मै० सं० ११. ७.१; तै० सं० ४. २. ३ ।

* अस्मिन्काण्डे कण्डिका संख्या ५३० ।

